ॐ

# एकादशोपनिषदः

ईशाद्यष्टसु श्रीमदुदासीनवर्येण अमरदासाख्यविदुषा विरचितया उपनिषन्मणिप्रभया, छान्दोग्य-बृहदारण्यकयोः श्रीनित्यानन्दाश्रम-विरचितया मिताक्षरया, कैवल्ये च श्रीशङ्करानन्द-विरचितया दीपिकया

समलङ्कृताः



प्रकाशकः

मोतीलाल बनारसीदास

दिल्ली : वाराणसी : पटना

प्रकाशकः

सुन्दरलाल जैन

C मोतीलाल बनारसीदास

पो० बा० ७५, नैपाली खपरा

वाराणसी-१

मुद्रकः

ब्र० नारायणस्वरूप द्विवेदी

सन्मार्ग प्रेस

दुलहिनजी रोड

वाराणसी-१

षष्ठं संस्करणम् : १९६६

मूल्यम् १५,००

---

सर्वविध-पुस्तकानां प्राप्तिस्थानानि—

१. मोतीलाल बनारसीदास, बंगलोरोड, जवाहरनगर, दिल्ली-७

२. मोतीलाल बनारसीदास, पो० बा० ७५, नेपाली खपरा, वाराणसी-१

३. मोतीलाल बनारसीदास, माहेश्वरी मार्केट, बांकीपुर, पटना-४

ॐ

॥ नमोऽन्तर्यामिणे ॥

# तृतीयसंस्करणस्य प्रस्तावना

अथ प्रस्तूयन्ते मुमुक्षुजनहिताय ईशावास्यादिदशोपनिषदः कैवल्योपनिषत्-सहिता निगूढार्थप्रकाशनपरया व्याख्यया समलङ्कृताः संमुद्य प्रकाशयितुम्। तत्र ईशावास्याद्यैतरेयान्तेषु क्रमेण अष्टसूपनिषत्सु सकलशास्त्रनिष्णातैर्वेदान्तपरिभाषाव्याख्यातृत्वेन वेदान्तशास्त्राध्यापकत्वेन च प्रथितयशोभिः श्रीकाशीक्षेत्रालङ्कारभूतैरस्मद्गुरुचरणैः श्रीदेमदुदासीनवर्यामरदासस्वामिभिः जिज्ञासुजनानुजिघृक्षया प्रणीता 'उपनिषन्मणिप्रभा' व्याख्या पूर्वं शिलाक्षरैर्द्विर्मुद्रिताऽपि सुगमतया रहस्यार्थनिरूपणक्षमतया च विद्वज्जनप्रणयास्पदीभूता अचिरादेव तृतीयं संस्करणमपैक्षत। तदा श्रीदेगुरुचरणैः स्वत्ववितरणपूर्वकमस्याः पुनर्मुद्रणाय आदिष्टोऽहं तदाज्ञामनुग्रह इति शिरसि कृत्वा तन्मुद्रणाय कृतमतिराधुनिकरीत्या अवतरणं मूलस्योपरि धृत्वाऽधस्ताच्च व्याख्यां पुनरुत्तरग्रन्थस्यावतरणं पूर्वव्याख्यया यथा न सङ्कीर्येत तथोपन्यस्य सीसकाक्षरैर्मुद्रितुमारब्धवान्। अभूच्च मे मनसि यदि स्याच्छान्दोग्यबृहदारण्यकयोरप्येतैः सह सव्याख्यानं मुद्रणं तदा मुमुक्षूणां महत्प्रियं कृतं स्यादिति। ततश्च छान्दोग्यबृहदारण्यकयोः श्रीनित्यानन्दाश्रमविरचितां मिताक्षराटीकां काशीनिवासिस्वामिपण्डितकृष्णदासस्य सकाशात् लब्ध्वा फलिताभिलाषस्तामप्यनया सहामुद्रयम। आसां संशोधनं चास्मत्प्रियसुहृद् 'बाक्रे' इत्युपाह्वो गङ्गाधरसूनुर्महादेवशर्मा महामहोपाध्यायश्रीशिवकुमारशास्त्रिणामन्तेवासो मयाऽभ्यार्थितोऽङ्गीचकार। तत्र छान्दोग्यमिताक्षरा पण्डितकृष्णदासप्रहितमेकमेव पुस्तकमवलम्ब्य संशोधिता। बृहदारण्यकमिताक्षरा पुनरानन्दाश्रममुद्रितमिताक्षरापुस्तकं स्वामिप्रेषितलिखितमिताक्षरापुस्तकं चाश्रित्य शोधिता। कैवल्योपनिषच्च श्रीमच्छङ्करानन्दप्रणीतदीपिकाख्यव्याख्यया सह समावेशिता। अन्ते श्रीरामपण्डितविरचिता दशोपनिषद्रहस्याख्या द्वादश श्लोकाश्च दत्ताः। एवं परममादरमाश्रित्य संपादितेनानेन व्यापारेण स सर्वान्तरयामि परंज्योतिः प्रीणीतादिति शम्।

भवदीयः—

स्वामी अचिन्त्यभगवान्।

ॐ

॥ नम औपनिषदाय पुरुषाय ॥

# विज्ञापनम्

सहृदयाः पाठकाः !

अस्मद्गुरुचरणैर्मणिप्रभयोद्भासिता उपनिषदः पूर्वमस्माभिः निर्णयसागरमुद्रणालये संमुद्रापयित्वा प्राकाश्यतां नीताश्चिरादेव अप्राप्यतामापुः। उपनिषदर्थजिज्ञासूनां मुमुक्षूणां महात्मनामन्येषां चैतद्ग्रन्थसङ्ग्रहे महान्तमादराग्रहमनुभूय पुनः एतस्य प्रकाशने कृतमना अपि नापारयमनुष्ठातुम्। दिष्ट्या नानाविधसंस्कृतप्राकृतग्रन्थप्रकाशनाप्तयशोभिः **श्री मोतीलाल बनारसीदास** महोदयैरस्य पुनः प्रकाशने समुत्कण्ठा प्रकटीकृता। एतेषां महानुभावानां पुण्यां समीहामनुसृत्य मयाऽस्य ग्रन्थरत्नस्य सर्वे पुनर्मुद्रणादिविषयका अधिकारा एभ्यः समर्पिताः। अतो नान्यः कश्चिन्महानुभाव एतस्य प्रकाशनादिविषये कथमपि चेष्टेत। इमां चैतां चातुर्थीमावृत्तिं वे०शा० स्वामित्रेदानन्दतीर्थैः संशोध्य प्राकाश्यमनयन् इति विज्ञापयति।

**—स्वामी अचिन्त्यभगवान्**

# अनुक्रमः



-:o:-



श्रीगणेशाय नमः

# ईशावास्योपनिषत्

## मणिप्रभाव्याख्यासमलंकृता

येन व्याप्तमिदं सर्वं जगत्स्थावरजङ्गमम् ।
तं वन्दे परमात्मानं कृष्णाख्यं भक्तवत्सलम् ॥ १ ॥
विद्याचार्यान् गुरून् भक्त्या नत्वाऽहं करुणाकरान् ।
ईशावास्यादिमन्त्राणां कुर्वे व्याख्यां समासतः ॥ २ ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ १ ॥
ॐ शान्तिः शान्तिः शान्तिः ।

अदः—निरुपाधिकं परोक्षं तत्पदार्थरूपं ब्रह्म, पूर्णमाकाशवद्व्यापि निरन्तरं, यदिदं नामरूपोपाधिविशिष्टं व्यवहारापन्नं त्वंशब्दार्थरूपं, तदपि निरुपाध्यात्मरूपेणैव पूर्णं न तु विशिष्टरूपेण पूर्णम् । एवं तत्त्वंपदयोः क्रमेण लक्ष्यांशमुक्त्वा तयोरेव वाच्यांशं कथयन् त्वंपदार्थस्य पूर्णत्वे हेतुमाह-पूर्णादिति । तदिदं विशेषरूपमापन्नं ब्रह्म पूर्णात् कारणात्मनः सकाशात्पूर्णमेवोदच्यते उद्रिच्यते उद्गच्छति, पूर्णात्मस्वभावस्य त्यागायोगात् । एतज्ज्ञानफलं लक्ष्ययोरैक्यापत्तिरूपमाह-पूर्णस्येति । पूर्णस्य कार्यात्मनो ब्रह्मणः पूर्णं पूर्णत्वमेकरसत्वलक्षणमादाय गृहीत्वा विद्ययाऽऽविद्यकोपाधिसंसर्गतिरस्कारपूर्वकं पूर्णमेव निरन्तरं प्रज्ञान-

घनैकरसस्वरूपमेव केवलं ब्रह्मावशिष्यते इति स्पष्टार्थः। शान्तिरिति त्रिर्वचनमाध्यात्मिकाधिभौतिकाधिदैविकानां विद्याप्राप्त्युपसर्गाणां प्रशमनार्थमिति बोध्यम्।

अथ शुक्लयजुर्वेदे वाजसनेयिसंहितायामीशावास्योपनिषत्।

उपनिपूर्वस्य षद्लृ विशरणगत्यवसादनेष्विति धातोः क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति। सामीप्यवाचिनोपोपसर्गेण प्रत्यगात्मनो ब्रह्मसामीप्यमुच्यते। सामीप्यं च तयोरभेदरूपं विवक्षितम्। निशब्दो निश्चयार्थकः। तथा चोपसर्गद्वयेन प्रत्यगात्मब्रह्मणोरभेदनिश्चयरूपा विद्योक्ता। विशरणावसादनगतयो धात्वर्थाः। क्विप्प्रत्ययश्चात्र कर्तरि विवक्षितः। तथा च प्रत्यगात्मब्रह्मगोचरा विद्या विदुषामनर्थं शातयति शिथिलीकरोति अवसादयति नाशयति वा ब्रह्म गमयति वेत्युपनिषच्छब्दव्युत्पत्त्या सफला ब्रह्मविद्योच्यते। यद्वा उप सामीप्येन विषयतया नि नितरां ब्रह्मस्वरूपं परमश्रेयोऽस्यां विद्यायां स्थितमित्युपनिषत् ब्रह्मविद्या। ग्रन्थे तु ब्रह्मविद्याप्रयोजकत्वाल्लक्षणयोपनिषच्छब्दप्रयोगः। एवं व्याख्येयस्य ग्रन्थस्य ब्रह्मविद्यार्थत्वोक्त्या मानान्तरानधिगतं ब्रह्म तस्य विषयः, तद्विद्याद्वारा मुक्तिः प्रयोजनं, सम्बन्धस्तु विषयेण सह ग्रन्थस्य प्रतिपाद्यप्रतिपादकलक्षणः चतुष्टयसाधनसम्पन्नोऽधिकारीत्यनुबन्धचतुष्टयं प्रेक्षावतां प्रवृत्त्यङ्गभूतं तावत्सिद्धम्।

ननु ईशावास्यमित्यादयो मन्त्राः कर्मप्रतिपादका मन्त्रत्वात्, "इषे त्वा" इत्यादिमन्त्रवत्, अतो न पृथग्विषयप्रयोजनादिसिद्धिरिति चेत्, न, विनियोजकप्रमाणाभावात् प्रकरणान्तरत्वाच्च। न हि "इषे त्वेति शाखां छिनत्ति" इत्यत्र यथा ब्राह्मणघटिकीभूतशाखाशब्दोत्तरद्वितीयाश्रुतिरङ्गप्रधानभावसम्बन्धबोधिका। तथा "ईशावास्यम्" इत्यादिमन्त्रेषु किञ्चिद्विनियोजकप्रमाणमस्ति, येन कर्मप्रतिपादकाः स्युः। "इषे त्वा" इति मन्त्रभागः, "इति शाखां छिनत्ति" इति ब्राह्मणभागः। हे पलाशशाखे इषे अन्नाय त्वा त्वां छिनद्मीति मन्त्रार्थः। इति उक्तमन्त्रेण शाखां छिनत्ति छिन्द्यादिति ब्राह्मणार्थः। न च कर्माङ्गात्मप्रकाशनरूपसामर्थ्यरूपलिङ्गादेषां कर्मणि विनियोग इति वाच्यम्? शुद्धत्वादिविशेषणानां कर्माङ्गत्वे मानाभावात्, कर्मविरोधित्वाच्च। नाप्येते मन्त्रा जपमात्रोपयोगिनो न विवक्षितार्थबोधका इति शक्यं वक्तुम् उपक्रमोपसंहारादिलिङ्गैरेकात्मतायां तात्पर्यावधारणात्। अस्ति हि 'ईशावास्यम्' इत्युपक्रमः, 'सपर्यगात्' इत्युपसंहारः, 'अनेजदेकं' 'तदन्तरस्य' इत्यभ्यासः, 'नैनद्देवा आप्नुवन्' इत्यपूर्वतोक्तिः, 'को मोहः कः शोकः' इति

फलोक्तिः, 'कुर्वन्नेवेह कर्माणि' इत्यविदुषः कर्मकरणानुवादेन 'असुर्या नाम ते लोकाः' इति कर्मनिन्दयैक्यात्म्यविद्यायाः स्तुतिरुक्ता, 'तस्मिन्नपो मातरिश्वा' इत्युपपत्त्युक्तिः । न च ब्रह्मात्मैकत्वस्वीकारे कर्मकाण्डाधिकार्यभावात्कर्मकाण्डाप्रामाण्यप्रसङ्ग इति वाच्यम् ? अर्थित्वादिविशेषणवतामविदुषामेव कर्मण्यधिकारसम्भवात् । एवं पृथग्विषयप्रयोजनादिमद्भिर्मन्त्रैर्दध्यङ्ङाथर्वण ऋषिः शिष्यं पुत्रं वा मुमुक्षुं विधिवदुपसन्नमुपदिशति—

ॐ ईशा वास्यमिदँ सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥१॥

ईष्टे इतीट्, 'ईश ऐश्वर्ये' इति धातोः क्विप्प्रत्ययान्तस्येदं रूपं, तेनेशा ईश्वरेण तत्पदार्थलक्ष्यस्वरूपेण इदं नानाप्रतीतिविषयभूतं सर्वं निखिलं वास्यं 'वस् आच्छादने' आच्छादनीयं व्याप्तमिति यावत् । सर्वशब्दार्थमेव स्फुटयति-यत्किञ्चेति । जगत्यां चतुर्दशसु भुवनेषु यत्किञ्चित्कार्यकारणात्मकं जगत् चराचरलक्षणमीश्वररूपमेवेति बुद्धिः करणीयेत्यर्थः । एतादृशबुद्धिदार्ढ्ये साधनमाह-तेनेति । तेन "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इत्यादिश्रुत्यन्तरप्रसिद्धेन त्यक्तेन एषणात्रयत्यागेन संन्यासेन भुञ्जीथाः इदं सर्वमीश्वर एवेति बुद्धिं पालयेथाः । उक्तसंन्यासिनो नियमविधिमाह—मा गृध इति । कस्यस्वित् कस्यापि धनं भिक्षाकौपीनाच्छादनातिरिक्तं हिरण्यादिरूपं मा गृधः त्वं माकांक्षीरित्यर्थः ॥ १ ॥

यस्तु धनाभिलाषी नेश्वरं ज्ञातुं शक्तस्तस्य त्यागेऽधिकाराभावात्कर्मकर्त्तव्यतां श्रुतिराह—

कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतँ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे ॥ २ ॥

इह अस्मिन्कर्माधिकारे भूलोके कर्माणि नित्यान्यग्निहोत्रादीन्यन्यानि च कुर्वन्नेव आचरन्नेव एवकारेण फलाभिसन्धिर्व्यावर्त्यते । शतँ समाः शतं संवत्सरान् जिजीविषेत् जीवितुमिच्छेत् । एवं यथोक्तकर्मानुष्ठानेन त्वयि कर्माधिकारिणि नरे नराभिमानिनि कर्म अशुभं कर्म न लिप्यते न सम्बध्यते । इतः स्ववर्णाश्रमोचितकर्मानुष्ठानात् अन्यथा अशुभकर्मलेपाभावे विहितकर्मानुष्ठानातिरिक्तसाधनान्तरं नास्ति न विद्यते । येन प्रकारेणाशुभकर्मलेपो न स्यादित्यर्थः ॥ २ ॥

इदानीमज्ञानां निन्दाऽनेन मन्त्रेण क्रियते—

असुर्य्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥

असुर्य्याः सुष्ठु रमन्ते इति सुरा आत्मारामा विद्वांसस्तेभ्योऽन्येऽसुरास्तेषां योग्याः नाम प्रसिद्धाः ते ये लोकाः कर्मफलभूताः श्वसूकरादिदेहविशेषाः, ईश्वरापेक्षयाऽज्ञदेवा अप्यसुरा एव, अन्धेन आवरकेण तमसा स्वरूपाज्ञानेन आवृताः आच्छादिताः । तान् उक्तासुर्य्यलोकान् ते आत्मज्ञानशून्याः जना। संसारचक्रे पुनःपुनः प्रादुर्भाववन्तः प्रेत्य शरीरं त्यक्त्वा अभिगच्छन्ति सर्वतः प्राप्नुवन्ति । ते इति तच्छब्दार्थमाह–य इति । ये के च ये केऽप्यज्ञाः आत्महनः आत्मानमजराममलक्षणमप्यज्ञानेन जरामरणादिमन्तमिव मन्यमानाः ॥ ३ ॥

यस्यात्मनोऽज्ञानादविद्वांसः संसरन्ति आत्मज्ञाश्च मुच्यन्ते तदात्मतत्त्वं कीदृशमित्याकांक्षायां तदात्मतत्त्वमाह—

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥४॥

अनेजत् चलनरहितम् । एकं देहादिभेदेन भेदशून्यं मनसः संकल्पादिलक्षणमनसः जवीयो वेगवत्तरम् । ननु मनसा साक्षादप्राप्याणामपि रूपादीनां चक्षुरादिभिः प्राप्यत्वदर्शनादात्मतत्त्वमपि चक्षुरादिप्राप्यमस्तीत्यत आह-नेति । एनत् प्रकृतमात्मतत्त्वं देवाः द्योतनाद्देवाश्चक्षुरादीन्द्रियाणि नाप्नुवन् नाधिगतवन्तः । यथा मनसि स्थितं परिमाणं मनसा न गृह्यते यथा वा चक्षुषो गोलके वर्त्तमानमञ्जनं चक्षुषा न गृह्यते अत्यन्तसान्निध्यात्, तथाऽऽत्मतत्त्वमपि मनआदिष्वनुगतत्वात् न मनश्चक्षुरादिभिर्गृह्यते इति भावः । मनसा चक्षुरादीन्द्रियैश्चाप्राप्यत्वेनासत्त्वशङ्कां प्राप्तां वारयति पूर्वमिति । पूर्वं मन आदेः प्राप्तेः प्रथममेव अर्षत् प्राप्तं व्यापकमिति यावत् । व्यापकत्वे हेतुमाह–तद्धावत इति । तत् आत्मतत्त्वं धावतः द्रुतं गच्छतः अन्यान् कालवाय्वादीन् अत्येति उल्लंघ्य याति, तर्ह्येवेव किञ्चिदतिवेगवदित्यत आह–तिष्ठत् स्वयमविक्रियमेव सत् स्थितमित्यर्थः । उक्तात्मतत्त्वस्य सम्भावनायोपपत्तिमाह–तस्मिन्निति । तस्मिन् आत्मतत्त्वे सति मातरिश्वा मातरि अन्तरिक्षे श्वयति गच्छति सत्तां प्राप्नोतीति मातरिश्वा ज्ञानक्रियाशक्तिर्हिरण्यगर्भः अपः कर्माणि अग्निहोत्रादीनि श्रौतकर्माणि सोमाज्यपयःप्रभृतिभिरद्भिः सम्पाद्यन्ते इति सम्बन्धाल्लक्षणयाऽप्शब्दस्य कर्मसु प्रयोगः । यद्वा अपः कर्माणि प्राणिनां चेष्टालक्षणानि

अग्न्यादित्यादीनां ज्वलनवहनप्रकाशाभिवर्षणादिलक्षणानि च दधाति कर्तृषु विभागेन स्थापयति, धारयतीति वा। मातरिश्वग्रहणं व्यष्टीनामुपलक्षणार्थं सर्वकार्य्यकरणसङ्घातानामधिष्ठातारं विना नियतप्रवृत्त्यनुपपत्त्या कश्चिदधिष्ठाता चेतनः सिद्ध्यतीति भावः ॥४॥

मन्त्राणामालस्याभावादुक्तमेवार्थं पुनराह—

तदेजति तन्नैजति तद्दूरे तद्वन्तिके।

तदन्तरस्य सर्व्वस्य तदु सर्व्वस्यास्य बाह्यतः ॥५॥

तत् ईश्वररूपमात्मतत्त्वं एजति वाय्वादिरूपेण चलति। तत् ईश्वररूपमात्मतत्त्वं नैजति स्वतो नैव चलति, अक्रियत्वात्। तत् ईश्वररूपमात्मतत्त्वं दूरे अविदुषामत्यन्तदूरे वर्तते, अज्ञातत्वात्, वर्षकोटिशतैरप्यविदुषामप्राप्यत्वाद्वा। तत् ईश्वररूपमात्मतत्त्वं उ एव। अन्तिके विदुषामत्यन्तसमीपमेव। प्रत्यग्रूपेण ज्ञातत्वात्। तत् ईश्वररूपमात्मतत्त्वं अस्य दृश्यस्य सर्वस्य चराचररूपस्य अन्तः आभ्यन्तरम्। तत् ईश्वररूपमात्मतत्त्वं उ अपि सर्वस्य निखिलस्य अस्य नाना[1]प्रतीतिविषयस्य जगतः बाह्यतः बहिश्च भवति। आकाशवद्व्यापकत्वादित्यर्थः ॥५॥

ईश्वरात्मज्ञानस्य फलमाह—

यस्तु सर्व्वाणि भूतान्यात्मन्येवानुपश्यति।

सर्व्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥६॥

यस्तु, तुशब्दो एवार्थकः, य एव विद्वान्, सर्वाणि ब्रह्मादिस्तम्बपर्य्यन्तानि भूतानि प्राणिजातानि आत्मन्येव—एवकारो भेदव्यावृत्त्यर्थः—आत्मस्वरूपे परमेश्वरे एव अनुपश्यति साक्षाद्विजानाति। सर्वभूतेषु उक्तप्राणिजातेषु चात्मानं 'अहमेव सर्वभूतेष्ववस्थितः' इत्यनुपश्यतीति क्रियाऽनुवृत्त्यर्थश्चकारः। ततः उक्ताभेदज्ञानानन्तरं न विजुगुप्सते उक्तो विद्वान् किमपि न निन्दति। स्वात्मनोऽन्यस्यादर्शनात्। कस्यापि निन्दास्तुतिं न करोतीति भावः ॥६॥

उक्तमेवार्थं पुनरप्याह—

यस्मिन् सर्व्वाणि भूतान्यात्मैवाभूद्विजानतः।

तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥७॥

यस्मिन् काले ईश्वरस्वरूपे आत्मनीति वा विजानतः उक्ताभेदज्ञानवतः

१. प्रियत्वाप्रियत्वादिप्रकारकाप्रतीतिरित्यर्थः।

पुरुषस्य सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्य्यन्तानि प्राणिजातानि आत्मैवाभूत् सर्वभूतात्माऽहमेवेति बोधेनात्मभावमेव गतानि स्युरित्यर्थः। तत्र तस्मिन्काले ईश्वरात्मविज्ञातृस्वरूपे इति वा। एकत्वमनुपश्यतः सर्वत्रैकात्मज्ञानवतः पुरुषस्य को मोहः आत्मावरणलक्षणो मोहः, कः शोकः विक्षेपात्मकः शोकः कः। किंशब्द आक्षेपे। तस्य मोहशोकौ न भवतः मूलाऽविद्यानिवृत्तौ तत्कार्ययोः शोकमोहयोरात्यन्तिकाभावादिति भावः॥७॥

ईश्वरस्य स्वरूपमिदं सर्वमहमस्मीति विजानतः आवरणविक्षेपयोरभाव उक्तः सोऽयमनुपपन्नः ईश्वरस्याप्यात्मत्वात् जीववच्छरीरादिसम्बन्धसत्त्वादित्याशङ्क्य दृष्टान्ते साध्यवैकल्यमाह—

स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरँ शुद्धमपापविद्धम्।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः॥ ८॥

स ईश्वरस्वरूपाभिन्नः आत्मा पर्य्यगात् परितः समन्तात् सर्वं व्याप्तवान्। तं विशिनष्टि-शुक्रमिति। शुक्रमित्याद्यपापविद्धमित्यन्तानि विशेषणानि पुंस्त्वेन विपरिणेयानि, स इति पुंस्त्वेनोपक्रम्य कविरित्यादि पुंस्त्वेनोपसंहारात्। शुक्रं दीप्तिमान्। अकायं लिङ्गशरीररहितः। अव्रणं व्रणं छिद्रविशेषो न विद्यते यस्य सोऽव्रणः। अस्नाविरं स्नावाः शिरास्तद्वर्जितः। अव्रणमस्नाविरमिति विशेषणाभ्यां श्रुत्या स्थूलदेहस्य प्रतिषेधः कृतः। शुद्धं अविद्यामलरहितः। अनेन कारणशरीरप्रतिषेधः कृतः। अपापविद्धं [1]धर्माधर्मादिपापशून्यः। कविः सर्वद्रष्टा। मनीषी मनस ईषिता। परिभूः नानारूपैः परितः समन्ताद्भवतीति परिभूः। स्वयम्भूः स्वयमेव भवतीति स्वयम्भूः कारणरहित इति यावत्। शाश्वतीभ्यः निरन्तरेभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्यः सकाशात् याथातथ्यतः [2]साध्यसाधनादिनियतस्वरूपेण अर्थान् चेतनाचेतनरूपपदार्थान् व्यदधात् विविधं कल्पितवानित्यर्थः॥ ८॥

समाप्तं ज्ञानप्रकरणं इदानीं यस्तूक्त[3]मात्मतत्त्वं न जानाति न च संन्यासेऽधिकारी संसारेऽत्यन्तं प्रीतिमान् तं प्रति कुर्वन्नेवेह कर्माणीत्यादिनोक्तस्य कर्मणो देवतोपासनायाश्च समुच्चयं विधित्सुः[4] तयोरेकैकं निन्दति—

---

१. धर्माधर्मजनकग्रहणम् आदि। २. साध्यसाधनादीत्यादिना इतिकर्त्तव्यतादिग्रहणम्। ३, ईश्वरात्मतत्त्वम्। ४. विधातुमिच्छुः।

अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्याया ँ रताः ॥ ९ ॥

ये अविद्वांसो धनाभिलाषिणः अविद्यां विद्याया भिन्ना अविद्या ज्योतिष्टोमादिलक्षणं केवलं कर्म उपासते अनन्यचित्ताः सन्तः अनुतिष्ठन्ति ते अन्धन्तमः अहंममाभिमानलक्षणमदर्शनात्मकं तमः संसारमिति वा प्रविशन्ति प्रकर्षेण प्राप्नुवन्ति । ननु कर्म परित्यज्य किं देवता तैरुपासितव्या स्यादिति यत आह-तत इति । ये उ ये तु अज्ञाः कर्मत्यागिनः विद्यायां उपास्यदेवोऽहमिति देवतोपासने रताः तत्पराः ते देवतोपासकाः ततः [1]उक्ततमसः–भूय इव अधिकमेव तमः अहं–ममाभिमानलक्षणमदर्शनात्मकं संसारमिति वा तत्तद्वैश्वर्यप्राप्तेरधिकाऽऽसक्तिहेतुत्वात् प्रविशन्तीत्यनुषङ्गः ॥ ९ ॥

ननूभयोः प्रत्येकं निन्दया किमुभयोः फलं नास्तीत्याशङ्क्य तयोः फलभेदमाह—

अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥१०॥

विद्यया देवतोपासनेन अन्यत् पितृयाणप्राप्यलक्षणात्कर्मफलात्पृथगेव देवयानप्राप्यलक्षणं फलं आहुः कथयन्ति । एवकारेण विद्याकर्मणोरङ्गाङ्गिभावो व्यावर्त्यते । अविद्यया कर्मणा अन्यत् [2]विद्याफलाद्देवलोकप्राप्तिलक्षणात्पृथग्भूतं पितृलोकप्राप्तिरूपं फलं आहुः कथयन्ति । [3]अत्रैवकाराभावाच्चित्तशुद्धिद्वाराऽऽत्मज्ञानोत्पादकत्वमपि कर्मणामवगम्यते इति उक्तप्रकारकं धीराणां धीमतां वेदविदां वचनं शुश्रुम वयं श्रुतवन्तः । के ते धीरा इत्यत आह–य इति । ये गुरवः नः अस्मभ्यं तत् कर्मोपासनं च विचचक्षिरे व्याख्यातवन्तः ॥ १० ॥

एवं विद्याकर्मणोः सफलत्वमभिधाय इदानीं तयोः समुच्चयमाह—

विद्याञ्चाविद्याञ्च यस्तद्वेदोभय ँ सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥

यः अधिकारी विद्यां च देवतोपासनं च अविद्यां च अग्निहोत्रादिकर्म च तदुभयं उक्तविद्याकर्मरूपद्वयं सह मिलितं एकपुरुषानुष्ठेयं वेद जानाति, ज्ञात्वा करोति च । सः पुरुषः अविद्यया उक्तकर्मणा मृत्युं स्वाभाविकं कर्मज्ञानात्मकं तीर्त्वा अतिक्रम्य विद्यया देवतोपासनेन अमृतं उपास्यदेवतास्वरूपम् अश्नुते प्राप्नोति ॥ ११ ॥

---

१. अन्धात्मकं तमसः । २. 'विद्यया देवलोकः कर्मणा पितृलोकः' इति श्रुतेः । ३. अविद्ययैवकाराभावात् ।

इदानीं व्याकृताव्याकृतोपासनयोः [1]समुच्चिचीर्षया प्रत्येकं तावन्निन्दति--

अन्धन्तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्याँ रताः ॥ १२ ॥

ये अज्ञाः असम्भूतिम् अव्याकृताख्यां जगत्कारणभूतां प्रकृतिम् उपासते जगत्कारणभूता प्रकृतिरहमिति निरन्तरं ध्यायन्ति ते अव्याकृतोपासकाः अन्धन्तमः अहम्ममाभिमानरूपादर्शनात्मकं संसारं वा प्रविशन्ति प्राप्नुवन्ति ये उ ये तु पुरुषाः सम्भूत्यां व्याकृते कार्यभूते हिरण्यगर्भे रताः प्रीतिमन्तः हिरण्यगर्भचिन्तनपरायणा इति यावत् ते हिरण्यगर्भोपासकाः ततः उक्तान्धतमसः भूय इव अधिकमेव तमः अहम्ममाभिमानलक्षणमदर्शनात्मकं संसारं वा प्रविशन्तीत्यनुषङ्गः॥१२॥

इदानीमुक्तोपासनयोरुभयोः फलभेदमाह--

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥

सम्भवात् कार्यरूपहिरण्यगर्भोपासनात् अन्यत् पृथगेव फलमणिमाद्यैश्वर्यप्राप्तिलक्षणं आहुः कथयन्ति । असम्भवात् अव्याकृतोपासनात् अन्यत् पृथगेव प्रकृतिलयलक्षणं फलमाहुः कथयन्ति । इति उक्तप्रकारकं वचनं धीराणां धीमतां वेदविदां शुश्रुम वयं श्रुतवन्तः । ते धीरा के इत्यत आह-य इति । ये गुरवः नः अस्मभ्यं तत् उक्तोपासनद्वयं विचचक्षिरे व्याख्यातवन्तः ॥ १३ ॥

उक्तोपासनद्वयस्य समुच्चयार्थमाह-

सम्भूतिश्च विनाशश्च यस्तद्वेदोभयँ सह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ १४ ॥

सम्भूतिं चेत्यत्रासम्भूतिमित्यर्थलाभायाकारलोपो द्रष्टव्यः । विनाशं च विनाशधर्मकं हिरण्यगर्भरूपं कार्यमित्यर्थः । तथा च यः उपासकः असम्भूतिं च अव्याकृतोपासनां विनाशं च विनाशधर्मकहिरण्यगर्भस्योपासनं च तदुभयं उक्तं [2]कारणकार्योपासनद्वयं सह मिलितं एकपुरुषकर्तृकं वेद जानाति ज्ञात्वा करोति च । स उपासकः विनाशेन विनाशवता हिरण्यगर्भरूपकार्यस्योपासनेन मृत्युं अनैश्वर्याधर्मकामादिदोषजातं तीर्त्वा अतिक्रम्य असम्भूत्या अव्याकृतोपासनया अमृतं प्रकृतिलयरूपं अश्नुते प्राप्नोतीत्यर्थः ॥ १४ ॥

---

१. समुच्चेतुमिच्छया । २. अव्याकृतव्याकृतयोः ।

यः कार्यकारणात्मकः सूर्यमण्डलस्थः पुरुष एव "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इत्युक्तसमुच्चयेन सम्प्राप्यो भवति तं प्रार्थयते—

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥

हे पूषन् ! जगतःपोषक, सत्यस्य बाधरहितस्य तव मुखं प्राप्तिद्वारभूतं हिरण्मयेन ज्वलत्सुवर्णवद्दीप्यमानेन पात्रेण [1]पात्रसमेनापिधानरूपेण तेजोमण्डलेन अपिहितं आच्छादितं तद् मुखपिधायकतेजोमण्डलं त्वं सूर्यरूपस्त्वम् अपावृणु अपसारय । सत्यधर्माय सत्यस्य तवोपासनात्सत्यं धर्मो यस्य मम सोऽहं सत्यधर्मा तस्मै मह्यं यद्वा सत्यधर्माय यथाभूतधर्मानुष्ठात्रे मह्यं मदर्थमपावृणु इति पूर्वेण सम्बन्धः । अपसारणप्रयोजनमाह—दृष्टये इति । तव दर्शनार्थमित्यर्थः ॥ १५ ॥

पुनरपि सूर्य्यं बहुधा संबोधयन् कार्यान्तरमाह—

पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह
तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि
योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥

हे पूषन् ! सर्वस्य पोषक, एकर्षे एक एव ऋषति गच्छतीत्येकर्षिः तत्संबुद्धौ हे एकर्षे यम हे सर्वनियामक सूर्य्य हे सर्वकर्मसु लोकप्रवर्त्तक हे आकाशगमनेति वा प्राजापत्य हे प्रजापतेरपत्य रश्मीन् किरणान् व्यूह उपसंहर तेजः तापकज्योतिःसमूह स्वस्मिन्नेकीभावङ्कुरु । तत्रापि प्रयोजनमाह-यदिति । यत् प्रसिद्धं ते तव रूपं स्वयंज्योतिःस्वभावं कल्याणतमम् अतिशयेन कल्याणमानन्दात्मरूपं तत् उक्तरूपं ते तव प्रसादात् पश्यामि साक्षात्करोमि । न त्वहं भृत्यवदन्यः सन् त्वां याच इत्याह-य इति । यः प्रसिद्धः असौ आदित्यमण्डलस्थः परोक्षः असौ शास्त्रदृष्ट्या प्रत्यक्षः पुरुषः सर्वत्र परिपूर्णः सः उक्तलक्षणः पुरुषः अहं अस्मत्प्रत्ययगोचरोऽस्मि भवामीत्यर्थः ॥ १६ ॥

मरणकाले तूपासकेनैवमनुसंधा[2]तव्यमित्याह—

वायुरनिलममृतमथेदं भस्मान्तँ्शरीरम् ।
ॐ क्रतो स्मर कृतँ्स्मर क्रतो स्मर कृतँ्स्मर ॥१७॥

---

१. पात्रसदृशेन । २. चिन्तनीय ।

वायुः मम प्राणोऽनिलं बाह्यं वायुममृतं देवतात्मकं प्रविशत्विति शेषः। वायूपलक्षितं मम लिङ्गशरीरमुत्क्रामत्विति द्रष्टव्यम्। अथ वायुनिर्गमनानन्तरमिदं प्रत्यक्षं शरीरं स्थूलदेहो भस्मान्तम् अग्नौ हुतं सत् भस्मरूपं भूयात्। ॐ हे ॐकाराभिधेयेश्वराभिन्न आदित्य क्रतो हे आदित्याभिन्नसङ्कल्पात्मन् हे यज्ञरूपेति वा स्मर त्वदुपासकं मां स्मर कृतं मयाऽनुष्ठितं ज्ञानं कर्म च स्मर स्पष्टम्। द्विरुक्तिरादरार्था॥ १७॥

एवमुपास्यां [1]देवतां संप्रार्थ्य सुमार्गप्राप्त्यर्थं कर्मसाधनभूतां देवतां प्रार्थयते—

अग्ने नय सुपथा राये अस्मान्विश्वानि देव
वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नम उक्तिं विधेम॥ १८॥

इति ईशावास्योपनिषत्॥ १॥

हे अग्ने अस्मान् [2]समुच्चयानुष्ठातॄन् सुपथा शोभनेनोत्तरायणमार्गेण नय प्रापय राये धनाय कर्मफलभोगायेति यावत्। हे देव दीप्तिमन् विश्वानि सर्वाणि वयुनानि कर्माणि उपासनानि च विद्वान् जानन् सन् त्वं अस्मत् उपासकेभ्यः जुहुराणं कुटिलं वञ्चनात्मकम् एनः पापं युयोधि वियोजय, ते तुभ्यं भूयिष्ठां अधिकतरां नमउक्तिं नमस्कारवचनं विधेम कुर्म इत्यर्थः॥ १८॥

इति श्रीमदुदासीनवर्य्यामरदासपदपद्ममकरन्दतृप्तमानसेन श्रीमदमरदासाख्येन विरचिता ईशावास्योपनिषद्व्याख्या उपनिषन्मणिप्रभा समाप्तिङ्गता।

●

---

१. अग्निदेवतां। २. कर्मोपासनसमुच्चय।



### ॐ तत्सद्ब्रह्मणे नमः

# २. केनोपनिषत्

## मणिप्रभाव्याख्यासमलंकृता

वागादीन्द्रियग्रामं मनः प्राणं धियं वपुः ।
प्रेरयति हृदिस्थो यस्तं वन्दे कृष्णविग्रहम् ॥ १ ॥
हृदि विद्यागुरूणां तु निधाय पदपङ्कजम् ।
केनोपनिषदि व्याख्या संक्षिप्ता क्रियते मया ॥ २ ॥

ॐ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च । सर्वाणि सर्वं ब्रह्मोपनिषदं, माऽहं ब्रह्म निराकुर्यां, मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणमस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ।

ॐ शान्तिः शान्तिः शान्तिः ।

आप्यायन्त्विति । मम मुमुक्षोरङ्गानि करचरणादीनि वागितीतरकर्मेन्द्रियाणामुपलक्षणम् । प्राण इत्यपानादीनामुपलक्षणम् । चक्षुः श्रोत्रमितीतरज्ञानेन्द्रियाणामुपलक्षणम् । तथा च मम सर्वाणीन्द्रियाणि प्राणपञ्चकं चाप्यायन्तु ब्रह्मध्यानानुकूलतया वृद्धिं प्राप्नुवन्तु । सर्वं निखिलमुपनिषदम् औपनिषदं ब्रह्म ब्रह्मैव ब्रह्म सत्तातिरिक्तसत्ताशून्यं निखिलमिति यावत् । अहं ब्रह्मातिरिक्तं वस्त्वस्तीति वा ब्रह्म नास्तीति वा ब्रह्म मा निराकुर्यां मा तिरस्कुर्यां मा मां ब्रह्म मानिराकरोत्

स्त्वस्मान्मा वियोजयतु संसारे मा पातयत्विति यावत्। अनिराकरण-मस्तु आवयोः परस्परं प्रीतिरेवास्तु। तदात्मनि ब्रह्मात्मनि निरते निरन्तरं प्रेम कुर्वति मयि ये शमादय उपनिषत्सु वेदान्तेषु प्रकाशिता धर्मास्ते धर्माः मयि सन्तु। आवृत्तिरादरार्था। शान्तिशब्दस्य त्रिरुक्ति-स्त्वध्यात्मिकादित्रिविधविघ्नप्रशान्त्यर्थमिति बोध्यम्।

अथ सामवेदे तलवकारशाखायां केनोपनिषत्।

इतः पूर्वमष्टाध्याय्यां कर्माण्युपासनानि च चित्तशुद्ध्यर्था-न्युक्तानि। इदानीं तु कर्मोपासनाभ्यां शुद्धचित्तस्य मुमुक्षोर्मोक्षसाधन-भूता ब्रह्मविद्योच्यते इति नवमाध्यायस्यारम्भः। मानान्तरानधिगतं ब्रह्मास्य विषयः। तद्विद्याद्वारा मुक्तिः प्रयोजनम्। विषयेण सह ग्रन्थस्य प्रतिपाद्यप्रतिपादकभावः सम्बन्धः। शुद्धान्तःकरणो मुमुक्षुः साधनचतुष्टयसम्पन्नोऽधिकारीत्यनुबन्धचतुष्टयं प्रेक्षावतां प्रवृत्त्यङ्ग-भूतं तावत्सिद्धम्। तत्रापि प्रतिपाद्यस्य ब्रह्मात्मतत्त्वस्यातिसूक्ष्मत्वा-त्तत्प्रतिपत्तिसौकर्यार्थं गुरुशिष्यसम्वाद इवोच्यते। तत्रादौ शिष्यः पृच्छति—

केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति॥१॥

केन कर्त्रा सताऽसता वा, चेतनेनाचेतनेन वा, भिन्नेनाभिन्नेन वा, इषितं सन्निधिमात्रेण प्रेरितं सत् मनः सङ्कल्पविकल्पात्मकं पतति नियमेन स्वविषयं प्रति गच्छति। सामान्यतः प्रेरयितारं पृष्ट्वा विशेष-तस्तं पृच्छति-प्रेषितमिति। प्रकर्षेण सन्निधितोऽधिकव्यापारेण प्रेरित-मित्यर्थः। इषितं प्रेषितमित्यत्रेटि सति गुणाभावः छान्दसः। ननु कूटस्थस्यैव मुमुक्षुभिर्जिज्ञास्यत्वात्तस्य चाक्रियत्वात् केन प्रेषितम् इति प्रेषकप्रश्नो नोपपद्यते इति चेत्। न, विकारी, तद्भिन्नो वा प्रेरक इति सन्देहवतो मुमुक्षोः तथाविधप्रश्नोपपत्तेः। [1]प्रेषितमिवेति वाऽर्थः। किञ्च केन कर्त्रा युक्तः प्रयुक्तः प्रेरितः प्राणः पञ्चवृत्त्यात्मकोऽध्यात्मादि-भेदभिन्नः क्रियाशक्तिः। प्रथमः इन्द्रियप्रवृत्तितः प्राक् प्रवृत्तत्वात् मुख्यः प्रैति ऊर्ध्वादिदेशेषु गच्छति। केन कर्त्रा इषितां प्रेरितां इमां ताल्वाद्यष्टस्थानेषु स्थितां वाचं वागिन्द्रियरूपां वदन्ति समुच्चारयन्ति जना इति शेषः। वागिन्द्रियस्य शब्दाभेदोपचारेण वदनीयत्वोक्ति-

१. प्रेषितपदस्य द्वितीयोऽर्थः।

बोध्या । चक्षुः श्रोत्रं चक्षुश्च श्रोत्रं च क उ कः प्रसिद्धः देवः दीप्तिमान् युनक्ति प्रेरयतीत्यर्थः ॥ १ ॥

एवं शिष्येण पृष्टो गुरुराह—

श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाच ँ स उ प्राणस्य प्राणश्चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति॥२॥

यत् यो मनआदीनां प्रेरकः त्वया पृष्टः स उ स एव श्रोत्रस्य शब्दोपलब्धेरसाधारणकारणस्य श्रोत्रेन्द्रियस्य श्रोत्रं शब्दग्रहणसामर्थ्यकारणम् मनसः सर्वविषयोपलब्धेः साधारणकारणस्य मनः स्वविषये प्रवृत्तिसामर्थ्यकारणम् । वाचो वागिन्द्रियस्य ह प्रसिद्धस्य वाचं शब्दोच्चारणसामर्थ्यस्य कारणम् । वाचमिति द्वितीया [1]प्रथमात्वेन विपरिणमनीया प्राणस्य पञ्चवृत्त्यात्मकस्य प्राणस्य प्राणः शरीरधारणसामर्थ्यस्य कारणम् । चक्षुषः चक्षुरिन्द्रियस्य चक्षुः रूपस्वरूपवतश्चोपलब्धिसामर्थ्यस्य कारणम् । अयमर्थः श्रोत्रादीनां स्वस्वविषये प्रवृत्तिनियमस्य कारणभूतः श्रोत्रादिविलक्षणः चेतनोऽस्ति । संहतानां प्रासादादिवत्परार्थत्वनियमादिति । चक्षुषश्चक्षुरित्यतोऽनन्तरं तत्ज्ञात्वा इति शेषः । धीराः धीमन्तो ब्रह्मविदः अतिमुच्य श्रोत्रादावात्मबुद्धिं त्यक्त्वा अस्मात् सर्वप्राणिप्रत्यक्षात् लोकात् लोकपदवाच्यात्कार्यकारणसंघाताभिमानात् प्रेत्य व्यावृत्य तदभिमान त्यक्त्वेति यावत् । अमृताः मरणरहिता मुक्ताः भवन्ति इति स्पष्टम् ॥ २ ॥

ननु येन प्रेरितं सन्मनआदिकं गच्छति तदिदमितीदन्तया कुतो न प्रदर्श्यत इत्यत आह—

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथो अविदितादधि इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥ ३ ॥

तत्र श्रोत्रादीनां श्रोत्रादिरूपे ब्रह्मणि चक्षुः रूपग्राहकं चक्षुरिन्द्रियं न गच्छति न प्राप्नोति रूपादिहीनत्वाद्ब्रह्मणः । ननु चक्षुरग्राह्योऽपि स्वर्गादौ वाग्विषयत्वदर्शनादस्तु वाग्विषयं ब्रह्मेत्यत आह—न वाग-

---

१. वाक्प्रथमातः ॥

च्छतीति। वाचा ह्युच्चार्यमाणः शब्दोऽभिधेयं यदा प्रकाशयति तदाऽभिधेयं प्रति वाग्गच्छतीत्युच्यते। ब्रह्मणस्तु शब्दस्य तज्जनककारणस्य[1] चात्मत्वान्न तत्र वाग्गच्छतीत्यर्थः। अस्तु तर्हि मनसो विषयो ब्रह्मेत्यत आह-नोमन इति। मनो ह्यन्यस्य सङ्कल्पयितृ भवति नात्मनः। मनसोऽप्यात्मभूतं ब्रह्म। अतः तत्र[2] मनो न गच्छति। तद्ब्रह्म न सङ्कल्पयतीत्यर्थः। चक्षुरादीनामविषयत्वादेव न विद्मः श्रोत्रस्य श्रोत्रमित्यादिनोक्तोपदेशमन्तरेणात्मदर्शनोपायं स्वबुध्या वयं न जानीमः। न विजानीमः विशेषतः शास्त्राचार्य्योपदेशतोऽपि तं प्रकारं नाधिगच्छामः। यथा येन प्रकारेण एतत् 'श्रोत्रस्य श्रोत्रम्' इत्यादिनोक्तं ब्रह्म अनुशिष्यात् मादृशो गुरुः त्वादृशं शिष्यं श्रोत्रस्य श्रोत्रमित्यादिनोपदिश्य पश्चात् इदन्तयोपदिशेत्। अनिदंरूपस्य निर्विशेषस्य सर्वसाक्षिणो ब्रह्मणः श्रोत्रादिशेषित्वेनैव प्रदर्शनं युक्तमिति भावः। ननु निर्विशेषत्वमेव ब्रह्मणो न युक्तं सर्वलोकप्रसिद्धाभ्यां ज्ञातत्वाज्ञातत्वाभ्यामन्यतरविशेषणेन विशेषणीयत्वादित्याशङ्क्याह—अन्यदिति। तत् श्रोत्रस्य श्रोत्रमित्यादिनोक्तं ब्रह्म विदितात् ज्ञानविषयात् अन्यदेव पृथगेव। किन्तर्ह्यज्ञातस्वरूपं[3] तदित्यतः आह-अथो अपि अविदितात् ज्ञानाविषयादव्याकृतात् अधि अन्यदेव। यद्धि ज्ञानक्रियया ज्ञातुर्भाति तज्ज्ञातम्। यथा प्रत्यक्षं कार्यजातम्। यत्तु ज्ञानक्रियया ज्ञातुर्न भाति तदज्ञातम्। यथा परोक्षं कारणम्। ब्रह्म तु ज्ञातुरात्मत्वान्नित्यमेव भाति। न तु ज्ञानक्रिययेति भावः। ननु स्वकपोलकल्पितमेवेदमित्याशङ्क्याह—इतीति। इति उक्तप्रकारकं वचनं पूर्वेषाम् आचार्याणाम् शुश्रुम वयं श्रुतवन्तः। ननु के ते इत्यत आह—ये प्रसिद्धाः शास्त्रविदः नः अस्मभ्यमधिकारिभ्यः तत् श्रोत्रस्य श्रोत्रमित्यादिनोक्तं ब्रह्म व्याचचक्षिरे आसमन्तादुक्तवन्तः। एतेन गुरुमुखादेव विद्याऽवगतिर्भवति नान्यथेति सूचितम्॥ ३॥

वागाद्यविषयत्वेनैव तदवगन्तव्यं, नान्यथेति मन्त्रपञ्चकेनाह—

यद्वाचानभ्युदितं येन वागभ्युद्यते।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥ ४॥

यत् प्रसिद्धम् आत्मस्वरूपं वाचा वागिन्द्रियरूपया वर्णपदादि-

---

१. वागिन्द्रियस्य। २. ब्रह्मणि। ३. ब्रह्म।

रूपया वा अभ्युदितं इदंतयाऽप्रकाशितं येन प्रसिद्धेन ज्योतिषा वाक् वागिन्द्रियमभ्युद्यते स्वव्यापारक्षमा भवति। तदेव वाचाऽप्रकाशितलक्षणमेव ब्रह्म देशकालवस्तुपरिच्छेदरहितं त्वम् अस्मच्छिष्यः विद्धि जानीहि। एतेन केनेषितां वाचमिमामित्यस्योत्तरमुक्तं भवति। नेदं वागादिविषयभूतं न ब्रह्मेति शेषः। इदम् शब्दार्थमेवाह—यत् प्रसिद्धम् इदम् उपाधिविशिष्टं ज्ञातृज्ञानज्ञेयभेदवदनात्मरूपम् उपासते ध्यायन्ति जनाः। तन्न ब्रह्मेत्यर्थः ॥४॥

यन्मनसा न मनुते येनाहुर्मनो मतम्।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥५॥

यत्—प्रसिद्धं चैतन्यज्योतिः मनसा मनोबुद्धिरूपान्तःकरणेन न मनुते कोऽपि पुरुषो न जानाति येन मनसाऽविज्ञातेन चैतन्यज्योतिषा मनः मनो बुद्धिरूपमन्तःकरणं मतं विज्ञातं स्वकार्यकरणे समर्थम् आहुः कथयन्ति ब्रह्मविदः तदेव मनसः प्रकाशकं चैतन्यमेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते इत्यादि व्याख्यातं पूर्वम्। एतेन केनेषितं मन इत्यस्योत्तरमुक्तं भवति ॥५॥

यच्चक्षुषा न पश्यति येन चक्षूँषि पश्यति।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥६॥

यत्—आत्मज्योतिः चक्षुषा रूपग्राहकचक्षुरिन्द्रियेण न पश्यति लोके नावलोकयति येन चैतन्येन चक्षूंषि बहुवचनं छान्दसम्, चक्षुरिन्द्रियं पश्यति रूपं गृह्णाति, तदेव उक्तलक्षणमेव ब्रह्म त्वं विद्धीत्याद्युक्तार्थम् ॥६॥

यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदँ श्रुतम्।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥७॥

यत्—चैतन्यं श्रोत्रेण शब्दोपलब्धिसाधनेन श्रोत्रेन्द्रियेण न शृणोति कोऽपि न विषयीकरोति येन चैतन्येन इदं कर्णशष्कुलीवर्ति श्रोत्रं श्रोत्रेन्द्रियं श्रुतं स्वकार्यक्षमं भवतीत्यर्थः। तदेवेत्याद्युक्तार्थं यच्चक्षुषेत्यादिमन्त्रद्वयेन। चक्षुः श्रोत्रं क उ देवो युनक्तीत्यस्योत्तरं दत्तम् ॥७॥

यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८॥

इति प्रथमः खण्डः ॥१॥

यत्—चैतन्ये प्राणेन प्राणापानादिपञ्चवृत्तिरूपेण न प्राणिति प्राणचेष्टां न करोति येन चैतन्येन प्राणः पञ्चवृत्तिरूपः प्रणीयते शरीर-धारणलक्षणं स्वव्यापारं करोति तदेवेत्याद्युक्तार्थम्। एतेन केन प्राण इत्यादेरुत्तरं दत्तम्। श्रोत्रस्य श्रोत्रमित्यत्र सामान्येनोक्तस्यैव विशेषेण कथनान्न पुनरुक्तिः। यद्वा श्रोत्रस्य श्रोत्रमित्यत्र कण्ठतस्तदुत्तरमुक्तम्। अत्र तु वागादीन्द्रियाविषयत्वप्रतिपादनेनार्थादुत्तरमुक्तमिति न पुन-रुक्तिः ॥८॥ इति प्रथमः खण्डः ॥१॥

इदानीमसम्भावनादिदोषाच्छिष्यस्याबोधमन्यथाबोधं चाशङ्क्य तन्निराकर्तुं गुरुराह—

यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ

ब्रह्मणो रूपं यदस्य त्वं यदस्य च देवेष्वथ नु

मीमांस्यमेव ते मन्ये विदितम् ॥९।१॥

सुवेद भवद्भिरुक्तं ब्रह्म सुष्ठु विषयतयाऽहं जानामीत्येवं यदि त्वं मन्यसे संभावयसि, अपिशब्दः तह्यर्थे। तर्हि नूनं निश्चितं दभ्रमेव अल्पमेव ब्रह्मणो देशकालवस्तुशून्यस्य रूपं स्वरूपं त्वं हे शिष्य वेत्थ जानीषे। अल्पस्वरूपवेदितृत्वे हेतुमाह—यदिति। अस्य ब्रह्मणः यत् प्रसिद्धं त्वं त्वदात्मकं वेदितृरूपम् अस्य ब्रह्मणः यत् शास्त्रप्रसिद्धं देवेषु इन्द्राग्न्यादिषु मध्ये अधिदैवतं कार्य्यब्रह्मात्मकं वेद्यं रूपमस्ति तदुभयमपि यस्मादल्पमेव। यद्वा अस्य ब्रह्मणो यद्रूपं त्वं वेत्थ तत् तदल्पमेव त्वं वेत्थ देवेषु मध्ये यः कश्चित् अस्य यद्रूपं सुवेदेति त्वमिव मन्यते तत् सोऽप्यल्पमेव ब्रह्मणो रूपं वेत्तीत्यर्थः। अथ नु तस्मादेव ते त्वया मीमांस्यमेव विचारणीयमेव ब्रह्मस्वरूपमित्यर्थः। एवमाचार्य्येणोक्तः शिष्य एकान्ते आगमार्थं विचार्य तर्कतश्च निर्धार्य स्वानुभवञ्च कृत्वाऽऽचार्य्यसमीपं गत्वोवाच मन्ये विदितमिति। विदितं ज्ञातं मया ब्रह्मेति मन्येऽहं जानामीत्यर्थः ॥९॥१॥

विदितत्वे हेतुमाह—

नाहं[1] मन्ये सुवेदेति नो न वेदेति वेद च।

यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥१०॥२॥

---

१. "सर्वत्र मूल-भाष्यादिपुस्तकेषु 'नाहम्' इति पाठ। अत्र तु टीकाकृदङ्गीकृतपाठानुरोधात् 'नाहं' इति धृतः एतत्पाठप्रामाण्यं तु टीकाकृदेव वेत्ति।"

अह शब्द एवकारार्थे नञा सम्बध्यते । सुवेद प्रकृतं ब्रह्म अहं सुष्ठु जानामीति नैव मन्ये । नो न वेदेति । न वेद उक्तं न ब्रह्म जानामीत्यपि नो मन्ये तर्हि किं सन्दिग्धमित्यत आह—वेद चेति । जानामि चेत्यर्थः ।-चकाराज्ज्ञानन्नपि भेदबुद्धेरभावान्न जानामि । सुवेदेत्यनेन ब्रह्मणो दुर्विज्ञेयत्वं दर्शितम् । नो न वेदेत्यनेन शास्त्रैकगम्यत्वमुक्तम् । वेदपदेन संशयादिराहित्यमुक्तम् । चकारेण सर्वभेदभक्षकः साक्षात्कार उक्तः । तथा च दुर्विज्ञेयशास्त्रैकगम्यासन्दिग्धसर्वभेदशून्यं ब्रह्माहमस्मीति वाक्यार्थः । नः अस्माकं शिष्याणां मध्ये यः मदन्योऽपि कश्चित् तत् मदुक्तं वचनं वेद जानाति, स पुरुषोऽपि तत् श्रोत्रस्य श्रोत्रमित्यादिनोक्तं ब्रह्म वेद जानाति किं पुनस्तद्वचनमित्यत आह—नो न वेदेति वेद च । चकारो नोशब्देतिशब्दयोरनुवृत्त्यर्थः । न वेद ब्रह्म न जानामीति नो वेद च जानामीत्यपि नो, ब्रह्मणो विदिताविदिताभ्यामन्यत्वात् । तस्माद्ब्रह्म वेदैव स इत्यभिप्रायः ॥१०॥२॥

एवं गुरुशिष्यसंवादसिद्धमर्थं श्रुतिः स्वयमुपसंहरति—

यस्यामतं तस्य मतं मतं यस्य न वेद सः

अविज्ञातं विजानतां विज्ञातमविजानताम् ॥११॥३॥

यस्य विदुषः अमतं कर्तृकर्मादिरूपेणानधिगतं ब्रह्मेत्यभिप्रायः, तस्य त्रिपुट्यवगाहिज्ञानागोचराभिप्रायवतः मतं विज्ञातं भवति । यस्य अविदुषः मतं त्रिपुट्यवगाहिज्ञानविषयं ब्रह्मेत्यभिप्रायः । स उक्ताभिप्रायवान् न वेद त्रिविधभेदरहितं ब्रह्म न जानाति । भेददर्शित्वात् । विद्वदविदुषोरुक्तपक्षद्वये हेतुमाह—अविज्ञातमिति । यतः विजानतां विविधप्रमातृप्रमाणप्रमेयादिज्ञानवतामविदुषाम् अविज्ञातम् अविदितं ब्रह्म, अविजानतां विविधप्रमात्रादिभेदज्ञानरहितानां विशेषणावगतम्—त्रिविधपरिच्छेदशून्यब्रह्माहमस्मीति निश्चितमित्यर्थः ॥११॥३॥

नन्ववेद्यस्य ब्रह्मणः कथं भानं स्यादित्याशङ्क्याह—

प्रतिबोधविदितं मतममृतत्वं हि विन्दते ।

आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥१२॥४॥

वीप्सायामव्ययीभावः । बोधपदं बुद्धिवृत्तिपरम् । तथा च बोधं प्रति विदितं सर्वबुद्धिवृत्तिसाक्षित्वेनावगतं ब्रह्ममतं ज्ञातं भवतीत्यर्थः । उक्तात्मज्ञानस्य फलमाह—अमृतत्वमिति । हि यस्मादुक्तब्रह्मात्मज्ञानादमृतत्वं मोक्षं विन्दते लभते । आत्मज्ञानेनामृतत्वलाभे उप-

पत्तिमाह—आत्मनेवि। आत्मना समाहितेन मनसा वीर्यं गुरूपदिष्टविद्यारूपं सामर्थ्यमविद्यानिवृत्तिकारणं विन्दते लभते। विद्यया गुरूपदिष्टात्मज्ञानेन अमृतं जन्ममरणरहितं सर्वाधिष्ठानरूपमात्मानं विन्दते लभते नित्यलब्धस्यात्मनो लाभस्तु कण्ठस्थमणिप्राप्तिवदौपचारिक इत्यर्थः ॥१२॥४॥

यतोऽज्ञानादेव नानायोनिष्वनेकविधकष्टं पुरुषोऽनुभवत्यतोऽस्मिन्नेव शरीरे आत्मा ज्ञातव्य इत्याह—

इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः।
भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥१३॥५॥

इति द्वितीयः खण्डः ॥२॥

इह अस्मिन्नधिकारिशरीरे चेत् यदि अवेदीत् आत्मानं ज्ञातवान् अथ तदा सत्यं ब्रह्मानन्दात्मकं फलम् अस्ति विद्यते, चेत् यदि इह उक्ताधिकारिशरीरे नावेदीत अहं ब्रह्मास्मीति साक्षात्कारं न कृतवान्। तदा महती दीर्घकालीना विनष्टिः जन्ममरणादिक्लेशप्राप्तिरूपविनाशो भवतीति श्रुत्या सानुक्रोशमिदमुक्तम्। न ह्यस्मिन्देहे सफलमात्मज्ञानं दुर्लभमस्ति। विद्वदनुभवसिद्धत्वादित्याह—भूतेष्विति। भूतेषु भूतेषु इति वीप्सा चतुर्विधप्राणिसंग्रहार्था। चराचरप्राणिषु स्थितं प्रत्यग्ब्रह्म विचित्य साक्षात्कृत्य धीराः बुद्धिमन्तो विद्वांसः अस्माल्लोकात् अहं मामाभिमानलक्षणाऽविद्यारूपात् प्रेत्य निवृत्य अमृता मरणरहिताः मुक्ता भवन्तीत्यर्थः ॥५॥

इति द्वितीयः खण्डः ॥२॥

उत्तमाधिकारिगोचरं निर्गुणब्रह्मात्मनाज्ञानमुक्त्वाऽधुना मन्दमत्यनुजिघृक्षया सगुणब्रह्मोपासनां विधित्सुराह—

ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त।
त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥१४॥१॥

ब्रह्म सच्चिदानन्दलक्षणं ह किल देवेभ्यः देवानामनुग्रहार्थं विजिग्ये देवानां लोकद्वयप्रतिकूलानसुरान् जितवत्, तस्य पूर्वोक्तस्य ह किल ब्रह्मणः सच्चिदानन्दरूपस्य विजये असुराणां परिभवलक्षणजये सति देवाः इन्द्राग्निवायुप्रभृतयः अमहीयन्त पूजिता अभवन्। ते इन्द्रादयोऽविज्ञातब्रह्मस्वरूपाः ऐक्षन्त वक्ष्यमाणलक्षणमीक्षणं विचारं कृतवन्तः। ईक्षणप्रकारमाह—अस्माकमिति। अस्माकमेव कार्य-

कारणसंघाताभिमानिनामिन्द्राग्न्यादीनामेव अयम् अस्मद्दृष्टिगोचरः विजयः असुरपरिभवरूप उत्कर्षः अस्माकमेवायमिति व्याख्यातम्। महिमा सर्वेभ्यः स्तुतिपूजादिलाभलक्षणमहत्वम्, इति एवम् ऐक्षन्तेति पूर्वेणान्वयः ॥१४॥१॥

तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव
तन्न व्यजानन्त किमिदं यक्षमिति ॥१५॥२॥

तत् असुरपरिभावकं ब्रह्म ह किल एषामिन्द्रादीनां मिथ्येक्षणं विजज्ञौ विज्ञातवत्। तेभ्यः तेषां मिथ्याभिमानिनां देवानामनुग्रहार्थं ह किल प्रादुर्बभूव किमपि रूपविशेषं धृत्वा दृष्टिगोचरमागतवत्। तत् प्रादुर्भूतं ब्रह्म न व्यजानन्त देवा नैव विज्ञातवन्तः। इदम् अस्मत्प्रत्यक्षं यक्षं पूज्यं किं किमात्मकम् इति एवं न व्यजानन्तेत्यर्थः ॥१५॥२॥

तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि
किमेतद्यक्षमिति तथेति ॥१६॥३॥

ते इन्द्रादयो देवास्तज्जिज्ञासवः अग्निं देवानामग्रगामिनं वह्निं अब्रुवन् उक्तवन्तः। तदुक्तिमाह—जातवेद इति। जातवेद हे अग्ने एतत् अस्मद्गोचरस्थं यक्षं विजानीहि एतत् पुरःस्थितं यक्षं किं किंस्वरूपं त्वं बुध्यस्व इति एवमुक्तोऽग्निः तथा तथास्तु इति एवमङ्गीकृत्य ॥१६॥३॥

तदभ्यद्रवत्तमभ्यवदत् कोऽसीत्यग्निर्वा।
अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥१७॥४॥

तत् उक्तयक्षम् अभ्यद्रवत् तत्समीपं गतवान्, तत् उक्तयक्षः तं स्वसमीपमागतमग्निम् अभ्यवदत् प्रत्यभाषत कोऽसि त्वं किन्नामा भवसि इति—एवं यक्षेण पृष्टः स आह—अग्निरिति। अग्निरग्निनामा वै प्रसिद्धः अहं त्वत्समीपमागतः अस्मि भवामि इति ईदृशं वचनम् अब्रवीत् उक्तवान्। विशेषनाम्ना पुनरात्मानं श्लाघयन्नाह—जातवेदा इति। जातवेदाः जातवेदोनामा वै प्रसिद्धः। अहमस्मि। इति एवमग्निनोक्ते सति ॥१७॥४॥

तस्मिंस्त्वयि किं वीर्य्यमित्यपीदं
सर्वं दहेयं यदिदं पृथिव्यामिति ॥१८॥५॥

यक्ष आह तस्मिन् उक्तनाम्नि त्वयि मत्समीपमागते जातवेदसि

किं वीर्यं किंसामर्थ्यमस्ति इति एवं पृष्टोऽग्निराह अपि सम्भावनायाम् इदं शुष्कार्द्ररूपं सर्वं निखिलं दहेयं दहनं कुर्याम्। पुनरुक्तिवारणाय सर्वशब्दार्थमाह—यदिति। यत् प्रसिद्धम् इदं चराचरात्मकं वस्तुजातं पृथिव्यां भूमौ स्थितम्, पृथिवीग्रहणं चतुर्दशानां भुवनानामुपलक्षणार्थम्। इति एवमग्निनोक्ते सति ॥१८॥५॥

तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥१९॥६॥

तस्मै तस्योक्ताभिमानवतोऽग्नेरग्रे तृणं क्षुद्रं शुष्कं तृणं निदधौ नितरां स्थापितवत् ब्रह्म स्थापयित्वेदमुवाच एतत् मया स्थापितं शुष्कतृणं दह भस्मीकुरु इति एवं ब्रह्मणोक्तोऽग्निः तत् पुरः स्थितं तृणं सर्वजवेन स्वकीयेन निखिलवेगेन उपप्रेयाय समीपं प्रकर्षेण गतवान्। तत् तृणं दग्धुं भस्मीकर्तुं न शशाक समर्थो न बभूव सः अग्निर्विगतगर्वः तत एव शुष्कतृणदहनरूपव्यापारादेव निववृते निवृत्तिं चकार व्रीडितः सन् शीघ्रमेव देवान् प्रत्यागत्योवाच—नैतदिति। एतत् अमुकनामकममुकाकृतिविशेषमिति विशेषरूपेण विज्ञातुं वेदितुं नाशकम् समर्थो नाभवम् इति एवमग्निनोक्ते सति ॥१९॥६॥

अथ वायुमब्रुवन् वायवे तद्विजानीहि
किमेतद्यक्षमिति　　　　　तथेति ॥२०॥७॥

अथ अग्निवाक्यश्रवणानन्तरं वायुं सर्वजगतः प्राणं प्रभञ्जनम् अब्रुवन् इन्द्रादयो देवा उक्तवन्तः। तेषामुक्तिमाह—वायो हे वायो एतत् अस्मद्गोचरस्थं यक्षं विजानीहि विशेषतस्त्वं बुध्यस्व। एतत् यक्षं किं किंस्वरूपम् इति एवमुक्तो वायुः तथा तथाऽस्तु इति एवमङ्गीकृत्य ॥२०॥७॥

तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा अहमस्मीत्य-
ब्रवीन्मातरिश्वा　　वा　　अहमस्मीति ॥२१॥८॥

तत् उक्तयक्षम् अभ्यद्रवत् तत्समीपं गतवान्, तं स्वसमीपमागतं वायुम्—अभ्यवदत् प्रत्यभाषत् कोऽसि त्वं किंनामा भवसि इति एवं यक्षेण पृष्टः स आह वायुरिति। वायुर्वायुनामा वै प्रसिद्धोऽहमस्मि इति एवं अब्रवीत् उक्तवान्। सामान्यतः स्वस्य नामोक्त्वा विशेषतः स्वानमाऽऽह मातरिश्वेति। मातरिश्वा मातर्य्याकाशे श्वयति गच्छ-

तीति मातरिश्वनामा वै प्रसिद्धोऽहमस्मि त्वत्समीपमागतो भवामि । इति ईदृशवचने वायुनोक्ते सति ॥२१॥८॥

तस्मिंस्त्वयि किं वीर्य्यमित्यपीदꣳ सर्वमाददीयं
यदिदं पृथिव्यामिति ॥२२॥६॥

तस्मिन् उक्तनाम्नि त्वयि वायो किंवीर्य्यं किं सामर्थ्यमस्ति इति एवं पृष्टो वायुराह—अपीति । अपि सम्भावनायाम्, इदं सर्वमाददीयं गृह्णीयाम्, आदायान्तरिक्षे गमनं कुर्यां यत्प्रसिद्धमिदं स्थावरजङ्गमात्मकं पृथिव्यां भूमौ वस्तुजातं स्थितम् । इति एवं वायुनोक्ते सति ॥२२॥६॥

तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन
तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं
यदेतद्यक्षमिति ॥२३॥१०॥

तस्मै तस्य वायोरग्रे तृणम् अत्यल्पं शुष्कं स्थावररूपं तृणं निदधौ नितरां पुरः स्थापितवत् । ब्रह्म तत्स्थापयित्वेदं जगौ—एतच्छुष्कं तृणं मया पुरःस्थापितम् आदत्स्व त्वं गृहाण आदायान्तरिक्षे नय इति एवं यक्षेणोक्तो वायुः तत् अग्रे स्थितं तृणम् उपप्रेयाय समीपं प्रकर्षेण गतवान् । सर्वजवेन स्वकीयेन निखिलवेगेन तत् यक्षस्थापितं शुष्कं तृणम् आदातुं ग्रहीतुं न शशाक शक्तो न बभूव सः वायुः तत एव तृणग्रहणव्यापारादेव निववृते तस्मान्निवृतिं चकार, लज्जितः सन् झटित्येव देवान् प्रत्यागत्योवाच नैतदिति । एतत् पुरः स्थितं यत् प्रसिद्धं सामान्यतः यक्षरूपम् एतत् विशेषरूपेण स्थितं विज्ञातुं वेदितुं नाशकं समर्थो नाभवम् । इति एवं वायुनोक्ते सति ॥२३॥१०॥

अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति ।
तथेति तदभ्यद्रवत्तस्मात्तिरोदधे ॥२४॥११॥

अथ विगतगर्वस्य वायोर्वचनश्रवणानन्तरमिन्द्रं परमैश्वर्य्यसम्पन्नं त्रिलोकीनाथम् अब्रुवन् उक्तवन्तः मघवन् भो इन्द्र एतत् अस्मद्गोचरस्थं यक्षं विजानीहि विशेषतस्त्वं बुध्यस्व एतत् समीपस्थं यक्षं किं किंस्वरूपम् । इति अनेन प्रकारेण वायुनोक्त इन्द्रः तथा तथाऽस्तु इति एवमङ्गीकृत्य तत् उक्तयक्षम् अभ्यद्रवत् तत्समीपं गतवान् तस्मात् स्वसमीपमागतादिन्द्रात् तिरोदधे आत्मानमन्तर्हितं चकार । तस्येन्द्रत्वाभिमानो निराकरणीय इति हेतोरिन्द्रेण सह सम्भाषणमात्रमपि न कृतवदिति भावः ॥२४॥११॥

स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुम
हैमवतीं ताँ होवाच किमेतद्यक्षमिति ॥२५॥१२॥

इति तृतीयः खण्डः ॥३॥

स विषण्णमनस्कः इन्द्रः विगताभिमानः सन् तस्मिन्नेवाकाशे यत्र यक्षं स्थितं तत्रैवावकाशप्रदेशे तदैव यक्षं ध्यायन्सन् तस्थाविति शेषः। इन्द्रस्य यक्षे परमभक्तिं ज्ञात्वा स्त्रीरूपेण ब्रह्मविद्या प्रादुर्बभूव। स तां स्त्रियं ब्रह्मविद्यामूर्तिमतीं ददर्शेति शेषः। दृष्ट्वा चाऽऽजगाम तस्याः समीपमागतवान्। कथं भूतां स्त्रियं बहुशोभमानाम् अधिककान्तिमतीम् उमां भवानीरूपां ब्रह्मविद्यां हैमवतीं हिमवतस्तनयाम्। यद्वा हेमकृताभरणवतीं तामुक्तविशेषणां स्त्रियं ह किलोवाच पप्रच्छ। तदुक्तिमाह—किमेतदिति। एतत् अस्मत्पुरःस्थितं यक्षं किं विशेषरूपेण किंनामकम् इति एवमिन्द्रेण पृष्टे सति ॥२५॥१२॥

इति तृतीयः खण्डः ॥३॥

सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति।
ततो हैव विदाञ्चकार ब्रह्मेति ॥२६॥१॥

सा इन्द्रेण पृष्टा उमा ब्रह्म देशकालवस्तुपरिच्छेदशून्यं भवतां विजयकारणम् इति अनेन प्रकारेण ह किलोवाच इन्द्रं प्रत्युक्तवती। ब्रह्मेति। नामधेयमुक्त्वा तस्य महिमानमप्याह—ब्रह्मणः उक्तलक्षणस्य वै प्रसिद्धस्य एतद्विजये ब्रह्मकर्तृकासुरपरिभवलक्षणे विशेषेण जये सति महीयध्वं स्तुतिपूजादिलाभरूपं महत्त्वं यूयं प्राप्नुथ स्वातन्त्र्याभिमानं माकुरुत। इति एवमुमयोक्तः इन्द्रः ह किल तत एव उमावचनादेव विदाञ्चकार ज्ञातवान् न तु स्वतः। तज्ज्ञानप्रकारमाह—ब्रह्मेति ब्रह्म यद्यक्षमन्तर्हितं[1] तद् ब्रह्म, इति एवं ज्ञातवानित्यर्थः ॥२६॥१॥

तस्माद्वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पर्शुस्ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥ २७ ॥ २ ॥

तस्माद्यतो ब्रह्मणः सह वाय्वग्नी संवादं कृतवन्तौ। इन्द्रश्चोमावचनेन निश्चितवान् तस्मादेव हेतोः वै प्रसिद्धः एते देवा अग्नीन्द्रवायवः अन्यान्देवान् इन्द्राग्निवायुव्यतिरिक्तान् चन्द्रवरुणादीन् अतिक्रम्येति-

१. अन्तर्धानम्भवति।

शेष: अतितरामिव अत्यन्तमेव श्रेष्ठत्वेन वर्तन्ते इति शेष:। एते देवा इत्युक्तान्नामत आह— यदिति। यत् ये प्रकृत्या अग्निर्वायुरिन्द्रः इति नामभि: प्रसिद्धा: ते अग्नीन्द्रवायव: हि यस्मात् एनन्नेदिष्ठं यक्षरूपम् अतिशयेन समीपस्थं प्रियतमं पस्पर्शुः गतवन्त: ते अग्न्यादयो देवा: एनत् यक्षरूपं ब्रह्म इति एवंप्रकारेण प्रथम: प्रथमा: प्रधाना: सन्त: यद्वा प्रथम: प्रथमं विदाञ्चकार विदाञ्चक्रु: ज्ञातवन्त इति यावत्। अतोऽन्येभ्यः[1] श्रेष्ठा इत्यर्थः ॥२७॥२॥

अग्निवायुभ्यामपीन्द्रस्य श्रेष्ठत्वमाह—

तस्माद्वा इन्द्रोऽतितरामिवान्यान् स ह्येनन्नेदिष्ठं
पस्पर्श स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥२८॥३॥

यस्मादग्निवायू अपीन्द्रवाक्यादेव विदाञ्चक्रतुः इन्द्रेण ह्युमावाक्यात्प्रथमं ब्रह्म श्रुतं तस्मादेव हेतो: वै प्रसिद्धः इन्द्र: परमैश्वर्यसम्पन्नो देवपति: अन्यान्देवान् स्वव्यतिरिक्तान् अग्निवायुप्रमुखान् अतिक्रम्येति शेष: अतितरामिव अत्यन्तमेव श्रेष्ठत्वेन वर्तते इति शेष:, स इन्द्र: हि यस्मात् एनन्नेदिष्ठं यक्षरूपमतिशयेन समीपस्थं प्रियतमं पस्पर्श गतवान् हि यस्मात् स इन्द्र एनत् उक्तलक्षणं यक्षरूपं ब्रह्म प्रथम: प्रथमम् अग्निवायुभ्यां प्राक् विदाञ्चकार उमोपदेशात् ब्रह्मेति ज्ञातवानित्यर्थः ॥ २८ ॥ ३ ॥

तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा ३ इतीन्न्य-
मीमिषदा ३ इत्यधिदैवतम् ॥ २९ ॥ ४ ॥

तस्य इन्द्रेणावगतस्य ब्रह्मण: एव वक्ष्यमाण आदेश: उपमोपदेश: निरुपमस्य ब्रह्मणो येनोपमानेनोपदेश: सोऽयमादेश इत्युच्यते ॥ कोऽसावुपमानोपदेश इत्यत आह—यदेतद्विद्युतो व्यद्युतदा इति। अत्र आ इति इवार्थे तथा च यदेतत् शास्त्रेषु प्रसिद्धं स्वयंप्रकाशं ब्रह्म विद्युत: प्रसिद्धायास्तडितो व्यद्युतदा विद्योतनमिव सकृदात्मानं दर्शयित्वा तिरोभूतं ब्रह्मेन्द्रात्। इति अनेन प्रकारेणादेश इत्यन्वय:। इतिच्छ: समुच्चयार्थ: तथा च अयं चापरस्तस्यादेश: कोऽसौ इत्यत आह— न्यमीमिषदा। विद्युतं पश्यतां पुरुषाणां यथा विद्युत् चक्षूंषि निमेषयति तथा ब्रह्मापि पश्यतां देवानां चक्षुर्निमेषं कृतवत्। स्वार्थे णिच् उपमार्थो एवाऽऽकार:। चक्षुषो विषयं प्रति प्रकाशतिरोभाव इव च

1. चन्द्रवरुणादिभ्य: श्रेष्ठा:।

इति चादेश इत्यर्थः। अधिदैवतं देवताविषयं ब्रह्मण उपमानदर्शनमित्यर्थः ॥ २९ ॥ ४ ॥

अधुना प्रत्यगात्मतया ब्रह्मणो यथाऽभिव्यक्तिः स्यात्तथोपदिशन्नाह—

अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन चैतदु-
पस्मरत्यभीक्ष्णं संकल्पः ॥ ३० ॥ ५ ॥

अथ अधिदैवतादेशानन्तरम्। अध्यात्मं प्रत्यगात्मविषय आदेश उच्यते। यत् प्रकृतं ब्रह्म एतत् प्रत्यगात्मरूपं प्रतिमनाः मदीयमन्तःकरणं गच्छतीव यातीव वर्तते इति चिन्तयेत्। चशब्दात् स्पृशतीव च अनेन च मनसैव एतत् प्रकृतं ब्रह्म उपस्मरति अहं ब्रह्माऽस्मीति समीपतः स्मरणं करोति साधकः। अभीक्ष्णं निरन्तरं संकल्पः इदं ब्रह्माहं साक्षात्करोमीत्येवंरूपोऽभिलाषोऽपि साधकस्यानेन मनसैव भवतीत्यर्थः ॥ ३० ॥ ५ ॥

तद्ध तद्वनं नाम तद्वनमित्युपासितव्यम्। स य एतदेवं
वेदाऽभि हैनं सर्वाणि भूतानि संवाञ्छन्ति ॥३१॥६॥

तद्ध तत्प्रत्यगभिन्नं ब्रह्म ह प्रसिद्धम्। तद्वनं नाम तस्य प्राणिजातस्य वननीयं संभजनीयमिति हेतोः तद्वननामधेयम्। अधुना तस्य नामानुगुणोपासनामाह—तद्वनमिति। यतः ब्रह्म तद्वननामधेयमतस्तद्वनमित्यनेनैव गुणाभिधानेनोपासितव्यं विजातीयप्रत्ययशून्येन सजातीयप्रत्ययप्रवाहेणोपासकेन चिन्तनीयम्। उक्तनामचिन्तकस्य फलमाह स इति। स उपासकलक्षणसम्पन्नः यः कश्चन एतत् स्वयम्प्रकाशं सर्वव्यापारनिमित्तं मनःसंकल्पस्मरणगमनेषु कारणं ब्रह्म एवम् उक्तेन प्रकारेण वेद उपास्ते एनम् उपासकं ह किल सर्वाणि भूतानि भजनार्थिनः सर्वजनाः अभिसंवाञ्छन्ति अभिसेवन्त इत्यर्थः ॥ ३१ ॥ ६ ॥

पूर्वोक्ताया ब्रह्मविद्यायाः फलोपकार्यङ्गं प्रधानभूतं साधनान्तरं वा यदस्ति तदुच्यतामित्यभिप्रायवान् शिष्य आह—

उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं वाव त उप-
निषदमब्रूमेति ॥ ३२ ॥ ७ ॥

भो हे गुरो उपनिषदं ब्रह्मविद्यां ब्रूहि कथय इति एवं शिष्येण पृष्टे सति कृत्स्नैव ब्रह्मविद्योक्ता न तु वक्तव्यान्तरमस्ति। अन्यसाधनाऽपेक्षारहितविद्ययाऽविद्यानिवृत्तिसम्भवादित्याशयवान् गुरुराह—

ब्रूक्तेति । उक्ता श्रोत्रस्य श्रोत्रमित्यादिग्रन्थेन कथिता ते तुभ्यम् उपनिषत् तादात्म्यरूपसामीप्येन निरन्तरं ब्रह्म गमयित्वाऽहंममादिग्रन्थीन् शिथिलीकृत्याऽविद्यां सादयति नाशयतीत्युपनिषत् ब्रह्मविद्या ब्राह्मीं-वाव परब्रह्मविषयामेव उपनिषदं ब्रह्मविद्यां ते तुभ्यम् अब्रूम वयमुक्त-वन्तः। ततोऽन्यां तु चित्तशुद्धिद्वारा परमात्मविद्यायाः साधनभूतां तपआदिरूपां वक्ष्याम इत्यर्थः ॥३२॥७॥

तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः
सर्वाङ्गानि सत्यमायतनम् ॥३३॥८॥

तस्यै तस्याः ब्रह्मविद्यायाः प्राप्त्युपायभूतानि तपआदीनीति शेषः । तपः कृच्छ्रादिरूपम् दमः इन्द्रियनिग्रहः कर्म स्ववर्णाश्रमोचितं श्रौतं स्मार्त्तं च इति इत्यादिकम् अन्यदपि शमः ब्रह्मचर्यादिकं च प्रतिष्ठा[1] पादौ पादवत्प्राप्तिसाधनम् , वेदाः ऋगादयश्चत्वारः सर्वाङ्गानि सर्वाणि चाङ्गानि शिक्षा[2]दीनि षट् । कर्मज्ञानप्रकाशकत्वाद्वेदानां तद्र-क्षणार्थत्वादङ्गानां प्रतिष्ठात्वम् । सत्यमायतनं सत्यं यथार्थभाषणम् । आयतनं यत्र तिष्ठत्युपनिषत्तदायतनं सत्यमिति । यद्वा सत्यं बाधरहितं ब्रह्म आयतनम् । उक्तब्रह्मविद्यायाः भूरिव स्थितिस्थानमित्यर्थः ॥३३॥८॥

यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते
स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥३४॥९॥

इति चतुर्थः खण्डः समाप्तः ॥४॥

यः मुमुक्षुः वै प्रसिद्धः साधनचतुष्टयसम्पन्नः एतां केनेषित-मित्यादिनोक्तां परमात्मविद्याम् एवं प्रतिष्ठादिरूपेण वेद अनुतिष्ठति । सः पाप्मानम् अविद्याकामकर्मवासनादिलक्षणं संसारबीजम् अपहत्य विधूय अनन्ते विनाशरहिते स्वर्गे सुखात्मके लोके स्वयम्प्रकाशे ब्रह्मणि ज्येये ज्यायसि सर्वेभ्यो महत्तरे प्रतितिष्ठति । पुनरुत्थानशून्यत्वेना-वस्थानं लभत इति फलोक्तिरूपसंहारार्था । पदाभ्यास उपनि-षत्समाप्त्यर्थः ॥३४॥९॥

इति केनोपनिषद्दीपिकायां नवमोऽध्यायः समाप्तः ॥२॥

*

---

१. पादवत् वांछितदेशप्राप्तिसाधनम् । २. कल्पसूत्रं, व्याकरणं, ज्योतिषं, छन्दः, निरुक्तम् ।

ॐ

ॐ तत्सद्ब्रह्मणे नमः

# ३. कठोपनिषत्

## मणिप्रभाव्याख्यासमलंकृता

ब्रह्मविद्यागुरून्नत्वा मन्त्रदांश्च गुरूंस्तथा ।
कठोपनिषदो वल्लयो व्याख्यायन्ते समासतः ।। १ ।।
कठेन मुनिना चादौ स्वशिष्यान्प्रति कीर्तिता ।
तेन काठकनाम्नाऽसौ प्रथितेयं यजुःश्रुतिः ।। २ ।।

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ।।
ॐ शान्तिः शान्तिः शान्तिः ।

सः परमेश्वरः ह निश्चयेन नौ आवां शिष्याचार्य्यौ अवतु विद्यास्वरूपप्रकाशनेन पालयतु । सह नौ भुनक्तु तत्फलप्रकाशनेन पालयतु । सह सहैव नौ आवां वीर्यं विद्याकृतं सामर्थ्यं करवावहै निष्पादयावहै—नौ आवाभ्याम् अधीतं पठितं तेजस्वि वीर्यवदस्तु भवतु । मा विद्विषावहै परस्परं द्वेषं मा करवावहा इत्यर्थः । ॐ शान्तिः ३ इति त्रिर्वचनं सर्वदोषोपशमनार्थम् ।।

अथ यजुर्वेदीयकाठकोपनिषच्छब्देन ब्रह्मविद्योच्यते । ब्रह्मविद्यार्थत्वाद् ग्रन्थोऽप्युपनिषदित्युच्यते । प्रत्यग्भूतं ब्रह्म तस्य[1] विषयः, प्रयोजनं मुक्तिः, ग्रन्थस्य विषयेण सह प्रतिपाद्यप्रतिपादकरूपः सम्बन्धः, साधनचतुष्टयसम्पन्नोऽधिकारीत्यनुबन्धचतुष्टयं प्रेक्षावतां[2] प्रवृत्त्यङ्गभूतं तावत्सिद्धम् । एवमुपनिषच्छब्देनोक्तायाः ब्रह्मविद्यायाः स्तुत्यर्थं प्रतिपत्ति[3]सौकर्याय चाख्यायिकारूपमितिहासमाह—

---

१. ग्रन्थस्य । २. बुद्धिमताम् । ३. बुद्धिसौकर्याय ।

उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ तस्य ह नचिकेता नाम पुत्र आस तँ ह कुमारँ सन्तं दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश ॥ १ ॥

वश कान्तावित्यस्य सत्रन्तं रूपम् उशन् हवै इति निपातौ वृत्तार्थस्मरणार्थौ वाजश्रवसः वाजमन्नं तद्दाननिमित्तं श्रवो यशो यस्य स वाजश्रवाः तस्यापत्यं वाजश्रवसः उद्दालकनामा उशन् ऋतुफलमिच्छन्विश्वजिता यागेनेजे इति शेषः । स च तस्मिन् क्रतौ सर्ववेदसं सर्वस्वं धनम् अतिबाले स्वपुत्रे स्नेहवशात् शोभना गाः पुत्रधनत्वेन कल्पयित्वा वृद्धा गाः स्वधनत्वेन मत्वा वृद्धगोलक्षणं स्वधनं क्रत्वङ्गदक्षिणारूपं ददौ दत्तवानित्यर्थः तस्य वाजश्रवसस्य ह प्रसिद्धः नचिकेता नाम पुत्रः नचिकेतः संज्ञकः पुत्रः आस बभूव । तं नचिकेतसं कुमारं पाञ्चवार्षिकं सन्तं धीमन्तं श्रद्धा वेदोक्तयज्ञवैगुण्येनानिष्टप्राप्तिबोधकवाक्येषु यथार्थत्वबुद्धि आविवेश पितुरनिष्टनिवृत्त्यर्थं हृदि जाता । कस्मिन्काले इत्याकांक्षायामाह—दक्षिणास्विति दक्षिणासु दक्षिणार्थासु गोषु नीयमानासु ऋत्विग्भ्यः प्रविभागेन दीयमानासु गोदानविभागस्त्वेवं बोध्यः होत्रध्वर्युब्रह्मोद्गातार इति चत्वारो मुख्यर्त्विजोऽष्टचत्वारिंशद्गोभाजो भवन्ति प्रशास्तृप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतार इति चत्वार ऋत्विजो मुख्यर्त्विग्गृहीतदक्षिणाया अर्धग्राहिणो भवन्ति । अच्छावाङ्नेष्ट्राऽऽग्नीध्रप्रतिहर्तार इति चत्वार ऋत्विजो मुख्यर्त्विग्गृहीतदक्षिणायाः तृतीयांशं लभन्ते । ग्रावस्तुन्नेतृपोतृसुब्रह्मण्या इति चत्वार ऋत्विजो मुख्यर्त्विग्गृहीतदक्षिणायाः चतुर्थांशं लभन्ते इति ॥ १ ॥

सोऽमन्यत पीतोदका जग्धतृणा
दुग्धदोहा निरिन्द्रियाः । अनन्दा नाम
ते लोकास्तान्स गच्छति ता ददत् ॥ २ ॥

सः नचिकेताः अमन्यत विचारितवान् । कथमित्यत आह—पीतोदका इत्यादिना पीतमुदकं प्रागेव नाधुना पातुं शक्यं याभिस्ताः पीतोदकाः जग्ध भक्षितं तृणं प्रागेव नाधुना भक्षितुं शक्यं याभिस्ता जग्धतृणाः । दुग्धदोहाः प्रागेव दुग्धो दोहः पयो यासां तास्तथा निरिन्द्रियाः गर्भधारणशक्तिशून्याः अतिजीर्णा इत्यर्थः, अनन्दा नाम असुखसंज्ञकाः ते लोकाः । यः पुरुषः ताः पीतोदकादि

विशेषणा गाः ददत् दक्षिणाबुद्ध्या प्रयच्छन् सः यजमानः तान् असुखसंज्ञकान् लोकान् गच्छति यातीति योजना ॥ २ ॥

एवं ऋतुवैगुण्यनिमित्तकं पितुरनिष्टफलमालोच्य मया [1]पुत्रेणात्मदानेनापि पितुः क्रतुवैगुण्यं[2] वारणीयमिति मत्वाह—

स होवाच पितरं तत कस्मै मां दास्यसीति द्वितीयं
तृतीयं त ँ होवाच मृत्यवे त्वा ददामीति ॥३॥

स नचिकेताः ह किल पितरम् उद्दालकम् उवाच उक्तवान् । तदेव दर्शयति—ततेति । तत हे तात कस्मै ऋत्विजे मां दास्यसि दक्षिणार्थं प्रयच्छसि इति एवं द्वितीयं तृतीयं द्वित्रिवारमुवाच पुत्रस्याभिप्रायमज्ञात्वा क्रुद्धः सन् पिता तं पुत्रं ह किलोवाच । पितृवचनमभि-[3]नयति—मृत्यवे इति । मृत्यवे यमाय त्वा त्वां ददामीति ॥ ३ ॥

एवं पितृवचनं श्रुत्वा नचिकेता रहसि चिन्तयामासेत्याह—

बहूनामेमि प्रथमो बहूनामेमि मध्यमः ।
कि ँ स्विद्यमस्य कर्तव्यं यन्मयाद्य करिष्यतीति ॥ ४ ॥

बहूनां शिष्याणां पुत्राणां वा मध्ये प्रथमो मुख्यः सन्नेमि आज्ञां विना गुरुशुश्रूषणे प्रवृत्तिरूपया मुख्यया वृत्त्या सम्पन्नोऽस्मि बहूनां शिष्यादीनां मध्ये एमि मध्यमः आज्ञावशेन गुरुपरिचर्य्यारूपया मध्यमया वृत्त्या सम्पन्नोऽस्मि न त्वधमया गुर्वाज्ञाऽपरिपालनरूपयैमि । अतो गुणवतः पुत्रस्य मम त्यागोऽयुक्त इति भावः । किञ्च मद्गमनेन यमस्यापि कश्चिदुपकारो नास्तीत्याह—किंस्विदिति । वितर्के किं तदिष्टं पित्रा कर्तव्यमस्ति यत्पिता मया दत्तेनाद्याधुना करिष्यति । न किमपि । अतो गुणवन्तं मां वृथा त्यजतीत्यर्थः ॥ ४ ॥

गुणवान्पुत्रो वृथा क्रोधवशान्मया दत्त इति शोकयुक्तं पितरमालक्ष्य पितुरनिष्टजनकं मृषावचनं मा भूदिति हितकामनया नचिकेता आह—

अनुपश्य यथा पूर्वे प्रतिपश्य तथा परे ।
सस्यमिव मर्त्यः पच्यते सस्यमिव जायते पुनः ॥ ५ ॥

हे तात यथा येन प्रकारेण पूर्वे तव पितृपितामहादयो वृत्ताः । यथा चापरे साधवः शिबिदशरथादयो वृत्ताः तथा तांश्च प्रत्यनुपश्य त्वमव-

---

१. पुन्नाम्नो नरकात्त्रायते इति व्युत्पत्तेर्मया पुत्रेण । २. अनिष्टफलं निवारणीयम् । ३. प्रकटयति ।

लोकय। तेषां मिथ्यायजनवर्जनरूपं व्रतमास्थातुमर्हसीत्यर्थः। न हि मृषा कृत्वा कश्चिदजरोऽमरो वा भवति। येन मृषा क्रिया सफला स्यादित्याह—सस्यमिति। सस्यमिव व्रीहियवादिवत् मर्त्यो मरणधर्मप्राणिनिकायः पच्यते। कालरूपसूर्येण विनाशोन्मुखीक्रियते जीर्णो म्रियते इति यावत्। मृत्वा च सस्यमिव पुनर्जायते प्रादुर्भवति। एवं जन्ममरणस्यावश्यंभावित्वान्मां यमाय दत्त्वा स्ववचनं सत्यं कुर्विति भावः ॥५॥

एवमुक्तेन पित्रा प्रेषितो नचिकेताः पितृभक्त्यादिप्रभावात्सशरीरो यमालयं गत्वा यमञ्च देशान्तरगतं श्रुत्वा पितृदत्तं मां यमो गृह्णीयादित्येतन्निमित्तं दिनत्रयं तत्रोपवासं कृतवान्। ततो देशान्तरादागतं यमं तदीया मन्त्रिण ऊचुरित्याह—

वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्।
तस्यैतां शान्ति कुर्वन्ति हर वैवस्वतोदकम् ॥६॥

विवस्वतः सूर्य्यस्यापत्यं वैवस्वतः। हे वैवस्वत यम। अतिथिर्ब्राह्मणो वैश्वानरोऽग्निः सन् गृहान्प्रविशति तस्यातिथेरेतां पाद्यासनादिरूपां शान्तिं कुर्वन्ति शिष्टजनाः अतस्त्वमपि नचिकेतसे पादप्रक्षालनार्थमुदकं जलं हर आहर आनयेत्यर्थः ॥ ६ ॥

यथा शान्तिमनीतोऽग्निः सपरिकरं गृहं दहत्येवमनर्चितोऽतिथिः सर्वं दहतीत्याह—

आशाप्रतीक्षे संगत्ँ सूनृतां चेष्टापूर्ते
पुत्रपशूँश्च सर्वान्। एतद्वृङ्क्ते पुरुषस्या
ल्पमेधसो यस्यानश्नन्वसति ब्रह्मणो गृहे ॥७॥

अप्रत्यक्षेष्टार्थस्येच्छा आशा निश्चितसुखेच्छा[1] प्रतीक्षा। ते आशाप्रतीक्षे संगतं देवताध्यानजं फलम्। सूनृतां प्रियवाणीं तज्जन्मफलम्। इष्टापूर्ते इष्टमग्निष्टोमादियागः, पूर्तं वापीकूपतडागादेर्निर्माणं तयोः फलम्। पुत्रपशूँश्च पुत्रानौरसान्[2] पशून् सल्लक्षणान् एतत् आशादिरूपं सर्वान् सर्वं वृंक्ते नाशयति अतिथिर्ब्राह्मणः यस्याल्पमेधसः तुच्छबुद्धेः पुरुषस्य गृहेऽनश्नन् अभुञ्जानो वसति तस्मात्सर्वदाऽतिथिः पूजनीय इति भावः ॥७॥

स्वमन्त्रिभिरेवमुक्तो यमो नचिकेतसमाह—

---

१. राजादिसुखेच्छा प्रतीक्षा। २. औरसान् स्वपाणिगृहीत्यां स्वस्माज्जातान्।

तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्
ब्रह्मन्नतिथिर्नमस्यः । नमस्तेऽस्तु ब्रह्मन्स्वस्ति
मेऽस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व ॥ ८ ॥

हे ब्रह्मन् यत् यस्मात् अतिथिर्नमस्यः । नमस्कारार्होऽतिथि[1]स्त्वम् अनश्नन् अभुञ्जानः सन् मे मम गृहे तिस्रो रात्रीरवात्सीरुषितवानसि तस्मात्तद्दोषशान्त्यर्थं प्रति त्रीन् रात्रिप्रतिरूपान् रात्रिसमसंख्यान् त्रीन् वरान्स्वाभिलषितपदार्थान् वृणीष्व मत्तः प्रार्थयस्व । किं च हे ब्रह्मन् ते तुभ्यं नमोऽस्तु मे मम स्वस्ति भद्रमस्तु इति ॥ ८ ॥

एवं यमेनोक्तो नचिकेता आह—

शान्तसंकल्पः सुमना यथा स्याद्वीतमन्यु-
र्गौतमो माभिमृत्यो ॥ त्वत्प्रसृष्टं माभिवदे-
त्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे ॥ ९ ॥

हे मृत्यो गौतमो मम पिता मा अभि मां प्रति शान्तसङ्कल्पः शान्तो निवृत्तः सङ्कल्पो यमं प्राप्य मम पुत्रस्य कीदृशी दशा भविष्यतीत्येवंरूपा चिन्ता यस्य सः । सुमनाः प्रसन्नमनाश्च यथा येन प्रकारेण स्यात् वीतमन्युः । कस्मै मां दास्यसीति द्वित्रिवारोक्तिजन्यक्रोधरहितश्च यथा स्यात् । किञ्च त्वत्प्रसृष्टं गृहं प्रति प्रेषितं माम् अभि मां प्रति प्रतीतः स एव मम पुत्र आगत इति लब्धस्मृतिः सन् वदेत् पूर्ववत्सम्भाषेत । न तु प्रेतोऽयं यमालयादागत इति मत्वोपेक्षेत त्रयाणां त्रिसंख्याकवराणां मध्ये एतत् पितृप्रसादरूपं प्रथमं वरं वृणे प्रार्थये ॥ ९ ॥

एवं नचिकेतसोक्तो यम आह—

यथापुरस्ताद्भविता प्रतीत औद्दालकिरारुणि-
र्मत्प्रसृष्टः । सुखꣳ रात्रीः शयिता वीतमन्युस्त्वा
ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥१०॥

औद्दालकिः उद्दालक एवौद्दालकिः स्वार्थेऽत्रेञ्प्रत्ययः । अरुणस्यापत्यमारुणिः । तव पिता मत्प्रसृष्टि मयाऽनुज्ञातः । यथापुरस्तात् यथापूर्वं त्वयि स्नेहयुक्त आसीत्तथा भविता भविष्यति । प्रतीतः अयं

---

१. एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः । अनित्याहिस्थितिर्यस्मात्तस्मादतिथिरुच्यते ।

मत्पुत्र आगत इति विश्वासवान् भविता भविष्यति रात्रीः रात्रिषु सुखं यथा स्यात्तथा शयिता सुखविशिष्टाभिन्नशयनवान्भविष्यतीत्यर्थः। मृत्युमुखात् मत्तःसकाशात् प्रमुक्तं निर्गतं त्वा त्वां ददृशिवान् दृष्टवान्सन् वीतमन्युर्विगतक्रोधश्च भविता भविष्यतीति योजना ॥१०॥

स्वर्गसाधनमग्निं प्रष्टुकामो नचिकेताः स्वर्गस्वरूपं तावदाह—

स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया
बिभेति। उभे तीर्त्वाऽशनायापिपासे शोकातिगो
मोदते स्वर्गलोके ॥ ११ ॥

स्वर्गपदेनात्र स्वर्लोकादिब्रह्मलोकान्तलोकसमुदायो विवक्षितः। तत्र स्वर्गे लोके गतस्याधिकारिणः किञ्चन किंचित् भयं रोगादिजन्यं नास्ति न विद्यते तत्र स्वर्गे त्वं मृत्युर्न सहसा प्रभवसीति शेषः, अतो जरया जरावस्थया युक्तः पुरुषस्त्वत्तो न बिभेति भयं न प्राप्नोति अशनायापिपासे क्षुधातृषे उभे तीर्त्वा अतिक्रम्य शोकातिगः मानसदुःखरहितः सन् स्वर्गलोके मोदते आनन्दं प्राप्नोतीत्यर्थः ॥ ११ ॥

एवंगुणवतः स्वर्गस्य साधनमग्निं च जानासि तं मां प्रति कथयेत्याह—

स त्वमग्निँ स्वर्ग्यमध्येऽपि मृत्यो प्रब्रूहि तँ श्रद्दधानाय
मह्यम्॥ स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन
वृणे वरेण ॥ १२ ॥

स्वर्ग्यं स्वर्गप्राप्तिसाधनभूतमग्निं सः सर्वलोकप्रसिद्धो मृत्युः त्वम् अध्येषि जानासि हे मृत्यो तमग्निं श्रद्दधानाय श्रद्धावते मह्यं प्रब्रूहि प्रकर्षेणेतिकर्तव्यताद्यङ्गवैशिष्ट्यरूपेण कथय येन चितेनाग्निना स्वर्गलोकाः स्वर्गो लोको येषां ते स्वर्गलोकाः कर्मिणः अमृतत्वम् अमरत्वं भजन्ते प्राप्नुवन्ति एतत् अग्निविज्ञानं द्वितीयेन वरेण वृणे प्रार्थये ॥१२॥

एवं नचिकेतसोक्तो यम आह—

प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः
प्रजानन। अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि
त्वमेतन्निहितं गुहायाम्॥ १३ ॥

हे नचिकेतः स्वर्ग्यमग्निं स्वर्गस्य साधनभूतमग्निं प्रजानन् विज्ञातवान् सन्नहं उ शब्दः यच्छब्दार्थकः यत्त्वया प्रार्थितं तत् तमग्निं

ते तुभ्यं प्रब्रवीमि प्रकर्षेण वदामि। तत्त्वं मे मम वचनात् निबोध एकाग्रमनाः सन्नवधारय। तमग्निं स्तौति अनन्त इति अनन्तलोकाप्तिं स्वर्गलोकप्राप्तिसाधनम् अथो अपि प्रतिष्ठां विराड्रूपेण[1] जगदाश्रयभूतमपि एतमग्निं मयोच्यमानं गुहायां विदुषां बुद्धौ निहितं स्थितम्। त्वं विद्धि जानीहि ॥ १३ ॥

एवमग्निं स्तुत्वा मृत्युः स्वशिष्यायोवाचेति श्रुतिराह—

लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा
यथावा। स चापि तत्प्रत्यवदद्यथोक्तमथास्य
मृत्युः पुनरेवाह तुष्टः ॥ १४ ॥

तं प्रकृतमग्निं लोकानां पृथिव्यादीनाम् आदिं प्रथमशरीरिणं विराटस्वरूपं तस्मै नचिकेतसे मृत्युर्यम उवाचोक्तवान् किञ्च या इष्टकाः चेतव्या इष्टका यादृशरूपाः यावतीः यत्संख्याकाः यथा वा येन प्रकारेणाग्निः चीयते न्यस्यते तत्सर्वमुक्तवानित्यर्थः। स च नचिकेता अपि यथोक्तं यथा मृत्युनोक्तं तत्प्रत्यवदत् स्वस्य ग्रहणशक्तिमावेदयितुमन्ववदत्। अथानुवादानन्तरम् अस्य नचिकेतसोऽनुवादेन तुष्टः प्रसन्नः सन् मृत्युरयाचितं वरं दातुकामः पुनरेवाह नचिकेतसं प्रत्युक्तवानित्यर्थः ॥ १४ ॥

तदेव श्रुतिरभिनयति—

तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि
भूयः। तवैव नाम्ना भविताऽयमग्निः सृङ्कां चेमामनेकरूपां गृहाण ॥ १५ ॥

प्रीयमाणः शिष्यस्यालौकिकीं प्रज्ञां दृष्ट्वा प्रसन्नचित्तः सन् महात्मा उदारचित्तो मृत्युः तं नचिकेतसं अब्रवीत् उक्तवान् किमुक्तवानित्यत आह—वरमिति। तव तुभ्यम् इह मम प्रीतिनिमित्तं वरम् उक्तवरत्रयाधिकं भूयः पुनः अद्याधुना ददामि प्रयच्छामि। प्रतिज्ञातवरमाह तवैव नचिकेतसो नाम्नाभिधानेनैव अयं मयोक्तोऽग्निः भविता भविष्यति। नैतावन्मात्रं वरमन्यदपीति नचिकेतसं प्रलोभयन्नाह—सृंकां शब्दवतीं रत्नमालाम् इमां मया दीयमानाम् अनेकरूपां नीलपीतादिनानावर्णवतीं गृहाण स्वीकुर्वित्यर्थः ॥ १५ ॥

१. स त्रेधा आत्मानं व्याकुरुतेति श्रुतेरग्निवाय्वादित्यरूपेण समष्टिर्विराडेव व्यवस्थित इति।

ध्यानचयनयोः स्तुत्यर्थं पुनः फलमाह—

त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति
जन्ममृत्यू । ब्रह्मजज्ञं देवमीड्यं विदित्वा नि-
चाय्येमाँ शान्तिमत्यन्तमेति ॥ १६ ॥

त्रिवारं चितः चयनेन सम्पादितो नाचिकेतोऽग्निर्येन सः त्रिणा-चिकेतः, तद्विज्ञानवान् वा । त्रिभिः मातृपित्राचार्यैः सह वेदस्मृति-शिष्टैर्वा प्रत्यक्षानुमानागमैर्वा धर्मप्रमाणैः । सन्धिं शिष्यशिक्षकभाव-सम्बन्धम् एत्य प्राप्य त्रिकर्मकृत् इज्याध्ययनदानानां कर्ता सन् जन्म-मृत्यू जन्ममरणे तरति अतिक्रामति । किञ्च ब्रह्मजज्ञं ब्रह्मणो हिरण्य-गर्भाज्जायते इति ब्रह्मजः, सर्वं जानातीति ज्ञः । ब्रह्मजश्चासौ ज्ञश्च ब्रह्मजज्ञस्तं विराडात्मकमग्निं देवं प्रकाशरूपम् ईड्यं सर्वैः स्तुत्यं विदित्वा शास्त्रतो ज्ञात्वा निचाय्य आत्मभावेन ध्यात्वा इमां यमबुद्धि-प्रत्यक्षां शान्तिं वैराजं पदम् अत्यन्तं नियमेन एति उक्तकर्मोपासनाभ्यां प्राप्नोतीत्यर्थः ॥ १६ ॥

अग्निविज्ञानचयनयोः फलमुपसंहरति—

त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाँ-
श्चिनुते नाचिकेतम् । स मृत्युपाशान् पुरतः प्र-
णोद्य शोकातिगो मोदते स्वर्गलोके ॥ १७ ॥

एतत् पूर्वोक्तं त्रयं चेतव्यानामिष्टकानां स्वरूपसंख्याचयनप्रकार-लक्षणं विदित्वा विज्ञाय त्रिणाचिकेतः त्रिवारं सम्पादिताऽग्निः यः कोऽपि पुरुष एवं विद्वान् आत्मभावेन विराड्रूपमग्निं जानन् सन् नाचिकेतं चिनुते नाचिकेतसंज्ञकाऽग्निध्यानं करोति स मृत्युपाशान् अधर्माज्ञानरागादिरूपान् पुरतः शरीरपातात्प्रागेव प्रणोद्य त्यक्त्वा शोकातिगो मानसदुःखरहितः मोदते स्वर्गलोके वैराजं पदं प्राप्तः सन् हृष्यतीत्यर्थः ॥ १७ ॥

द्वितीयवरप्रकरणमुपसंहरति—

एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन
वरेण । एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृ-
तीयं वरं नचिकेतो वृणीष्व ॥ १८ ॥

हे नचिकेतो यमग्निवरं द्वितीयेन वरेण अवृणीथाः त्वं प्रार्थितवानसि स एषः अग्निः स्वर्ग्यः स्वर्गप्राप्तिसाधनम् ते तुभ्यं मयेरित इति

शेषः । किञ्च एतं प्रकृतमग्निं तवैव तव नाम्नैव जनासः जनाः प्रवदयन्ति कथयिष्यन्तीति प्रतिज्ञातवरत्रयादधिको वरः तुष्टेन मया दत्त इति शेषेणान्वयः । हे नचिकेतः तृतीयं दत्तवरद्वयादन्यं वरं स्वाभिलषितं वृणीष्व याचस्वेत्यर्थः ।। १८ ।।

लब्धवरद्वयस्य[1] संसाररूपत्वात्तस्यानित्यत्वं सञ्चिन्त्य ततो विरक्तो मुमुक्षुः सन् नचिकेता आत्मयाथात्म्यज्ञानं तृतीयवरं याचते—

येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायम-
स्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वरा-
णामेष वरस्तृतीयः ।। १९ ।।

मनुष्ये प्राणिनि प्रेते मृते सति येयं विचिकित्सा योऽसौ संशयः । संशयस्वरूपमाह—अस्तीति । अयमात्मा देहादिसंघाताद्व्यतिरिक्तो देहान्तरं सम्बन्ध्यस्ति इति एवम् एके वेदविदो वदन्ति (एके च नास्तिकाः अयमात्मा देहादिसंघाताद्व्यतिरिक्तो देहान्तरसम्बन्ध्यस्ति इति एवम् एके वेदविदो वदन्ति ) एके च नास्तिकाः अयमात्मा देहादि-संघाताद्व्यतिरिक्तो नास्ति इति एवं वदन्ति । त्वया गुरुणाऽनुशिष्टः प्रज्ञापितोऽहम्—एतत् । सन्दिग्धमात्मतत्त्वं यथा विद्यां विजानीयां तथा त्वं ब्रूहि इति योजना । वराणां मध्ये एषः आत्मज्ञानरूपः तृतीयो वरो दीयतामित्यर्थः ।। १९ ।।

नचिकेतस आत्मज्ञानयोग्यतां परीक्षितुं मृत्युराह—

देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेय-
मणुरेष धर्मः । अन्यं वरं नचिकेतो वृणीष्व मा
मोपरोत्सीरति मा सृजैनम् ।। २० ।।

हे नचिकेतः देवैरपि देवानामपि पुरा पूर्वमत्रात्मतत्त्वे विचि-कित्सितं संशयोऽस्ति शमादिशालिनोऽपि देवा आत्मनि सन्दिह्य निश्चयं न गताः कुतः पुनर्मनुष्याणां निर्णयाशेति भावः । तत्र हेतुमाह—न हीति । हि यस्मादात्मतत्त्वं न सुविज्ञेयं सुखेन ज्ञातुं योग्यं नास्ति । दुर्विज्ञेयत्वे हेतुमाह—अणुरिति । यस्मादेष धर्मः सर्वाधिष्ठानभूत आत्माऽणु सूक्ष्मः । अतो अन्यं वरम् आत्मज्ञानातिरिक्तं वरं वृणीष्व याचस्व मा मोपरोत्सीः आत्मज्ञानरूपवरदाने मा माम् उपरोधं निर्बन्धं मा कार्षीः एनम् आत्मज्ञानात्मकं वरं मा मां प्रति अतिसृज विमुञ्चेत्यर्थः ।। २० ।।

---

१. पितुः सौमनस्याग्निविद्यारूपस्य ।

एवं यमेनोक्तो नचिकेता आह—

देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो
यन्न सुविज्ञेयमात्थ। वक्ता चास्य त्वादृगन्यो
न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥२१॥

अत्रात्मतत्त्वे देवैरपि देवानामपि विचिकित्सितं संशयः किलेति भवत एवास्माभिः श्रुतं हे मृत्यो यम! त्वं च त्वमपि यत् यस्मादात्मतत्त्वं न सुविज्ञेयम् अनायासेन ज्ञातुमशक्यम् आत्थ कथयस्यतः अस्यात्मतत्त्वस्य वक्ता च उपदेष्टा त्वादृग् त्वत्सदृशोऽन्यः त्वत्तो भिन्नो न लभ्यः न प्रापणीयः एतस्य वरस्य तुल्यः सदृशोऽन्यः कश्चिद्वरो नास्ति। ब्रह्मातिरिक्तस्य सर्वस्यानित्यत्वादित्यभिप्रायः ॥२१॥

एवं नचिकेतसोक्तो यमस्तस्य वैराग्यपरीक्षणाय नानाविधवरैस्तं प्रलोभयन्नाह—

शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्तिहिर-
ण्यमश्वान्। भूमेर्महदायतनं वृणीष्व स्वयं च
जीव शरदो यावदिच्छसि ॥२२॥

शतवर्षजीविनः पुत्रपौत्रान् पुत्रान् पौत्रांश्च वृणीष्व याचस्व। एवमग्रेऽपि क्रिया सम्बन्धनीया। तथा बहून् पशून् गवादिलक्षणान्। तथा हस्तिहिरण्यं हस्तिनः गजान् हिरण्यं काञ्चनं तथा अश्वान् सूर्य्याश्वसमानान् हयान् भूमेः पृथिव्याः महदायतनं विस्तृतमण्डलं साम्राज्यं वृणीष्वेत्यर्थः। नन्वल्पायुषः पुरुषस्य सर्वमेतदनर्थकमित्याशङ्क्याह—स्वयं चेति। स्वयं च त्वं यावच्छरदः यावद्वर्षाणि जीवितुमिच्छसि तावद्वर्षाणि जीव प्राणान् धारयेति योजना ॥२२॥

किञ्च—

एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां
च। महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा
कामभाजं करोमि ॥२३॥

एतेन मयोक्तेन तृतीयवरेण सदृशमन्यमपि वरं यदि मन्यसे जानासि तमपि वृणीष्व। एकैकं पुत्रधनादीनां वरत्वेनोपन्यस्य समुच्चितमधुनाऽऽह—वित्तमिति। वित्तं रत्नादिरूपं चिरजीविकां चिरकालपर्य्यन्तां वृत्तिं वृणीष्वेत्यर्थः। किं बहूनोक्तेन हे नचिकेतः महाभूमौ महत्यां पृथिव्यां त्वं राजा एधि भव। कामानां कमनीय-

पदार्थानां मध्ये यो यस्तव कामः कामनीयपदार्थोऽस्ति तद्भाजं भागिनं त्वा त्वां करोमीत्यर्थः ॥२३॥

किञ्च

ये ये कामा दुर्लभा मर्त्यलोके सर्वान्कामाꣳश्छ-
न्दतः प्रार्थयस्व । इमा रामाः सरथाः सतूर्या
न हीदृशा लम्भनीया मनुष्यैः । आभिर्मत्प्रत्ता-
भिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः ॥२४॥

ये ये कामाः प्रार्थनीयपदार्थाः मर्त्यलोके पृथिव्यां दुर्लभाः लब्धुमशक्याः सन्ति । तान् सर्वान् कामान् पदार्थान् छन्दतः स्वेच्छया प्रार्थयस्व याचस्व। किञ्च इमास्तव पुरतो वर्तमाना [1]रामाः रमणशीलाः स्वर्गस्त्रियः सरथाः रथसहिताः सतूर्याः तूर्येण वाद्यविशेषेण सहिताः हि यस्मात् ईदृशा उक्तविशेषणा रामा मनुष्यैः पृथिव्यां स्थितैः पुरुषैः न हि लम्भनीयाः न हि प्रापणीयाः। अतस्त्वं मत्प्रत्ताभिर्मया दत्ताभी रामाभिः परिचारयस्व स्वपादसंमर्दनादिशुश्रूषां कारयेत्यर्थः। हे नचिकेतः मरणं मानुप्राक्षीः मरणसम्बद्धं 'येयं प्रेते' इत्यादिना काकदन्तपरीक्षासदृश-मुक्तं प्रश्नं माकार्षीः ॥२४॥

एवं यमेनोक्तानां भोग्यानां नश्वरत्वमिन्द्रियतेजोजरयितृत्वं च दोषं नचिकेता आह—

श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां
जरयन्ति तेजः । अपि सर्वं जीवितमल्पमेव तवैव
वाहास्तव नृत्यगीते ॥२५॥

हे अन्तक हे मृत्यो ! श्वोभावाः श्वः आगामिदिने भविष्यन्ति न वेति सन्दिग्धो भावः सत्ता येषां ते तथा। यद्वा श्वोऽभावो येषां ते तथा। एवम्भूताः त्वदुक्ता रामादयो भोग्याः मर्त्यस्य मरणधर्मपुरुषस्य सर्वेन्द्रियाणां यदेतत्तेजस्तज्जरयन्ति अपक्षयन्ति तत्र रामाः स्वसं-बद्धस्य पुरुषस्य तेजः चिरस्थितिहेतुभूतं रेतोलक्षणं सारमपहरन्ति। एवमन्येषामपि पुत्रादिभावानामिष्टानिष्टप्राप्तिपरिहारवियोगादिना मनसि क्षोभे जाते सति सर्वेन्द्रियाणां तेजो बलं जीर्यते इति प्रसिद्धं तेषां तेजोऽपहारकत्वम्। एवं तेजोधर्मयशःप्रज्ञादीनां क्षपयितृत्वादनर्थ-रूपा एव रामादयो भावा इति भावः। अपि सर्वं जीवितं मनुष्याद्यायुः

1. रमयन्ति पुरुषानिति रामाः।

परिमितकालपर्यन्तप्राणधारणमपि अल्पं तुच्छं ब्रह्मणोऽप्यायुषः तुच्छत्वात् अतो वाहा रथादयः तवैव सन्तु तथा नृत्यगीते नर्त्तनं गानं च तवैवास्त्वित्यर्थः ॥ २५ ॥

किञ्च—

न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्रा-
क्ष्म चेत्त्वा। जीविष्यामो यावदीशिष्यसि त्वं
वरस्तु मे वरणीयः स एव ॥ २६ ॥

वित्तेन भोग्यपदार्थजातेन मनुष्यैः कोऽपि पुरुषो न तर्पणीयः तृप्तिं न प्रापणीयः। वित्तादिलाभस्य तु भवद्दर्शनादेव सिद्धत्वान्न स प्रार्थनीय इत्याह—लप्स्यामहे इति। चेत् यतः त्वा त्वाम् अद्राक्ष्म नेत्रैर्वयं दृष्टवन्तोऽतो वित्तं लप्स्यामहे प्राप्स्यामः चिरजीवनमपि भवदीयशिष्यत्वेन लब्धत्वान्नार्थनीयमित्याह-जीविष्याम इति। हि यस्माद्यावत्कालं त्वम् ईशिष्यसि ईशिष्येसेऽनुकम्पया प्राणिनां शास्ता भविष्यसि तावत्कालं वयं जीविष्यामः जीवनं प्राप्स्यामः सर्वमारकः त्वमसि स च त्वमस्माकं गुरुः गुरोश्च शिष्येऽनुकम्पाशालित्वान्नास्माकं मृत्युतो भयमिति भावः। वरस्तु स एव आत्मवेदनरूप एव मे मम वरणीयः प्रार्थनीयः ॥ २६ ॥

उत्तमफललाभे सति निकृष्टं कामयमानोऽहं मूर्ख एव स्यामतः स एव वरः प्रार्थनीय इत्याह—

अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः
प्रजानन्। अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घे
जीविते को रमेत॥ २७ ॥

मर्त्यो मरणधर्मो मनुष्यः अजीर्यतां जरारहितानाम् अमृतानां चिरकालस्थायिनां देवानाम् उपेत्य सन्निधिं प्राप्य प्रजानन् तेभ्य उत्कृष्टफलसम्भवं प्रजानन् सन् कथं निकृष्टं नश्वरं वरान्तरं वृणीतेति शेषेणान्वयः। कीदृशो मर्त्यः जीर्यन् जरावान्। पुनः कीदृशः क्वधःस्थः कुः पृथिवी सा चान्तरिक्षादधः तत्र स्थितः सन्नित्यर्थः। क्वधःस्थ इत्यस्य स्थाने क तदास्थ इति पाठे तु तत्तस्मिन्पुत्रादिरूपे वरान्तरे आस्था आसक्तिर्यस्य सः तदास्थः स क अतितुच्छ इत्यर्थः। प्रजानन् उत्कृष्टफलसम्भवं जानन् कथम् निकृष्टमस्थिरं वरान्तरं वृणीत इति शेषः।

किञ्च वर्णरतिप्रमोदान् वर्णा दिव्यस्त्रीणां सौन्दर्यं रतिः ताभिः सह क्रीडा ताभ्यां जाता ये प्रमोदाः सुखविशेषास्तान् अनित्यत्वेन दुःखदत्वेन चाभिध्यायन् सञ्चिन्तयन् सन् अतिदीर्घे जीविते चिरकालसञ्जीवने को रमेत कः पुरुषः प्रसज्जेत्। न कोऽपीत्यर्थः॥ २७॥

यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्साम्पराये
महति ब्रूहि नस्तत्। योऽयं वरो गूढमनुप्रविष्टो
नान्यं तस्मान्नचिकेता वृणीते॥ २८॥

इति प्रथमेऽध्याये प्रथमा वल्ली॥ १॥

सम्परायः परलोकः तत्सम्बन्धी साम्परायः। हे मृत्यो ! यस्मिन्साम्पराये परलोकसम्बन्धिन्यात्मतत्त्वे देवा अपि इदम् अस्ति नास्ति वेत्याकारकं यथा स्यात्तथा विचिकित्सन्ति संशयाश्रया भवन्ति। तस्यात्मतत्त्वस्य यन्निर्णयविज्ञानं महति महत्प्रयोजननिमित्ते मोक्षार्थे तन्नोऽस्मभ्यं ब्रूहि कथयेति योजना। श्रुतिराह-योऽयमिति। योऽयम् प्रकृतात्मविज्ञानरूपो वरो गूढमनुप्रविष्टो गोप्यतां प्राप्तः तस्माद्वरादन्यं वरं नचिकेता न वृणीते न प्रार्थयते इत्यर्थः॥ २८॥

इति श्रीकठवल्ल्यां प्रथमाध्याये प्रथमवल्लीटीका समाप्ता॥ १॥

---

अथ द्वितीया वल्ली

विषयेभ्यो विरक्तत्वेन परीक्षितं नचिकेतसं मोक्षहेतुकेवलविद्यार्थित्वेन स्तोतुं मोक्षाभ्युदयसाधनयोर्विद्याविद्ययोर्विभागं तावन्मृत्युराह—

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे
पुरुषꣳ सिनीतः। तयोः श्रेय आददानस्य
साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते॥ १॥

श्रेयः मोक्षहेतुर्विद्या अन्यत्पृथगेव प्रेयः अभ्युदयसाधनं कर्म उत अपि अन्यदेव पृथगेव ते विद्याकर्मणी उभे नानार्थे भिन्नफले सती पुरुषं मोक्षाभ्युदयात्मकफलार्थिनम् सिनीतः स्वस्मिन्नासक्तिलक्षणबन्धनं कुरुतः। तयोः मोक्षाभ्युदयसाधनयोर्विद्याकर्मणोर्मध्ये श्रेयः आददानस्य मोक्षसाधनविद्याग्रहणं कुर्वतः पुरुषस्य साधु भवति मोक्षाख्यमुत्कृष्टं फलं भवति य उ यस्त्वविवेकी प्रेयो वृणीते अभ्युदयरूपजन्यफलहेत्वविद्यात्मकं कर्म गृह्णाति स पुरुषः अर्थात्

मोक्षाख्यात् प्रयोजनात् हीयते वियुज्यते मोक्षरूपं फलमप्राप्य कर्मजन्या-नित्यफलं प्राप्नोतीति भावः ॥१॥

ननु स्वाधीनकर्तव्यताकयोः मोक्षाभ्युदयसाधनयोर्विद्याकर्मणो-रुत्तमाधमफलं जानन् सन् लोकः कथं प्रायेणाभ्युदयसाधनमेवादत्ते न मोक्षसाधनमित्याशङ्क्य मोक्षाभ्युदयसाधनयोर्विद्याकर्मणोर्भेदज्ञाना-भावादित्याह—

श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति
धीरः। श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो
मन्दो योगक्षेमाद्वृणीते ॥२॥

श्रेयश्च प्रेयश्च विद्याकर्मणी मनुष्यं पुरुषम् एतः कर्तव्यतया प्राप्नु-वतः। तौ मोक्षाभ्युदयसाधनभूतौ श्रेयःप्रेयःपदार्थौ सम्परीत्य मनसा तयोः स्वरूपं विचार्य्य धीरो बुद्धिमानुत्तमाधिकारी विविनक्तिम् अना-यासलसाध्या महाफला विद्या बह्वायाससाध्यमल्पफलं च कर्मेति विवे-केन जानाति। एवं विविच्य धीरो विवेकी प्रेयसः अभ्युदयसाधन-भूतकर्मस्वरूपात् श्रेयः श्रेष्ठं मोक्षसाधनीभूतं ज्ञानमेवाभिवृणीते गृह्णाति। मन्दोऽल्पबुद्धिः पुरुषस्तु योगक्षेमात् अप्राप्तप्राप्तिप्राप्तसंरक्ष-णात्मकयोगक्षेमनिमित्तं प्रेयो वृणीते अविद्यात्मकं कर्म गृह्णातीत्यर्थः ॥२॥

त्वं तु विवेकिनां मुख्योऽसीत्याह—

स त्वं प्रियान्प्रियरूपाꣳश्च कामानभिध्यायन्न-
चिकेतोऽत्यस्राक्षीः। नैताꣳसृङ्कां वित्तमयीमवाप्तो
यस्यां मज्जन्ति बहवो मनुष्याः ॥३॥

हे नचिकेतः स श्रेयोमार्गग्राही मम शिष्यस्त्वं प्रियान् प्रीति-विषयान् पुत्रादीन् प्रियरूपान् प्रियं प्रीतिविषयो रूपं येषां तानप्सर-आदीन् कामान् काम्यपदार्थान् अभिध्यायन् अनित्यत्वासारत्वदुःख-प्रदत्वादिदोषवत्त्वेन चिन्तयन् अत्यस्राक्षीः परित्यक्तवानसि अहो बुद्धि-मत्ता तव एतां सृङ्कां सृतिं कुत्सितां मूढजनप्रवृत्तिविषयीभूतां वित्तमयीं धनप्रायां नावाप्तः न प्राप्तवानसि यस्यां सृतौ बहवोऽनेके मनुष्याः अज्ञजनाः मज्जन्ति सीदन्ति क्लिश्यन्तीत्यर्थः ॥३॥

तयोः श्रेय आददानस्य साधु भवति। हीयतेऽर्थाद्य उ प्रेयो वृणीते इत्युक्तम्। तत्र हेतुं वक्तुं विद्याविद्ययोः स्वरूपतः फलतश्च विरोधमाह—

दूरमेते विपरीतें विषूची अविद्या या च विद्येति
ज्ञाता । विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा
कामा बहवोऽलोलुपन्तः ॥४॥

एते वक्ष्यमाणस्वरूपे दूरम् अत्यन्तं विपरीते स्वरूपतो विलक्षणे विषूची विषूच्यौ नानागती भिन्नफले । एते के इत्यत आह—अविद्येति । या कर्मकाण्डप्रसिद्धा अविद्या अभ्युदयसाधनङ्कर्म । चकारः परस्परसमुच्चयार्थः । विद्या मोक्षसाधनं तत्त्वज्ञानम् इति एवम् अविद्यात्वविद्यात्वरूपेण ज्ञाता पण्डितैर्निश्चिता नचिकेतसं त्वां तयोरविद्याविद्ययोर्मध्ये विद्याभीप्सिनं ज्ञानार्थिनं मन्येऽहं जानामि । तत्र हेतुमाह—नेति । यतः कामा अज्ञानां प्रार्थनाविषयभूता अप्सरआदयो बहवोऽनेकविधा अपि त्वा त्वां न आलोलुपन्त श्रेयोमार्गान्न विच्छेदं कृतवन्तः । अतो त्वां ज्ञानार्थिनं श्रेयोभाजनमहं मन्ये इत्यभिप्रायः ॥४॥

एवं ज्ञानार्थिनं नचिकेतसं स्तुत्वा शास्त्रविहितकर्मानुष्ठातॄन्सकामान्निन्दति—

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं-
मन्यमानाः । दन्द्रम्यमाणाः परियन्ति मूढा
अन्धेनैव नीयमाना यथाऽन्धाः ॥५॥

अविद्यायामन्तरे वर्तमानाः अविद्यातत्कार्यनिरूपिताभिमानवन्तः मूढा अविवेकिनः धीराः लौकिकप्रज्ञावन्तो वयमिति स्वयमात्मानं मन्यमानाः विजानन्तः पण्डितं शास्त्रीयप्रज्ञावन्तं चात्मानं मन्यमानाः दन्द्रम्यमाणाः अत्यन्तकुटिलामनेकरूपां गतिमिच्छन्तः परियन्तं नानाविधमनर्थं प्राप्नुवन्ति । तत्र दृष्टान्तमाह—अन्धेनेति । अन्धेनैव चक्षुरिन्द्रियरहितेनैव पुरुषेण नीयमानाः कुमार्गे प्राप्यमाणाः बहवोऽन्धाः यथा कण्टकवेधादिजन्यनानाऽनर्थं प्राप्नुवन्ति । तथा कर्मिणोऽज्ञाः संसारानर्थं प्राप्नुवन्तीत्यर्थः । धूममार्गेण स्वर्गं जिगमिषूणां गुरुरपि मूढ एवेत्यन्धजनदृष्टान्तेन सूचितम् ॥५॥

एवं शास्त्रविहितकर्मानुष्ठातॄन्निन्दित्वा शास्त्रप्रतिषिद्धकर्मकुर्वाणं निन्दति—

न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्त-
मोहेन मूढम् । अयं लोको नास्ति पर इति
मानी पुनः पुनर्वशमापद्यते मे ॥६॥

सम्यक् परदेहपतनादूर्ध्वमीयते गम्यते इति साम्परायः परलोकस्त-

त्प्राप्तिहेतुः कर्मप्रणवोपासनादिशास्त्रीयसाधनविशेषः साम्परायः। स च बालं विवेकरहितं पुरुषं न प्रतिभाति ज्ञातो न भवति। तत्र हेतुगर्भितं विशेषणद्वयमाह—प्रमाद्यन्तम्। पुत्रपश्वादिफलेषु संलग्नचित्तं वित्तमोहेन मूढं धनलाभेनाविवेकेनाच्छादितान्तःकरणम्। अयं लोकः योऽयं दृश्यमानः स्त्र्यन्नपानादिविशिष्टो लोकोऽस्ति। परोऽदृश्यमानो लोको नास्ति इति एवं मानी मन्यमानो नरः पुनः पुनः प्रतिजन्म मे मम मृत्योर्वशमापद्यते यमयातनामनुभवतीत्यर्थः। तत्र पूर्वोक्तशास्त्रीयकर्मानुष्ठानात्स्वर्गफलभोगावसाने चिरकालेन मम वशमायाति। शास्त्रप्रतिषिद्धकर्मकर्ता तु जन्मान्तरमेव मम वशं प्राप्नोतीति पुनःशब्दस्य द्विरुक्त्या सूचितम्॥ ६॥

एवं संसारे भ्राम्यतां सहस्राणां पुरुषाणां मध्ये कश्चिदेव मोक्षार्थी भवति तत्रापि कश्चिदेव त्वद्विधो निरतिशयानन्दस्वरूपं ब्रह्म प्रत्यक्त्वेन जानाति दुर्विज्ञेयत्वादात्मतत्त्वस्येत्याह—

श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि
बहवो यं न विद्युः। आश्चर्यो वक्ता कुशलोऽस्य
लब्धाश्चर्यो ज्ञाता कुशलाऽनुशिष्टः॥ ७॥

य आत्मा श्रवणाय श्रोतुमपि बहुभिरनेकैर्जनैर्न लभ्यो न लभ्यते। अशुद्धान्तःकरणत्वात्। शृण्वन्तोऽपि उपक्रमादिलिङ्गैस्तात्पर्य्यावधारणं कुर्वन्तोऽपि बहवोऽनेके जनाः यमात्मानं न विद्युर्न विजानीयुः एवं श्रोतुर्दुर्लभत्वमुक्त्वा वक्तुर्दुर्लभत्वमाह—आश्चर्य इति। अस्यात्मनो वक्ता कथयिताऽपि आश्चर्य्यः अतिदुर्लभः तथा श्रुत्वाप्यस्यात्मनो लब्धा ज्ञाताऽपि कुशलः कश्चिन्निपुण एव भवति लब्धृदुर्लभत्वे हेतुमाह—आश्चर्य्य इति। यस्मात् कुशलाऽनुशिष्टः कुशलेन साक्षात्कृतब्रह्मतत्त्वेनाऽऽचार्य्येणाऽनुशिष्टो वेदान्तवाक्यैः शिक्षितः सन् ज्ञाता साक्षात्कारवान् आश्चर्य्यः कोऽपि विरलः एव भवति। तस्मात्कश्चिदेवात्मनो लब्धेति योजना॥ ७॥

वक्तृज्ञात्रोर्दुर्लभत्वे हेतुमाह—

न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा
चिन्त्यमानः। अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात्॥ ८॥

नरेण मनुष्येण अवरेण न वरोऽवरोऽपकृष्टस्तेन स्वात्मसाक्षात्कार-

हीनतालक्षणापकृष्टत्वधर्मवता प्रोक्त उपदिष्टः एष आत्मा न सुविज्ञेयः सम्यक् विज्ञातो न भवति यस्माद्बहुधा अस्ति नास्ति कर्ताऽकर्ता शुद्धोऽशुद्धो इत्यादिबहुप्रकारैः चिन्त्यमानः वादिभिर्ज्ञायमानः। न हि विप्रतिपत्तिमद्भिः पुरुषैरुपदिष्टोऽर्थः सम्यक् ज्ञातो भवतीति भावः। तर्हि केन प्रोक्तः सुज्ञेयः स्यादित्यत आह—अनन्यप्रोक्त इति। नाहं ब्रह्मणोऽन्यो न मत्तोऽन्यत्किञ्चिदस्तीति ज्ञानवताऽऽचार्य्येण प्रोक्ते उपदिष्टे अत्र आत्मनि गतिः संशयात्मकं विपर्ययात्मकं वा ज्ञानं नास्ति न जायते। यद्वा अनन्यप्रोक्ते न त्वं ब्रह्मणोऽन्य इति शिष्यायाऽऽचार्य्येण प्रोक्ते प्रकर्षेणोपदिष्टे सति अत्रात्मनि गतिः ब्रह्माहमित्यवगतेरन्यागतिः ज्ञानान्तरं नास्ति। ज्ञेयान्तराभावात्। यद्वा गतिः देहान्तरप्राप्तिर्नास्ति। ज्ञानिनो मोक्षावश्यकत्वात्। यद्वाऽनन्येनाऽऽचार्येण प्रोक्ते सति अत्रात्मनि अगतिरनवबोधो नास्ति। किन्तु भवत्येवात्मन्यवगतिरित्यर्थः। नायं केवलतर्केण ज्ञातुं शक्योऽतिसूक्ष्मत्वादित्याह—अणीयानिति। हि यस्मादयमात्मा अणुप्रमाणादल्पपरिमाणादप्यणीयानतिसूक्ष्मः अतोऽतर्क्यम् अतर्क्यः। पूर्वोक्ताऽऽचार्य्यमन्तरेण केवलतर्केण ज्ञातुं न शक्य इत्यर्थः॥ ८॥

ननु स्वबुद्ध्यापि कश्चित्तर्ककुशल आत्मानं ज्ञास्यति किमत्र गुरुणेत्याशंक्याह—

नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय
प्रेष्ठ। यां त्वमापः सत्यधृतिर्बतासि त्वादृग् नो
भूयान्नचिकेतः प्रष्टा॥ ९॥

एषा मतिरात्मविषयिणी बुद्धिस्तर्केण स्वकल्पनामात्रेण नापनेया न प्रापनव्या यद्वा एषा आचार्य्योपदेशेन जायमाना मतिः तर्केण कुतर्केण न बाधनीया सिंहाद्गौरिव कुतर्काद्रक्षणीयेत्यर्थः। किञ्च हे प्रेष्ठ प्रियतम अन्येनैव नास्तिकेभ्यो भिन्नेनागमविदाचार्य्येणैव प्रोक्ता उपदिष्टा सती एषा मतिरात्मस्वरूपाकारा मतिः सुज्ञानायात्मसाक्षात्काराय भवति। कीदृशी सा मतिरित्यत आह—यामिति। यां मतिं त्वमापः मम वरप्रदानेन प्राप्तवानसि। सत्यधृतिर्बतासि बतेत्यनुकम्पायाम्। सत्या विषयैरबाध्यमाना धृतिर्धैर्यं यस्य स त्वं सत्यधृतिरसीति दयां कुर्वन् यम आह—त्वादृगिति। हे नचिकेतः! त्वादृक् त्वत्सदृशः प्रष्टा प्रश्नकर्ता नोऽस्माकं पुत्रः शिष्यो वा भूयात् भवत्वित्यर्थः॥ ९॥

मत्तोऽपि त्वमधिकधैर्यवत्वादुत्कृष्टप्रज्ञोऽसीति वक्तुमादौ स्वप्रज्ञाप्रकर्षमाह—

जानाम्यहꣳ शेवधिरित्यनित्यं न ह्यध्रुवैः
प्राप्यते हि ध्रुवं तत् । ततो मया नचिकेत-
श्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥१०॥

शेवधिः [1]निधिरिष्टत्वगुणसाम्यात्कर्मफलरूपो निधिरनित्यमनित्य इति एवमहं जानामि । हि यस्मात् ध्रुवं नित्यं मोक्षाख्यं फलं अध्रुवैः अनित्यैः साधनैर्न प्राप्यते तत् तस्मात्कर्मफलमनित्यमेव हि यस्मात्कर्मफलमनित्यं ततः तस्मात् मया नित्यमनित्यसाधनैर्न प्राप्यते इति जानतापि अनित्यैर्द्रव्यैः पश्वादिलक्षणैरग्निश्चितः स्वर्गसुखसाधनभूतोऽग्निः सम्पादितः हे नचिकेतः तेन कर्मणा नित्यं चिरस्थायि[2] याम्यं पदं प्राप्तवानस्मि लब्धवानस्मि न तु ध्रुवं मोक्षाख्यमिति योजना ॥१०॥

मत्तोऽपि तव धैर्यमधिकमित्याह—

कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरनन्त्य-
मभयस्य पारम् । स्तोमं महदुरुगायं प्रतिष्ठां
दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥११॥

कामस्येच्छाविषयभूतस्य सुखस्य आप्तिं समाप्तिस्थानं सर्वस्य कामशब्दितलौकिकानन्दस्य तत्रैवान्तर्भूतत्वात् । जगतः चराचरात्मकस्य प्रतिष्ठामाधारम् । क्रतोरुपासनायाः फलं हैरण्यगर्भपदम् अनन्त्यम् अनन्तफलं हिरण्यगर्भपदस्यानन्तत्वमापेक्षिकमेवमुत्तरपदार्थेष्वपि द्रष्टव्यम् । अभयस्य भयराहित्यस्य पारम् अवधिभूतं स्तोमं स्तुत्यं महत् अणिमाद्यैश्वर्याद्यनेकगुणोपेतम उरुगायं सर्वागमैरुरुत्वेन पूर्णत्वेन गेयं प्रतिष्ठाम् आत्मनो निरतिशयस्थितिम् । दृष्ट्वोक्तविशेषणकहिरण्यगर्भपदस्यानित्यत्वं निश्चित्य धृत्या धैर्येण धीरो धीमान् सन् हे नचिकेत इति संबोधनम् हिरण्यगर्भपदपर्यन्तं त्वम् भोग्यजातमत्यस्राक्षीः त्यक्तवानसि । अतस्त्वमनुत्तमगुणोऽसीति भावः ॥११॥

इदानीं नचिकेतसा पृष्टाऽऽत्मनो लाभसाधनं फलं च दर्शयति—

---

१. कामनाविषयत्वगुणयोगात् कर्मफलं निधिरिव प्रार्थ्यते ।

२. आपेक्षिकनित्यं स्वर्गाख्यं काम्यं पदं किंचित्कालावस्थायित्वात् ।

तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं
पुराणम्। अध्यात्मयोगाधिगमेन देवं
मत्वा धीरो हर्षशोकौ जहाति ॥१२॥

यमात्मानं ज्ञातुमिच्छसि तं देवमात्मानं त्वया पृष्टम् अध्यात्मयोगाधिगमेन आत्मनि चित्तस्य समाधानमध्यात्मयोगः निदिध्यासनं तस्य लाभेन मत्वा साक्षात्कृत्य धीरो बुद्धिमान् हर्षशोकौ जहाति तद्रहितो भवतीत्यन्वयः। कीदृशं देवमित्याकांक्षायां तद्विशेषणषट्कमाह—दुर्दर्शमिति। दुर्दर्शम् असंयतचित्तैर्द्रष्टुमशक्यम्। गूढं मायाकार्य्यैरावृतम्। अनुप्रविष्टं कार्य्यजातं सृष्ट्वा तत्र प्रविष्टम्। गुहाहितं बुद्धावुपलभ्यमानत्वात्तत्र स्थितं गह्वरेष्टं रागद्वेषादिभिरनर्थैरायासजनके कार्य्यकरणसंघाते स्थितम्। पुराणं सनातनमित्यर्थः ॥१२॥

हर्षशोकौ जहातीत्यनेन तत्त्वज्ञानस्य समूलभवनिवर्तकत्वं प्रदर्श्यानन्दावाप्तिसाधनतामाह—

एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य। स मोदते मोदनीयꣳहि लब्ध्वा
विवृतꣳ सद्म नचिकेतसं मन्ये ॥१३॥

यो मर्त्यः एतदात्मतत्त्वं श्रुत्वा गुरुमुखात् श्रवणविषयीकृत्य सम्परिगृह्य मननं कृत्वा प्रवृह्य निदिध्यासनं कृत्वा धर्म्यं धर्मस्य पुण्यस्य जनकत्वात् धर्मयुक्तम् अणुं सूक्ष्मम् एतमात्मानम् आप्य साक्षात् कृत्य। वर्त्तेत इति शेषः। सह विद्वान् मोदनीयं कर्त्तरि अनीयर् एष ह्येवानन्दयातीति श्रुतेः मोदयितारं लब्ध्वा प्राप्य मोदते हि एव कृतकृत्यो भवतीति यावत्। यद्वा एतत् परमात्मतत्त्वं सम्परिगृह्य सम्यगात्मभावेन निश्चित्य प्रवृह्य देहादेः पृथक् कृत्य समानमन्यत्। एवंविधं ब्रह्मात्मकं सद्म गृहं नचिकेतसं त्वां प्रति विवृतं प्रतिबन्धशून्यं मन्ये मोक्षार्हं त्वामहं जानामीति भावः ॥१३॥

देहादिव्यतिरिक्तात्मज्ञानमेव यदि मोक्षसाधनं तर्हि तदेव ब्रूहीति नचिकेता आह—

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥१४॥

धर्मात् फलकारकसहिताद्यज्ञादिरूपात् अन्यत्र अन्यत् अधर्मात् फल-

कारकसहिताच्छास्त्रविहितहिंसादिरूपात् अन्यत्र अन्यत्। अस्मात् विद्वद्बुद्धिविषयात् कृताकृतात् कार्य्यकारणात् अन्यत्र अन्यत् भूताच्च भव्याच्च भूतपदं वर्तमानस्याप्युपलक्षणं तथा च भूतादिकालेभ्यः कालिकेभ्यश्च अन्यत्र अन्यत्। एवंभूतं वस्तु यत् यदि त्वं पश्यसि जानासि तत्तर्हि तदात्मतत्त्वं मह्यं वद कथयेत्यर्थः ॥ १४ ॥

साधनं विना तत्त्वज्ञानासम्भवात्तत्त्वज्ञानप्राप्तिसाधनमुपास्यवाचकप्रतीकभेदेन द्विविधमोङ्कारोपासनं नचिकेतसे यम आह—

सर्वे वेदा यत्पदमामनन्ति तपाꣳसि सर्वाणि<br>
च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति<br>
तत्ते पदꣳ संग्रहेण ब्रवीम्योमित्येतत् ॥ १५ ॥

सर्वे वेदाः वेदान्ताः यत्पदं पदनीयं प्राप्यं परं ब्रह्म आमनन्ति प्रतिपादयन्ति। सर्वाणि तपांसि कर्माणि यत्पदं वदन्ति चित्तशुद्धिद्वारा प्रापयन्ति। यदिच्छन्तः यत्पदावाप्तीच्छया मुमुक्षवः ब्रह्मचर्यं [1]अष्टविधमैथुनत्यागपूर्वकगुरुकुलवासलक्षणं नैष्ठिकं चरन्ति कुर्वन्ति तत्पदं ब्रह्मात्मकपदं ते तुभ्यं संग्रहेण संक्षेपेण ब्रवीमि वदामि ओमित्येतत् ओमित्यक्षरस्य ब्रह्मवाचकत्वाद्ब्रह्मप्रतीकत्वाच्चोमित्याकारकमेव तत्पदमित्यर्थः। यस्य शब्दस्योच्चारणे यद्वस्तु स्फुरति तत्तस्य वाच्यमिति प्रसिद्धम्। समाहितचित्तस्योङ्कारोच्चारणे यत्साक्षिचैतन्यं स्फुरति तदोङ्कारमवलम्ब्य तद्वाच्यं ब्रह्माहमस्मीति ध्यायेत्। तत्राप्यसमर्थ ओंशब्दे एव ब्रह्मदृष्टिं कुर्य्यादिति भावः ॥ १५ ॥

एवं तत्त्वप्रतिपत्तिसाधनभूतां प्रणवोपासनामभिधाय प्रणवाक्षरस्य स्तुतिं तदोपासनाफलं चाह—

एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्।<br>
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥

हि यतः एतदक्षरं प्रणवाख्यमक्षरं ब्रह्मैव हिरण्यगर्भाख्यापरब्रह्मरूपमेव हि यतः एतदक्षरं प्रणवाख्यमक्षरं परं परब्रह्मरूपमेव एतद्ध्येवाक्षरं हि तस्मात् एतदक्षरं प्रणवाख्यमक्षरं ज्ञात्वा परापरब्रह्मस्वरूपत्वेन

---

[1] दर्शनं स्पर्शनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः॥ विपरीतं ब्रह्मचर्य्यमनुष्ठेयं मुमुक्षुभिः।

ध्यात्वा य उपासकः यदिच्छति परापरब्रह्मभावफलयोर्मध्ये यत्फलं वाञ्छति तस्योपासकस्य तत् परमपरं वा ब्रह्म प्राप्तं भवति । तत्र परब्रह्मप्राप्तिस्तु ज्ञानद्वारेति शेषः ॥ १६ ॥

यत एवमत आह—

एतदालम्बनꣳ श्रेष्ठमेतदालम्बनम्परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥

एतत् प्रणवरूपम् आलम्बनं ब्रह्मदृष्ट्याधिकरणं श्रेष्ठं कार्य्यब्रह्मणो ध्यानोपकारकत्वाद्गायत्र्याद्यालम्बनेभ्यः प्रशस्तम् एतत् प्रणवाख्यालम्बनं परं परब्रह्मणो ध्यानोपकारकत्वादुत्कृष्टम् । एतत्प्रणवाख्यमालम्बनं ज्ञात्वा उपास्य ब्रह्मलोके महीयते द्विविधब्रह्मध्यानेन ब्रह्मलोकप्राप्तिद्वारा मुच्यते इत्यर्थः ॥ १७ ॥

एवं मन्दमध्यमाधिकारिभेदेन द्विविधप्रणवोपासनामभिधायेदानीं निरुपाधिकात्मतत्त्वमाह—

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न
बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं
पुराणो न हन्यते हन्यमाने शरीरे ॥ १८ ॥

विपश्चित् नित्यचैतन्यरूप आत्मा न [1]जायते नोत्पद्यते न म्रियते वा वाशब्दश्चार्थे न नश्यति च । तत्र हेतुत्वेन कारणाभावं द्वैताभावं चाह—नायमिति । अयमात्मा कुतश्चित् कारणात् न बभूव नाजायत कारणस्याभावात् कश्चित् कोऽप्यर्थान्तरभूतः अस्मादात्मनो न बभूव नाजायत अतः कार्य्यनाशप्रयुक्तोऽप्यात्मनो नाशो नास्ति यत एवमतोऽजो नित्यश्च नित्यत्वाच्चायमात्मा शाश्वतः अपक्षयशून्यः शाश्वतत्वाच्च पुराणः वृद्धिवर्जितः यत एवं स्वभाव आत्माऽत उपाधिनाशे तन्नाशशङ्कापि नास्तीत्याह—नेति । शरीरे हन्यमाने शस्त्रादिभिश्छिद्यमानेऽप्ययमात्मा न हन्यते न हिंस्यते निरवयवत्वात् ॥ १८ ॥

यः पूर्वोक्तमात्मानं हननादिक्रियाकर्तारं हननादिक्रियाकर्मभूतं च मन्यते स भ्रान्त इत्याह—

---

१. आद्यन्ते जन्मविनाशलक्षणे विक्रिये प्रतिषिद्धे तेन सर्वविक्रियाप्रतिषेधो भवति जायतेऽस्ति वर्द्धते विपरिणमते अपक्षीयते नश्यति चेति षड् भावविकाराः ।

हन्ता चेन्मन्यते हन्तुꣳहतश्चेन्मन्यते हतम्।
उभौ तौ न विजानीतो नायꣳहन्ति न हन्यते ॥१६॥

चेत् यदि हन्ता हननक्रियाकर्तृसंघातावच्छिन्नः पुरुषः हन्तुं हनिष्याम्येनमिति हननक्रियाकर्तारमात्मानं मन्यते विजानाति चेत् यदि हतो हननं प्राप्तः हननक्रियाकर्म संघातावच्छिन्नः हतं हतोऽहमिति हननक्रियाकर्मभूतमात्मानं मन्यते तौ उभौ हन्तृत्वेन हतत्वेन चात्मानं मन्यमानौ न विजानातः आत्मानमिति शेषः। तत्र हेतुमाह—नेति। यतोऽयमात्मा न हन्ति हननक्रियाकर्ता न भवति न हन्यते हननक्रियाकर्म न भवति। हननोपलक्षितस्य सर्वक्रियाकारकधर्माधर्मादिप्रपञ्चस्यात्माज्ञानकृतत्वादिति भावः। एतेनात्मनो मृतिनिमित्तानास्तित्वशङ्का निरस्ता ॥१६॥

आत्मनोऽतिसूक्ष्मत्वान्नाशायोग्यतामाह—

अणोरणीयान्महतो महीयानात्मास्य जन्तो-
र्निहितो गुहायाम्। तमक्रतुः पश्यति वीत-
शोको धातुप्रसादान्महिमानमात्मनः ॥२०॥

अणोः सूक्ष्मात् तार्किकैर्नित्यत्वेनाभिमतात् मनआदे[१]रात्माऽणीयान् अति सूक्ष्मः। अतो न नाशयोग्यः महतः महत्परिमाणात्तार्किकैर्महत्त्वेन नित्यतया चाभिमतात्कालादेरप्यात्मा महीयान् महत्तरस्तदधिष्ठानत्वात् अतोऽपि नास्त्यात्मनो नाशयोग्यतेत्यर्थः। तस्योपलब्धिस्थानमाह—अस्येति। अकतुः स चात्माऽस्य जन्तोः ब्रह्मादिस्तम्बपर्यन्तप्राणिजातस्य गुहायां बुद्धौ निहितः प्रत्यग्रूपत्वेन स्थितः। तस्याकामत्वादिकं ज्ञानसाधनमाह—तमिति। अक्रतुः दृष्टश्रुतविषयेभ्य उपरतचित्तः सन् [२]धातुप्रसादात् देहस्य धारकत्वाद्धातवो मनआदिकरणानि तेषां प्रसादान्नैर्मल्यात् आत्मनः स्वस्यः महिमानम् एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्द्धते नो कनीयानिति श्रुतिप्रसिद्धकर्मनिमित्तवृद्धिह्रासराहित्यरूपं पश्यति अयमहमस्मीत्यैक्येन साक्षाद्विजानाति ततश्च वीतशोकः शोकोपलक्षितजन्ममरणरहितो भवतीत्यर्थः ॥२०॥

कल्पितोपाधिभेदैर्नानारूपविरुद्धधर्मवत्वेन भासमानत्वान्न विवेकशून्यैरयमात्मा ज्ञातुं शक्य इत्याह—

---

१. पृथिव्यप्तेजोवायुपरमाणवः आकाशकालदिगादयश्च आदिपदेन ग्राह्याः।
२. सर्वत्रोपनिषत्पुस्तकेषु 'धातुः' इति षष्ठ्यन्तं पदमुपलभ्यते। (सं०)

आसीनो दूरं व्रजति शयानो याति सर्वतः ।
कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥२१॥

आसीनः जाग्रत्स्वप्नयोर्मनआदिव्यापारस्य साक्षित्वेन स्थित एव दूरं व्रजति । जाग्रति विषयदेशं गच्छत्सु मनआदिषु तत्प्रतिबिम्बरूपेण विषयदेशं गच्छति न वस्तुतो गतिमान् भवतीति सर्वत्र पूर्णत्वात् । शयानः करणोपरमे सति मनुष्योऽहमिदं पश्यामीत्यादिविशेषज्ञानाभावात्सुप्तः याति सर्वतः ज्ञानसामान्यरूपेणावस्थानात्सर्वतो यातीत्युच्यते । किञ्च—मदामदं बुद्ध्यादिसंघाततादात्म्याध्यासाद्विद्याधनादिप्रयुक्तमदवन्तं वस्तुतोऽमदं मदरहितं एवंभूतं तं देवं प्रकाशस्वरूपमात्मानं मदन्यः मादृशाद्विवेकवतो भिन्नः कः ज्ञातुमर्हति आत्मज्ञानयोग्यो भवति न कोपीऽत्यर्थः ॥२१॥

आत्मविज्ञानफलमाह—

अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥२२

अशरीरं शरीरत्रयरहितम् अनवस्थेषु अनित्येषु शरीरेषु सर्वदेहेषु अवस्थितं शरीरत्रयसाक्षितया स्थितं महान्तं बृहद्रूपम् । आपेक्षिकमहत्वं वारयति विभुं सर्वव्यापकम् एवंभूतमात्मानं प्रत्यक्चैतन्यं मत्वा अहमेव परं ब्रह्मेति साक्षात्कृत्य धीरो विवेकी पुरुषः न शोचति कर्तृत्वादिरूपबन्धरहितो भवति शोकहेतोरज्ञानस्य निवृत्तत्वादिति भावः ॥ २२ ॥

आत्मानुसन्धानं विना वेदाध्ययनादिसाधनजातस्य निष्फलत्वादात्मानुसन्धाने मुमुक्षुणाऽतिप्रयतितव्यमित्याह—

नायमात्मा प्रवचनेन लभ्यो न मेधया न
बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनूꣳ स्वाम् ॥

अयमात्मा प्रत्यगभिन्नब्रह्मस्वरूपः प्रवचनेन वेदाध्ययनेन न लभ्यः न ज्ञातुं शक्यः । मेधया ग्रन्थार्थधारणशक्तिरूपया न लभ्यः । बहुना श्रुतेन उपनिषद्विचारातिरिक्तानेकशास्त्रश्रवणेन । गुरूपदेशरहितोपनिषच्छ्रवणेनापि न लभ्यः । केन तर्हि लभ्यते इत्यत आह—यमिति । एष मुमुक्षुः यमेव स्वात्मानमेव वृणुते श्रवणमननादिभिः सम्भजते । श्रवणादिकालेऽपि प्रत्यग्ब्रह्मैवाहमित्यनुसन्धत्ते इति यावत् ।

तेनाभेदानुसन्धानवता पुरुषेण लभ्यः ज्ञेयः स आत्मेति शेषः । यद्वा एषः परमात्मा आचार्य्यमूर्तिस्थः सन् यमेव यमधिकारिणमेव वृणुते अनुगृह्णाति तेन आचार्यानुगृहीतेन लभ्यः लभ्यते स आत्मेत्यर्थः । नित्यलब्धस्य लाभो न दर्शनादन्य इत्याह—तस्येति । तस्याऽऽचार्यानुगृहीतस्य मुमुक्षोः एषः प्रकृत आत्मा स्वां तनुं स्वकीयमानन्दात्मकस्वरूपं विवृणुते प्रकाशयतीत्यर्थः ॥ २३ ॥

शमदमादिसाधनवत एवात्मज्ञानं सम्भवति नान्यस्येत्याह—

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥२४॥

दुश्चरितात् कायिकपापात् अविरतः अनिवृत्तः अशान्तः एनं नाप्नुयात् इन्द्रियलौल्यादनिवृत्तः एनं नाप्नुयात् असमाहितः अनेकाग्रमनाः विक्षिप्तचित्तः एनं नाप्नुयात् अशान्तमानसः समाहितचित्तोऽपि सन् समाधिफलादणिमादिलक्षणादनिवृत्तमनाश्च एनं नाप्नुयात् यस्तु दुश्चरितान्निवृत्तः इन्द्रियालौल्यान्निवृत्तः समाहितचित्तः समाधिफलाद्विरक्तः एतद्विशेषणविशिष्टः स आचार्य्यवान् प्रज्ञानेन ज्ञानसाधननिदिध्यासनादिना एनं यथोक्तात्मानं प्राप्नोतीत्यर्थः ॥ २४ ॥

एवं कुत्सिताचरणनिवृत्त्यादिसाधनैर्विना आत्मा न ज्ञातुं शक्य इत्युक्तमुपसंहरति —

यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥२५॥

इति प्रथमेऽध्याये द्वितीया वल्ली ॥ २ ॥

यस्य तमःप्रधानमायोपाधिकस्येश्वरस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ब्राह्मणक्षत्रियोपलक्षितं चराचरात्मकं जगत् ओदनः अशनस्थानीयं भवति मृत्युः सर्वसंहारकः यस्येश्वरस्योपसेचनं शाकसूपस्थानीयः स ईश्वरः यत्र यस्मिञ्छुद्धस्वरूपे स्थितः तं शुद्धमात्मानम् इत्था इत्थं यथा मया यमेन ज्ञातस्तथा को वेद मदन्यः को विजानीयात् न कोऽपीत्यर्थः । एतेनात्मज्ञानस्यातिदुर्लभत्वं सूचितम् ॥ २५ ॥

इति श्रीकाठकोपनिषद्व्याख्यायामुपनिषन्मणिप्रभायां प्रथमाध्याये द्वितीया वल्ली समाप्ता ॥ २ ॥

—:०:—

## अथ तृतीया वल्ली

पूर्वोक्तविद्याविद्ययोः स्वरूपसाधनफलानि वक्तुं तृतीया वल्ल्यारभ्यते। रथरूपककल्पना तु विद्याविद्ययोर्ज्ञानसौकर्य्यार्था तत्रादौ गन्तृगन्तव्यविवेकार्थं द्वावात्मानौ तत्त्वपदार्थावाह—

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।
छायाऽऽतपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥१॥

सुकृतस्य स्वयंकृतस्य विहिताविहितस्य कर्मणः ऋतं सत्यमवश्यभोक्तव्यत्वेन कर्मफलं ऋतपदेनोक्तम् पिबन्तौ भुञ्जानौ जीवेशौ लोकेऽस्मिन् शरीरे स्थिताविति शेषः। ऋतं पिबन्तावित्यत्र यथा दशभिः सह पुत्रैश्च भारं वहति गर्दभीत्यत्र पुत्राणां भारवहनेऽन्वयो नास्ति। यथा वा अग्नाइपत्नीवान्त्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहेत्यत्राग्निना सह वर्तमानस्य त्वष्टुः सोमपानकर्तृत्वेऽन्वयो नास्ति । एवं कर्मफलभोक्तृजीवेन सहैकत्र स्थितस्यापीश्वरस्य पानकर्तृत्वेऽन्वयो नास्तीति बोध्यम् । मन्त्रार्थस्तु—हे अग्ने त्वं सोमं पिब । कीदृशस्त्वं पत्नीवान् जायासहितः । पुनः कीदृशस्त्वं त्वष्ट्रा त्वष्टृसंज्ञकेन देवेन सजूः सहितः । एककर्माधिष्ठातृत्वेनाग्नित्वष्ट्रोः साहचर्यं बोध्यम् इति । कीदृशौ तौ गुहां प्रविष्टौ परमे परार्द्धे । परमे बाह्याकाशापेक्षयोत्कृष्टे परार्द्धे परस्य ब्रह्मणोऽर्द्धं स्थानं परार्द्धं तस्मिन्नुत्कृष्टे ब्रह्मस्थाने हार्दाकाशे या गुहा बुद्धिः तां प्रविष्टौ प्रविष्टवन्तौ स्थिताविति यावत् यद्यपि बुद्धौ प्रविष्टस्य ब्रह्मणो बुद्धिरेव स्थानं न तु हार्दाकाशं तथाप्यासने स्थितस्यासनाधारभूतभूमौ स्थितिवद्बुद्धौ स्थितस्य ब्रह्मणो बुद्ध्याश्रये हार्दाकाशे अपि स्थितत्वाद्धार्दाकाशे ब्रह्मस्थानमुक्तम् । यद्वा गुहामिति सप्तम्यर्थे द्वितीया तथा च परमे उत्कृष्टे परार्द्धे परस्य ब्रह्मणः स्थाने गुहायां बुद्ध्याख्यागुहाभूते प्रविष्टावित्यर्थः । पुनः कीदृशौ छायाऽऽतपौ छायातपाविव मिथो विलक्षणो भोक्तृत्वाभोक्तृत्वादिविरुद्धधर्मत्वेन । एवम्भूतौ तौ ब्रह्मविदो ब्रह्मज्ञानिन वदन्ति कथयन्ति पञ्चाग्नयः गार्हपत्यो दक्षिणाग्निराहवनीयः सभ्यः आवसथ्यश्चेत्येते पञ्चाग्नयो गृहस्थाः पञ्चसु द्युपर्जन्यपृथिवीपुरुषयोषित्सु अग्निदृष्टिः येषां ते वा पञ्चाग्नयो वदन्ति । ये च त्रिणाचिकेताः त्रिवारं चितो नाचिकेतोऽग्निर्यैस्तेऽपि वदन्तीत्यर्थः ॥ १ ॥

ननु के ते ब्रह्मविदः पञ्चाग्निविदश्च य एवं वदन्तीत्याकाङ्क्षायां वयमेवेत्याह—

य: सेतुरीजानानामक्षरं ब्रह्म यत्परम् । अभयं
तितीर्षतां पारं नाचिकेतँ शकेमहि ॥ २ ॥

यः नाचिकेताख्यो विराडात्मकोऽग्निः ईजानानां कर्मिणां सेतुः दुःखजलधेः सन्तरणोपायः । तं नाचिकेतमग्निं ज्ञातुं चेतुं च वयं शकेमहि शक्नुवन्तः । किं च पारं तितीर्षतां संसाराब्धेः पारं मोक्षाख्यं पदं प्राप्तुमिच्छताम् । ब्रह्मविदां प्राप्यं यत्परं ब्रह्म अक्षरं न क्षरतीत्यक्षरं [१]षड्भावविकाररहितं प्रत्यग्भूतम् अभयं भयरहितं तदपि वयं ज्ञातुं शकेमहि शक्नुवन्तः । अस्मदादिभिर्विदितं परापरं ब्रह्म ज्ञानिकर्मिभ्यां गन्तव्यमन्यैरपि ज्ञातव्यमिति तात्पर्य्यार्थः ॥ २ ॥

तत्र कर्मफलभोक्तुर्जीवस्य संसारं मोक्षं वा गच्छतः रथिनो रथादिवच्छरीरादीनि गतिसाधनानि दर्शयति द्वाभ्यां—

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥

आत्मानं त्वंपदार्थं जीवं रथिनं रथेन संसारमोक्षयोर्गन्तारं रथस्वामिनं विद्धि जानीहि । शरीरं तु देहं च रथमेव रथमिव गतिसाधनं विद्धि । बुद्धिम् अध्यवसायरूपां सारथिं शरीररूपरथस्य नेतारं विद्धि जानीहि । मनःसंकल्पविकल्पात्मकं प्रग्रहमेव रशनामेव विद्धीति क्रियाऽनुकर्षणार्थश्चकारः ॥ ३ ॥

इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥

इन्द्रियाणि चक्षुरादिबाह्यकरणानि हयान् शरीरात्मकरथकर्षकानश्वान् आहुरुक्तवन्तः शास्त्रविद इति शेषः । तेषु तेषामुक्ताश्वानां गोचरान् प्रचरणमार्गस्थानीयान् विषयान् रूपाद्यात्मकान् आहुरिति सम्बन्धः । रथस्वामित्वेनोक्तस्यात्मन औपाधिकमेव भोक्तृत्वं न स्वाभाविकमित्याह—आत्मेति । आत्मेन्द्रियमनोयुक्तं देहेन्द्रियमनोभिः सहितम् आत्मानं चिदाभासाख्यं भोक्ता सुखदुःखयोरनुभविता इति एवं मनीषिणः विवेकिनः आहुरुक्तवन्तः ॥ ४ ॥

वक्ष्यमाणसंसारमोक्षरूपगतिद्वैविध्यं वक्तुं सारथिद्वैविध्यं तावदाह द्वाभ्यां—

---

१. जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, नश्यति चेति ।

यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥

यस्तु बुद्ध्यात्मकः सारथिरेव अविज्ञानवान् मनसो निग्रहद्वारा इन्द्रियाणां बाह्यार्थेषु प्रवृत्तिनिवारणसाधनज्ञानशून्यः सन् अयुक्तेन अगृहीतेन असमाहितेन वा मनसा रशनास्थानायेन सह सदा सर्वदा भवति वर्तते। तस्य उक्तलक्षणस्य बुद्धिरूपसारथेः इन्द्रियाणि चक्षुरादीन्यश्वस्थानीयानि अवश्यानि विषयेभ्यो निवर्तयितुमशक्यानि भवन्ति। तत्र दृष्टान्तमाह—दुष्टेति। यथा लौकिकसारथेः दुष्टा अशिक्षिता अश्वाः कुमार्गान्निवर्तयितुं तेन न शक्यन्ते तद्वदित्यर्थः ॥ ५ ॥

यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥

यस्तु यो बुद्ध्याख्यः सारथिरेव विज्ञानवान् मनसो निग्रहद्वारा इन्द्रियाणां बाह्यविषयेषु प्रवृत्तिनिवारणसाधनज्ञानयुक्तः सन् युक्तेन निगृहीतेन मनसा युक्तः सदा सर्वदा भवति तस्य बुद्धिसारथेः इन्द्रियाणि चक्षुरादीन्यश्वस्थानीयानि वश्यानि स्वाधीनानि भवन्ति। तत्र दृष्टान्तमाह—सदिति। यथा लौकिकसारथेः सदश्वाः शिक्षिता अश्वा वशवर्तिनो भवन्ति तद्वदित्यर्थः ॥ ६ ॥

एवमुक्तबुद्धिसारथिद्वैविध्येन रथिना आत्मनः प्रतिज्ञातं गतिद्वैविध्यमाह द्वाभ्यां—

यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः।
न स तत्पदमाप्नोति सँसारं चाधिगच्छति ॥ ७ ॥

यस्तु आत्माख्यो रथ्येव अविज्ञानवान् विज्ञानरहितसारथिः अमनस्कः अनिरुद्धमनाः। मनसोऽनिरुद्धत्वादेव सदा निरन्तरम् अशुचिः इन्द्रियाणां यथेष्टाऽऽचरणप्रयुक्तपापेन दूषितो भवति। स उक्तविशेषणो रथी तत्पदम् अक्षरब्रह्मस्वरूपं स्थानं नाऽऽप्नोति न प्राप्नोति तेन सारथिनेति शेषः किन्तु संसारे च जन्ममरणरूपमेव अधिगच्छति प्राप्नोति ॥ ७ ॥

किञ्च—

यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥

य आत्माख्यो रथी एव विज्ञानवान् शिक्षितबुद्ध्याख्यसारथियुक्तः समनस्कः निगृहीतमनस्सहितः सदा सर्वदा शुचिः शुद्धचित्तो भवति स तु स चोक्तविशेषणो रथा तत्पदं ब्रह्मरूपपदम् आप्नोति याति यस्माद्ब्रह्मस्वरूपात्पदादप्रच्युतः सन् भूयः पुनः न जायते नोत्पद्यते ॥ ८ ॥

तत्पदमाप्नोतीत्युक्तमेवार्थं विवृणोति—

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ९ ॥

यो विज्ञानसारथिः विवेकवती बुद्धिः सारथिर्यस्य स तथा मनःप्रग्रहवान् निगृहीतमनोरूपरशनावान्। एवम्भूतो यो नरो विद्वान् स पुरुष; अध्वनः पारं संसारसमुद्रात्परं स्थानम् आप्नोति याति संसाराद्विमुक्तो भवतीति यावत्। यद्वा सोऽध्वनः पारमाप्नोति संसारान्तर्भूत-[1]देवयानदक्षिणायनाऽधोगतिरूपाया गतेः पारं तदप्राप्यं यत्तदाप्नोतीत्यर्थः। तत्संसाररहितस्थानं विष्णोर्व्यापनशीलस्य ब्रह्मणः परमम् उत्कृष्टं पदं स्वरूपमित्यर्थः ॥ ९ ॥

तद्विष्णोः परमं पदमित्युक्तस्य पदस्य सर्वोत्कृष्टत्वं वक्तुं मापेक्षकोत्कृष्टत्वपरम्परां तावदाह—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ १० ॥

इन्द्रियेभ्यः श्रोत्रादिपञ्चज्ञानेन्द्रियेभ्यः परा उत्कृष्टा हि प्रसिद्धा अर्थाः शब्दादिविषयाः इन्द्रियाणामर्थाधीनप्रवृत्तिमत्त्वात्। च पुनः अर्थेभ्यः शब्दादिविषयेभ्यः परम् उत्कृष्टं सूक्ष्मं मनः संकल्पविकल्पात्मकं मनसोऽर्थग्राहकत्वात्। तु पुनः मनसः संकल्पादिरूपात् परा उत्कृष्टा बुद्धिर्निश्चयलक्षणा। मनोव्यापारस्य बुद्ध्यधीनत्वात्। बुद्धेरस्मदादिव्यष्टिबुद्धेः महानात्मा समष्टिबुद्धिरूपः परः उत्कृष्टः ॥ १० ॥

महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ ११ ॥

महतः समष्टिबुद्धेः परम् उत्कृष्टम् अव्यक्तं सर्वं जगतो बीजं मायाख्यमव्याकृतम् अव्यक्तात् उक्तविशेषणात् पुरुषः पूर्णः सकलजडवर्गप्रकाशक आत्मा परः उत्कृष्टः। तस्मादप्यन्यः कश्चित्परः स्यादित्यत आह—

---

१. त्रिधासंसारगतेरप्राप्यं यत्तत्पदमाप्नोति ।

पुरुषादिति । पुरुषात् सर्वत्र पूर्णादात्मनः परम् उत्कृष्टं किञ्चित् किमपि वस्त्वन्तरं नास्ति । एवं कस्मादित्यत आह—सेति । यस्मात् सा उक्तस्वरूपात्मा काष्ठा उक्तपरत्वानां विश्रान्तिभूमिः सा परा गतिः सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति श्रुतिप्रसिद्धा परा उत्कृष्टा गतिः गन्तव्यफलस्वरूपा इत्यर्थः ॥ ११ ॥

एवं सर्वकार्य्यवर्गाधिष्ठानत्वेनोक्तस्यात्मनो भानाभानयोर्हेतुमाह—

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्रयया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥

एष इन्द्रियादिकार्य्यवर्गात्परत्वेनोक्तः आत्मा प्रत्यक्चैतन्यरूपः सर्वेषु ब्रह्मादिस्तम्बान्तेषु भूतेषु प्राणिषु स्थितोऽपि गूढः अविद्यया आच्छादितः सन् न प्रकाशते सर्वस्मात्पर आनन्दरूपोऽहमिति व्यवहारयोग्यो न भवतीत्यर्थः । ननु तमक्रतुः पश्यति वीतशोक इति पूर्वोक्ताद्विरुद्धं न प्रकाशते इति कथमुच्यते इत्याशंक्य चित्तशुद्ध्यशुद्धिभ्यामधिकारिभेदान्न विरोध इत्याह—दृश्यते त्विति । तु शब्दः एवार्थकः । सूक्ष्मदर्शिभिः इन्द्रियेभ्यः परा ह्यर्था इत्यादिप्रकारेणोत्तरोत्तरसूक्ष्मत्वविचारेण सूक्ष्मात्मतत्त्वं द्रष्टुं शीलं येषां तैः पण्डितैः अग्रयया मुख्यया गुरूपदिष्टमहावाक्यजन्यया सूक्ष्मया सूक्ष्मपदार्थग्रहणसमर्थया बुद्ध्या निश्चयात्मिकयैव एषः आत्मा दृश्यते प्रत्यग्रूपेण साक्षात्क्रियत इत्यर्थः ॥ १२ ॥

बुद्ध्यैकाग्र्यं विना सूक्ष्मतत्त्वस्य भानासंभवात्तदैकाग्र्यप्रकारमाह—

यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥ १३ ॥

प्राज्ञः आत्मा जिज्ञासुः पुरुषः वाक् वागादिसर्वेन्द्रियगणं मनसि सर्वेन्द्रियानियामके संकल्पविकल्परूपे यच्छेत् निरुन्ध्यात् मनोव्यापारातिरिक्तेन्द्रियव्यापाराभावं कुर्य्यादिति यावत् । तत् मनः ज्ञान आत्मनि निश्चलरूपायां व्यष्टिबुद्धौ यच्छेत् निरुन्ध्यात् । व्यष्टिबुद्धिव्यापारातिरिक्तमनोव्यापाराभावं कुर्य्यात् । ज्ञानं व्यष्टिबुद्धितत्त्वम् आत्मनि महति व्यष्टिबुद्धीनामात्मभूते महत्तत्त्वे समष्टिबुद्धिरूपे नियच्छेत् विलापयेत् । समष्टिबुद्धिव्यतिरिक्तव्यष्टिबुद्धिर्नास्तीति चिन्तयेत् । तत् समष्टिबुद्धितत्त्वं शान्ते निर्विकारे आत्मनि प्रत्यगात्मनि सर्वकरणव्यापारसाक्षिणि यच्छेत् विलापयेत् आत्मातिरिक्तसमष्टिबुद्ध्यभावं चिन्तयेदित्यर्थः ॥१३॥

एवं योगाभ्यासेन चित्तस्यैकाग्रतां सम्पाद्य यत्रात्मनि समष्टिबुद्धिलभ्योक्तस्तस्यात्मनो ज्ञाने प्रयतितव्यमिति मातृवद्धितैषिणी श्रुतिराह—

उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत । क्षुरस्य धारा
निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥१४॥

हे अधिकारिणो जना यूयम् उत्तिष्ठत ज्ञानाय प्रयतध्वं जाग्रत अज्ञानरूपनिद्रां त्यजत वरान् ब्रह्मविद आचार्य्यान् प्राप्य तेषां समीपं गत्वा निबोधत । तैरुपदिष्टमात्मतत्त्वं विजानीत । नह्यसमाहितचित्तैस्तदवगन्तुं शक्यम् अतिसूक्ष्मात्मज्ञानस्य दुःसम्पाद्यत्वादिति सदृष्टान्तं श्रुतिराह—क्षुरस्येति । क्षुरस्य नापितशस्त्रविशेषस्य धारा अग्रभागो निशिता शाणसंघर्षणेन तीक्ष्णीकृता तथा दुरत्यया पद्भ्यां गन्तुमशक्या तथा तत्पथः पन्थानम् आत्मज्ञानलक्षणं मार्गं दुर्गं दुःखेन सम्पाद्यं कवयः पण्डिताः वदन्ति कथयन्तीत्यर्थः ॥१४॥

नन्वात्मवस्तुनः सुज्ञेयत्वे कथं तज्ज्ञानमार्गस्य दुर्गमत्वमित्याशंक्य शब्दादिगुणहीनत्वेनात्मनोऽतिसूक्ष्मत्वान्नास्ति सुज्ञेयत्वमित्याह—

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यम-
गन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं नि-
चाय्य तं मृत्युमुखात्प्रमुच्यते ॥ १५ ॥

तं ब्रह्मात्मानं निचाय्य ज्ञात्वा मृत्युमुखात् जन्ममरणलक्षणात्संसारात् प्रमुच्यते मुक्तो भवतीति सम्बन्धः । कीदृशं तमित्याकांक्षायां तस्य विशेषणदशकमाह—अशब्दमित्यादि । यत् ब्रह्मात्मस्वरूपम् अशब्दं शब्दगुणहीनम् अस्पर्शं स्पर्शगुणरहितम् । एवमरूपमित्यादिविशेषणत्रयमपि व्याख्येम् । अशब्दादिमत्त्वादव्ययम् अपक्षयरहितमित्यर्थः । अयमत्र प्रयोगः—ब्रह्माव्ययम् अशब्दादिमत्त्वात्, यन्नैवं तन्नैवं यथा पृथिव्यादि । अव्ययत्वादेव नित्यं नाशरहितम् । नित्यत्वे हेत्वन्तरमाह अनाद्यनन्तं न विद्यते आदिः कारणं यस्य सोऽनादिः न विद्यतेऽन्तःकार्यं यस्य सोऽनन्तः अनादिश्चासावनन्तश्चानाद्यनन्तस्तमनाद्यनन्तम् कारणकार्यरहितमित्यर्थः । महतः बुद्ध्याख्यान्महत्तत्वात्परं विलक्षणध्रुवम् अक्रियम् । एवम्भूतं ब्रह्मात्मानं निचाय्येत्यर्थः ॥ १५ ॥

उक्तज्ञानमेव श्रुतिः स्तौति—

नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् ।
उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥१६॥

नाचिकेतं नचिकेतसा लब्धं मृत्युप्रोक्तं मृत्युना यमेनोपदिष्टम् इदमुपाख्यानं वल्लीत्रयात्मकं गुरुशिष्यसंवादरूपं सनातनं चिरकालीनम् उक्त्वा ब्राह्मणादित्रिवर्णेभ्यः श्रावयित्वा च पुनः श्रुत्वा आचार्य्येभ्यः श्रवणं कृत्वा मेधावी विवेकी पुरुषः ब्रह्मलोके महीयते हिरण्यगर्भवत्पूज्यो भवति । अस्योपाख्यानस्य श्रवणकीर्त्तनाभ्यामप्यचिरादिमार्गेण ब्रह्मलोकस्य प्राप्तिर्भवतीति भावः ॥ १६ ॥

प्रथमाध्यायमुपसंहरति—

य इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि ।
प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते ॥१७॥

इति तृतीया वल्ली ॥३॥

यः कश्चित्पुरुषः प्रयतः शुचिर्भूत्वा इमं ग्रन्थं परमम् उत्कृष्टं गुह्यं गोपनीयं ब्रह्मसंसदि ब्राह्मणसभायां श्रावयेत् पाठतोऽर्थतश्च श्रवणं कारयेत् वा अथवा श्राद्धकाले श्राद्धान्नं भुञ्जानान्ब्राह्मणान् श्रावयेत् । तस्य पुरुषस्य तत् श्राद्धं आनन्त्याय कल्पते अनन्तफलयोगो भवति । द्विरुक्तिरध्यायसमाप्त्यर्था ॥१७॥

इति काठकोपनिषट्टीकायामुपनिषन्मणिप्रभायां प्रथमाध्याये
तृतीया वल्ली समाप्ता ॥ ३ ॥

—:०:—

अथ चतुर्थवल्ली ।

एवं पूर्वाध्याये संक्षेपेणोक्तस्य ब्रह्मणो रूपं विस्तरेण वक्तुमयमध्याय आरभ्यते । तत्र गूढोऽऽत्मा न प्रकाशते इत्यनेनोक्तादनाद्यविद्यारूपादात्मनोऽभानकारणादन्यदागन्तुकं विद्यायाः प्रतिबन्धकं परिहाराय वक्तव्यमितीन्द्रियाणां पराक्प्रवणत्वमात्मदर्शनप्रतिबन्धकमाह—

पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति
नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तच-
क्षुरमृतत्वमिच्छन् ॥ १ ॥

स्वयम्भूः परमेश्वरः खानि खोपलक्षितानि श्रोत्रादीन्द्रियाणि पराञ्चि बाह्य

शब्दादिविषयप्रकाशनसमर्थानि व्यतृणत् हिंसितवान् । बहिर्मुख तया निर्याणमेवेन्द्रियाणामहितकरत्वाद्धननमिव भवतीति भाव: तस्मात् इन्द्रियाणां बहिर्गामित्वात् सर्वोऽपि जनस्तैरिन्द्रियै: पराङ् पश्यति बाह्यान् शब्दादिविषयान् जानाति नान्तरात्मन् अन्तर्यामिणं प्रत्यगात्मानं न जानाति । एवं लोकस्य बाह्यविषयोपलब्धृत्वस्वभावत्वे सत्यपि कश्चिद्धीर: कोऽपि विवेकी आवृत्तचक्षु: विषयेभ्य:[1] आवृतं व्यावृतं चक्षु:श्रोत्रादीन्द्रियगणो येन स: अमृतत्वं मोक्षम् इच्छन् मोक्षप्राप्तिकामनया प्रत्यगात्मानं प्रत्यक्चैतन्यभूतमात्मानम् ऐक्षत् छन्दसि कालस्यानियमात् साक्षात्करोतीत्यर्थ: ॥ १ ॥

एवमुक्तानात्मदर्शिन: संसारानर्थप्राप्तिरात्मदर्शिनस्तन्निवृत्तिश्च भवतीत्याह—

पराच: कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य
पाशम् । अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह
न प्रार्थयन्ते ॥ २ ॥

ये बाला अल्पप्रज्ञा: पराच: बाह्यान् कामान् दृष्टादृष्टशब्दादिविषयान् अनुयन्ति पूर्वोवर्तेन्द्रियैर्भजन्ते ते विषयभाज: पुरुषा: विततस्य व्याध्यादिनानारूपेण प्रसृतस्य मृत्यो: सर्वमारकस्य यमस्य पाशं निरन्तरजन्ममरणलक्षणमनर्थव्रातं यन्ति प्राप्नुवन्ति । यत एवमविवेकिनो दशा भवति अथ तस्मात् धीरा: विवेकिन: ध्रुवं निरतिशयं नित्यम् अमृतत्वं स्वरूपावस्थानलक्षणं विदित्वा विज्ञाय इह संसारे अध्रुवेषु ब्रह्मलोकान्तानित्यफलेषु मध्ये किमप्यनित्यफलं न प्रार्थयन्ते नेच्छन्ति । तेषामात्मज्ञानप्रतिबन्धकत्वादित्यर्थ: ॥ २ ॥

अमृतत्वं विदित्वेत्यनेनोक्तस्यात्मवेदनस्य परोक्षत्वशङ्कानिवृत्त्यर्थं कार्यकरणसंघाद्विविक्तस्यात्मनश्चैतन्यस्वरूपमाह—

येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् ।
एतेनैव विजानाति किमत्र परिशिष्यते । एतद्वै तत् ॥ ३ ॥

रूपं नीलपीतादिलक्षणम् । रसं मधुरादिकं गन्धं सुरभ्यसुरभिलक्षणं शब्दान् वर्णात्मकध्वन्यात्मकान् स्पर्शान् शीतोष्णादिरूपान् मैथुनान् स्त्रीसंसर्गजन्यसुखविशेषान् येन अपरोक्षसाक्षिभूतेनात्मना विजानाति यत्तादात्म्यापन्न: सर्वोऽपि जनोऽनुभवति एतद्वै तत् । तत् धर्माधर्माद्यतीतत्वोपलक्षितं त्वया पृष्टमात्मतत्त्वम् एतत् वै साक्षिचैतन्यमेवेत्य

१. निरुद्धवृत्तिकेन्द्रियगण इति यावत् ।

न्वयः। ननु इन्द्रियादिना रूपादीन् जानाति लोकः न तु साक्षिभूते-नात्मनेत्याशंक्येन्द्रियादीनां जडत्वेन रूपाधिप्रकाशकत्वभावान्मैवमित्याह—एतेनेति। एतेनेव देहादिव्यतिरिक्तात्मनैव विजानातीति। आत्मनोऽविज्ञेयाभावात्सर्वज्ञत्वमाह—किमिति। अत्र लोके आत्मनाऽविज्ञेयं किं परिशिष्यतेऽवशिष्टं भवति न किमपीत्यर्थः॥ ३॥

अतिसूक्ष्मत्वाद्दुर्विज्ञेयात्मतत्त्वं मत्वा पुनरपि तमेवार्थं प्रकारान्तरेणाह—

स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥ ४॥

स्वप्नान्तम् अन्तं मध्यं स्वप्नकालिकवस्तुजातं जागरितान्तं जागरितकालिकवस्तुजातं च उभौ उक्तार्थौ स्वप्नान्तजागरितान्तौ येन साक्षिचैतन्येनानुपश्यति जानाति लोकः। तं महान्तं व्यापकं विभुं विविधरूपेण भवनशीलं सर्वकल्पनाऽधिष्ठानभूतम् आत्मानं प्रत्यक्चैतन्यरूपम् मत्वा आत्मत्वेन साक्षात्कृत्य धीरः आत्मवेत्ता न शोचति कर्तृत्वादिरूपं शोकं न करोतीत्यर्थः॥ ४॥

जवेशीभेदं निराकुर्वन् पुनरपि तमेवार्थमाह—

य इमं मध्वदं वेद आत्मानं जीवमन्तिकात्।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते। एतद्वै तत्॥ ५॥

यः अधिकारी पुरुषः इमं सर्वस्य द्रष्टारम् आत्मानं प्रत्यक्चैतन्यं वेद साक्षात्करोति स पुरुषः ततः आत्मज्ञानादूर्ध्वम्। न विजुगुप्सते भयहेतुद्वैतज्ञानाभावात् आत्मानं रक्षितुं नेच्छतीति सम्बन्धः उक्तात्मानं विशिनष्टि—मध्वदं कर्मफलभोक्तारं जीवं प्राणादिकलापस्य धारकम् अन्तिकात् अन्तिकं समीपस्थम्। भूतभव्यस्य भूतादिकालत्रयोपलक्षितस्य सर्वप्रपञ्चस्य ईशानं नियन्तारं तत् नचिकेतसा पृष्टमात्मतत्त्वम् एतद्वै उक्तप्रत्यक्चैतन्यरूपमेवेत्यर्थः॥ ५॥

हिरण्यगर्भोऽपि यस्य रूपं तत्सर्वान्तरं ब्रह्मेत्याह—

यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत।
गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत। एतद्वै तत्॥ ६॥

यो हिरण्यगर्भः अद्भ्यः अप्सहितेभ्यो ब्रह्माण्डारम्भकस्थूलभूतेभ्यः पूर्वं प्रथमम् अजायत उत्पन्नः। तं यः कश्चित् मुमुक्षुः व्यपश्यत पश्यति स ब्रह्मैव पश्यति। कार्य्यकारणयोरभेदात्। तत् नचिकेतसा

पृष्टमात्मतत्त्वमपि एतद्वै एतन्मन्त्रोक्तस्वरूपमेवेत्यन्वयः कीदृशं तम् ? पूर्वं कार्य्योत्पतेः प्राक् तपसः ज्ञानरूपाद्ब्रह्मणो जातम् उत्पन्नम् । पुनः कीदृशं गुहा सर्वप्राणिनां हृदयाकाशं प्रविश्य प्रवेशं कृत्वा भूतेभिः कार्यकारणसंघाताकारैर्भूतैः सह तिष्ठन्तं स्थितम् ॥ ६ ॥

उक्तमेवार्थं विशदयति—

या प्राणेन सम्भवत्यदितिर्देवतामयी । गुहां प्रवि-

श्य तिष्ठन्तीं या भूतेभिर्व्यजायत । एतद्वै तत् ॥ ७ ॥

या अदितिः शब्दादिविषयाणामदनकर्त्री प्राणेन प्राणघटितसूक्ष्मशरीरोपाधिकेन हिरण्यगर्भरूपेण सम्भवति परस्माद्ब्रह्मणो जायते देवतामयी सर्वदेवतात्मिका। तां गुहां प्रविश्य तिष्ठन्तीं सर्वेषां हृदयाकाशं प्रविश्य स्थिताम् । यः कश्चित्पश्यति स ब्रह्मैव पश्यति तत् नचिकेतसा पृष्टमात्मतत्त्वमपि एतद्वै एतन्मन्त्रोक्तस्वरूपमेव । कीदृशी सा अदितिः ? या अदितिः भूतेभिः भूतैः सर्वप्राणिभिः सह तादात्म्यमापन्ना सती व्यजायत जातेत्यर्थः ॥ ७ ॥

विराडात्मकाऽग्निरपि ब्रह्मेत्याह—

अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो

गर्भिणीभिः । दिवेदिवे ईड्यो जागृवद्भि-

र्हविष्मद्भिर्मनुष्येभिरग्निः । एतद्वै तत् ॥ ८ ॥

यो जातवेदाः अग्निः अरण्योरुत्तराधरमथनकाष्ठयोर्निहितः स्थितः सोऽग्निरपि तत् प्रकृतम् एतद्वै ब्रह्मस्वरूपमेवेति सम्बन्धः। कीदृशोऽग्निरित्याकांक्षायां सदृष्टान्तं तं विशिनष्टि—गर्भ इति । गर्भिणीभिः स्त्रीभिः यथा पथ्यान्नाशनादिना गर्भः सुभृतः सुष्ठु धृतो भवति इव । तथा जागृवद्भिर्निद्रावर्जितैर्योगिभिः सुभृतः ध्यानभावनयान्तर्धृतः । तथा हविष्मद्भिराज्यादिमद्भिर्याज्ञिकैः मनुष्येभिः मनुष्यैरध्वरे सुभृतः सुष्ठु धृतः । पुनः कीदृशोऽग्निः दिवे दिवे दिने दिने स्वर्गमोक्षाकांक्षिभिर्योगिभिर्याज्ञिकैश्च ईड्यः स्तुत्यः ॥ ८ ॥

एवं हिरण्यगर्भावयवभूतमग्निमुक्त्वाऽन्यदेवतानामपि हिरण्यगर्भावयवत्वमाह—

यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति ।

तं देवाः सर्वेऽर्पितास्तदु नात्येति कश्चन । एतद्वै तत् ॥ ९ ॥

यतो यस्मात्प्राणाख्यादधिदैववाय्वात्मकात् सूर्य उदेति ब्रह्मणोऽह्न्यहनि उत्तिष्ठिति । यत्र यस्मिन्प्राणे अस्तं तिरोभावं गच्छति

प्राप्नोति 'प्राणाद्वा एष उदेति प्राणेऽस्तमेतीति' श्रुत्यन्तरात्। तं तत्र प्राणे सर्वे देवाः अधिदेवमग्न्यादय अध्यात्मं वागादयश्च अर्पिताः रथचक्रनाभावरा इव स्थिताः। कश्चन कोऽपि देवः तदुक्तमेव प्राणं नात्येति तदात्मकतामतिक्रम्य तदन्यत्वं न गच्छतीत्यर्थः। एतद्वै तत् तत् नचिकेतसा पृष्टं वस्तु एतद्वै उक्तस्वरूपमेव ॥ ९ ॥

ननु सर्वात्मकं ब्रह्मेति यदुक्तं तदयुक्तम्। उपाध्यवच्छिन्नचैतन्यस्य संसारित्वाद्ब्रह्मणश्चासंसारित्वाद्विरुद्धधर्माक्रान्तयोरैक्यायोगादित्याशंक्य विरुद्धधर्मत्वस्यौपाधिकत्वाद्वास्तवैकत्वे न कश्चिदनुपपत्तिरित्याह—

यदेवेह तदमुत्र यदमुत्र तदन्विह।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥

यदेव यच्चिद्वस्त्वेव इह जीवोपाधौ सर्वबुद्धिसाक्षितया वर्तते तत् उक्तचैतन्यमेव अमुत्र अज्ञानरूपेशोपाधौ वर्त्तते। यत् चैतन्यम् अमुत्र अज्ञानरूपेशोपाधौ वर्त्तते तत् चैतन्यम् इह जीवोपाधौ अनुप्रविष्टम्। व्यतिहारोक्तिस्तु अभेददार्ढ्याय बोध्या। यः पुरुषः इह वस्तुतो भेदशून्ये ब्रह्मणि नानेव अहं ब्रह्मणोऽन्यो मत्तोऽन्यद्ब्रह्मेति भिन्नत्वमिव पश्यति विजानाति सः पुरुषः मृत्योः मृत्युं मरणान्मरणं पुनः पुनः जन्ममरणम् आप्नोति गच्छतीत्यर्थः। इव शब्देनौपाधिकभेदस्य मिथ्यात्वेन चिदैक्याविरोधित्वं सूचितम् ॥ १० ॥

तत्प्राप्तिसाधनमाह—

मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन। मृत्योः
स मृत्युं गच्छति य इह नानेव पश्यति ॥ ११ ॥

मनसा शास्त्राचार्य्यसंस्कृतेनैकाग्रेण इदं ब्रह्म आप्तव्यं वेदितव्यम् इह प्राप्ते ब्रह्मणि किञ्चन अल्पमपि नाना नानात्वं भेदो नास्ति न विद्यते यः कश्चिदतिमूढः इह ब्रह्मणि नानेव भेदमेव पश्यन्ति। सः पुरुषः मृत्योर्मृत्युं मरणात्पुनर्मरणं जन्ममरणधारां गच्छति प्राप्नोति ॥ ११ ॥

पुनरपि जीवैक्यमेव द्रढयति—

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो
भूतभव्यस्य न ततो विजुगुप्सते। एतद्वै तत् ॥ १२ ॥

अंगुष्ठमात्रः अंगुष्ठपरिमाणं मनुष्यहृदयच्छिद्रं तदन्तर्वर्त्यन्तःकरणोपाधिकः अंगुष्ठपरिमाणः पुरुषः सर्वत्र पूर्णोऽयमात्मा मध्ये

आत्मनि शरीरमध्ये तिष्ठति सर्वसाक्षितया वर्त्तते। भूतभव्यस्य भूतादिकालत्रयोपलक्षितसर्वविश्वस्य ईशानः नियामकः। तमुक्त-मात्मानं विदित्वा ततः आत्मज्ञानादूर्ध्वं न विजुगुप्सते आत्मानं रक्षितुं नेच्छतीति योजना। तत् नचिकेतसा पृष्टमात्मतत्त्वम् एतद्वै उक्त-स्वरूपमेव ॥ १० ॥

जीवानित्यत्वशङ्कां निराकरोति—

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो
भूतभव्यस्य स एवाद्य स उ श्वः। एतद्वै तत् ॥ १३ ॥

अंगुष्ठमात्रः अङ्गुष्ठपरिमाणः पुरुषः पूर्णः अधूमकः अधूमक-ज्योतिरिव धूमरहिताग्निवद्देदीप्यमानः भूतभव्यस्येशानः भूतादिकाल-त्रयोपलक्षितनिखिलस्य नियामकः स एवात्मा अद्य वर्तमानकाले प्राणिषु वर्त्तते स उ स एवात्मा श्वः आगामिकालेऽपि वर्तते। श्व इति पदं भूतकालस्याप्युपलक्षणम्। तथा च भूतकालेऽपि स एव वर्तत इत्यर्थः। एतद्वै तत् तत् नचिकेतसा पृष्टमात्मतत्त्वम् एतद्वै उक्तब्रह्म-स्वरूपमेव ॥ १३ ॥

आत्मभेददर्शिनां संसारप्राप्तिरात्मैक्यदर्शिनां मोक्षश्च भवतीत्युक्त-मर्थमुपसंहरति द्वाभ्याम्—

यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति। एवं
धर्मान् पृथक् पश्यंस्तानेवानु विधावति ॥ १४ ॥

दुर्गे पर्वतशिखरप्रदेशे वृष्टं मेघान्निपतितम् उदकं जलं यथा पर्वतेषु पर्वतान्तरवर्तिनिम्नप्रदेशेषु विधावति विकीर्णं सद्विशीर्यते। एवं तद्वत् धर्मान् शरीरादिधारकान् आत्मरूपान् पृथक् शरीराद्युपाधिभेदेन भिन्नान् पश्यन् जानन् सन् तानेव आत्मन उपाधिभूतान् शरीरानेव अनुविधावति प्राप्नोतीत्यर्थः ॥ १४ ॥

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति।
एवं मुनेर्विजानत आत्मा भवति गौतमेति ॥ १५ ॥

इति द्वितीयेऽध्याये चतुर्थवल्ली समाप्ता।

यथा उदकं स्वच्छं जलं शुद्धे स्वच्छे जले आसिक्तं मेघात् पतितं तादृगेव भवति शुद्धजलाभिन्नमेव भवति न तु दुर्गे पतितजलवन्नाना-ऽवस्थाप्राप्तिद्वारा विनश्यति। एवं तद्वन्मुनेः मननशीलस्य विजानतः

आत्माऽभेदज्ञानवतः विशुद्धे मनसि स्थित आत्मा स्वस्वरूपं भवति तत्पदार्थाभिन्नो भवतीत्यर्थः। गौतम हे नचिकेतः! इति शब्दो वल्लीसमाप्त्यर्थः ॥ १५ ॥

इति श्रीकाठकोपनिषद्व्याख्यायामुपनिषन्मणिप्रभायां द्वितीयाध्याये चतुर्थवल्ली समाप्ता ॥ ४ ॥

—:०:—

## अथ पञ्चमी वल्ली

एवमुक्तस्य ब्रह्मणोऽतिसूक्ष्मत्वेन दुर्विज्ञेयत्वात्पुनरपि प्रकारान्तरेण तन्निर्धारयितुमियं वल्ली प्रारभ्यते। तत्र त्वंपदार्थाभेदेन प्रकृतं ब्रह्मप्रतिपिपादयिषुर्यमो देहादिसंघातादात्मतत्त्वं तावद्विविनक्ति—

ओं पुरमेकादशद्वारमजस्यावक्त्रचेतसः। अनुष्ठाय न
शोचति [1]विमुक्तश्च विमुच्यते। एतद्वै तत् ॥ १ ॥

अजस्य जन्मादिषड्विकाररहितस्य अवक्रचेतसः अवक्रम् अकुटिलं सूर्यप्रकाशवत्सर्वविषयकं चेतो मायावृत्त्यात्मकं ज्ञानं यस्य स तथा। तस्य ब्रह्मणः पुरं गृहतुल्यमिदं शरीरं तं गृहस्वामिनमात्मानम् अनुष्ठाय अभेदेन ज्ञात्वा विद्वान् न शोचति शोकहेतुदुःखजनकदृश्यस्य वास्तवसम्बन्धाभावाच्छोकं न करोति। विमुक्तश्च नित्यमुक्तरूपोऽपि विमुच्यते अद्वितीयात्मज्ञानात्कल्पिताज्ञानरूपबन्धरहितो भवतीत्यर्थः। ननु पुरस्य दारादिमत्त्वाच्छरीरं पुरमिति कथमुच्यते इत्याशंक्याह— एकादशद्वारमिति। द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके एकं मुखं ब्रह्मरन्ध्रं नाभ्या सह त्रीणि अर्वांचि इत्येकादश द्वाराणि यस्य तदेकादशद्वारमित्यर्थः। तत् नचिकेतसा पृष्टम् एतद्वै पुरस्वामित्वेनोक्तमेव ॥ १ ॥

ननु पुरमित्येकवचनादेकशरीरस्थत्वेनात्मनः परिच्छिन्नत्वापत्तिरित्याशंक्य सर्वशरीरस्थत्वेन सर्वव्यापकत्वमाह—

हँसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथि-
र्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा
ऋतजा अद्रिजा ऋतं बृहत् ॥ २ ॥

हंसः सूर्य्यरूपः सन्नात्मा शुचिषत् शुचौ दिवि सीदति गच्छतीति शुचिषत्

[1] पदयोः पौनरुक्त्यं परिहरति विमुक्तश्च इहैवाविद्याकृतं काम्यकर्मबन्धनैर्विमुक्तो भवति विमुच्यते पुनः शरीरं न गृह्णातीत्यर्थः।

वसुः वायुरूपेण सर्ववासयिता सन् अन्तरिक्षे आकाशे सीदति गच्छतीत्य-न्तरिक्षसत् होता अग्निरूपः सन् पृथिव्यात्मकवेद्यां सीदतीति वेदिषत्। अतिथिः सोमरूपः सन् दुरोणसत् दुरोणे सोमरसाधारकलशे स्थितः दुरोणसत्। यद्वाऽतिथिर्ब्राह्मणः सन् दुरोणेषु यज्ञगृहेषु सीदति गच्छतीति दुरोणसत्। नृषु मनुष्येषु सीदति तिष्ठतीति नृषत्। वरेषु देवेषु सीदति तिष्ठतीति वरसत् ऋते सत्ये यज्ञे वा सीदति तिष्ठतीति ऋतसत् व्योम्नि आकाशे सीदति गच्छतीति व्योमसत्। अब्जाः यादोरूपेणाप्सु उत्पन्नाः गोजाः गवि भूमौ उद्भिज्जरूपेण जातः। ऋतजाः ऋतात् फलारम्भोन्मुखात्कर्मणः देहादिरूपेण जातः। अद्रिजाः पर्वतेभ्यो नद्यादिरूपेण जातः। एवं सर्वात्मकमात्मतत्त्वं ऋतं बाधरहितं बृहत् सर्वव्यापकं ब्रह्मेत्यर्थः ॥२॥

उक्तस्यैवात्मनः स्वरूपाधिगमे लिङ्गमाह—

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ३ ॥

य आत्मा प्राणं प्राणाख्यं वायुम् ऊर्ध्वं हृदयादुपरिदेशे उन्नयति प्रापयति अपानम् अपानाख्यवायुं प्रत्यक् हृदयादधो देशे अस्यति प्रक्षिपति। तं मध्ये शरीरान्तर्वर्तिहृदयाकाशे आसीनं स्थितं वामनं परिच्छिन्नपरिमाणवत्वेन भासमानम्। यद्वा वामनं प्रशस्तफलप्रापकम्। यद्वा वामनं सम्भजनीयमात्मानं विश्वे सर्वे देवाः चक्षुरादीन्द्रियाणि उपासते स्वस्वव्यापाररूपबलीसमर्पणेन सेवन्त इत्यर्थः। एतेन प्राणकरणव्यापारा यदर्थाः, प्राणकरणग्रामश्च यदधीनः स आत्मा प्राणादिभ्योऽन्य इति सिद्धम् ॥ ३ ॥

आत्मनो देहादिस्थितिप्रयोजकत्वेन देहादिव्यतिरिक्तत्वं दर्शयति—

अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः।
देहाद्विमुच्यमानस्य किमत्र परिशिष्यते। एतद्वै तत् ॥ ४ ॥

अस्य पूर्वोक्तस्य शरीरस्थस्य शरीरे वर्तमानस्य विस्रंसमानस्य भ्रंशमानस्य एतद्विवृणोति देहाद्विमुच्यमानस्य शरीराद्वहिर्निर्गतस्य देहिनो देहवतः आत्मनः अत्र अस्मिन्देहे किं परिशिष्यते एतद्देहस्थितिकारणं किमवशिष्टं भवति। न किंचिदपि देहान्निर्गते आत्मनि देहस्य काष्ठवद्दाहयोग्यत्वदर्शनाद्देहादन्यो देहादिस्थितिहेतुरात्मेति सिद्धः। एतद्वै तत्। तत् नचिकेतसा पृष्टमात्मतत्त्वं एतद्वै उक्तब्रह्मस्वरूपमेव ॥ ४ ॥

ननु देहादिस्थितिप्रयोजकत्वस्यान्वयव्यतिरेकाभ्यां प्राणादौ प्रसिद्धत्वान्नैतावता प्राणादिव्यतिरिक्तात्मनः सिद्धिरित्याशंक्याचेतनस्य प्राणादेः स्वार्थत्वस्वातन्त्र्ययोरसम्भवेन स्वस्थितावप्यशक्तस्य प्राणादेः सुतरां स्वभिन्नदेहाभिन्नदेहादिस्थितिकारणत्वासम्भवान्नैवमित्याह—

न प्राणेन नापानेन मर्त्यो जीवति कश्चन।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ॥ ५॥

कश्चन कोऽपि मर्त्यो मरणधर्मा देहचक्षुरादिप्राणेन प्राणाख्यवायुना न जीवति स्थितिं न लभते। अपानेन अपानवायुना न जीवति प्राणापानग्रहणं समानादेरुपलक्षणार्थम्। इतरेणैव प्राणादिविलक्षणेन चैतन्येन तु जीवन्ति प्राणादिसर्वेन्द्रियाणि स्थितिं लभन्ते यस्मिन् स्वकारणभूते आत्मनि एतौ प्राणापानौ उभौ उपाश्रितौ प्रतितिष्ठन्तौ भवतः कल्पितस्य प्राणादिजडवर्गस्य चेतनाश्रितत्वनियमादिति भावः। एतेन नायमस्तीति मतं निरस्तम्॥ ५॥

एवं देहादिसङ्घातादन्यत्वेनोक्तमप्यात्मानं प्रकारान्तरेण वक्तुकामः प्रतिजानीते—

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्।
यथा च मरणं प्राप्य आत्मा भवति गौतम॥ ६॥

हन्त इदानीं पुनरपि ते तुभ्यं नचिकेतसे इदम् उक्तलक्षणं ब्रह्म गुह्यं गोप्यं सनातनं पुराणं प्रवक्ष्यामि कथयिष्यामि येयं प्रेते इति पृष्टः परलोकसम्बन्ध्यात्मास्तित्वेऽपि यः सन्देह आसीत् तन्निराकर्तुं पुनः प्रतिजानीते—यथेति। हे गौतम–नचिकेत आत्मा देही मरणं प्राप्य यथा भवति यथा संसरति तच्च शृणु॥ ६॥

प्रतिज्ञातं परलोकसम्बन्ध्यात्मास्तित्वं तावदाह—

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्॥ ७॥

अन्ये केचिदज्ञाः देहिनो देहवन्तो जन्तवः मरणं प्राप्य शरीरत्वाय शरीरग्रहणार्थं योनिं प्रपद्यन्ते शुक्ररूपेण स्त्रीयोनिं प्रविशन्तीत्यर्थः। अन्ये अत्यन्तपापिष्ठा तु स्थाणुं वृक्षादिस्थावरभावम् अनुसंयन्ति मरणानन्तरं गच्छन्ति यथाकर्म इह जन्मनि यादृशं कर्म कृतं यथाश्रुतं यादृशं विहितं प्रतिषिद्धं वा ज्ञानं सम्पादितं

तदनुरूपमेव शरीरं प्राप्नुवन्तीत्यर्थः ॥ ७ ॥

प्रतिज्ञातं गुह्यं ब्रह्मेदानीमाह—

य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ॥ ८ ॥

य एषः स्वप्रकाशचिद्रूपः पुरुषः सुप्तेषु इन्द्रियेषु उपरतेषु सत्सु जागर्ति निद्रारहितो भवति । किं कुर्वन्, कामं कामं काम्यमानपशुपुत्रादिरूपं निर्मिमाणः रचयन् सन् तदेव स्वप्नद्रष्टतया वर्णितं पुरुषस्वरूपमेव शुक्रं सर्वोपाधिविनिर्मुक्तत्वेन शुद्धं तत् उक्तपुरुषस्य ब्रह्मस्वरूपमेव ब्रह्म व्यापकं तदेव उक्तात्मतत्त्वमेव अमृतं मोक्षस्वरूपं चोच्यते श्रुतिभिरित्यर्थः ॥ ८ ॥

उक्तपुरुषस्य ब्रह्मस्वरूपत्वे हेतुतया सर्वाधारत्वमाह—

तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ।
एतद्वै तत् ॥ ९ ॥

तस्मिन्ब्रह्मणि सर्वे लोकाः पृथिव्यादयो जनाश्च श्रिताः स्थिताः । कश्चन कोऽपि पदार्थः तत् ब्रह्मस्वरूपं नात्येति, तदात्मकतामतिक्रम्य तदन्यत्वं न गच्छति । उ एव । एतद्वै तत्, हे नचिकेतः तत् त्वया पृष्टं ब्रह्मस्वरूपं एतद्वै वर्णितस्वरूपमेव ॥ ९ ॥

हंसः शुचिषदिति मन्त्रेण सर्वपुरेष्वेक एवात्मेत्युक्तम्, तद्दार्ढ्याय दृष्टान्तद्वयमाह—

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥१०॥

यथा एक एवाग्निः भुवनं भवतीति भुवनं काष्ठनिचयः । तं प्रविष्टः प्राप्तः सन् रूपं रूपं नानाविधकाष्ठं प्रति प्रतिरूपः स्वोपाधिभूतकाष्ठसमानाकारः बभूव भवति । वस्तुतस्तु तेजोरूपेण स्वोपाधिभूतकाष्ठेभ्यो विलक्षणः, तथा अग्निवत् सर्वभूतान्तरात्मा सर्वप्राणिषु स्थित आत्मा एक एव रूपं रूपं प्रतिशरीरं प्रतिरूपः तत्तच्छरीरसमानाकारः बभूवेति पूर्वेणान्वयः । ननु देहाकारेण स्थितस्यात्मनोऽपि देहवन्नाशः स्यादित्यत आह—बहिश्चेति । स्वरूपेण तच्छरीराद्विलक्षण आकाशवन्निर्विकार एवेत्यर्थः ॥ १० ॥

वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।

एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च॥११॥

यथा एक एव वायुः समष्टिरूपः भुवनं लोकं व्यष्टिसूक्ष्मशरीरं प्रविष्टः प्राणरूपेण प्राप्तः सन् रूपं रूपं नानाविधशरीरं प्रति प्रतिरूपः तत्तच्छरीरतादात्म्येन तत्तच्छरीरसदृशनानारूपो बभूव भवति, एकस्तथेत्यादि पूर्ववत् ॥ ११ ॥

एवमग्निवाय्वोरिवात्मनः सर्वानुगतत्वात् सर्वतो बहिष्ठत्वाच्चैकत्वं वास्तवम् । भेदस्य तूपाधिमन्तरेणाप्रतीयमानत्वादौपाधिकत्वमित्युक्तम् ।

इदानीमेकस्य सर्वान्तःस्थस्यात्मनः संसारदुःखित्वप्रसक्तिमाशङ्क्याह—

सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।

एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥१२॥

यथा सर्वलोकस्य प्राणिमात्रस्य चक्षुः आलोकेन चक्षुषः उपकारित्वात् देवतारूपेण चक्षुषि स्थितत्वाद्वा चक्षुः सूर्यः । चाक्षुषः निषिद्धदर्शनद्वारा चक्षुर्जन्यपापात्मकैः बाह्यदोषैः अशुचिवस्तुसंसर्गजन्याशुचित्वादिभिश्च । न लिप्यते न सम्बद्ध्यते । यतो बाह्यस्तेजोरूपेण चक्षुषो बहिर्नभसि स्थितः, तथा एकः सजातीयादिभेदरहितः सर्वभूतान्तरात्मा सर्वप्राणिनामन्तः बुद्धौ स्थित आत्मा सर्वभूतानां तत्तदर्थप्रकाशनेनोपकुर्वन्नपि लोकदुःखेन देहधर्मेणाध्यात्मिकादिरूपेण आत्मनि कर्तृत्वभोक्तृत्वारोपनिमित्तेन जन्ममरणादिलक्षणेन च न लिप्यते यतो बाह्यः वस्तुतो देहद्वयसम्बन्धरहित इत्यर्थः ॥ १२ ॥

परोत्कर्षदर्शनेन पारतन्त्र्येण च दुःखमुत्पद्यते । आत्मनस्त्वेकत्वात् स्वातन्त्र्याच्च न दुःखप्रसक्तिरित्याह—

एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।

तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १३॥

एकः सजातीयादिभेदशून्यः वशी सर्वं जगद्वशे वर्तते यस्य स वशी बभूव, अन्तरात्मा सर्वप्राणिनां बुद्धौ स्थितः य आत्मा एकं रूपं भेदरहितं निरुपाधिचिद्रूपं बहुधा औपाधिकनानाप्रकारकं करोति,

तमात्मस्थं बुद्धौ स्थितं आत्मानं ये धीराः विवेकिनः अनुपश्यन्ति आचार्योपदेशानन्तरं साक्षादनुभवन्ति तेषां आत्मसाक्षात्कारवतां शाश्वतं नित्यं सुखं आत्मानन्दो भवति नेतरेषां अनात्मविदामुक्तसुखं न भवतीत्यर्थः ॥ १३ ॥

किञ्च यः—

नित्योऽनित्यानां चेतनश्चेतनानां एको बहूनां
यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति
धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ १४ ॥

आत्माऽनित्यानां विनाशिनां भावानामपि नित्योऽविनाशी । शक्तिशेष[1]लयाधार इति यावत् । चेतनश्चेतनानां चेतनानां बुद्धिमतामपि ब्रह्मेन्द्रादीनां परमात्मा चेतनः नियन्तेत्यर्थः । यद्वाऽकारप्रश्लेषाभावपक्षेऽयमर्थः । य आत्मा नित्यानां नित्यत्वेनाभिमतानां कालादीनामपि नित्यः स्वनित्यताप्रदानेन नित्यत्वप्रयोजकः, चेतनानां चेतनत्वेनाभिमतानां बुद्ध्यादीनां चेतनः स्वचेतनताप्रदानेन चेतनताप्रयोजक इत्यर्थः । यः सर्वेश्वरः एकः सहायशून्य एव बहूनां अनेकेषां प्राणिनां कामान् अभिलषितपदार्थान् विदधाति ददाति । तं आत्मानं आत्मस्थं बुद्धौ स्थितं ये धीराः विवेकिनः अनुपश्यन्ति गुरूपदेशानन्तरमात्मत्वेन विजानन्ति तेषां आत्मद्रष्टृणां शाश्वती नित्या स्वात्मभूता शान्तिः संसारदुःखनिवृत्तिर्भवति नेतरेषां अनात्मविदामुक्तशान्तिर्न भवतीत्यर्थः ॥ १४ ॥

एवमुक्तपरमात्मभूते सुखे विदुषामनुभवं प्रमाणयति—

तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।
कथं नु तद्विजानीयां किमु भाति विभाति वा ॥ १५ ॥

तत् पूर्वोक्तं परमं निरतिशयं सुखं आत्मानन्दभूतं अनिर्देश्यं वक्तुमशक्यमपि विद्वांसः एतदित्यपरोक्षत्वेन मन्यन्ते जानन्तीत्यर्थः । विद्वदनुभवसिद्धत्वादुक्तात्मसुखे असम्भावनां विहाय जिज्ञासुनैवं विचारणीयमित्याह—कथमिति । नु इति वितर्के । तत् परमसुखं कथं केन प्रकारेणाहं विजानीयां अपरोक्षतया स्वबुद्धिविषयं कुर्याम् । उ इति वितर्के । किं तत् सुखं भाति ममेदानीं परोक्षतयाऽवभासते किंवा विभाति विस्पष्टं भासते एवं चिन्तयतो विरक्तस्यावाङ्मनसगम्यं

१. शक्तिः कार्योत्पादने सामर्थ्यम्, तस्याः शेषो यस्मिन् लये स शक्तिशेषलयस्तस्याधारः सः ।

तत्सुखं प्रतिभातीति भावः ॥ १५ ॥

एवमुक्तस्य ब्रह्मात्मकसुखस्य पराधीनप्रकाशत्वं वारयन्नाह—

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो
भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति
सर्वं तस्य भासा सर्वमिदं विभाति ॥ १६ ॥
इति द्वितीयाध्याये पञ्चमी वल्ली समाप्ता ॥ ५ ॥

तत्र तस्मिन्स्वात्मभूते ब्रह्मणि सर्वावभासकोऽपि सूर्यो न भाति न तद्ब्रह्म प्रकाशयति । न चन्द्रतारकं चन्द्रश्च तारकाश्च तेषां समाहारः चन्द्रतारकं न भाति न प्रकाशति । इमाः सर्वजनप्रसिद्धाः विद्युतः तडितो न भान्ति न भासयन्ति । अयं अस्मद्दृष्टिविषयोऽग्निः कुतः कथं भायान्न भायादेव, न भासयेदेवेत्यर्थः । तमेवानन्दात्मानमेव भान्तं दीप्यमानं सन्तं सर्वं सूर्यादिकं अनुभाति तत्प्रकाशनान्तरं प्रकाशाश्रयो भवतीत्यर्थः । ननु गच्छतः पुरुषस्य स्वतन्त्रगतिवत्तेषामपि स्वतन्त्रः प्रकाशः किं न स्यादित्यत आह—तस्येति । तस्य स्वप्रकाशरूपस्य ब्रह्मणो भासा दीप्त्या सर्वमिदं उक्तं सूर्यादिकं सर्वं विभाति प्रकाशाश्रयो भवति, न स्वतन्त्रप्रकाशवानित्यर्थः ॥ १६ ॥

इति श्रीकाठकोपनिषट्टीकायामुपनिषन्मणिप्रभायां द्वितीयाध्याये पञ्चमी वल्ली समाप्ता ॥ ५ ॥

—: ० :—

## अथ षष्ठी वल्ली

एवमादित्यादेः प्रकाशकत्वेनोक्तमपि ब्रह्म दुर्विज्ञेयत्वात्प्रकारान्तरेण वक्तुमियं वल्ली आरभ्यते । तत्र संसारकारणत्वेन ब्रह्मस्वरूपावधारणाय कार्यवर्गं वृक्षरूपत्वेन तावदाह—

ॐ ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥ १ ॥

एषः प्रत्यक्षसिद्धो ब्रह्मादिस्थावरान्तः संसारः अश्वत्थः संसारवृक्षः सनातनः प्रवाहरूपेणानादिसिद्धः । ननु मूलशाखारहितस्य कथं वृक्षत्वमित्यत आह—ऊर्ध्वमूल इति । ऊर्ध्वं उत्कृष्टं ब्रह्मात्मकं मूलं कारणमस्य सः तथा अवाक्शाखः निकृष्टाः कार्योपाधयो हिरण्यगर्भादयो नानादिक्षु प्रसृतत्वाच्छाखा

इव शाखा अस्येत्यवाक्शाखः। एवम्भूतस्य संसारवृक्षस्य यन्मूलं तदेव शुक्रं शुद्धं तदेव ब्रह्म व्यापकं तदेवामृतं अविनाशिस्वरूपं उच्यते कथ्यते श्रुतिभिरित्यर्थः ॥ १ ॥

तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन। एतद्वैतत् ॥२॥

तस्मिन् संसारवृक्षस्य कारणभूते ब्रह्मणि सर्वे लोकाः पृथिव्यादयश्चतुर्दशभुवनानि चराचरात्मकजनाश्च श्रिताः स्थिताः। कश्चन कोऽपि पदार्थः तत् ब्रह्म नात्येति परित्यज्य न वर्तते। कल्पितस्याधिष्ठानातिरिक्तस्थित्यभावादित्यर्थः। एतद्वै तत्, हे नचिकेतः तत् त्वया पृष्ट धर्माद्यतीतं ब्रह्म एतद्वै उक्तस्वरूपमेव ॥ २ ॥

सर्वनियन्तृत्वात्मकं ब्रह्मलिङ्गमाह—

यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम्।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ ३ ॥

यदिदं किञ्च यत्किञ्चिदिदं प्रत्यक्षसिद्धं सर्वं जगत् निस्सृतं ब्रह्मण उत्पन्नं सद् यस्मिन्प्राणे जगद्धेतुभूते ब्रह्मणि सति एजति स्वव्यापारं कुरुते तद्ब्रह्म। महद्भयं बिभेत्यस्मादिति भयम्, महच्च तद्भयं चेति महद्भयम्, वज्रमुद्यतं उद्यतेन्द्रवज्रवत् भयहेतुभूतमित्यर्थः। ये पुरुषाः एतत् सर्वप्रवर्तकं ब्रह्म विदुः स्वात्मत्वेन जानन्ति ते विद्वांसः अमृता मुक्तस्वरूपा भवन्तीत्यर्थः ॥ ३ ॥

उक्तं सर्वभयहेतुत्वमेव कैमुतिकन्यायेनाह—

भयादस्याग्निस्तपति भयात्तपति सूर्यः।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ४ ॥

अस्य ईश्वरस्य भयात् भीत्या अग्निस्तपति दाहप्रकाशादिकं कुरुते। अस्येश्वरस्य भयात् भीत्या सूर्यस्तपति प्रकाशादिकं कुरुते। अस्येश्वरस्य भयात् भीत्या इन्द्रो वर्षति। अस्येश्वरस्य भयात् वायुर्धावति गच्छति पञ्चमः। एतद्वाक्योक्तानामग्न्यादीनां मध्ये पञ्चमो मृत्युर्यमः अस्येश्वरस्य भयात् भीत्या धावति पापिनां दण्डप्रदानात्मकं स्वव्यापारं कुरुते। एवं समर्थानामप्यग्न्यादीनां यस्मादीश्वराद्भयं भवति तस्मादन्येषां भयं भवतीति किमु वाच्यमिति भावः ॥ ४ ॥

तद्भयनिवृत्तयेऽस्मिन्नेव शरीरे तत्त्वज्ञानं सम्पादनीयमित्याह—

इह चेदशकद् बोद्धुं प्राक् शरीरस्य विस्रसः ॥
ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ५ ॥

चेत् यदि शरीरस्य देहस्य विस्रसः पातात् प्राक् पूर्वं इह

अस्मिन्मनुष्यदेहे उक्तं भयहेतु ब्रह्म बोद्धुमशकत् ज्ञानप्राप्तिसाधनसम्पन्नो भवेत्, तर्हि तद्ब्रह्म ज्ञात्वा संसारान्मुच्यते। नो चेत् तर्हि ततः ब्रह्माज्ञानात् सर्वेषु सृज्यन्ते प्राणिनो येषु तेषु लोकेषु पृथिव्यादिषु शरीरत्वाय शरीरभावाय कल्पते समर्थो भवति। पुनः पुनः शरीरं गृह्णातीत्यर्थः ॥ ५ ॥

नन्वस्मिन्मनुष्यशरीरे आत्मज्ञानाभावेऽपि पित्रादिलोके तद्भविष्ययेव। अतोऽलमत्र बह्वायासेनेत्याशङ्क्य ब्रह्मलोकातिरिक्तेषु पित्रादिलोकेष्वात्मज्ञानस्य दुर्लभत्वाद् ब्रह्मलोके त्वात्मज्ञानसंभवेऽप्युपासनं विना ब्रह्मलोकप्राप्त्यसम्भवादिहैव आत्मज्ञानाय यतितव्यमित्याह—

यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृलोके।
यथाप्सु परीव ददृशे तथा गन्धर्वलोके छायाऽऽतपयोरिव ब्रह्मलोके ॥ ६ ॥

यथाऽऽदर्शे शुद्धे दर्पणे स्पष्टं स्वप्रतिबिम्बं दृश्यते थाऽऽत्मनि साधनचतुष्टयसंपन्नायां मनुष्यबुद्धौ संघाताद्विविक्त आत्मा प्रतीयते। यथा स्वप्ने इन्द्रियाजन्यविषयगोचरापरोक्षान्त करणवृत्त्यवस्थारूपे स्वप्नकाले स्पष्टमात्मनः स्वरूपं न प्रतीयते तथा पितृलोके विषयसुखासक्तबुद्धौ स्पष्टमात्मदर्शनं न भवति। यथाऽप्सु चञ्चलजलेषु कम्पादिरहितं स्वावयवं परीव ददृशे न परिदृश्यते इव, तथा गन्धर्वलोके भोगैश्चञ्चले चेतसि न स्पष्टमात्मभानं भवति। एवं स्वर्गादिलोकेष्वपि बोध्यम्। अत्र सर्वत्र नकाराध्याहारो ज्ञेयः। छायाऽऽतपयोरिव यथा छायाऽऽतपयोः पृथक् पृथक् प्रतीतिर्भवति तथा ब्रह्मलोके हिरण्यगर्भस्य लोके उपाधितः पृथक् शुद्धचिदात्मस्वरूपं प्रतीयते इत्यर्थः ॥ ६ ॥

आत्मसाक्षात्कारे विवेकात्मकसाधनं ज्ञानफलं चाह—

इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत्।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ७ ॥

इन्द्रियाणां श्रोत्रादिकरणानां पृथगुत्पद्यमानानां स्वस्वकारणेभ्य आकाशादिभ्यः पृथक् पृथक् जायमानानां पृथग्भावं स्वस्वरूपाद्भिन्नत्वं तेषां परस्परं भेदं च यत् चैतन्यं जानाति उदयास्तमयौ उक्तेन्द्रियव्यापाराणां जाग्रति प्रादुर्भावं स्वापादौ तिरोभावं च यत् चैतन्यं जानाति तत्साक्षिचैतन्यं मत्वा साक्षात्कृत्य धीरो विद्वान् न शोचतीत्यर्थः ॥ ७ ॥

किञ्च—

इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम्।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ८ ॥

इन्द्रियेभ्यः श्रोत्रादिवागादिकरणेभ्यो मनः संकल्पविकल्परूपं परम् उत्कृष्टम्। अत्र भौतिकत्वाविशेषादर्थानामिन्द्रियेष्वन्तर्भावं मत्वाऽर्थाः पृथक् नोक्ताः। मनसः संकल्पादिरूपात् सत्त्वं व्यष्टिबुद्धिरूपं उत्तमम् उत्कृष्टम् सत्त्वाद् व्यष्टिबुद्धिरूपात् महानात्मा समष्टिबुद्धिः अधि परा। महतः समष्टिबुद्ध्याख्यात् अव्यक्तं अव्याकृतं उत्तमं उत्कृष्टम् ॥ ८ ॥

अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च।
यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ९ ॥

अव्यक्तात्तु पुरुष आत्मा पर उत्कृष्टः। तुशब्देन अव्यक्ताद्वैलक्षण्यं पुरुषे द्योत्यते। पुरुषपदार्थमह—व्यापक इति। सर्वत्र पूर्ण इत्यर्थः। ननु बुद्धिसुखदुःखादिः साश्रयो गुणत्वाद्रूपादिवदिति गुणाश्रयत्वेनानुमेय आत्मेत्याशंक्य बुद्ध्यादीनामन्तःकरणाश्रयत्वेन न तैरात्माऽनुमेय इत्याह— अलिङ्ग इति। लिङ्गेनानुमापकेन बुद्ध्यादिरूपेण वर्जित एवेत्यर्थः। यज्ज्ञात्वा यमात्मानं साक्षात्कृत्य जन्तुः पुरुषो मुच्यते जीवन्नेवाविद्याकामकर्मभिः परित्यज्यते। देहपातानन्तरममृतत्वं पुनर्देहासम्बन्धलक्षणं मोक्षं गच्छति प्राप्नोति ॥ ९ ॥

कथं तर्हि तस्यालिङ्गस्य दर्शनं स्यादित्यत आह—

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति
कश्चनैनम्। हृदा मनीषा मनसाभिक्लृप्तो
य एतद्विदुरमृतास्ते भवन्ति ॥ १० ॥

अस्य प्रत्यगात्मनः रूपं स्वरूपं संदृशे न तिष्ठति इन्द्रियजन्यज्ञानयोग्यतां न प्राप्नोति। अत एनं आत्मानं कश्चन कोऽपि पुरुषश्चक्षुषा न पश्यति न जानाति। चक्षुर्ग्रहणं सर्वेन्द्रियोपलक्षणार्थम्। तथा च न केनापीन्द्रियेणात्मानं विजानातीत्यर्थः। कथं तर्ह्यसावात्मा ज्ञातव्य इत्यत आह—हृदेति। हृदा हृत्स्थया हृद्येकाग्रतामापन्नया बुद्ध्या एष आत्मा ज्ञातुं शक्य इति शेषेणान्वयः। कीदृश्या बुद्ध्या? मनीषा मनसः सङ्कल्पादिरूपस्य वशीकर्त्र्या। कीदृश आत्मा? मनसाभिक्लृप्तः विचारेण प्रथमं सम्भावितः। एतेन प्रमाणप्रमेयासम्भावनाख्यदोषस्योक्तमनो-

बुद्धिप्रतिबन्धकस्य निवृत्तये श्रवणमननात्मको विचारः कर्तव्यः इत्युक्तम्। एतत् उक्तात्मतत्त्वं येऽधिकारिणो विदुर्विजानन्ति ते आत्मविदः अमृता मुक्तरूपा भवन्तीत्यर्थः ॥ १० ॥

एवं श्रवणमननाभ्यां प्रमाणप्रमेयासम्भावनानिरासेऽपि चित्तस्यानेकाग्रतालक्षणदोषस्य उक्तबुद्धिप्रतिबन्धकस्य निवृत्तये योगमाह—

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टते तमाहुः परमां गतिम् ॥ ११ ॥

यदा यस्मिन्काले पञ्च ज्ञानानि श्रोत्रादिपञ्चज्ञानेन्द्रियाणि मनसा सह मनोयुक्तानि अवतिष्ठन्ते निवृत्तव्यापाराणि भवन्ति, बुद्धिश्च व्यवसायलक्षणा यदा न विचेष्टते व्यापारवती न भवति, तां उक्तज्ञानेन्द्रियमनोबुद्धिनैश्चल्यरूपामवस्थां परमां उत्कृष्टां गतिम् आनन्दात्मनो भानस्य साधनभूताम्। आहुः उक्तवन्तो योगिन इत्यर्थः ॥ ११ ॥

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ १२ ॥

किञ्च तां उक्तलक्षणां स्थिरां लयविक्षेपकषायरसास्वादादिविघ्नैरकम्प्यां इन्द्रियधारणां ज्ञानेन्द्रियमनोबुद्धीनां धारणां योगमिति मन्यन्ते योगपदेन कथयन्ति योगिनः। किञ्च तदा योगारम्भकाले अप्रमत्तः चित्तसमाधानं प्रति यत्नवान् भवेत्। हि यस्मात् योगः उक्तेन्द्रियधारणालक्षणो योगः प्रभवाप्ययौ उत्पत्तिविनाशौ भजते इति शेषः। अतोऽपायपरिहाराय अप्रमादः कर्तव्य इति भावः ॥ १२ ॥

उक्तयोगं विना वागादीन्द्रियविषयत्वमात्मनो निराकरोति—

नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १३ ॥

अयमात्मा वाचा वागिन्द्रियेण प्राप्तुं न शक्यः इदंतया वक्तुं योग्यो न भवति। मनसा संकल्पादिरूपेणासंस्कृतेन मनसा प्राप्तुं न शक्यः ज्ञातुं योग्यो न भवति। चक्षुषा चक्षुरिन्द्रियेण प्राप्तुं न शक्यः द्रष्टुं योग्यो न भवतीत्यर्थः। ननु यद्वागादिकरणगोचरं तदस्ति, यद्वागादिकरणागोचरं तन्नास्तीति सर्वजनप्रसिद्धम्। तथा चात्मनो वागादिकरणागोचरत्वान्नास्ति आत्मेत्याशङ्क्य वागाद्यगोचरस्यापि

जगद्धेतोरात्मनोऽस्तित्वं तावदागमादिना प्रतिपत्तव्यमित्याह— अस्तीति । यदेवालौकिकं जगत्कारणभूतमात्मवस्तु तदस्ति सद्रूपमित्येवं ब्रुवत उक्तवत आस्तिकादन्यत्र नास्तिके तत् आत्मतत्त्वं कथं केन प्रकारेणोपलभ्यते ज्ञायते, न केनापीत्यर्थः ॥ १३ ॥

किञ्च यद्यप्ययमात्मा सत्त्वलक्षणधर्मशून्यत्वात् सत्पदेनाभिधातुं न शक्यः, तथापि तद्दर्शनक्रममाह—

अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।

अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १४ ॥

प्रथमं अस्तीत्येव जगत्कारणलक्षणसद्रूपेणैव अयमात्मा उपलब्धव्यो ज्ञातव्यः, पश्चात् तत्त्वभावेन च उपाधिविविक्तशुद्धरूपेण उपलब्धव्यः ज्ञातव्यः । उभयोः अस्तित्वतत्त्वभावत्वेनोक्तयोः सोपाधिकनिरुपाधिकयोर्मध्ये प्रथमं अस्तीत्येवोपलब्धस्य निखिलकार्यस्य कारणमस्तीत्येवमस्तित्वेन ज्ञातस्यात्मतत्त्वभावो विदिताविदिताभ्यामन्यत्वेन श्रुतौ निर्दिष्टः परमार्थसद्रूपः प्रसीदति पूर्वमस्तित्वेन विजानतः पुरुषस्य स्वस्वरूपप्रकाशनाय अभिमुखीभवति, अधिकारिपुरुषस्य बुद्धावभिव्यक्तो भवतीति यावत् ॥ १४ ॥

एवं परमार्थदर्शिनो निवृत्तकामस्य जन्ममरणाभावलक्षणं फलमाह—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।

अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १५ ॥

ये कामाः अस्य विदुषः तत्त्वज्ञानात्प्राक् हृदि बुद्धौ श्रिताः स्थिताः, ते सर्वे कामाः प्रारब्धकर्मोपस्थापितशरीरस्थितिनिमित्तान्नपानादीच्छातोऽतिरिक्ता विषयसुखेच्छारूपाः यदा यस्मिन्काले प्रमुच्यन्ते सर्वत्र स्वात्मदृष्ट्या विशीर्यन्ते । अथ तदा मर्त्यः तत्त्वज्ञानात्प्राङ्मरणधर्मो ज्ञानोत्तरकाले विद्याकामकर्मरूपमरणनिमित्ताभावात् अमृतः पुनः पुनः मरणरहितो मुक्तरूपो भवतीत्यर्थः । न तस्य प्राणा उत्क्रामन्तीति श्रुतेः । अत्रास्मिन् शरीरे एव ब्रह्म समश्नुते ब्रह्मैव भवतीत्यर्थः ॥ १५ ॥

ननु कामप्रविलयस्यामृतत्वज्ञापकस्य सुप्तपुरुषेऽपि सत्त्वात्तस्याप्यमृतत्वप्राप्तिः स्यादित्याशङ्क्य हृदयग्रन्थिप्रभेदं विना मूलतः कामनाशाभावान्नैवमित्याह—

यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।

अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १६ ॥

पूर्वमन्त्रस्थास्यपदस्य अत्रानुषङ्गः । तथा च यदा यस्मिन्काले विदुषो हृदयस्य ग्रन्थयः बुद्धिनिष्ठाः चतुर्विधकार्याविद्यालक्षणाः कामानां हेतुभूता ग्रन्थिवद्दृढबन्धनरूपाः इह जीवदवस्थायां प्रभिद्यन्ते मूलाज्ञानलक्षणकारणेन सह विनश्यन्ति । अथ तदा मर्त्यो उक्तलक्षणो जीवः अमृतो भवति, व्याख्यातपूर्वम् । एतावदेव ब्रह्मात्मैकत्वज्ञानेन हृदयग्रन्थिविनाशपूर्वकब्रह्मभावापत्तिपर्यन्तमेव अनुशासनं सर्ववेदान्तानां ब्रह्मोपदेशः, नेतोऽधिकमित्यर्थः ॥ १६ ॥

एवमुक्तपरब्रह्मविदोऽत्रैव अमृतत्वप्राप्तिमभिधाय येन तु पूर्वोक्तप्रकारेणोक्तं तत्त्वं न विज्ञातं तस्याग्निविद्यादिना ब्रह्मलोकादिप्राप्तिं तद्विपरीतानामज्ञानां संसारगतिं चाह—

शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति

विष्वगन्या उत्क्रमणे भवन्ति ॥ १७ ॥

शतं चैका एकाधिकशतसंख्याकाः हृदयस्य नाड्यः पुरुषस्य हृदयसम्बन्धिन्यः प्रधाननाड्यः सन्ति । यद्वा हृदयस्य पुरुषस्य हृदयान्निर्गतस्य । तासां एकोत्तरशतसंख्यानां नाडीनां मध्ये एका सुषुम्नाख्या नाडी मूर्द्धानं ब्रह्मरन्ध्रं भित्त्वाऽभिनिस्सृता सूर्यमण्डलद्वारा ब्रह्मलोकपर्यन्तं व्याप्ता । तया सुषुम्नाख्यनाड्या ब्रह्मलोकप्राप्तिद्वारा ऊर्ध्वं भूरादिसर्वलोकोपरि वर्तमानं ब्रह्मलोकं आयन् आदित्यमण्डलद्वारा गच्छन् सन्नुपासकः अमृतत्वं आभूतसंप्लवस्थानं ब्रह्मणोऽन्तकाले ब्रह्मणा सह मुख्यं मोक्षाख्यममृतत्वं वा एति प्राप्नोति । अन्या नाड्यः शतसंख्याकाः विष्वक् नानाविधगमनवत्यः नानाविधफलप्राप्तिहेतुभूता इति वा । उत्क्रमणे शरीरान्तरं गच्छतो जीवस्य शरीराद्बहिर्निस्सरणोपयोगिन्यो भवन्तीत्यर्थः ॥ १७ ॥

सर्ववल्ल्यर्थं ब्रह्मात्मैकत्वलक्षणमुपसंहरति—

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां

हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहेन्-

मुञ्जादिवेषीकां धैर्येण तं विद्याच्छुक्रममृतं

तं विद्याच्छुक्रममृतमिति ॥ १८ ॥

अङ्गुष्ठमात्रः अङ्गुष्ठपरिमाणः पुरुषः परमात्मा अन्तरात्मा प्रत्यक्-चैतन्यरूपः जनानां प्राणिनां हृदये हार्दाकाशे सदा सर्वस्मिन् काले सन्निविष्टः सम्यक् स्थितः। तं आत्मानं स्वात् स्वकीयात् शरीरात् शरीरत्रितयात् धैर्येण चित्तसमाधानलक्षणेव प्रवृहेत् पृथक् कुर्यात्। शरीरात् पृथक्करणे दृष्टान्तमाह—मुञ्जादिषीकामिव। यथा इषीकाख्यां मध्यस्थां शलाकां मुञ्जात्त्वग्रूपाद्ग्राह्यतृणात् सावधानेन जनः पृथक् कुरुते तद्वदित्यर्थः। तं शरीरोपाधितः पृथक्कृतं चिन्मात्रमात्मतत्त्वं शुक्रं शुद्धम् अमृतं ब्रह्मस्वरूपं विद्यात् विजानीयात्। द्विरुक्तिरुपनिषत्-समाप्त्यर्था। इतिशब्दश्च ब्रह्मविद्यास्तुत्यर्थः॥ १८॥

आख्यायिकोपसंहारं श्रुतिराह—

मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां

योगविधिं च कृत्स्नाम्। ब्रह्मप्राप्तो विरजो-

ऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव॥ १९॥

इति कठोपनिषदि द्वितीयाध्याये षष्ठी वल्ली समाप्ता॥ ६॥

मृत्युना यमेन प्रोक्तां कथितां एतां एतद्ग्रन्थेनोक्तां ब्रह्मविद्यां नचिकेताः शिष्यो लब्ध्वा प्राप्य कृत्स्नं उपायफलसहितं योगविधिं च योगस्वरूपं लब्ध्वा अथ विद्याप्राप्त्यनन्तरं विरजः धर्माऽधर्मरहितः विमृत्युः अविद्याकामकर्मरहितश्च सन् ब्रह्मप्राप्तोऽभूत् मुक्तोऽभवत्। किञ्च अन्योऽपि नचिकेतसो भिन्नोऽपि यः कश्चित् एवंवित् एवमुक्त-प्रकारेणात्मानं विजानातीत्येवंवित्, सोऽपि एवं नचिकेतोवद्विरजो विमृत्युश्च सन् अध्यात्मं आत्मनि देहे इत्यध्यात्मं प्रत्यक्स्वरूपं ब्रह्मप्राप्तो भवतीति योजना॥ १९॥

इति श्रीमदुदासीनवर्यामरदासपदपद्ममकरन्दतृप्तमानसेन श्रीमदमर-दासाख्येन विदुषा विरचितायां काठकोपनिषद्व्याख्याया-मुपनिषन्मणिप्रभायां द्वितीयाध्याये षष्ठी वल्ली समाप्ता॥ ६॥



ॐ

## ॐ तत्सद्ब्रह्मणे नमः।

# अथ प्रश्नोपनिषत् ॥ ३ ॥

### मणिप्रभाव्याख्यासमलंकृता

ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्ये
माक्षिभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिः।
व्यशेम देवहितं यदायुः॥

स्वस्ति न इन्द्रो वृद्धश्रवाः, स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः, स्वस्ति नो बृहस्पतिर्दधातु॥

ॐ शान्तिः शान्तिः शान्तिः।

देवाः देहानुगुणयुक्ताः सर्वे देवाः कर्णेभिरस्मदीयैः श्रोत्रैर्भद्रं भजनीयं कल्याणवचनं निर्विशेषब्रह्मप्रतिपादकवेदान्तजातं शृणुयाम युष्मत्प्रसादाच्छ्रोतुं समर्था वयं स्याम। अस्माकं बाधिर्यं कदाचिदपि मा भूदिति भावः। यजत्राः ब्रह्मविद्याश्रवणेनात्मध्यानादिशीला वयं अक्षिभिरात्मीयैश्चक्षुर्भिर्भद्रं उपदेष्टॄणां स्वरूपमन्येषां च महात्मनां स्वरूपं सगुणं परमेश्वरस्वरूपं वा। पश्येम द्रष्टुं समर्था वयं स्याम। युष्मत्प्रसादादस्माकं चक्षुषोरन्धत्वं कदापि न स्यादिति भावः। स्थिरैस्तत्तदङ्गाभिमानीन्द्रादिदेवप्रसादेन स्वस्वविषयव्यावृत्तिशून्यैरङ्गैः करचरणादिभिरवयवैस्तनूभिः सूक्ष्मब्रह्मगोचराभिः श्रुतिभिस्तुष्टुवांसः ब्रह्मानुसन्धानलक्षणस्तुतिं कुर्वाणा वयम्। देवेत्येकवचनं जात्यभिप्रायेण। तथा च हे देवा युष्मत्प्रसादतः हितं नीरोगत्वादिगुणविशिष्टं यदायुश्चिरजीवित्वं तद् व्यशेम विशेम वयं प्राप्नुयामेत्यर्थः।

मन्दबुद्ध्यनुकम्पया प्रकारान्तरेण पुनः प्रार्थयते—स्वस्तीति। वृद्धश्रवाः बृहत्कीर्तिरिन्द्रो देवपतिर्नोऽस्माकं स्वस्ति परिपूर्णब्रह्मानन्दं दधातु ददातु। तथा विश्ववेदाः विश्वं सर्वं वेत्ति जानातीति विश्ववेदाः

---

१. अयं शान्तिमन्त्रः संहितास्थः। संहितायाः पदपाठकारैर्महानुभावैः ऋषिभिस्तु 'देवहितम्' इति एकं समस्तपदमङ्गीकृतम्। तदन्यथाकरणे प्रमाणं श्रीटीकाकृदेव विजानाति। —सं०

सर्वज्ञः पूषा सूर्यः नोऽस्माकं स्वस्ति दधातु। अरिष्टनेमिररिष्टा अकुण्ठिता अप्रतिबद्धा नेमिर्गतिर्यस्य सोऽरिष्टनेमिः तार्क्ष्यो गरुडः नोऽस्माकं स्वस्ति दधातु। तथा बृहस्पतिः सुराचार्यः नोऽस्माकं स्वस्ति दधात्विति।

आथर्वणिकानां मन्त्रोपनिषदं व्याख्याय इदानीं तदीयब्राह्मणोपनिषदं मन्त्रोक्तार्थस्य विस्तरेणानुवादिनीं व्याख्यास्ये। मुण्डकानुबन्धैरेवास्या अपि सानुबन्धकत्वात् न पृथगनुबन्धचतुष्टयमत्र वक्तव्यम्। ऋषीणां प्रश्नप्रतिवचनरूपा आख्यायिका तु ब्रह्मविद्यास्तुत्यर्था ब्रह्मचर्यादिसाधनविधानार्था च। सुकेशा च भारद्वाज इत्यादिके द्वे द्वे पदे एकैकव्यक्तिपरे ज्ञातव्ये इत्याख्यायिकामवतारयति—

ॐ सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौशल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥ १ ॥

सुकेशा च नामतः। भरद्वाजस्यापत्यं भारद्वाजः। शैब्यश्च शिबेरपत्यं शैब्यः। सत्यकामो नामतः। सौर्यायणी च सूर्यस्यापत्यं सौर्यः तस्यापत्यं सौर्यायणिः। ईकारस्तु छान्दसः। केचित्तु सूर्यस्यापत्यं सौर्यायणिरित्याहुः। गार्ग्यः गर्गगोत्रोत्पन्नः। कौशल्यश्च कौशल्यो नामतः। अश्वलस्यापत्यमाश्वलायनः। चकारस्तु सुकेशादीनामुक्तानां पिप्पलादं प्रति वक्ष्यमाणप्रश्नचतुष्टयसमुच्चयार्थम्। भार्गवो भृगुगोत्रः, भृगोरपत्यं वा। वैदर्भिः विदर्भदेशे भवः। कबन्धी नामतः। कतस्यापत्यं कात्यः, तस्य चापत्यं कात्यायनः। ते प्रसिद्धाः षट्संख्याकाः। एते सुकेशासत्यकामसौर्यायणीकौशल्यभार्गवकबन्धिन इत्युक्तनामानः। ह किल ब्रह्मपराः वेदैकप्रमाणाः ब्रह्मनिष्ठाः वेदार्थे निष्ठावन्तः वेदार्थज्ञातार इति यावत्। परं सर्वोत्कृष्टं ब्रह्म देशकालवस्तुपरिच्छेदशून्यं अन्वेषमाणाः जिज्ञासमानाः ते उक्तनामानः सुकेशादयः। ह किल। समित्पाणयः समिद्भारगृहीतहस्ताः सन्तः भगवन्तं पूजावन्तं पिप्पलादं पिप्पलादनामानमाचार्यं उपसन्नाः शास्त्रदृष्टेन विधिना समीपं गता इत्यन्वयः। कीदृशास्ते एषः भगवान् पिप्पलादः ह प्रसिद्धः वै निश्चयेन तत् अस्मद्बुद्धिस्थं सर्वं निखिलं प्रष्टव्यार्थं वक्ष्यति कथयिष्यति इति एवं निश्चयवन्त इति शेषः ॥ १ ॥

तान्ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण
श्रद्धया संवत्सरं संवत्स्यथ यथाकामं प्रश्नान्पृच्छथ
यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ २ ॥

तान् स्वसमीपमागतान् ह किल स पिप्पलादः ऋषिः सूक्ष्मार्थद्रष्टा उवाच उक्तवान्। किमुक्तवानित्यत आह—यद्यपि यूयं पूर्वं तपआदिकं कृतवन्तस्तथापि ब्रह्मविद्याग्रहणाय भूय एव पुनरेव तपसा शरीरशोषणादिरूपेण ब्रह्मचर्येण योषित्स्मरणकीर्तनकेलिप्रेक्षणगुह्यभाषणसंकल्पाध्यवसायक्रियानिर्वृत्तीत्यष्टविधमैथुनवर्जनरूपेण। श्रद्धया गुरुवाक्यवेदार्थयोरास्तिक्यबुद्ध्या च सम्पन्नाः सन्तः संवत्सरं द्वादशसौरमासपरिमितकालं संवत्स्यथ सम्यग् गुरुशुश्रूषापराः सन्तो निवासं करिष्यथ। तदनन्तरं तु यथाकामं स्वकाममनतिक्रम्येति यथा कामं स्वेच्छानुसारेणेति यावत्। प्रश्नान् यद्विषये यस्य जिज्ञासा तद्विषयान् प्रश्नान् पृच्छथ प्रश्नोद्देशेन वाचमुच्चारयध्वम्। यदिशब्दो स्वगर्वनिवृत्तिसूचनार्थो न त्वज्ञानसंशयार्थः। यदि विज्ञास्यामः युष्मत्पृष्टार्थस्य ज्ञानवन्तो वयं भविष्यामस्तदा सर्वं निखिलं पृष्टार्थं ह किल वः युष्मभ्यं वक्ष्यामः। इतिशब्द आचार्योक्तिसमाप्त्यर्थः ॥ २ ॥

अथ कबन्धी कात्यायन उपेत्य पप्रच्छ।
भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥

अथ तपआदिसाधनसंपत्त्या संवत्सरवासानन्तरम्। कबन्धी कात्यायनः पूर्वं व्याख्यातः। उपेत्य पिप्पलादस्य शास्त्रोक्तमार्गेण समीपं गत्वा। पप्रच्छ प्रश्नं कृतवान्। भगवन् हे पूजावन्, गुरो! कुतः कस्मात् कारणविशेषात् ह वै प्रसिद्धाः इमाः नानाविधशब्दप्रत्ययगोचराः प्रजाः चराचरप्राणिनः प्रजायन्ते उत्पद्यन्ते इति एवं पप्रच्छेत्यन्वयः। कुतो ह वा इमा इत्यादिग्रन्थो न सृष्टिपरः, ब्रह्मविद्याप्रकरणे प्रजापतिकर्तृकसृष्टिविषयकप्रश्नप्रतिवचनयोरसङ्गतत्वात्। किन्तु सृष्ट्युक्तिव्याजेन अपरविद्याकर्मणोः समुचितयोः कार्यगती ब्रह्मलोकदेवयानरूपे ब्रह्मविद्यासाधनभूतवैराग्यार्थमिह विवक्षिते इति भावः ॥ ३ ॥

तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते।
रयिं च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥

तस्मै कात्यायनाय । सः पिप्पलादः । ह किल । उवाच उक्तवान् । तदुक्तिमेवाह—प्रजाकाम इति । सः यः पूर्वकल्पानुष्ठितकर्मोपासनाभ्यां कल्पादौ प्रजापतिः हिरण्यगर्भोऽभूत् । स वै शास्त्रप्रसिद्धः प्रजाकामः प्रजोत्पत्तीच्छावान् सन् । तपः प्रजापतिना मया जगत्स्रष्टव्यमित्याकारकमालोचनम् अतप्यत कृतवान् । प्रथमं चन्द्रसूर्यौ सृष्ट्वा । ततस्तत्साध्यसंवत्सरादिकालम् । ततश्च तत्साध्यव्रीह्याद्यन्नं च सृष्ट्वा । ततोऽन्नसाध्यं रेतो भूत्वा तेन रेतसा प्रजाः सृजेयमिति निश्चितवानित्यर्थः । सः उक्तप्रजापतिः तपस्तप्त्वा उक्तप्रकारमालोचनं कृत्वा । सः प्रजापतिः मिथुनं सृष्टिसाधनभूतं युग्मं उत्पादयते अण्डोत्पत्तिक्रमेण उत्पादितवान् । मिथुनं दर्शयति—रयिं चेति । रयिं च प्राणं च वक्ष्यमाणलक्षणम्, चकारौ रयिप्राणयोः समुच्चयसूचनार्थौ । इति वक्ष्यमाणाभिप्रायेणोत्पादयत इति पूर्वेणान्वयः । तदभिप्रायमाह—एतौ रयिप्राणौ मे मम प्रजापतेः बहुधा अनेकप्रकाराः प्रजाः चराचरप्राणिनः करिष्यतः । इतिशब्द एवार्थः, उत्पादयिष्यत एवत्यर्थः ॥ ४ ॥

उक्तयोः प्राणरयिशब्दयोरर्थमाह—

आदित्यो ह वै प्राणो रयिरेव चन्द्रमा रयिर्वा
एतत्सर्वं यन्मूर्तं चामूर्तं च । तस्मान्मूर्तिरेव रयिः ॥ ५ ॥

आदित्यः सूर्यः । ह वै प्रसिद्धः प्राणशब्दाभिधेयः । अत्र प्राणपदेनोक्त आदित्यः 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्' इति स्मृतेरग्नेः प्राणसम्बन्धाद्ग्निर्भोक्ता लक्ष्यते । उद्यन्तं वा आदित्यमग्निरनुसमारोहतीति श्रुतेः सूर्याग्न्योरभेदमभिप्रेत्य, आदित्यपदेनाप्यग्निरेवात्र प्रधानभूतो लक्ष्यते । रयिरेव चन्द्रमाः रयिशब्दाभिधेयः शीतकिरणमण्डलरूप एव । अत्र चन्द्रमा एवाप्रधानान्नात्मको धनवाचिना रयिशब्देन लक्ष्यते । तेनाग्नीषोमौ मिथुनमिति सिद्धम् । रयिशब्दाभिधेयस्य सोमस्यान्नरूपस्य सर्वात्मकत्वमाह—रयिरिति । रयिः सोमो वै प्रसिद्धः एतत् दृश्यमानं सर्वं निखिलमस्तीति शेषः । सर्वशब्दार्थमाह—यदिति । यत प्रसिद्धं मूर्तं च पृथिव्यप्तेजोरूपं अमूर्तं च वाय्वाकाशात्मकम् । चकारौ मूर्तामूर्तयोः प्रत्येकं रयित्वसमुच्चयार्थौ । ननु मूर्तामूर्तयोरन्नानन्नयोरपि रयित्वेऽन्नमेव रयिरिति कथमुक्तमित्याशंक्य मूर्तामूर्तविभागमकृत्वा सर्वस्य गुणभावमात्रविवक्षया सर्वं रयिरेवेत्युच्यते । यदा तूभे विभज्य गुणप्रधानभावेन विवक्ष्येते तदाऽमूर्तेन प्राणेन मूर्तस्याद्यमानत्वात्

मूर्तस्यैव रयित्वमित्याह—तस्मादिति । । तस्मात् अमूर्तस्यात्तृत्वेन पृथक्करणात् रयिः चन्द्रमाः मूर्तिरेव पृथिव्यप्तेजोरूप एव, नत्वन्य ॥ ५ ॥

एवं रयिशब्दितान्नस्य प्रजापतित्वार्थं सार्वात्म्यमाह—

अथादित्य उदयन् यत्प्राचीं दिशं प्रविशति तेन
प्राच्यान्प्राणान्रश्मिषु संनिधत्ते । यद्दक्षिणां
यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा
दिशो यत्सर्वं प्रकाशयति तेन सर्वान्प्राणान्
रश्मिषु संनिधत्ते ॥ ६ ॥

अथशब्दः सर्वात्मकत्वप्रारम्भार्थः । आदित्यः सूर्यः उदयन् ऊर्ध्वं गच्छन् प्राणिनां चक्षुर्गोचरमागच्छन् यत् यदा प्राचीं दिशं प्रविशति स्वप्रभया व्याप्नोति । तेन प्राचीदिक्प्रवेशेन प्राच्यान् प्राचीदिक्स्थान् प्राणान् प्राणचक्षुरादीन्द्रियरूपान् । रश्मिषु किरणेषु । सन्निधत्ते संनिवेशयति स्वकिरणैर्व्याप्नोतीति यावत् । यत् यदा दक्षिणां दक्षिणदिशं प्रविशति तेन दाक्षिणात्यान् प्राणान् रश्मिषु सन्निधत्ते इति पूर्वोक्तस्यानुकर्षः । यत् यदा प्रतीचीं पश्चिमदिशं प्रविशति तेन पाश्चात्त्यान् प्राणान् रश्मिषु सन्निधत्ते । यत् यदा उदीचीं उत्तरदिशं प्रविशति तेनौत्तरान् प्राणान् रश्मिषु सन्निधत्ते । यत् यदा अधः अधोदिशं प्रविशति तेनाधोदिग्भवान् प्राणान् रश्मिषु सन्निधत्ते । यत् यदा ऊर्ध्वं दिशं प्रविशति तेनोर्ध्वदिग्गतान् प्राणान् रश्मिषु सन्निधत्ते । यत् यदा अन्तरादिशो ईशानादिकोणदिशः प्रविशति तेनान्तरदिक्स्थान्प्राणान् रश्मिषु सन्निधत्ते । एवं प्रविशतीत्यादिवाक्यस्य प्रथमपर्याये व्याख्यातस्य सर्वत्रानुवृत्तिः कर्तव्या । यत् यदा सर्वं निखिलं दिग्जातं प्रकाशयति स्वतेजसा व्याप्नोति । तेन स्वतेजोव्याप्त्या सर्वान् सर्वदिक्स्थान् प्राणान् प्राणचक्षुरादिरूपान् । रश्मिषु किरणेषु । सन्निधत्ते संनिवेशयति, स्वकिरणैर्व्याप्नोतीत्यर्थः ॥ ६ ॥

स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते
तदैतदृचाभ्युक्तम् ॥ ७ ॥

सः पूर्वोक्त आदित्यः एषः प्रकाशरूपः सर्वजनप्रत्यक्षः वैश्वानरः विश्वे सर्वे ते नरा जीवाश्चेति विश्वनराः ते एव वैश्वानराः सर्वात्मकत्वात् प्रजापतिरपि वैश्वानरः, स्वार्थे तद्धितः । छान्दसी पूर्वपदस्य दीर्घता । नरे च संज्ञायामिति संज्ञामादाय वा दीर्घता । सर्वजीवात्मक

इति यावत् । विश्वरूपः सर्वप्रपञ्चात्मकः प्राणः प्राणशब्दाभिधेय आदित्यः । अग्निः दाहप्रकाशहेतुरुक्ता । उदयते ऊर्ध्वमागच्छति । तत् ब्राह्मणेनोक्तं एतत् आदित्यस्य सर्वात्मत्वं ऋचा पादबद्धमन्त्रेण अभ्युक्तं कथितम् ॥ ७ ॥

विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं
तपन्तम् । सहस्ररश्मिः शतधा वर्तमानः प्राणः
प्रजानामुदयत्येष सूर्यः ॥ ८ ॥

विश्वरूपं सर्वरूपम् । हरिणं रश्मिवन्तं सर्वोपसंहारकारणं वा । जातवेदसं जातानि वेदांसि विज्ञानानि यस्मात्स जातवेदास्तम् । परायणं सर्वप्राणाश्रयभूतम् । ज्योतिः तेजोरूपम् । एकम् अद्वितीयरूपम् । तपन्तम् अन्तर्बहिस्तापं कुर्वाणं सूर्यं विज्ञातवन्तो ब्रह्मविद इति शेषेणान्वयः। कोऽसौ यं विज्ञातवन्त इत्यत आह—सहस्रेति । सहस्ररश्मिः अनेककिरणः शतधा वर्तमानः नानाप्राणिरूपेण वर्तमानः प्राणः । प्रजानां स्थावरजङ्गमानां प्राणभूतः, सर्वव्यवहारनिर्वाहकः। उदयति ऊर्ध्वं गच्छति सर्वप्राणिनां चक्षुर्गोचरमागच्छति । एषः सर्वजनप्रत्यक्षः सूर्यः शोभनगतिमान् सवितेत्यर्थः ॥ ८ ॥

एवमुक्तस्याग्नीषोमात्मकस्य मिथुनस्य रूपान्तरं कालात्मकं दर्शयति—

संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च ।
तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते
चान्द्रमसमेव लोकमभिजयन्ते । त एव
पुनरावर्तन्ते । तस्मादेते ऋषयः प्रजाकामा दक्षिणं
प्रतिपद्यन्ते । एष ह वै रयिर्यः पितृयाणः ॥ ९ ॥

संवत्सरः द्वादशमासात्मकः कालः । वै प्रसिद्धः । प्रजापतिः रयिप्राणावस्थो हिरण्यगर्भः । चन्द्रनिर्वर्त्याः तिथयः, आदित्यनिर्वर्त्याश्चाहोरात्रीः, तेषां समुदायो हि संवत्सरः । एवं संवत्सरस्य प्राजापत्यात्मकमिथुननिवर्त्यत्वात् निर्वर्त्यनिर्वर्तकयोरभेदस्य च प्रसिद्धत्वात् संवत्सरस्य प्रजापतित्वमिति भावः । तस्य आदित्यचन्द्रनिष्पाद्यस्य संवत्सरस्य । अयने रवेर्गतिमार्गभूते भवत इति शेषः । ते के इत्यत आह— दक्षिणमिति । दक्षिणं मासषट्कं दक्षिणायनं उत्तरं मासषट्कमुत्त-

रायणम्। चकारौ मिलिताभ्यां द्वाभ्यां संवत्सरस्वरूपनिष्पत्तिसूचनार्थौ। दक्षिणोत्तरप्रसङ्गेन कर्मिणां ज्ञानयुक्तकर्मवतां च दक्षिणोत्तरगती द्वे आह—तदिति। तत् तत्राधिकारिषु त्रैवर्णिकेषु मध्ये ये अधिकारिणः। ह वै प्रसिद्धाः। तत् शास्त्रप्रसिद्धं कर्म। तदेवोपपादयति—इष्टेति। इष्टं 'अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम्। आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते' इत्युक्तलक्षणं श्रौतं कर्म। पूर्तं 'वापीकूपतडागादिदेवताऽऽयतनानि च। अन्नप्रदानमारामः पूर्तमित्यभिधीयते' इत्युक्तलक्षणं स्मार्तं कर्म। इष्टं च पूर्तं च इष्टापूर्ते। कृतमिति। कृतमेव यत्नसाध्यं कर्मैव उपासते अनुतिष्ठन्ति न त्वकृतम्, ते इष्टापूर्तकर्मकर्तारः, चान्द्रमसमेव चन्द्रमसि भवं लोकं इष्टापूर्तकर्मफलं अभिजयन्ते अभिजयन्ति प्राप्नुवन्ति, यस्मात्ते एव पुनरावर्तन्ते तस्मात् ततो हेतोरेव। एते उक्तकर्मिणः ऋषयः स्वर्गद्रष्टारः प्रजाकामाः प्रजार्थिनो गृहस्थाः दक्षिणं दक्षिणायनोपलक्षितं चन्द्रं प्रतिपद्यन्ते प्राप्नुवन्ति। एषः दक्षिणायनोपलक्षितश्चन्द्रः। ह वै प्रसिद्धः। रयिः रयिशब्दाभिधेयमन्नम्। एषः क इत्यत आह—यः प्रसिद्धः पितृयाणः पितृयाणोपलक्षितश्चन्द्रः। केचित्तु दक्षिणपितृयाणशब्दौ धूमादिमार्गपरौ, मार्गस्य रयित्वं प्राप्य चन्द्रात्मक-रयिहेतुत्वादित्याहुः ॥ ९ ॥

एवं दक्षिणायनोपलक्षितेन मार्गेण प्राप्यत्वाच्चन्द्रो दक्षिणायनमिति सम्पाद्य आदित्यस्योत्तरायणत्वं सम्पादयति—

अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिजयन्त एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधस्तदेष श्लोकः ॥ १० ॥

अथशब्दो मार्गान्तरारम्भार्थः। उत्तरेण अर्चिरादिमार्गेण आदित्यं चराचरस्य प्राणभूतं सूर्यम्, अभिजयन्ते प्राप्नुवन्तीत्यन्वयः। केन प्राप्नुवन्तीत्याकाङ्क्षायां तत्प्राप्तिसाधनान्याह—तपसेति। तपसा शरीरशोषणादिना। ब्रह्मचर्येण योषित्स्मरणाद्यष्टविधमैथुनवर्जनरूपेण। श्रद्धया गुरुवेदवाक्येष्वास्तिक्यबुद्ध्या। विद्यया सूर्यमण्डलोपलक्षितप्रजापत्युपासनया। आत्मानम्, प्राणे सत्येव सात्मकत्वप्रसिद्धेः प्राण आत्मा भवति, तस्य च शास्त्रात् सूर्याभेदावगमात् सूर्यरूपमात्मानम्। अन्विष्य सर्वप्राणरूपः सूर्योऽहमस्मीति ज्ञात्वा। विद्ययेत्यस्य व्याख्यानमिदमवगन्तव्यम्। एतत् उत्तरायणमार्गगम्यं सूर्यस्वरूपं व प्रसिद्धम्। प्राणानां

प्राणशब्दवाच्यानां प्राणचक्षुरादीनाम, आयतनम् आश्रयम्। एतत् उक्तादित्यस्वरूपम, अमृतम् अविनाशिरूपम् । अभयं क्षयवृद्धिभयरहितम, एतत् आदित्यस्वरूपं परायणं उपासकानां परागतिरूपम्। एतस्मात् उत्तरमार्गगम्यादादित्यमण्डलात् । पुनः भूयः नावर्तन्त चन्द्रलोकादावृत्तिवदावृत्तिं न प्राप्नुवन्ति। ननु केवलकर्मिणामप्यादित्यप्राप्तौ अपुनरावृत्तिर्भविष्यतीत्याशङ्क्य तेषामादित्यप्राप्तिरेव नास्तीत्याह–इतीति । इति यस्मात्, एष आदित्यः, निरोधः कर्मिणां निरोधकः, तस्मात्तेषामादित्यप्राप्तिर्न शङ्कनीया इति शेष । केचित्तु इति अनेन प्रकारेणोक्त इति शेषः । एषः आदित्यप्राप्तिरूपः निरोधः, विनाशोऽपरविद्यावतां मोक्ष इत्याहुः । तत् तत्र संवत्सराख्यप्रजापतिस्वरूपे, एषः वक्ष्यमाणः श्लोकः मन्त्रः ॥ १० ॥

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे

पुरीषिणम् । अथेमे अन्य उपरे विचक्षणं सप्तचक्रे

षडर आहुरर्पितमिति ॥ ११ ॥

पञ्चपादं पञ्चर्तवः हेमन्तशिशिरावेकीकृत्य हेमन्तवसन्तग्रीष्मवर्षाशरदाख्याः पादा इव आवृत्तिहेतवो यस्य संवत्सरात्मन आदित्यस्य स पञ्चपादस्तं पितरं जनकं वृष्ट्यन्नादिद्वारा सर्वस्य जनकत्वं तस्य। द्वादशाकृतिं द्वादशमासा आकृतयो अवयवाः यस्य तम् । दिवः अन्तरिक्षलोकात् परे ऊर्ध्वे अर्धे स्थाने पुरीषिणं पुरीषवन्तमुदकवन्तं आहुः कथयन्ति कालविदः । अथ पक्षान्तरे इमे कालज्ञाः अन्ये पूर्वोक्तेभ्यो व्यतिरिक्ताः विचक्षणं कुशलं सर्वोपद्रवरहितं कालं आहुरिति पूर्वार्धगतेन क्रियापदेनान्वयः । उपरे उ-शब्दः तु-शब्दार्थः । तथा च परे तु कालचक्रविद इति एवमाहुः इत्यन्वयः। किमाहुरित्यत आह—सप्तचक्र इति। सप्तचक्रे सप्तहयरूपेण चक्रेण निरन्तरं गतिमति। यद्वा—सप्त गायत्रीत्रिष्टुप्जगत्यनुष्टुप्पङ्क्तिबृहतीककुदितिच्छन्दांसि यस्मिंश्चक्रे नेतृत्वेन सम्बद्धानि तत्सप्तचक्रम्, तस्मिन् सप्तचक्रे संवत्सरात्मके प्रजापतौ। षडरे षडृतुरूपा अरा यस्य तस्मिन् षडरे कालात्मनि अर्पितं रथनाभाविवाराः इदं सर्वं जगदर्पितमिति योजना ॥ ११ ॥

संवत्सरस्यापि मासाहोरात्रव्यतिरेकेण ओषध्यादिजनकत्वासम्भवात् तस्य मासाद्यात्मकत्वमाह—

मासो वै प्रजापतिस्तस्य कृष्ण पक्ष एव रयिः
शुक्लः प्राणस्तस्मादेते ऋषयः शुक्ल इष्टं कुर्व-
न्तीतर इतरस्मिन् ॥ १२ ॥

मासः सितासितपक्षद्वयात्मकः वै प्रसिद्धः प्रजापतिः रयिप्राणात्मक-मिथुनात्मको हिरण्यगर्भः तस्य मासात्मनः प्रजापतेः कृष्णपक्ष एव चन्द्रक्षयपक्ष एव एको भागः रयिः। चन्द्रः शुक्लः चन्द्रवृद्धिपक्षः अपरो भागः प्राण आदित्यः। यस्मात्प्राणं शुक्लपक्षात्मानं सर्वात्मकमेव पश्यन्ति तस्मात्प्राण एव सर्वरूपमित्युपासनात् एते शास्त्रप्रसिद्धाः ऋषयः प्राणातिरिक्तं वस्तुजातमपश्यन्तः शुक्ल इष्टं कुर्वन्ति। कृष्णपक्षेऽपि कुर्वन्तः शुक्लपक्षे एवेष्टं इष्टापूर्तादि कर्म कुर्वन्ति, कृष्णपक्षस्य तैरदर्शनादित्यर्थः। इतरे प्राणव्यतिरिक्तदर्शिनः शुक्ले कुर्वन्तोऽपि इतर-स्मिन् कृष्णपक्षे एव इष्टादिकं कुर्वन्तीत्यनुषङ्गः॥ १२॥

अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव
रयिः प्राणं वा एते प्रस्कन्दन्ति। ये दिवा रत्या
संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते ॥ १३ ॥

अहोरात्रः त्रिंशन्मुहूर्तात्मकः कालो मनुष्यपितृदेवब्रह्मभेदभिन्नः। वै प्रसिद्धः प्रजापतिः मिथुनात्मको हिरण्यगर्भः। तस्य अहोरात्रात्मक-प्रजापतेः। अहरेव सूर्योदयादारभ्य पञ्चदशमुहूर्तात्मकः काल एव। प्राणः आदित्यः। रात्रिरेव सूर्यास्तमयादारभ्य आपञ्चदशमुहूर्तात्मकः काल एव। रयिः चन्द्रः। अह्नः प्राणत्वोक्तिप्रसङ्गाद् दिवामैथुनं निषेधति-प्राणमिति। प्राणं सर्वजीवनकारणभूतमादित्यं वै प्रसिद्धं एते वक्ष्यमाणाः प्रस्कदन्ति प्रकर्षेण शोषयन्ति घ्नन्तीति यावत्। एतच्छब्दार्थमाह—ये इति। ये प्रसिद्धाः कामुकाः। दिवा दिवसे, रत्या स्त्रीसंभोगरूपक्रीडया, संयु-ज्यन्ते सम्बध्यन्ते, मैथुनमाचरन्तीति यावत्। तस्मादहनि मैथुनं न कर्तव्य-मिति प्रासङ्गिकः प्रतिषेधः। ब्रह्मचर्यमेव योषित्स्मरणाद्यष्टविधमैथुन-परित्यागरूपमेव तत् शास्त्रप्रसिद्धम्। तच्छब्दार्थमाह—यदिति। यत् प्रसिद्धं रात्रौ निशि रत्या स्त्रीसंभोगलक्षणमैथुनेन संयुज्यन्ते मैथुन-माचरन्ति ब्रह्मचर्यमेव तदिति प्रशस्तं रात्रिगमनम्, तस्मान्निशि ऋतौ भार्यागमनं कर्तव्यमिति विधिः प्रासङ्गिकः॥ १३॥

एतत्सर्वमुपयोगितयोक्तं न तु साक्षात्प्रकृतम्। इदानीं तु कुतो ह वा इमाः प्रजाः प्रजायन्त इति प्रकृतमाह—

अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः
प्रजाः प्रजायन्त इति ॥ १४ ॥

अन्नं व्रीहियवादिरूपं वै सर्वजनप्रसिद्धं प्रजापतिः उक्तकालात्मको व्रीहियवाद्यन्नरूपेणावस्थित इत्यर्थः। ततः तस्मादद्यमानादन्नात् ह वै प्रसिद्धं तत् प्रजाकारणभूतं रेतः स्त्रीपुंसयोर्बीजं जायत इति शेषः। तस्मात् रेतसः इमाः नानाशब्दप्रत्ययगोचराः प्रजाः प्राणिनिकायाः प्रजायन्ते उत्पद्यन्ते इति। एवं रेतोऽवस्थाऽवच्छिन्नेन आत्मोपादानेन चन्द्रादित्यसंवत्सरमासाहोरात्रमैथुनावस्थात्मनिमित्तेन च प्रजाः प्रजायन्त इति निर्णीतमित्यर्थः॥ १४॥

एवं प्रश्नं निर्णीय प्रसंगात् विहितमैथुनस्य दृष्टफलमाह—

तद्ये ह वै तत्प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते।
तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं
प्रतिष्ठितम्॥ १५॥

तत् तत्र संसारमण्डले ये गृहस्थाः। ह वै इति प्रसिद्धिस्मरणार्थौ निपातौ। तत् शास्त्रोक्तं प्रजापतिव्रतं ऋतौ भार्यागमनलक्षणं व्रतं चरन्ति कुर्वन्ति ते प्रजापतिव्रतचारिणः, मिथुनं पुत्रं दुहितरं च उत्पादयन्ते जनयन्ति न तु नपुंसकम्। एवं दृष्टफलमुक्त्वाऽदृष्टफलमाह— तेषामिति। तेषामेव उक्तप्रजापतिव्रतचारिणामेव। एषः दक्षिणमार्गगम्यः। ब्रह्मलोकः ब्रह्मणः प्रजापतेः लोकः अंशभूतः प्राप्येत इति शेषः। कर्मिणां ब्रह्मलोकप्राप्तिसाधनान्तराण्याह—येषामिति। येषां उक्तकर्मिणांतपः स्नातकव्रतं देवद्विजप्राज्ञानां पूजनादिलक्षणम्। ब्रह्मचर्यम् ऋतोरन्यत्र मैथुनाभावरूपं च वर्तत इति शेषः। येषु उक्तेष्टादिकारिषु सत्यं यथार्थभाषणं प्रतिष्ठितं नित्यं स्थितं तेषां ब्रह्मलोक इति पूर्वेणान्वयः॥ १५॥

केवलकर्मिणां गृहस्थानां चन्द्रप्राप्तिरूपफलमुक्त्वा ज्ञानयुक्तकर्मवतां फलमाह—

तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं
न माया चेति॥ १६॥

इति प्रथमः प्रश्नः॥ १॥

येषु उपासकेषु ब्रह्मचारिवानप्रस्थेषु जिह्मं कौटिल्यवचनं अनृतमयथादृष्टभाषणं माया च अन्तरमन्यथा गृहीत्वा बहिरन्यथा प्रकाशनं माया, सा च न विद्यते। चकारात् हिंसास्तेयादिकमपि न विद्यत इत्यवगन्तव्यम्। तेषां उक्तसाधनवतामुपासकानाम्, असौ उत्तरायणगम्यः विरजः शुद्धः वृद्धिक्षयादिदोषरहितः ब्रह्मलोकः आदित्यात्मभावलक्षणः प्राप्यत इति शेषः। इतिशब्दः प्रश्नसमाप्त्यर्थः॥ १६॥

अथ द्वितीयः प्रश्नः

आधिदैविकस्य प्राणात्मकस्य प्रजापतेरुपासनमुक्त्वा तस्यैवाध्यात्मिकरूपेण वरिष्ठत्वादिगुणकस्य प्राणस्योपासनविधानायाऽऽह—

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ। भगवन् कत्येव
देवाः प्रजां विधारयन्ते कतर एतत्प्रकाशयन्ते
कः पुनरेषां वरिष्ठ इति॥ १॥

अथ कबन्धि-कात्यायनप्रश्नानन्तरं ह किल एनं पिप्पलादं भार्गवो भृगुगोत्रः वैदर्भिः विदर्भदेशभवः पप्रच्छ पृष्टवान्। भगवन् हे भगवन्! कत्येव कियत्संख्याका एव देवाः देवशब्दवाच्याः प्रजां प्राणिनां शरीररूपां विधारयन्ते विधारणं कुर्वन्ति। कतरे ज्ञानेन्द्रियकर्मेन्द्रियाणां मध्ये देवा देवराश्योर्वा मध्ये के एतत् शरीरं शरीरधारणं वा प्रकाशयन्ते प्रकाशं कुर्वन्ति। कः पुनरेषां वरिष्ठः एषां देवानां मध्ये को नाम श्रेष्ठः। इति एवं पप्रच्छेति सम्बन्धः॥ १॥

तस्मै एवं पृष्टवते भार्गवाय सः पिप्पलादः ह किल उवाच उक्तवान्। धारकत्वप्रकाशकत्ववरिष्ठत्वानि प्राणस्यैवेति वक्तुमाख्यायिकामाह—

तस्मै स होवाच आकाशो ह वा एष देवो वायुरग्निरापः
पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च। ते प्रकाश्याभिवदन्ति
वयमेतद्बाणमवष्टभ्य विधारयामः॥ २॥

आकाशः भूताकाशः ह किल वै प्रसिद्धः एषः साक्षिप्रत्यक्षः देवः अन्यान्विजिगीषुः। वायुरग्निरापःपृथिवीति भूतचतुष्टयं स्पष्टम्। वाक् वागिन्द्रियम्, वागिति पाणिपादपायूपस्थानामप्युपलक्षणम्। मन इति चतुर्विधान्तःकरणोपलक्षणार्थम्। चक्षुश्रोत्रं स्पष्टम्। चकारात् त्वक्घ्राणरसनानां ग्रहणम्। ते आकाशादयो देवा प्रकाश्य अवकाशदानादिरूपं शरीरधारणैकदेशात्मकं स्वस्वकार्यं प्रकाश्य सर्व-

लोकप्रसिद्धं कृत्वा अभिवदन्ति अवकाशदातृत्वाद्येकैककार्यक्षमा अपि सजीवनमवकाशदातृत्वादिसर्वकार्यक्षमत्वं स्वस्मिन्नारोप्य परस्परं स्पर्धमाना अहंश्रेष्ठतायै सर्वतः कथयन्ति। तदुक्तिमाह—वयमिति। वयमिति प्रत्येकं बहुवचनप्रयोगः स्वमहत्त्वसूचनार्थः। वयं एतत् सर्वजनदृष्टिगोचरं बाणम् बवयोरैक्यात् वाति कुत्सितं गन्धं वहतीति वाणम्। वणति शब्दं करोतीति वाणं देशाद्देशान्तरं गच्छतीति वा वाणं शरीरम्। अवष्टभ्य अवष्टम्भनं कृत्वा दृढतमं कृत्वा, विधारयामः विधारणं कुर्मः गमनादिकार्यक्षमं कुर्म इति यावत्। मयैकेनायं देहो ध्रियते इत्येकैकस्याभिप्रायः॥ २॥

तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथ
अहमेवैतत् पञ्चधाऽऽत्मानं प्रविभज्यैतद्-
बाणमवष्टभ्य विधारयामीति ॥ ३ ॥

तान् आकाशादीन् प्रत्येकं शरीरविधारणाभिमानवतः वरिष्ठः मुख्यः प्राण पञ्चवृत्त्यात्मकः उवाच हस्तसंज्ञया निवारयन्नुक्तवान्। तदुक्तिमाह— मेति। मा निषेधार्थकः, मोहं विपरीतज्ञानं मा आपद्यथ मा गच्छत। तत्र हेतुमाह—अहमिति। अहमेव मुख्यप्राणात्मा एव एतत् एतं स्वप्रत्यक्षं आत्मानं प्राणात्मकं स्वस्वरूपं पञ्चधा प्राणापानव्यानोदानसमानरूपैः पञ्चप्रकारैः प्रविभज्य प्रकर्षेण भेदवन्तं कृत्वा एतत् वाणं सर्वजनदृष्टिगोचरं शरीरम् अवष्टभ्य अवष्टम्भनं कृत्वा दृढतमं कृत्वा विधारयामि विविधकार्यक्षमं जीवनवन्तं करोमि। इति एवं ाणेनोक्ते सति॥ ३॥

तेऽश्रद्दधाना बभूवुः सोऽभिमानादूर्ध्वमुत्क्रमत इव,
तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते, तस्मिँश्च
प्रतिष्ठमाने सर्व एव प्रातिष्ठन्ते। तद्यथा मक्षिका मधु-
करराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते, तस्मिँश्च
प्रतिष्ठमाने सर्वा एव प्रातिष्ठन्त एवं वाङ्मनश्चक्षुः
श्रोत्रं च ते प्रीताः प्राणं स्तुवन्ति ॥ ४ ॥

ते आकाशादयो देवाः परस्परमुखावलोकन-हास-करताडनादिनानाचेष्टावन्तः सन्तः अश्रद्दधानाः प्राणोक्ते वाक्ये आस्तिक्यबुद्धिरहिताः बभूवुः स्पष्टम्। सः मुख्यप्राणः तेषां दर्पमवलोक्य अभिमानात्

आत्मनः शरीरधारणक्षमत्वलक्षणादहङ्कारात् ऊर्ध्वं अष्टोत्तरशतमर्मस्थानानां मध्ये उपरिस्थानं उत्क्रमत इव स्वस्य साक्षादुत्क्रमणे शरीरविनाशं मन्वानः उत्क्रमणमिव कृतवानित्यर्थः । स्वस्थानाच्चलनेनाकाशादिदेवानां व्याकुलत्वं कृतवानिति भावः । तस्मिन् मुख्ये प्राणे उत्क्रामति ऊर्ध्वं गच्छति सति अथ मुख्यप्राणोत्क्रमणानन्तरम् इतरे मुख्यप्राणाद्भिन्ना आकाशादयः सर्व एव निखिला अपि उत्क्रामन्ते उत्क्रामन्ति पराधीनाः सन्तः स्वस्वस्थानेभ्यः प्रचलिता बभूवुः, न कोऽप्यात्मानमवष्टब्धवानित्यर्थः । तस्मिंश्च मुख्यप्राण एव प्रतिष्ठमाने अवतिष्ठमाने स्वस्थाने स्थिते सति सर्व एव उक्ताकाशादयो निखिला अपि प्रातिष्ठन्ते स्वस्वस्थाने तिष्ठन्ति । तत् तत्र प्राणस्योत्क्रमणे सर्वेषामुत्क्रमणम्, प्राणस्य प्रतिष्ठमाने सर्वेषामवस्थानमित्यस्मिन्नर्थे दृष्टान्तः—यथा यद्वत् मक्षिकाः क्षुद्रा मधुकरा मधुकरराजानं मधुकरेषु प्रधानभूतम् उत्क्रामन्तं मध्वपूपं परित्यज्योर्ध्वं गच्छन्तं सर्वा एव निखिला अपि मक्षिकाः उत्क्रामन्ते उत्क्रामन्ति तमनुगच्छन्तीत्यर्थः । तस्मिंश्च मधुकरराजे प्रतिष्ठमाने मध्वपूपे स्थिते सति सर्वा एव सर्वा मक्षिका अपि प्रातिष्ठन्ते स्थिता भवन्ति । एवं उक्तदृष्टान्तवत् वाग् वागिन्द्रियम्, उपलक्षणमेतत् पाणिपादादीनाम् । मनः अन्तःकरणम् । चक्षुःश्रोत्रम्, उपलक्षणमेतत् ज्ञानेन्द्रियपञ्चकमित्यर्थः । चकारादनुक्ताकाशादयो ग्राह्याः । ते उक्ताकाशादयो देवा शरीरविधारकत्वाभिमानरहिता प्रीताः प्राणस्य शरीरविधारकत्वं निश्चित्य हर्षमुपागताः प्राणं मुख्यप्राणं स्तुवन्ति स्तुतिं कुर्वन्तीत्यर्थः ॥ ४ ॥

तत्स्तुतिमाह—

एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो

मघवानेष वायुरेष पृथिवी रयिर्देवः

सदसच्चामृतं च यत् ॥ ५ ॥

एषः त्वाचप्रत्यक्षो मुख्यप्राणः अग्निः पावकरूपः सन् तपति सन्तापं करोति । एषः प्राणः सूर्यः आदित्यः सन् प्रकाशते इति शेषः । एवमग्रेऽपि तत्तत्क्रियाध्याहारेण योजना । एषः प्राणः पर्जन्यः वृष्ट्यभिमानिनी देवता सती वर्षति । किञ्च मघवानिन्द्रः सन्प्रजाः पालयति । जिघांसत्यसुररक्षांसि । एषः प्राण वायुरावहप्रवहादिभेदरूपः । एष प्राणः पृथिवी भूमिरूपः । वक्ष्यमाणेष्वपि सर्वेषु एष इति पदमनुवर्तनीयम् । एष रयिः चन्द्रः, एषः देवः दीप्तिमान्, सदसच्च

मूर्तामूर्तं च एष एव यत् प्रसिद्धम् अमृतं देवानां जीवनहेतुभूतं पीयूषं तदपि प्राण एव। यद्वा—अमृतम् अमरणधर्मकं ब्रह्मापि प्राण एव। चकारादन्यत्सर्वं वस्तु प्राणात्मकमित्यर्थः ॥ ५॥

सर्वात्मकत्वमुक्त्वा सर्वधारकत्वमाह—

अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्।
ऋचो यजूꣳषि सामानि यज्ञः क्षत्रं ब्रह्म च ॥ ६ ॥

इव यथा। रथनाभौ रथचक्रस्य मध्यप्रदेशे अराः चक्रस्य नाभिनेम्योरन्तरालवर्तिनस्तिर्यक्काष्ठविशेषाः प्रतिष्ठिता इति शेषः। दार्ष्टान्तिकमाह—प्राण इति। प्राणे संसारचक्रस्य नाभिभूते मुख्ये प्राणे सर्वं निखिलम् अग्निसूर्यादिकं प्रतिष्ठितं स्थितम्। किञ्च—ऋचः पादबद्धा मन्त्राः, यजूंषि अविवक्षितछन्दस्का मन्त्राः, सामानि गीतिसहिता ऋचः, यज्ञः ज्योतिष्टोमादिरूपः, क्षत्रं क्षत्रियत्वजातिः, ब्रह्म ब्राह्मणत्वजातिः। चकारादुक्तमनुक्तं सर्वं प्राण एवेति पूर्वेणान्वयः ॥ ६॥

किञ्च—

प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे।
तुभ्यं प्राण प्रजास्त्विमा बलिं हरन्ति यः
प्राणैः प्रतितिष्ठसि ॥ ७ ॥

प्रजापतिः विराडात्मापि त्वमेव प्राण एवेति सम्बन्धः। त्वमेव गर्भे पितुर्जठरे रेतोरूपेण मातुर्जठरे पुत्ररूपेण चरसि गच्छसि वर्तसे इति यावत्। त्वमेव प्रति प्रातिलोम्येन पिता सन् पुत्ररूपेण जायसे उत्पद्यसे। यद्वा—पितुर्मातुश्च प्रतिरूपः सन्नुत्पद्यसे। प्राण हे प्राण! प्रजास्त्विमाः। तुशब्दः एवार्थः। इमाः प्रत्यक्षाः प्रजाः चराचरात्मकाः तुभ्यं त्वदर्थमेव बलिम् उपहारं भोग्यजातं हरन्ति चक्षुरादिद्वारैः प्रापयन्ति। यः प्रसिद्धः त्वं प्राणैः चक्षुरादिभिः सह सर्वशरीरेषु प्रतितिष्ठसि वर्तसे। यद्वा—प्राणैः प्राणापानादिपञ्चभिर्वायुभेदैः प्रतितिष्ठसीत्यर्थः ॥ ७॥

इदानीमस्यैव मुख्यविभूतीराह—

देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा।
ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि ॥ ८ ॥

देवानाम् इन्द्रादीनां देवानां वह्नितमः अतिशयेन हविषां वाहकः असि त्वमेव भवसि। पितॄणां पितृलोकनिवासिनामग्निष्वात्तादीनां प्रथमा पूर्वभाविनी नान्दीमुखश्राद्धस्य यज्ञादिदेवकर्मापेक्षया पूर्वं कर्तव्यत्वात्। स्वधा स्वान् यजमानस्य पितॄन् हवीरूपेण धावति गच्छतीति स्वधा, पितृभ्यो दीयमानमन्नं तदपि त्वमसि। किञ्च—ऋषीणाम् ऋषगतौ ऋषन्ति गच्छन्ति विषयानिति ऋषयः चक्षुरादयः प्राणाश्च, तेषाम् अथर्वाङ्गिरसां अथर्वयन्ति सङ्घातं पुष्णन्तीत्यथर्वाणः। अङ्गिनो शरीरस्य रसाः सारभूताः। एवंभूतानामिन्द्रियाणां चरितं चेष्टितं सत्यम् अवितथं देहधारणादिलक्षणमपि त्वमसि त्वं भवसि। केचित्तु—ऋषीणां गौतम-भरद्वाजप्रभृतीनां चरितं चेष्टितं सत्यं धर्मादिरूपं त्वमसि। अथर्वाङ्गिरसाम् अथर्वाङ्गिरसाख्य-प्राणसाहचर्यादथर्वाङ्गिरस्त्वमिति विशेषणमित्याहुः ॥ ८ ॥

किं च—

इन्द्रस्त्वं प्राण तेजसा, रुद्रोऽसि परिरक्षिता।

त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ॥ ९ ॥

इन्द्रः परमेश्वरः त्वमसि त्वं भवसि। प्राण हे प्राण तेजसा सर्वसंहारकारिणा वीर्येण रुद्रः संहर्ता असि त्वं भवसि परिरक्षिता स्थितिकाले जगतः सर्वतो रक्षिता त्वं प्राण एव अन्तरिक्षे आकाशे चरसि वाय्वादिरूपेण गच्छसि। सूर्यः शोभनगतिमान् आदित्यः ज्योतिषां चन्द्रादीनां पतिः स्वामी त्वं प्राणोऽसि। न केवलं ज्योतिषां पतिः, किन्तु प्रजानामानन्दकार्यपि त्वमेवेत्याहुः ॥ ९ ॥

यदा त्वमभिवर्षस्यथेमाः प्राणते प्रजाः। आनन्दरूपा-

स्तिष्ठन्ति कामायान्नं भविष्यतीति ॥ १० ॥

यदा यस्मिन्काले त्वं प्राण अभिवर्षसि पर्जन्यो भूत्वा जलधारां मुञ्चसि, अथ तदा इमाः प्रत्यक्षाः प्रजाः स्थावरजङ्गमाः प्राणन्ते प्राणन्ति प्राणादिचेष्टां कुर्वन्तीत्यर्थः। यद्वा—प्राण हे प्राण ! ते तव इमा प्रजा आनन्दरूपाः सुखं प्राप्ताः तिष्ठन्ति स्थितिं प्राप्नुवन्ति। सुखरूपावस्थाने हेतुमाह—कामायेति। कामाय यथेष्टम् अन्नं व्रीहियवादिरूपं भविष्यति स्पष्टम। इति एवमभिप्रायेण ॥ १० ॥

सर्वात्मकत्वेऽप्यस्य अशुद्धिशून्यत्वमाहुः—

व्रात्यस्त्वं प्राणैक ऋषिरत्ता विश्वस्य सत्पतिः।
वयमाद्यस्य दातारः पिता त्वं मातरिश्वनः॥ ११॥

व्रात्यः उपनयनादिसंस्कारशून्यः त्वं प्रथमजत्वात् संस्कर्तुरभावादसंस्कृतोऽपि त्वं स्वभावत एव शुद्ध इत्यभिप्रायः। प्राण हे प्राण! एक ऋषिस्त्वम् आथर्वणानां प्रसिद्ध एकर्षिनामाऽग्निः सन् विश्वस्य चराचरस्य जगतः अत्ता भोक्ता उपसंहर्ता वा त्वमेवेति सम्बन्धः। सत्पतिः सतां ब्रह्मादीनां पतिः पालयिता, संश्चासौ पतिश्चेति वा सत्पतिस्त्वमेवेत्यर्थः। वयम् आकाशादयो देवाः आद्यस्य अदनीयस्य विषयजातस्य, दातारः समर्पकाः। मातरिश्व हे मातरिश्वन्, नकारलोपश्छान्दसः। नः अस्माकमाकाशादीनां त्वं प्राणः पिता जनकः। यद्वा—मातरिश्वनः सर्वजगत्कारणभूतस्य वायोः त्वं पितेत्यर्थः॥ ११॥

एवं स्तुतिं कृत्वा कार्यमाहुः—

या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि।
या च मनसि सन्तता शिवां तां कुरु मोत्क्रमीः॥ १२॥

या प्रसिद्धा ते तव तनूः अपानरूपा वाचि वागिन्द्रिये प्रतिष्ठिता वक्तृत्वेन वदनचेष्टां कुर्वन्ती, या प्रसिद्धा व्यानरूपा श्रोत्रे श्रोत्रेन्द्रिये प्रतिष्ठिता, या च प्रसिद्धा प्राणरूपा चक्षुषि चक्षुरिन्द्रिये प्रतिष्ठिता इति सर्वत्र सम्बन्धः। या च प्रसिद्धा समानरूपा ते तनूः मनसि सङ्कल्पादिव्यापारेण सन्तता सम्यग्प्राणादिरूपेण विस्तृता, स प्राणस्तच्चक्षुः स व्यानस्तच्छ्रोत्रं सोऽपानः सा वाक् स समानस्तन्मनः, इति श्रुतेः। तां तनूं शिवां शान्तां कुरु त्वं च मोत्क्रमीः उत्क्रमणं माकार्षीरित्यर्थः॥ १२॥

न वयं पूर्ववत् स्वतन्त्रबुद्धय इत्याहुः—

प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम्।
मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञां च विधेहि नः॥ १३॥

इति द्वितीयः प्रश्नः॥ २॥

प्राणस्य तव इदं नानाप्रत्ययगोचरमस्मदादिकं सर्वं जगत् वशे आयत्तं वर्तते इति शेषः। सर्वशब्दार्थमाह—त्रिदिव इति। यत्प्रसिद्धं त्रिदिवे स्वर्गे त्रिदिवोपलक्षितत्रिलोक्यां प्रतिष्ठितम् अवशिष्टं तत्सर्वं प्राणस्य वशे इति सम्बन्धः। हे प्राण, त्वमस्मान् मातेव जननीवत्

पुत्रान् रक्षस्व सर्वानर्थेभ्यः पाहि। नः अस्मभ्यं श्रीः श्रियः नानाविधा लक्ष्मीः प्रज्ञां लोकवेदविषयिणीं बुद्धिं विधेहि प्रयच्छ। चकारावनुक्तसमुच्चयार्थौ। अन्यदप्यस्माकं हितकरं प्रयच्छ इति। एवं सर्वात्मतया वागादिभिः प्राणैः स्तुत्या गमितमहिमा प्राणः प्रजापतिरत्तेत्यवधृतमित्यर्थः ॥ १३ ॥

इति द्वितीयः प्रश्नः ॥ २ ॥

—:०:—

## अथ तृतीयः प्रश्नः

एवं प्रजापतेरत्तुः सर्वात्मकत्वेन श्रेष्ठत्वेनावधारितस्य प्राणस्योपासनान्तरं विधातुं तदीयोत्पत्तिस्थित्यादिनिर्णयाय तृतीयप्रश्नमारभते--

अथ हैनं कौशल्यश्चाश्वलायनः पप्रच्छ भगवन्कुत एष प्राणो जायते। कथमायात्यस्मिञ्छरीर आत्मानं वा प्रविभज्य कथं प्रातिष्ठते केनोत्क्रमते कथं बाह्यमभिधत्ते कथमध्यात्ममिति ॥ १ ॥

अथ भार्गववैदर्भिप्रश्नानन्तरं ह प्रसिद्धम् एनं पिप्पलादं कौसल्यश्चाश्वलायनः पप्रच्छ पृष्टवान्—१. भगवन् हे भगवन्, कुतः कस्मादुपादाननिमित्तात् कारणात् एष उक्तलक्षणः प्राणः पञ्चवृत्त्यात्मकः जायते उत्पद्यते। २. कथं केन प्रकारेणास्मिन् प्रत्यक्षसिद्धे शरीरे स्थूलदेहे आयाति आगच्छति, केन निमित्तेन शरीरं गृह्णातीति प्रष्टुरभिप्रायः। ३. वा प्रश्नान्तरे, आत्मानं स्वस्वरूपं प्रविभज्य प्रकर्षेण विभागं कृत्वा कथं केन प्रकारेण प्रातिष्ठते प्रतितिष्ठति स्थितो भवति। ४. केनोत्क्रमते केन वृत्तिविशेषेण केन द्वारेण वा केन निमित्तेन वा उत्क्रमते उत्क्रामति स्थूलशरीराद् बहिर्गच्छति। ५. कथं केन प्रकारेण बाह्यम् अधिभूतम् अधिदैवं च अभिधत्ते धारयति तत्तद्रूपेणावतिष्ठते इति यावत्। ६. कथं केन प्रकारेण अध्यात्मम् आत्मानमधिकृत्य वर्तमानं देहेन्द्रियादिकम् अभिधत्ते इत्यनुषङ्गः। इति एवं पृष्टे सति ॥ १ ॥

तस्मै सहोवाचातिप्रश्नान् पृच्छसि। ब्रह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥ २ ॥

सः पिप्पलादाचार्यः ह किल तस्मै कौसल्याय उवाच उक्तवान्। अतिप्रश्नान् सूक्ष्मार्थप्रश्नविषयान्प्रष्टव्यार्थान् पृच्छसि सूक्ष्मार्थविषयकप्रश्नं करोषि, अतो ब्रह्मिष्ठोऽसीत्यतिशयेन वेदार्थवेत्ता असि भवसि।

यद्वा ब्रह्मविदसीति प्रोत्साहार्थं तं स्तौतीति भावः। इति एवं यस्मात् तस्मात् ब्रह्मिष्ठत्वात् ते तुभ्यमधिकारिणे आश्वलायनाय अहं पिप्पलाद-नामा ब्रवीमि कथयामि त्वं शृणु ॥ २ ॥

प्रथमप्रश्नोत्तरमाह —

आत्मन एष प्राणो जायते। यथैषा पुरुषे छायै-
तस्मिन्नेतदाततं मनोकृतेनायात्यस्मिञ्छरीरे ॥ ३ ॥

आत्मनः परस्मादक्षरात्पुरुषात् एषः प्रकृतः प्राणः पञ्चवृत्त्यात्मकः जायते उत्पद्यते। आत्मनो जायमानः प्राणः न वास्तव इत्यत्र दृष्टान्त-माह—यथेति। यथा लोके एषा सर्वजनप्रत्यक्षा छाया देहाज्जाता छाया प्रतिबिम्बादिरूपा पुरुषे करचरणादिमति देहे निमित्ते सति जायते, तद्वद् एतस्मिन् प्राणकारणभूते ब्रह्मणि एतत् प्राणाख्यं तत्त्व-मनृतरूपम् आततं समर्पितं न तु वास्तवमित्यर्थः। एतेन प्रतिबिम्बस्य बिम्बात् पृथक्सत्ताशून्यत्वेन बिम्बमात्राश्रितवत् प्राणस्याप्यात्ममात्रा-श्रितत्वमिति सूचितम्। कथमायात्यस्मिञ्छरीरे इति द्वितीयप्रश्नोत्तर-माह—मन इति। मनोकृतेन मनसः सङ्कल्पादिनिष्पन्नकर्मनिमित्तेन। मनोकृतेनेत्यत्र सन्धिकरणं छान्दसम्। आयाति आगच्छति। अस्मि-ञ्छरीरे स्थूलदेहे इत्यर्थः ॥ ३ ॥

आत्मानं वा प्रविभज्य कथं प्रतिष्ठते इति तृतीयप्रश्नस्य उत्तरं सदृष्टान्तमाह—

यथा सम्राडेवाधिकृतान्विनियुङ्क्ते एतान्ग्रामा-
नेतान्ग्रामानधितिष्ठस्वेत्येवमेवैष प्राणः इतरान्
प्राणान् पृथक् पृथगेव संनिधत्ते ॥ ४ ॥

यथा येन प्रकारेण सम्राडेव सार्वभौमो राजेव अधिकृतान् स्वस्वा-धिकारे स्थितान् मन्त्रिप्रभृतीन् विनियुङ्क्ते विनियोगं प्रेरणं कुरुते। विनियोगप्रकारमाह—एतानिति। एतान् ग्रामान् कुरुदेशगतान् त्वं अधितिष्ठस्व अधिष्ठानं कुरु। एतान् ग्रामान् पाञ्चालदेशप्राप्तान् त्वम् अधि-तिष्ठस्व इति एवं विनियुङ्क्ते। एवमेव उक्तदृष्टान्तवदेव एषः प्राणः मुख्यः प्राणः इतरान् स्वव्यतिरिक्तान् प्राणान् चक्षुरादीन् आत्मभेदांश्च पृथक् पृथगेव भिन्न भिन्नस्थानविशेषेष्वेव सन्निधत्ते संस्थाप-यतीत्यर्थः ॥ ४ ॥

अत्र नेत्रादीनां स्वस्वगोलकस्थानानां स्वस्वस्थाने संस्थापनं स्पष्टत्वाद्विहाय मुख्यप्राणवृत्तिभेदानां स्वस्वस्थाने संस्थापनं श्रुतिराह—

पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु समानः । एष ह्येतद्धुतमन्नं समुन्नयति तस्मादेताः सप्तार्चिषो भवन्ति ॥ ५ ॥

पायुश्चोपस्थश्च पायूपस्थं तस्मिन् पायूपस्थे अपानसंज्ञकस्ववृत्तिभेदे मूत्रपुरीषाद्यपनयनं कुर्वंस्तिष्ठतीति शेषः । तथा चक्षुःश्रोत्रे चक्षुश्च श्रोत्रं च चक्षुःश्रोत्रं तस्मिन् चक्षुःश्रोत्रे, प्राणः मुख्यप्राणः स्वयं वृत्तिं विना स्वकीयेन रूपेण मुखनासिकाभ्यां मुखं च नासिका च मुखनासिके ताभ्यां मुखनासिकाभ्यां च निर्गच्छन् स्वयं सम्राट्स्थानीयः प्रातिष्ठते प्रतितिष्ठति । मध्ये तु शरीरमध्यदेशे नाभिरूप एव समानः । अशितं पीतं च समं नयतीति समानः, प्रतितिष्ठतीत्यनुषङ्गः । समानशब्दस्यार्थमाह—एष इति । हि यस्मात् एष नाभिस्थः समानः एतत् प्रत्यक्षसिद्धमोदनादिरूपमन्नम् अदनीयं हुतं जठराग्नौ प्रक्षिप्तं समं यावता नीयमानेन तत्तत्स्थानेन्द्रियादीनां बाधा न भवति तावत् तत्तत्स्थानेन्द्रियादौ नयति प्रापयति । तस्मात् समानेन नीतादन्नात् एताः वक्ष्यमाणलक्षणाः सप्त द्वे श्रोत्रे चक्षुषी द्वे नासिके मुखं चेति सप्तसंख्याकाः मूर्धन्यद्वारस्थाः अर्चिषः अर्चिः अग्नेर्ज्वाला तद्वत् शब्दादिविषयप्रकाशकत्वादर्चिःपदेनोक्ताः शब्दादिबुद्धयः भवन्ति जायन्त इत्यर्थः ॥ ५ ॥

व्याननाडीस्थानं वक्तुं नाडीनामुत्पत्तिस्थानं हृदयमाह—

हृदि ह्येष आत्मा । अत्रैतदेकशतं नाडीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्त्यासु व्यानश्चरति ॥ ६ ॥

हि यस्मात् एषः साक्षिप्रत्यक्षः आत्मा लिङ्गात्मा प्राणः हृदि कमलाकारे मांसपिण्डे वर्तते तस्मादत्र अस्मिन् हृदये एतत् शरीरविधारकत्वेन प्रसिद्धं नाडीनां प्रधानभूतनाडीनां एकशतमेकाधिकं शतं(१०१) भवतीति शेषः । तासाम् एकोत्तरशतसंख्याकानां प्रधानभूतानां नाडीनां मध्ये एकैकस्यां एकस्या एकस्या नाड्याः शतं शतं शतशतसंख्याकाः शाखानाड्यः सन्ति । तथा च एकोत्तरशतं शतेन गुणितं(१०१×१००) जाताः शाखानाड्यः शतोत्तरदशसहस्रम्(१०१००) । शाखानाडीनामपि

प्रत्येकं भेदमाह—द्वासप्ततिरिति। एकैकस्या इत्यस्य देहलीदीपन्यायेन उत्तरत्रापि सम्बन्धः कर्तव्यः। तासामित्यस्यानुवृत्तिश्च कार्या। तथा च तासां शतोत्तरदशसहस्रनाडीनां मध्ये एकैकस्याः नाड्याः द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्ति। शाखाभ्यो निर्गताः नाड्यः प्रतिशाखानाड्यः तासां सहस्राणीति विग्रहः। तथा च शतोत्तरदशसहस्रं (१०१००) द्वासप्ततिसहस्रेण (७२०००) गुणितं जाताः प्रतिशाखानाड्यः द्वासप्ततिकोटयो द्वासप्ततिलक्षाणि च (७२७२००००००)। एवं प्रधानभूतनाडी (१०१) शाखानाडी (१०१००)प्रतिशाखानाडीनां सम्मेलने कृते जाता नाड्यो द्वासप्ततिकोटयो द्वासप्ततिलक्षाणि दशसहस्रं च (७२७२००००००) शतद्वयमेका च (७२७२१०२०१) भवन्तीति द्रष्टव्यम्। केचित्तु—एका सुषुम्णाख्या मूलभूता नाडी हृदयान्निर्गता। तस्याः स्कन्धभूता नाड्यो दश सन्ति। तासां प्रत्येकं नवनव शाखानाड्यः सन्ति। तथा च दशस्कन्धनाड्यः शाखानाडीभिर्नवतिभिः सहिताः शतसंख्याः सन्ति। तासां शतनाडीनामपि प्रत्येकं शतं शतं शाखानाड्यः सन्ति। तथा चैका मुख्या (१), स्कन्धशाखाभूताः शतसंख्याकाः (१००), तासां शाखाभूता दशसहस्रसंख्याकाः (१००००)। पुनरपि दशसहस्रसंख्याकानां नाडीनां प्रत्येकं द्वासप्ततिसहस्रसंख्यकाः नाड्यः स्युः। तथा च दशसहस्रसंख्यायाः द्वासप्ततिसहस्रसंख्यया गुणने द्वासप्ततिकोटयः (७२००००००००) भवन्ति। एवं च तासां सम्मेलने कृते जाता संख्या द्वासप्ततिकोटयो दशसहस्राणि शतमेका (७२००१०१०१) चेत्याहुः। एवं नाडीरुक्ता। व्यानस्य तत्स्थानमाह—आस्विति। आसु उक्तसंख्यासु सूक्ष्मासु नाडीषु व्यानः वीर्यवत्कर्महेतुः प्राणवृत्तिविशेषः चरति गच्छतीत्यर्थः। एवं नाडीद्वारा सर्वशरीरव्याप्यपि व्यानो वायुः विशेषतः सन्धिस्कन्धमर्मदेशेषु वर्तते इति भावः॥ ६॥

इदानीमुदानस्य स्थानं वदन् केनोत्क्रमते इति चतुर्थप्रश्नोत्तरमाह—

अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति
पापेन पापमुभाभ्यामेव मनुष्यलोकम्॥ ७॥

सर्वनाडीषु व्यानसञ्चारेणैव हेतुना एकया ऊर्ध्वगामिन्या सुषुम्णाख्यया ऊर्ध्वं ऊर्ध्वचारी उदानः ऊर्ध्वचारित्वादेव उदानसंज्ञकः प्राणवृत्तिविशेष इत्यर्थः। पुण्येन शास्त्रविहितेन कर्मणा पुण्यं पुण्यकर्मफलरूपं लोकं स्वर्गादिभोगस्थानं नयति प्रापयति। पापेन शास्त्रनिषिद्धेन

कर्मणा पापं पापकर्मफलभूतं नरकं तिर्यग्योन्यादिलक्षणं नयतीत्यनुषङ्गः। उभाभ्यामेव पुण्यपापाभ्यां समप्रधानाभ्यामेव मनुष्यलोकं सुखदुःखायतनं मानवं देहं नयतीत्यनुषङ्गः ॥ ७ ॥

इदानीं कथं बाह्यमभिधत्ते, कथमध्यात्ममित्यनयोः प्रश्नयोरुत्तरं कण्डिकाद्वयेनाह—

आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः। पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः ॥ ८ ॥

आदित्यः मण्डलाभिमानी पुरुषः ह वै प्रसिद्धः बाह्यः अध्यात्मातिरिक्तः प्राणः मुख्यप्राणः उदयति उदयं गच्छति। हि यस्मात् एकः बाह्यः प्राणः एनम् अध्यात्मकं चाक्षुषं चक्षुषि भवं प्राणवृत्तिरूपं अनुगृह्णानः प्रकाशेनानुग्रहं कुर्वन् उदयतीत्यन्वयः। पृथिव्यां भुवि या प्रसिद्धा देवता अधिष्ठात्रीरूपा सा उक्तदेवता एषा पुरुषेण प्रत्यक्षेणानुभूयमाना पुरुषस्य शिरःपाण्यादिमतः देहस्यापानं अध्यात्मकमपानसंज्ञकं अवष्टभ्य आकृष्य अध एवापकर्षणेनानुग्रहं कुर्वन्ती वर्तते इति शेषः। अन्यथा शरीरस्य गुरुत्वात्पतनं स्यादिति भावः। अन्तरा आदित्यपृथिव्योर्मध्ये यत् यः प्रसिद्धः आकाशः अवकाशदाता सः आकाशः समानः समानसंज्ञकं वृत्तिभेदमनुगृह्णानो वर्तते इत्यर्थः। अनुग्राह्यानुग्राहकयोरभेदोपचारात्स समान इत्युक्तम्। वायुः बाह्यः पवनः व्यानः व्यानवृत्तिविशेषमनुगृह्णानो वर्तत इत्यर्थः ॥ ८ ॥

तेजो ह वै उदानस्तस्मादुपशान्ततेजाः।

पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः ॥ ९ ॥

तेजः दाहप्रकाशकरं सामान्यं तेजः। ह वै प्रसिद्धः उदानः उदानाख्यवृत्तिभेदानुग्राहकः। एवमादित्यादिना रूपेण मुख्यप्राणस्य प्राणापानसमानोदानव्यानानुग्राहकत्वोक्त्या अध्यात्मं प्राणादिवृत्त्यनुग्राहकत्वमुक्तम्। आदित्याग्न्याकाशसामान्यवायुस्तेजोरूपी सन् बाह्यमधिदैवमादित्यादिकं धारयतीत्युक्तं तद्रूपेणावस्थानमेव तद्धारणं प्राणापानाद्यनुग्रहेण चक्षुराद्यनुग्रहोक्तेः तद्द्वारा तद्ग्राह्याधिभूतविधारकत्वमुक्तम्। "स प्राणस्तच्चक्षुः सोऽपानः सा वाक् स व्यानस्तच्छ्रोत्रं स समानस्तन्मनः स उदानः स वायुः" इति श्रुत्यन्तरे चक्षुरादीनां प्राणाद्यात्मत्वोक्तेः चक्षुराद्यनुग्राहकत्वोक्त्या चक्षुरादिरूपाध्यात्मविधारकत्वं

चोक्तमिति कथं बाह्यमभिधत्ते कथमध्यात्ममित्यस्योत्तरमुक्तमिति द्रष्टव्यमिति भावः। तेजस उदानवाय्वनुग्राहकत्वं व्यतिरेकप्रदर्शनेनाह—तस्मादिति। यस्मात्तेजस उदानवाय्वनुग्राहकत्वं तस्मादुपशान्ततेजाः उपशान्तम् उच्छिन्नं तेजः शरीरगतं यस्य सः पुरुषः पुनर्भवं तच्छरीरं त्यक्त्वा पुनः शरीरान्तरं प्रतिपद्यत इति शेषः। शरीरान्तरप्राप्तिकालं सप्रकारमाह—इन्द्रियैरिति। इन्द्रियैः वागादिकरणैः मनसि अन्तःकरणे सम्पद्यमानैः प्रविशद्भिरिन्द्रियैः सह शरीरान्तरं प्रतिपद्यत इति पूर्वेणान्वयः। यदेन्द्रियाणि मनसि सम्पद्यन्ते तदा मुमूर्षुर्भिद्यादित्यभिप्रायः॥ ९॥

उक्तशरीरान्तरप्राप्तिमेव उत्क्रान्तिक्रमप्रदर्शनेन स्पष्टीकर्तुमाह—

यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः।

सहात्मना यथासङ्कल्पितं लोकं नयति ॥ १०॥

यच्चित्तः यदेव देवतिर्यगादिशरीरं तदेव सम्यगिति चित्तं यस्य स यच्चित्तः इत्यर्थः। तेन देवतिर्यगादिसङ्कल्पविशिष्टेन मनसा सेन्द्रियेण सह एषः अन्तःकरणाभिमानी जीवः प्राणं मुख्यप्राणं आयाति आगच्छति मरणकाले क्षीणेन्द्रियवृत्तिः सन् मुख्यप्राणवृत्त्यैवावतिष्ठत इत्यर्थः। प्राणः पूर्वोक्तः तेजसा तेजोरूपोदानेन युक्तः संबद्धः सहात्मना भोक्तृसहितः यथासङ्कल्पितं कर्मज्ञानादिसाधनानुष्ठानकाले यथाऽभिप्रेतं लोकं कर्मविद्याफलभूतं भावि शरीरं नयति भोक्तारं प्रापयतीत्यर्थः॥ १०॥

एवं प्राणस्वरूपमभिधाय तदुपासनं विधत्ते—

य एवं विद्वान् प्राणं वेद। न हास्य प्रजा

हीयन्तेऽमृतो भवति तदेष श्लोकः॥ ११॥

यः कश्चिद् विद्वान्पुरुषः एवं यथोक्तोत्पत्त्यादिभिर्विशेषणैर्विशिष्टम् आत्मनः प्राणो जायते मनःकृताभ्यां धर्माधर्माभ्यां शरीरं गृह्णाति आत्मानं च पंचधा प्रविभज्य पायूपस्थयोरपानं स्वस्वरूपं प्राणं चक्षुःश्रोत्रयोः नाभौ समानं नाडीसमूहे व्यानम् उदानं च सुषुम्नायां सम्राडिव स्थापयति। उदानेनोत्क्रामति बाह्यैः प्राणापानसमानव्यानोदानानुग्राहकैः आदित्यपृथिव्याकाशवायुतेजोरूपैरधिदैवमादित्यादिकम् आदित्यादिकृतानुग्रहैरध्यात्मं चक्षुर्वाक्श्रोत्रमनस्त्वक्चक्षुरादिभिर्ग्राह्य-

मधिभूतं च धारयति। स एवोदानवृत्त्या भोक्त्रा च युक्तो भोक्तारं लोकान्तरं नयति स एव च वरिष्ठः प्रजापतिरत्ता चेत्येवंप्रकारेण प्राणं पंचवृत्तिरूपं वेद जानाति। ह निश्चितम्, अस्य प्राणोपासकविदुषः प्रजाः पुत्रपौत्रादिलक्षणाः न ह्रियन्ते न छिद्यन्ते न विनश्यन्तीति यावत्। प्रजा इति प्रथमाबहुवचनान्तपाठस्थाने प्रथमैकवचनान्तपाठपक्षे न हीयन्ते इत्यस्य स्थाने न हीयते इति पाठपक्षे प्रजा इत्यस्य पुत्रपौत्रादिलक्षणसन्ततिरित्यर्थः, न हीयते इत्यस्य च न नश्यतीत्यर्थः। सकामिन ऐहिकफलमुक्त्वा निष्कामस्य आमुष्मिकफलमाह—अमृतो भवतीति। पूर्वोक्तविदुषः शरीरे पतिते सति अमृतो भवति। नात्र मुख्यममृतत्वम्, किन्तु प्राणसायुज्यलक्षणममृतममरणधर्मत्वं, प्राप्नोति। तत् तत्रामृतो भवतीत्यस्मिन्नर्थे एषः वक्ष्यमाणः संक्षेपाभिधायक एव श्लोकः मन्त्रो भवतीति शेषः॥ ११॥

मन्त्रमेवाह—

उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा।
अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते।
विज्ञायामृतमश्नुत इति॥ १२॥

इति तृतीयः प्रश्नः॥ ३॥

उत्पत्तिं मुख्यप्राणस्य परमात्मनः जनिम्। अत्र सर्वेषां द्वितीयान्तानां विज्ञायेत्यनेन सम्बन्धो ज्ञेयः। आयतिं मनःकृताभ्यां धर्माधर्माभ्यां शरीरे प्राणस्यायातिमागमनम्। ह्रस्वत्वं छान्दसम्। स्थानं पायूपस्थादिस्थानेषु स्थितिम्। विभुत्वं सूर्यपृथिव्याकाशवाय्वग्निभिर्व्याप्तत्वम्। सम्राडिव स्वाम्यमिति वा। चकारादुदानेनोत्क्रमणं च गृह्यते। एवकारो भिन्नस्थानकः। पञ्चधैवेत। पंचधा इत्यनेन सम्बध्यते। तथा च सूर्यादिप्राणादिभेदः पञ्चप्रकारमेव अध्यात्मं चैव। अत्राप्येवकारो भिन्नस्थानकः प्राणस्येत्यनेन सम्बध्यते। तथा च मुख्यप्राणस्यैव यद्यपि सूर्यादयश्चक्षुरादयश्च मुख्येन प्राणेन भेदरहिताः, तथापि मुख्यप्राणस्यैवैतद् विभूतिजातम्, न त्वन्यस्य सूर्यादेः। विज्ञाय विशेषेणोक्तेन प्रकारेण ज्ञात्वा अमृतं हिरण्यगर्भेण सायुज्यं चित्तशुद्ध्यादिना ज्ञानप्राप्तिद्वारा मोक्षमिति वा अश्नुते प्राप्नोति स्वप्रकाशेनानन्दात्मरूपेण भवतीत्यभिप्रायः। पदाभ्यासः प्राणविद्यासमाप्त्यर्थः॥ १२॥

इति तृतीय प्रश्नः॥ ३॥

## अथ चतुर्थः प्रश्नः

अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिन् जाग्रति कतर एष देवः स्वप्नान् पश्यति कस्यैतत्सुखं भवति कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्तीति ॥ १ ॥

प्राणस्योत्पत्त्यादिमत्त्वेन नात्मत्वे निर्धारिते तद्व्यतिरिक्तात्मस्वरूपनिर्धारणार्थमुत्तरो ग्रन्थ आरभ्यते—अथेति । अथ कौशल्याश्वलायनप्रश्नानन्तरम् । ह प्रसिद्धमेनं पिप्पलादं सौर्यायणी सूर्यस्यापत्यं सौर्यायणिः, ईकारस्तु छान्दसः । गार्ग्यः गर्गगोत्रोत्पन्नः पप्रच्छ स्पष्टम् । १ भगवन् हे पूजावन् एतस्मिन् सर्वजनप्रत्यक्षे पुरुषे शिरःपाण्यादिमति देहे कानि करणानि स्वपन्ति स्वापं कुर्वन्ति स्वव्यापाराद्धुपरमन्त इत्यर्थः । २. कानि करणानि अस्मिन् शरीरे जाग्रति जागरणावस्थायां देहरक्षार्थं स्वव्यापारं कुर्वन्ति । ३. कतरः कार्यकरणलक्षणयोर्मध्ये कः एषः अहं पश्यामीत्यहंप्रत्ययेन प्रत्यक्षः देवः द्योतनात्मकः स्वप्नान् जाग्रद्दर्शनवासनाजन्यान् जाग्रद्वदन्तःशरीरे गजरथादिपदार्थान् पश्यति अवलोकयति । ४. उपरते च जाग्रत्स्वप्नव्यापारे कस्य करणान्यतमस्य तद्व्यतिरिक्तस्य वा एतत् सौषुप्तं सुखं विक्षेपाभावमात्रेण अनुकूलप्रत्ययवेदनीयं स्वप्रकाशमानसुखं कस्य भवतीति यावत् । ५. कस्मिन्नेकस्मिन्नाधारभूते नु वितर्के सर्वाधारस्यापि प्राणस्य जायमानत्वात् सर्वे प्राणकरणादिनिखिलाः संप्रतिष्ठिताः सम्यगेकीभूताः मधुनि रसवत् स्थिताः भवन्ति इति एवं प्रकारेण पञ्च प्रश्नान् पप्रच्छेति पूर्वेणान्वयः ॥ १ ॥

उक्तप्रश्नानामुत्तरं पिप्पलादः क्रमेणाह—

तस्मै स होवाच । यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डले एकीभवन्ति । ताः पुनःपुनरुदयतः प्रचरन्त्येवं ह वै तत्सर्वं परे देवे मनस्येकीभवति । तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशति नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥ २ ॥

तस्मै गार्ग्याय सः पिप्पलादः ह किल उवाच उक्तवान्। किमुक्त-वानित्याकाङ्क्षायां मनःप्राणव्यतिरिक्तानि सर्वकरणानि स्वपन्तीति वक्तुं तावत् दृष्टान्तमाह—यथेति। गार्ग्य यथा तेन प्रकारेण अर्कस्य सूर्यस्यास्तं गच्छतः सायंकालेऽदर्शनं व्रजतः मरीचयः किरणाः सर्वाः निखिलाः एतस्मिन् सर्वजनप्रत्यक्षे तेजोमण्डले तेजोराशिरूपे एकी-भवन्ति विवेकानर्हत्वं तेजोमण्डले एकस्वरूपतां गच्छन्ति पुनः भूयः सूर्यमण्डले एकतां गताः ताः मरीचयः पुनः भूयो द्वितीयदिवसे उद्यतः उदयं गच्छतः सूर्यस्य प्रचरन्ति सर्वासु दिक्षु संचारं कुर्वन्ति। एवं दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—एवमिति। एवं सूर्यमरीचि-वत्। ह प्रसिद्धं वै स्मर्यमाणं तत् वागादिकं मरीचिस्थानीयं सर्वं निखिलं परे उत्कृष्टे वागादिवृत्त्युत्पत्तिनिरोधनिमित्ते द्योतनवति देवे सर्वव्यवहारकारणे मनसि अन्तःकरणेऽर्कस्थानीये एकीभवति स्वप्नकाले निर्विशेषतां गच्छति। तेन वागादेर्मनस्येकीभवनेन तर्हि तस्मिन्स्वाप-काले एषः लोकप्रत्यक्षः पुरुषः देवतादिलक्षणः न शृणोति शब्द-श्रवणं न करोति। न पश्यति नावलोकयति। न जिघ्रति सुरभ्यसुरभि-लक्षणं गन्धं न गृह्णाति। न रसयते मधुरादिकं रसं न गृह्णाति। न स्पृशते शीतोष्णादिस्पर्शं न जानाति। नाभिवदते अभिवदनं संभाषणं न करोति। नादत्ते किमपि वस्तुग्रहणं न करोति। नानन्दयते उपस्थे-न्द्रियकर्मभूतमानन्दं न गृह्णाति। उपस्थेन्द्रियेण सुखं नानुभवतीति यावत्। न विसृजते पायुना मलत्यागं न करोति। नेयायते गत्यर्थस्येणो यङन्तस्यैतद्रूपं छान्दसं न गच्छतीत्यर्थः। स्वपिति शयनं करोति इति एव आचक्षते कथयन्ति विद्वांस इति शेषः। कानि स्वपन्तीत्यस्य प्रश्नस्य श्रोत्रादिज्ञानेन्द्रियाणि वागादिकर्मेन्द्रियाणि च स्वपन्तीत्युत्तरं दत्तम्॥ २॥

इदानीं कान्यस्मिन् जाग्रतीत्यस्य प्रश्नस्योत्तरमाह—

प्राणाग्नय एवैतस्मिन्पुरे जाग्रति गार्हपत्यो ह
वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्ह-
पत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः॥ ३॥

एतस्मिन् सर्वजनप्रत्यक्षे पुरे नवद्वारे देहे प्राणाग्नय एव प्राणापान-व्यानोदानसमानाख्याः पञ्चप्राणभेदा अग्नय इवाग्नयो जाग्रति जागरणं कुर्वन्ति। प्रसंगेन उपासनार्थं प्राणानामग्नित्वमुपपादयति—गार्हपत्य

इति । गार्हपत्यः गार्हपत्यसंज्ञकोऽग्निहोत्रिभिर्निरन्तरं रक्षणीयोऽग्निः । ह वै प्रसिद्धः एषः मलमूत्रापनयनकार्यगम्यः अपानः अपानाख्यः प्राणवृत्तिविशेषोऽस्तीति शेषः । व्यानः व्यानाख्यः प्राणभेदः । अन्वाहार्यपचनः अन्वाहार्यमोदनविशेषः पच्यतेऽस्मिन्निति अन्वाहार्यपचनो दक्षिणाग्निस्तद्रूपो व्यान इत्यर्थः । यथा दक्षिणाग्निर्दक्षिणकुण्डे स्थितः तथा व्यानोऽपि हृदयस्य पञ्चच्छिद्राणां मध्ये दक्षिणच्छिद्रे स्थितः । दक्षिणदिक्स्थितत्वसाम्याद्व्यानोऽन्वाहार्यपचन इति भावः । इदानीमपानस्य गार्हपत्यत्वे उक्ते प्राणस्य चाहवनीयत्वे वक्ष्यमाणे साधारणं हेतुमाह—यदिति । यत् यस्मात् गार्हपत्यात् अग्निहोत्रिणां निरन्तरस्थिररूपाद्गार्हपत्याग्नेः प्रणीयते होमकाले होमार्थमुद्धृत्य हवनकुण्डे प्रज्वाल्यते प्रकर्षेण नीयते स्थानान्तरे पृथक् क्रियते इत्यर्थः । प्रणयनात् गार्हपत्यस्थानीयादन्तःप्रविशद्वायुरूपादपानादुद्धरणात् प्राणः बहिर्गच्छद्वायुः आहवनीयः आहवनीयाऽग्निरूपः ॥ ३ ॥

यदुच्छ्वासनिःश्वासावेतावाहुती समं नयतीति
स समानः । मनो ह वाव यजमान इष्टफलमेवोदानः ।
स एनं यजमानमहरहर्ब्रह्म गमयति ॥ ४ ॥

एवमपानव्यानप्राणेषु गार्हपत्यदक्षिणाग्न्याहवनीयाख्याग्नित्रयदृष्टिं विधाय समाने होतृत्वदृष्टिं विधत्ते—यदिति । यत् यस्मात् एतौ प्रसिद्धौ उच्छ्वासनिःश्वासौ प्राणस्य मुखनासिकाभ्यां शरीराद् बहिरन्तर्निर्गमनप्रवेशरूपौ आहुती द्वित्वसंख्यासाम्यात् सायंप्रातःकाले प्रक्षेपणीयपयःप्रभृतिद्रव्यविशेषे समं उत्कर्षापकर्षरहितं यथा स्यात्तथा नयति प्रापयति इति उक्तहेतोः सः प्रसिद्धः समानः समानसंज्ञको वायुः होता ऋत्विगुच्यते इति शेषः । आहुत्योर्नेतृत्वस्योभयत्र साम्यादिति भावः । ननु प्राणाग्नय इत्यत्र सर्वेषां प्राणानामग्नित्वोक्तेः कथमत्र समानस्य होतृत्वमुच्यते इति चेन्न । अग्नित्वोक्तेः छत्रिन्यायेनाग्न्यनग्निसमुदाये लाक्षणिकत्वात् । प्रकृताग्निहोत्रस्य यजमानमाह—मन इति । मनो ह वाव प्रसिद्धमन्तःकरणमेव यजमानः । सर्वव्यापारनिमित्तत्वसाम्यात् यज्ञकर्तृयजमानस्थानीयमित्यर्थः । इदानीमुदाने इष्टफलत्वदृष्टिमाह—इष्टेति । इष्टफलमेव यागफलमेव उदानः सुषुम्णासंचारी वायुः । उदानो हि मरणद्वारा यागफलं स्वर्गं नयति, सुषुम्णायां संचारित्वात् । अतः उदानस्य फलहेतुत्वात् हेतुहेतुमतोरभेदविवक्षया

उदान इष्टफलमित्युक्तम्। सुषुप्तौ च सुषुम्णायां मनः प्रवेशयन्सर्वफलात्मकं ब्रह्म गमयतीत्याह—स इति। सः उदानः एनं पूर्वोक्तं मनोरूपं यजमानं अहरहः दिने दिने सुषुप्तिकाले ब्रह्म सत्यादिलक्षणमानन्दैकरसस्वभावं गमयति प्रापयति। प्राणादीनां यागाङ्गाग्न्यादित्वोक्तिः प्राणा जाग्रति नात्मेति त्वंपदार्थविवेकज्ञानवतः स्वप्ने यागः सुषुप्तौ यागफलमिति विवक्षितविवेकज्ञानस्तुत्यर्था इति भावः॥ ४॥

यत्पृष्टं कतर एष देवः स्वप्नान् पश्यति तस्योत्तरमाह—

अत्रैष देवः स्वप्ने महिमानमनुभवति। यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति॥ ५॥

अत्र अस्यां वागादिकरणोपरमरूपायां स्वप्नावस्थायां एषः वागादीनामुत्पत्तिलयाश्रयभूतमनआत्मको देवः। यद्यपि देवशब्देन क्षेत्रज्ञ एवोच्यते तस्यैव स्वतः स्वातन्त्र्यं न तु मनसः, तथापि तदुपाधित्वादिह मनसः देवशब्दोक्तिः। तथा च तच्चित्प्रतिबिम्बबलाद्देदीप्यमानः सन् स्वप्ने स्वप्नस्थाने महिमानं स्वस्य विषयिरूपेण गजरथगिरिनद्यादिविषयरूपेण च महत्त्वमनुभवति स्वयमेव कर्तृत्वं प्राप्य स्वप्नबलादवगच्छति। जीवस्यानुभवितृत्वे वक्तव्ये जीवोपाधिरूपमनसः तदुक्तिः स्वप्नो मनोधर्मो नात्मधर्म आत्मनि तदारोपमात्रं लोकस्येति सूचनार्था। अयमनुभवः प्रथमो न येन जाग्रदिन्द्रियापेक्षः स्यात्, किन्तु दृष्टस्यैवानुदर्शनादिरूप इत्याह—यदिति। यत् गिरिगजादिरूपं वस्तु दृष्टं जाग्रत्कालेऽनुभूतं नयनपथमागतम्। दृष्टं दृष्टमिति पदाभ्यासो वासनाप्राबल्यसूचनार्थः। अनु जाग्रत्कालीनदर्शनात्पश्चात् पश्यति अवलोकयति। श्रुतमित्यत्रापि यच्छब्दोऽनुवर्तनीयः। यत् शब्दादिविषयः श्रुतं जाग्रदवस्थायां श्रोत्रेन्द्रियेणावगतं तमेव पूर्वश्रुतमेव अर्थं विषयजातं अनु पश्चात् शृणोति श्रवणकर्तेव भवति देशदिगन्तरैश्च देशैर्गृहनदीतीरादिभिर्दिगन्तरैः प्राच्यादिदिग्भिः, चकारात्कालादिभिर्निमित्तभूतैः प्रत्यनुभूतं यत्प्रतिदिनमधिगतम्। तत्पुनः पुनः भूयो भूयः प्रत्यनुभवति प्रतिदिनं स्वप्नेष्वनुभवं करोतीत्यर्थः। यद्देशादिनिमित्तभूतैः प्रतिवारमनुभूतं तदसकृदनुभवतीत्याह—दृष्टमिति। दृष्टम् अस्मिन् जन्मनि

चक्षुषाऽवलोकितम्, अदृष्टम् जन्मान्तरे चक्षुषाऽलोकितम्। चकारौ प्रत्यनुभवतीति क्रियापदस्यानुवृत्त्यर्थौ। एवमग्रेऽपि पर्यायत्रये बोध्यम्। श्रुतं अस्मिन् जन्मनि श्रोत्रेन्द्रियेण सम्बद्धम्। अश्रुतम् जन्मान्तरे श्रोत्रेन्द्रियेण सम्बद्धम्। अनुभूतमस्मिन् जन्मनि केवलमनसाऽधिगतम्, अननुभूतं जन्मान्तरे मनसैवानुभूतम्। एतेन प्रत्यनुभूतमित्यनेन न पुनरुक्तिः, तत्रेन्द्रियद्वारकानुभवस्योक्तत्वात्। अत्यन्तादृष्टे वासनाऽनुपपत्तेः। सच्च पारमार्थिकोदकादिरूपम्, असच्च अनृतमरीच्युदकादिरूपम्। किं बहुना, उक्तानुक्तं सर्वं निखिलं पश्यति अवलोकयति। सर्वः निखिलो देवतिर्यगादिरूपो मनोवासनोपाधिः सन् सर्वकरणात्मा मनोदेवः स्वप्नान् पश्यतीत्यर्थः ॥ ५ ॥

कस्यैतत्सुखं भवतीत्यस्य प्रश्नस्योत्तरमाह—

स यदा तेजसाभिभूतो भवत्यत्रैष देवः स्वप्नान्न
पश्यत्यथ तदैतस्मिञ्छरीरे एतत्सुखं भवति ॥ ६ ॥

यदा यस्मिन्काले सः मनोरूपो देवः तेजसा नाडीगतपित्तेन ब्रह्मणा वा अभिभूतः तिरस्कृतवासनः भवति वासनाऽभिव्यञ्जककर्मोपरमात्। अत्र सर्ववासनोपरमरूपसुषुप्तौ एष देवः पूर्वोक्तमनोरूपदेवः स्वप्नान् वासनामयस्वाप्नपदार्थान् न पश्यति नावलोकयति। अथ तदा यत्प्रसिद्धमेतत् स्वरूपभूतं सुखं ब्रह्मानन्दं एतस्मिञ्छरीरे वर्तमानदेहे भवति यजमानस्थानीयस्य मनसः इति शेषः। पूर्वमपि विद्यमानं सत् विशेषविज्ञानरूपविक्षेपाभावेन निवातस्थदीपप्रभावत् सम्यक् प्रकाशते न तु तदानीमेवोत्पद्यते, तदा तज्जनकाभावादिति भावः। एतेन सुषुप्त्याश्रयोऽपि मन एव सुषुप्तावपि सूक्ष्मरूपेण मनसः स्थितत्वादित्युक्तम् ॥ ६ ॥

कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्तीत्यस्य प्रश्नस्य सदृष्टान्तेनोत्तरमाह—

स यथा सोम्य वयांसि वासोवृक्षं संप्रतिष्ठन्ते।
एवं ह वै तत्सर्वं पर आत्मनि संप्रतिष्ठते ॥ ७ ॥

सः आत्मनि सर्वसंप्रतिष्ठात्वे प्रसिद्धो दृष्टान्तः। सोम्य हे प्रियदर्शन गार्ग्य, यथा येन प्रकारेण वयांसि पक्षिणोऽनेकदिग्गता वासोवृक्षं सायंकाले निवासार्थं वृक्षं प्राप्येति शेषः। संप्रतिष्ठन्ते सम्यक् तिष्ठन्ति। एवं यथा दृष्टान्तो ह वै प्रसिद्धं तत् वक्ष्यमाणं सर्वं निखिलं परे अविद्यातत्कार्यतत्संस्कारेभ्यो व्यतिरिक्ते आत्मनि स्वयंप्रकाशानन्दस्वरूपे संप्रतिष्ठते सम्यगवतिष्ठते इत्यर्थः ॥ ७ ॥

सर्वशब्दार्थमाह—

पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च त्वक् च स्पर्शयितव्यं च वाक् च वक्तव्यश्च हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ॥ ८ ॥

पृथिवी पञ्चीकृतात्मिका स्थूला भूमिः पृथिवीमात्रा अपञ्चीकृतरूपा गन्धतन्मात्रा। एवमाप इत्यादिभूतचतुष्टयमपि पञ्चीकृतापञ्चीकृतरूपं बोध्यम्। आपो मात्रा चेत्यत्र विभक्त्यलोपश्छान्दसः। चक्षुः नेत्रेन्द्रियं द्रष्टव्यं रूपात्मकविषयः, श्रोत्रं श्रोत्रेन्द्रियं श्रोतव्यं शब्दात्मकविषयः। घ्राणं घ्राणेन्द्रियं घ्रातव्यं गन्धात्मकविषयः, रसः रसनेन्द्रियम्, रसयितव्यं रसात्मकविषयः त्वक् त्वगिन्द्रियम्, स्पर्शयितव्यं स्पर्शात्मकविषयः। वाक् वागिन्द्रियम्, वक्तव्यं वदनात्मकं कर्म, हस्तौ पाणीन्द्रियम्, आदातव्यं आदानात्मकं कर्म। उपस्थः शिश्नेन्द्रियम् आनन्दयितव्यं मैथुनरूपं कर्म। पायुः गुदेन्द्रियम्, विसर्जयितव्यं मलत्यागात्मकं कर्म। पादौ पादेन्द्रियम्, गन्तव्यं गमनात्मकं कर्म। मनः देवशब्देन पूर्वोक्तं मन्तव्यं तद्विषयः। बुद्धिः निश्चयात्मिका, बोद्धव्यं तद्विषयः। अहंकारः अभिमानरूपमन्तःकरणम्, अहंकर्तव्यं तद्विषयः। चित्तं चेतनावदन्तःकरणम्, चेतयितव्यं तद्विषयः। तेजः त्वगिन्द्रियाद्भिन्नश्चर्मगतः प्रकाशः शोभाकान्तिद्युतिनामकः, विद्योतयितव्यं तन्निर्भास्यं चर्मैव। प्राणः क्रियाशक्तिसूत्ररूपः विधारयितव्यं सन्ग्रथनीयम्। प्राणव्यतिरिक्तं निखिलं विश्वं सूत्रात्मनि प्राणे ओतं प्रोतं चेत्यर्थः। द्वाचत्वारिंशच्चकारास्तु द्वाचत्वारिंशच्छब्दैः सह पर आत्मनि संप्रतिष्ठते इति पूर्ववाक्ययानुषगङ्गार्थाः। तथा च पृथिव्यादिकं विधारयितव्यान्तम् जीवोपाधिभूतं कार्यकरणविषयजातं सर्वमुक्तम्। उपहितचिद्रूपो जीवोऽपि प्रतिबिम्बसूर्य इव सूर्य उपाधिलयात्स्वरूपभूते परात्मनि संप्रतिष्ठत इति पूर्वोक्तवाक्यान्वय इति भावः ॥ ८ ॥

न केवलं पृथिव्यादिजडप्रपञ्च एव परेऽक्षरे आत्मनि संप्रतिष्ठते, किं तूपाधिविशिष्टो जीवोऽपि तस्मिन्संप्रतिष्ठत इत्याह—

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः। स परेऽक्षरे आत्मनि संप्रतिष्ठते ॥ ९ ॥

एष हीति। हिशब्दश्चार्थे। स च परेऽक्षरे आत्मनि संप्रतिष्ठत इति वाक्यानुवृत्त्यर्थः। एषः वक्ष्यमाणलक्षणः द्रष्टा चाक्षुषज्ञानाश्रयः। स्प्रष्टा त्वाचज्ञानाश्रयः। श्रोता श्रोत्रजन्यज्ञानाश्रयः। घ्राता घ्राणजन्यज्ञानाश्रयः। रसयिता रासनज्ञानाश्रयः। मन्ता मननकर्ता। बोद्धा बोद्धृत्वाश्रयः। कर्ता कर्तृत्वाश्रयः। विज्ञानात्मा विज्ञायतेऽनेनेति विज्ञानम्, तदात्मा तत्स्वभावः विज्ञातृरूप इत्यर्थः। पुरुषः कार्यकरणोपाधिपूर्णत्वात् पुरुषः। स च जलसूर्यकादिप्रतिबिम्बस्य सूर्यादिप्रवेशवज्जगदाधारेऽशेषे परेऽक्षरे आत्मनि संप्रतिष्ठत इत्यर्थः ॥ ९ ॥

तदेकत्वविदः फलमाह—

परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते। यस्तु सोम्य स सर्वज्ञः सर्वो भवति तदेष श्लोकः ॥ १० ॥

परमेवाक्षरं वक्ष्यमाणविशेषणं प्रतिपद्यतेऽभेदेनैव प्राप्नोतीत्यर्थः। एवं पूर्वोक्तजागरणाद्यवस्थानामन्यस्य धर्मत्वोक्त्या शोधितात्मानमनूद्य तस्याक्षरब्रह्मैक्योक्तिपूर्वकं तज्ज्ञानस्य फलमाह—स य इति। अत्र सः यः पदाभ्यामधिकारिणो दुर्लभत्वं सूच्यते। यच्छब्दद्वयसार्थक्याय वाक्यभेदश्च कर्तव्य। तथा हि—वै प्रसिद्धं तत्पूर्वोक्तं सर्वाधारभूतं ब्रह्म, अच्छायम् अविद्यातमोवर्जितम्, अशरीरं नामरूपसर्वोपाधिशरीररहितम्। अलोहितं लोहितादिसर्वगुणवर्जितम्। यत एवमत एव शुभ्रं शुद्धम्, अक्षरं विनाशरहितम्, सः यः कश्चिदेव विरलो वेदयते आचार्योपदेशेन जानातीत्येकं वाक्यम्। सौम्य हे प्रियदर्शन गार्ग्य! यस्तु योऽधिकारी वेदयते सः वेत्ता सर्वज्ञः सर्वमहमस्मीति जानातीति सर्वज्ञः सन् सर्वो भवति, अस्मिन्देहे वर्तमानोऽपि सर्वरूपो भवतीति द्वितीयं वाक्यम्। तत्राद्यवाक्ये अच्छायादिविशेषणत्रयेण कारणसूक्ष्मस्थूलशरीरत्रयनिराकरणादवस्थात्रयराहित्यानुवादः। शुभ्रमिति विशेषणेन तमेव तुरीयमनूद्य तस्याक्षरसामानाधिकरण्येनैक्यमुक्तमिति विवेकः। ततः

तत्र सर्वाधाराऽच्छायादिरूपात्मज्ञानात् पुरुषार्थप्राप्तौ एष श्लोक वक्ष्यमाणमन्त्रो भवतीत्युक्तार्थसंग्राहकः ॥ १० ॥

विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि संप्रतिष्ठति यत्र। तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेशेति ॥ ११ ॥

इति चतुर्थः प्रश्नः ॥ ४ ॥

विज्ञानात्मा अन्तःकरणविशिष्टात्मा सर्वैः निखिलैः देवशब्दाभिधेयैः चक्षुरादिभिः करणैः सह प्राणाः वायवः। पञ्चभूतानि पृथिव्यादीनि स्थूलानि सूक्ष्माणि च यत्र यस्मिन्नक्षरे संप्रतिष्ठन्ति प्रविशन्ति। तत उक्तमक्षरम्। हे सोम्य यस्तु योऽधिकारी वेदयते सः सर्वज्ञः सर्वमेवाविशेश आत्मत्वेनाविशति प्रवेशं करोतीति यावत्। इतिशब्दो मन्त्रसमाप्त्यर्थः ॥ ११ ॥

इति चतुर्थः प्रश्नः ॥ ४ ॥



## अथ पञ्चमः प्रश्नः

एवं चतुर्थप्रश्नेन तत्त्वंपदार्थशोधनपूर्वकवाक्यार्थज्ञानेन उत्तमाधिकारिणः परविद्ययाऽक्षरप्राप्तिरुक्ता। अथ यस्य वैराग्यमान्द्येनाधिकारमान्द्यं तस्य ब्रह्मलोकप्राप्तिक्रमेणाक्षरप्राप्तये ओंकारोपासनमाह—

अथ हैनं शैब्यः सत्यकामः पप्रच्छ। स यो ह वै तद्भगवन्मनुष्येषु प्रयाणान्तमोंकारमभिध्यायीत। कतमं वाव स तेन लोकं जयतीति ॥ १ ॥

अथ सौर्यायणीगार्ग्यप्रश्नानन्तरम्। ह प्रसिद्धम्। एनं पिप्पलादम्। शैब्यः सत्यकामः प्रपच्छ पृष्टवान्। हे भगवन् मनुष्येषु मनुष्याणां मध्ये स यः कश्चनापि त्रैवर्णिकः ह वै अधिकारिगुणैः प्रसिद्धः तत् दुष्करं यथा स्यात्तथा प्रयाणान्तं मरणपर्यन्तं यावज्जीवमित्येतदोंकारं प्रणवम् अभिध्यायीत आभिमुख्येन चिन्तयेत्। अभित श्रद्धाभक्तिपूर्वकं ध्यानं कुर्यादिति यावत्। सः ध्याता तेन ओंकारध्यानेन कतमं वाव विद्याकर्मफलभूतेषु अनेकलोकेषु कम् एव लोकं उपासनाफलभूतं जयति प्राप्नोति। इति एवं पप्रच्छेति सम्बन्धः ॥ १ ॥

तस्मै स होवाच। एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति ॥ २ ॥

तस्मै सत्यकामशैब्याय ह प्रसिद्धः सः पिप्पलादः उवाच उक्तवान्। किमुक्तवानित्यत आह—एतदिति। सत्यकाम हे सत्यकाम शैब्य एतद्वै एष एव परं निरतिशयं सत्यादिलक्षणं ब्रह्म अपरं हिरण्यगर्भाख्यं कार्यात्मकं प्रथमजं यत्। चकाराभ्यामन्यदप्यनुक्तं तत्सर्वं एष एवेति सूचितम्। एष क इत्यत आह—यदिति। यत् यः सर्ववेदेषु प्रसिद्धः ओङ्कारः प्रणवः तस्मात् ओङ्कारस्य परापरब्रह्मरूपत्वात् विद्वान् परापरब्रह्मरूपत्वेनोङ्कारस्य ज्ञानवान्। एतेनैव सर्ववेदप्रसिद्धेनोक्तोङ्कारेणैव आयतनेन आलम्बनेन एकतरं स्वाभिप्रेतं परमपरं वा ब्रह्म अन्वेति विधिवत्कृतोपासनानन्तरं प्राप्नोतीत्यर्थः ॥ २ ॥

विधित्सितस्य त्रिमात्रोङ्कारोपासनस्य स्तुत्यर्थमेकदेशोपासनादपि विशिष्टफलं भवति, न त्वङ्गवैगुण्यप्रयुक्ता दुर्गतिरित्याह—

स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते। तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवति ॥ ३ ॥

अकार उकारो मकार इति तिस्रो मात्राः। तासामग्निवायुसूर्याः ऋषयः ब्रह्मविष्णुमहेश्वरा देवताः। अधिदैवतं भूर्भुवःस्वः स्थानानि। अध्यात्मं जाग्रत्स्वप्नसुषुप्त्याख्यानि। ऋग्यजुःसामानि वेदा इति शाखान्तरगतसकलमात्राविभागानभिज्ञः सः अभिध्याता यदि एकमात्राम् एकावयवम् अकाररूपम् अभिध्यायीत अभिध्यायेत्। सः एकमात्राऽभिध्याता तेनैव एकमात्राभिध्यानेनैव संवेदित उपास्यैकमात्रासम्यक्साक्षात्कारवान् सन् तूर्णमेव शीघ्रमेव जगत्यां पृथिव्याम् अभिसंपद्यते पृथिवीलोकं प्राप्नोतीति यावत्। तं पृथिव्यां संप्राप्तमुपासकम् ऋचः ऋग्वेदाभिमानिन्यः देवताः मनुष्यलोकं मनुष्यशरीरम् उपनयन्ते प्रापयन्ति। सः ऋगभिमानिभिर्मनुष्यशरीरं प्राप्तः। तत्र मनुष्यशरीरे तपसा स्वधर्माचरणादिना ब्रह्मचर्येण अष्टविधमैथुनवर्जनेन श्रद्धया वेदोक्तार्थे आस्तिक्यबुद्ध्या संपन्नः संयुक्तः सन् महिमानं विभूतिं मानवानन्दम् अनुभवति साक्षात्करोति राजश्रियं प्राप्नोतीति यावत् ॥ ३ ॥

अथ यदि द्विमात्रेण मनसि संपद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥ ४ ॥

अथ पुनः यदि केनचित्पुण्यवशेन द्विमात्रेण द्वितीयमात्रमुकारं अभिध्यायीतेति पूर्वेण संबंधः। तदभिध्यानं ध्येयाकारतादात्म्याभिमानपर्यन्तमित्याह—मनसीति। मनसि संपद्यते मनःपदेन मनःपरिणामस्वप्नाभिन्नतया श्रुत्यन्तरप्रसिद्ध उकारो लक्ष्यते, तस्मिन्नुकारे एकाग्रतया तदात्मभावं गच्छति। सः मनसि संपन्नो मृतः सन् अन्तरिक्षं पृथिवीद्युलोकमध्यदेशमन्तरिक्षस्थं सोमलोकं सौम्यं देहं मानुषानन्दादधिकानन्दं पित्रादिदेहं यजुर्भिः यजुरभिमानिभिः उन्नीयते प्राप्यते। स सौम्यदेहं प्राप्तः उपासकः सोमलोके चन्द्रलोके विभूतिं परमैश्वर्यम् अनुभूय साक्षात्कृत्य भुक्त्वा इति यावत्। पुनः भूयः आवर्तते भूलोकमागच्छति। स्वकर्मानुसारेण मनुष्यादिदेहं प्राप्नोतीत्यर्थः। अत्र केचित्तु स यदित्यादिर्यः पुनरित्यन्तग्रन्थो न स्तुतिपरः। किन्तु उक्तफलाय अकारे विश्वभिन्नविराडुपासनम्, उकारे तैजसाभिन्नहिरण्यगर्भोपासनं च विवक्षितम्। मनःशब्देन स्वप्नाभिमानी हिरण्यगर्भो लक्षित इत्याहुः। दीपिकाकारेण तु मात्राद्वयस्य मिलितस्योपासनं मनसि संपद्यते इत्यस्यैकाग्रतया मनसा ध्यायेदिति व्याख्यातम्॥ ४॥

एवमोङ्कारं स्तुत्वा तदुपासनमाह—

यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत। स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते। एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते। तदेतौ श्लोकौ भवतः॥ ५॥

त्रिमात्रेणेत्यादौ तृतीया द्वितीयार्थे। यः पुनः यस्तु प्रसिद्धोऽभिध्याता एतम् ओङ्कारं त्रिमात्रेण त्रिमात्रात्मकम्। ओमित्येतेन ओमित्याकारकम्। अक्षरेण अक्षरं वर्णात्मकं परं सूर्यान्तरगतं पुरुषं परिपूर्णम् अभिध्यायीत पुरुषाभेदेन चिन्तयेत् सः अभिध्याता तेजसि तेजोमण्डले सूर्ये शोभनगतिमति संपन्नः सम्यक् प्राप्तो भवतीति शेषः। अत्र सूर्यं

सम्पत्तिस्तु ध्यायमानस्य तादात्म्याभिमानः मृतस्य तूर्ध्वगतिरिति विवेकः। एवं सूर्यं प्राप्त उपासकः पापाद्विनिर्मुक्तो भवतीति दृष्टान्तपूर्वकमाह— यथेति। यथा येन प्रकारेण पादोदरः उदरमेव पादा यस्य स पादोदरः सर्पः त्वचा जीर्णकंचुकेन विनिर्मुच्यते विशेषेण निःशेषतो मुक्तो भवति। एवं तथा तेनैव प्रकारेण ह वै प्रसिद्धः सः उपासकः सूर्यं प्राप्तः पाप्मना सर्पत्वक्स्थानीयेनाऽशुद्धिरूपपापेन विनिर्मुक्तः विशेषतो निःशेषेण मुक्तो भवति। सः उपासकः पापवियुक्तः सन् सामभिः गीतिप्रधान-सामवेदाभिमानिभिः उन्नीयते ब्रह्मलोकं उत् सूर्यादूर्ध्वं ब्रह्मणो हिरण्य-गर्भस्य स्थानं सत्याख्यं नीयते प्राप्यते। सः उपासकः ब्रह्मलोकं प्राप्तः एतस्मात् सत्यलोकनिवासिनो हिरण्यगर्भात् जीवघनात् सर्वेषां जीवानामेकपिण्डीभूतात् परात् स्थावरजंगमेभ्यः उत्कृष्टात् परम् उत्कृष्टं पुरिशयं सर्वशरीरानुप्रविष्टं पुरुषं परिपूर्णपरमात्माख्यं ईक्षते त्रिमात्रो-ङ्कारं ध्यायमानः साक्षात्करोति। ब्रह्मलोके उत्पन्नब्रह्मसाक्षात्कार उपा-सको विदेहकैवल्यं प्राप्नोतीत्यर्थः। तदेतस्मिन्नुक्तार्थे एतौ वक्ष्यमाणौ श्लोकौ मन्त्रौ भवतः स्तः॥ ५॥

तत्र यः पुनरेतमित्यादिनोक्तेऽर्थे आद्यमन्त्रं योजयति—

तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योऽन्य-

सक्ता अनविप्रयुक्ताः। क्रियासु बाह्याभ्यन्तर-

मध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः॥ ६॥

तिस्रः त्रिसंख्यकाः मात्राः अकारोकारमकाराख्या ॐकारस्य मात्राः मृत्युमत्यः मृत्युर्मरणं विद्यते यासां ता मृत्युमत्यः मृत्युगोचरा इति यावत्। प्रत्येकं ब्रह्मदृष्टिं विना तदुपासकानां मृत्योरनतिक्रमात् ब्रह्मदृष्टिरुत्कर्षादिति न्यायानुरोधादोङ्कारेऽकारादिमात्रासु प्रत्येकं वा ब्रह्मदृष्टिरेव विवक्षिता। लोकेषु सामोपासीतेत्यादाविव निकृष्टे ओङ्कार एव ब्रह्मदृष्टिः कर्तव्या इति भावः। प्रयुक्ता ब्रह्मज्ञानं विना स्वातन्त्र्येण ध्यानाय प्रकर्षेणावगताः, अन्योऽन्यसक्ताः परस्परसंबद्धाः संहिता-विशिष्टा ॐइत्येवंरूपाः। अन्योऽन्यसक्तत्वमाह—अनविप्रयुक्ताः, विशेषेण एकस्मिन्नर्थे ध्यानकाले सम्बद्धाः विप्रयुक्ताः, न विप्रयुक्ताः अविप्रयुक्ता नाविप्रयुक्ताः अनविप्रयुक्ताः। विभागेनैकैकस्मिन्विषये प्रयुक्ता न भवन्ति, क्वचिदप्यप्रयुक्ता अपि न भवन्ति, किन्तु समुच्चयनियमेनैव प्रयुक्ता इति नकारद्वयस्यार्थः। ब्रह्मत्वेन दृष्टा एवेत्यवधारणलाभार्थं वा नकारद्वय-मित्यर्थः। एकस्मिन् ध्यानकाले तिसृषु क्रियासु कर्मरूपासु बाह्यभ्य-

न्तरमध्यमासु जाग्रत्स्वप्नसुषुप्तिषु। जाग्रत्पुरुषो वैश्यानराभिन्नो विश्वः। स्थूलशरीरं जागरितं च तत्स्थानम्। स्वप्नपुरुषस्तु हिरण्यगर्भाभिन्नस्तैजसस्तत्स्थानं लिङ्गशरीरं स्वप्नश्च। सुषुप्त ईश्वरात्मा प्राज्ञः तत्स्थानमव्याकृतं सुषुप्तिश्च। तेषां जाग्रदादिस्थानकपुरुषाणामकारादिमात्रातादात्म्येन ध्यानरूपासु सम्यक् प्रयुक्तासु अहं ब्रह्मास्मि एता अपि ब्रह्माभिन्ना इति सम्यक् ज्ञात्वा प्रकर्षेण कृतासु। अन्योऽन्यसक्ता अनविप्रयुक्ताः तिस्रो मात्राः प्रयुक्ताश्चेत्स्युः ज्ञः तिस्रो मात्रा इत्यादिमन्त्रोक्तोङ्कारस्य विभागवित् न कम्पते न चलतीत्यन्वयः। अनेन मन्त्रेण सर्वात्मके परब्रह्मणीश्वरे ॐ काराभेदेव ध्यानमुक्तमिति भावः॥ ६॥

स्वस्य सर्वात्मत्वेन स्वव्यतिरिक्ताभावाच्चलनं न संभवतीत्यर्थसंग्रहार्थं द्वितीयं मन्त्रं योजयति—

ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत्-
कवयो वेदयन्ते। तमोङ्कारेणैवायतनेनान्वेति
विद्वान्। यत्तच्छान्तमजरममृतमभयं परं चेति॥ ७॥

इति पञ्चमः प्रश्नः॥ ५॥

स ओङ्कारमात्रात्रयविभागवित्। ऋग्भिः पादबद्धमन्त्राभिमानिभिः एतं मनुष्यलोकम् अन्वेति अनुगच्छतीति क्रियायाः सर्वत्र संबंधः कर्तव्यः। यजुर्भिः अविवक्षितछन्दोमन्त्राभिमानिभिः अन्तरिक्षम् अन्तरिक्षस्थसोमलोकमन्वेति। यत्तत्प्रसिद्धं कवयः क्रान्तदर्शिनः मेधाविनो विद्वांस एव वेदयन्ते विजानन्ति न त्वविद्वांसः। तं ब्रह्मलोकं सामभिः गीतिप्रधानमन्त्राभिमानिभिरन्वेति। किं बहुना यत् वेदान्तप्रसिद्धं शान्तं जाग्रदादिसर्वप्रपंचविवर्जितं रागादिदोषैर्वा। अत एव अजरम् जरारहितम्। अत एव अमृतं मृत्युवर्जितम्, यस्माज्जरादिविक्रियारहितम् अतो अभयं द्वितीयाभावाद्भयशून्यम्, यस्मादेवाभयं तस्मात्परं निरतिशयम। तद्ब्रह्माक्षरम् ॐकारेणैवायतनेन ॐकाररूपगमनसाधनेनान्वेति। विद्वान् तत्रोत्पन्नब्रह्मसाक्षात्कारः। चकारादुक्तऋग्यजुःसामत्रयमपरमपि। इतिशब्दो मन्त्रद्वयसमाप्त्यर्थः॥ ७॥

इति पञ्चमः प्रश्नः॥ ५॥



## अथ षष्ठः प्रश्नः

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ। भगवन् हिरण्यनाभः कौशल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत। षोडशकलं भारद्वाज पुरुषं वेत्थ। तमहं कुमारमब्रुवम्। नाहमिमं वेद। यद्यहमिममवेदिषं कथं ते नावक्ष्यमिति। समूलो वा एष परिशुष्यति योऽनृतमभिवदति। तस्मान्नार्हाम्यनृतं वक्तुम्। स तूष्णीं रथमारुह्य प्रवव्राज तं त्वा पृच्छामि क्वासौ पुरुष इति ॥ १ ॥

पूर्वमात्मन एष प्राणो जायते इति कारणत्वेनोक्तस्य तमोङ्कारेणैवा-यतनेनान्वेतीति ओङ्कारप्राप्यत्वेन चोक्तस्य परब्रह्मणः शरीरान्तःस्थत्वोक्ति-द्वारा प्रत्यग्रूपत्वेन ज्ञानायायं प्रश्न आरभ्यते। वृत्तान्तोक्तिस्तु दुर्लभेयं विद्या, अतः तत्प्राप्त्यर्थं यत्नः कर्तव्य इति ख्यापनार्था। अथेति। अथ शैब्यसत्यकामप्रश्नानन्तरम्। ह प्रसिद्धम् एनं पिप्पलादं सुकेशा भारद्वाजः पप्रच्छ। हे भगवन् हिरण्यनाभः नामतः कौशल्यः कोशलायां जातः राजपुत्रः राज्ञस्तनयः क्षत्रियः मां भारद्वाजम् उपेत्य विधिवत्समीप-मागत्य एतं वक्ष्यमाणं प्रश्नं प्रष्टव्यार्थम् अपृच्छत् पृष्टवान्। षोडशकलं, षोडशसंख्याका कला अवयवा अविद्याऽध्यारोपिता यस्मिन् सः षोडशकलः तं पुरुषं परिपूर्णं! हे भारद्वाज वेत्थ त्वं जानीषे तं एवं पृच्छन्तं हिरण्यनाभं कुमारं राजपुत्रं पांचवर्षिकम् अहम् भारद्वाजसंज्ञको-ऽहम् अब्रुवं उक्तवानस्मि इमं षोडशकलं पुरुषं अहम् भारद्वाजनामा न वेद न जानामि। विज्ञानवता योग्याय शिष्याय विद्या वक्तव्यैवानृतं तु कदापि न वाच्यमित्याशयवानाह—यदीति। यदि पक्षान्तरे कथं-चिदहं भारद्वाज इमं उक्तपुरुषं अवेदिषं विदितवानस्मि। कथं केन प्रकारेण ते तुभ्यमत्यन्तशिष्यगुणवतेऽधिकारिणे नावक्ष्यं न कथ-यिष्यामि, तस्मान्न जानाम्येवेत्यर्थः। इति एवमब्रुवमिति पूर्वेणान्वयः। अविश्वसितमिव तमालक्ष्य तद्विश्वासार्थं पुनराह—समूल इति। यः पुरुषः अनृतं मिथ्यावचनं अभिवदति सर्वतो ब्रूते एषः मिथ्यावादी समूलो वै मूलेन शुभकर्मविद्यादिना सहित एव परिशुष्यति सर्वतः शोषमुपैतीह लोकपरलोकाभ्यां सुखशून्यो भवतीत्यर्थः। तस्मात् अनृत-वादिनोऽनिष्टप्राप्तिज्ञानवत्त्वात् अनृतम् अयथाभूतार्थं वक्तुं भाषितुं

नार्हामि अहं योग्यो न भवामि। एवं मद्वाक्यं श्रुत्वा सः राजपुत्रः तूष्णीं साध्वसाधु वेति वचनमनुक्त्वैव रथं स्वयानम् आरुह्य आरूढो भूत्वा प्रवव्राज स्वनगरं प्रति शीघ्रमेव जगाम। तं राजपुत्रेण पृष्टं षोडशकलं पुरुषं त्वा त्वां पिप्पलादं प्रति पृच्छामि अहं पृष्टवानस्मि क कुत्र प्रदेशे असौ षोडशकलः पुरुषः पुरुषशब्दाभिधेयः। इति एवं पृष्टवते ॥ १ ॥

तस्मै स होवाच इहैवान्तःशरीरे सोम्य स
पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति ॥ २ ॥

तस्मै सुकेशाय भारद्वाजाय सः पिप्पलादः ह किल उवाच उक्तवान्—हे सौम्य प्रियदर्शन इहैव अस्मिन्नेव शरीरे देहे अन्तः हृदयपुण्डरीकाकाशमध्ये सः त्वया पृष्टः पुरुषः परिपूर्णतया वर्तत इति शेषः। यस्मिन्पुरुषे एता वक्ष्यमाणाः षोडशषोडशसंख्याकाः कलाः प्राणाद्याः प्रभवन्ति उत्पद्यन्ते वर्तन्ते लीयन्ते चेत्यर्थः। इति एवमुवाचेति सम्बन्धः ॥ २ ॥

षोडशकलाभिरुपाधिभूताभिर्निष्कलः पुरुषः सकल इवाऽविद्यावशेन लक्ष्यत इति संक्षेपेणोक्तमर्थमध्यारोपापवादाभ्यां विस्तरेणैवाह—

स ईक्षाञ्चक्रे। कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि।
कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥ ३ ॥

सः षोडशकलः पुरुषः ईक्षां ईक्षणं दर्शनं चिन्तनं वा चक्रे कृतवानित्यर्थः। कथं चिन्तनम् कृतवानित्यत आह—कस्मिन्निति। कस्मिन्नेव कर्तृविशेषे उत्क्रान्ते देहादुत्क्रमणे कृते सति अहं स्वयंप्रकाशानन्दात्मा। उत्क्रान्तो भविष्यामि शरीराद्बहिर्गतः स्यां कस्मिन् वा कस्मिन्नेव शरीरे प्रतिष्ठितेऽवस्थिते सति प्रतिष्ठास्यामि अहम् प्रतिष्ठितः स्यां इति एवं विचिन्त्य ॥ ३ ॥

स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः
पृथिवीन्द्रियम्। मनोऽन्नं अन्नाद्वीर्यं तपो मन्त्राः
कर्म लोकालोकेषु च नाम च ॥ ४ ॥

प्राणस्य क्रियया आत्मनि क्रियामवलोक्य च सः उक्तषोडशकलः पुरुषः प्राणं आत्मन उत्क्रान्त्याद्युपाधिभूतं समष्टिप्राणम् असृजत उत्पा-

दितवान् प्राणात् प्राणसृष्टेरनन्तरं श्रद्धां सर्वप्राणिनां शुभकर्मप्रवृत्तिहेतु-भूतामास्तिक्यबुद्धिं असृजतेत्यनुषङ्गः। खं वायुर्ज्योतिरापः पृथिवी, अत्र वायुरित्यादिप्रथमा द्वितीयार्थे, प्राणमसृजतेति द्वितीययोपक्रमात्। आकाशादीनि स्थूलानि पंचमहाभूतानि असृजतेत्यनुषंगः। इन्द्रियम्= चक्षुरादिज्ञानेन्द्रियपंचकं वागादिकर्मेन्द्रियपंचकं च मनः अन्तःकरणं चासृजत। इदमत्र बोध्यम्—प्राणस्त्वपंचीकृतसृष्ट्यनन्तरं सृष्टः। इन्द्रियमनसोरपंचीकृतभूतकार्यत्वेऽपि स्थूलभूतकार्यशरीराधिष्ठितयोरेव स्वकार्यक्षमत्वात् स्थूलभूतानन्तरत्वोक्तिरिति। अन्नं व्रीहियवादिलक्षणम्। अन्नात् अद्यमानाद् व्रीहियवादिरूपात् वीर्यं शरीरेन्द्रियसामर्थ्यं सर्व-कर्मप्रवृत्तिसाधनभूतम्। ततः तपः चित्तविशुद्धिसाधनं शरीरशोषणादि-रूपम्। ततश्च मन्त्राः कर्मसाधनभूता ऋग्यजुः सामाथर्वाङ्गिरसः। तत कर्म अग्निहोत्रादिलक्षणम्। ततो लोकाः कर्मफलभूताः सोमलोकाद्या। लोकेषु चोक्तसोमलोकादिषु सृष्टानां प्राणिनां नाम च, देवदत्त-यज्ञ-दत्त इत्यादिलक्षणं चासृजतेत्यर्थः ॥ ४ ॥

एवमात्मप्रतिपत्त्यर्थमध्यारोपमुक्त्वा तदपवादं दृष्टान्तपूर्वकमाह—

स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते। एव-मेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते। स एषोऽकलोऽमृतो भवति, तदेष श्लोकः ॥ ५ ॥

सः दृष्टांतः यथा येन प्रकारेण इमाः प्रत्यक्षाः नद्यः गंगायमुनाद्याः सरितः स्यंदमानाः चलत्यः समुद्रायणाः समुद्रे अयनं गमनं यासां ताः तथा। समुद्रं जलनिधिं प्राप्य गत्वा अस्तम् अदर्शनं गच्छंति प्राप्नु-वंति। तासां समुद्रेऽस्तंगतानां नामरूपे नाम गंगादिकं रूपं शुक्लनीला-दिकम्, नाम च रूपं च नामरूपे, भिद्येते नश्यतः। यद्यप्यस्तंशब्देन नाशो नाभिधीयते, तथापि भेदकोपाधिनामरूपयोर्नाशेऽपि स्वरूपस्य समुद्ररूपेण विद्यमानत्वात्। एवं भेदकोपाधिनामरूपयोर्नाशानन्तरं समुद्र इत्येवं समुद्र इत्याकारः शब्दः। प्रोच्यते प्रकर्षेण कथ्यते, जनै-रिति शेषः। दृष्टांतमुक्त्वा दार्ष्टान्तमाह—एवमिति। एवमेव उक्त-दृष्टान्तवदेव अस्य प्रकृतस्य पुरुषस्य परिद्रष्टुः सर्वतः साक्षिणः इमाः

पूर्वोक्ताः षोडशकलाः प्राणाद्या नामांताः षोडशसंख्याकाः । पुरुषायणाः पुरुषोऽयनं यासां ताः तथा । पुरुषं प्राप्य पुरुषात्मभावमुपगम्य । अस्तं गच्छंति नामरूपतिरस्कारेणादर्शनं प्राप्नुवंति । आसां प्राणादिकलानाम्, नामरूपे नाम प्राणाद्याख्या रूपं प्राणाद्याकारविशेषः, ते भिद्येते नश्यतः । पुरुष इत्येवं इत्याकारक एवशब्दः प्रोच्यते ब्रह्मविद्भिरिति शेषः । असमुद्रजातानामपि नदीनां समुद्रे लयो दृष्टः । किमुत पुरुषजानां कलानां पुरुषे लय इति कैमुतिकन्यायसूचनार्थश्चकारः । सः उक्तकलोपादानभूतः एषः बुद्धेर्द्रष्टा अकलः वस्तुतः कलारहितः । अकलत्वादेव अमृतः अविद्याकृतकलानिमित्तकमरणरहितो भवतीति स्पष्टम् । तत् तत्र पूर्वोक्तषोडशकलाऽऽधारभूते पुरुषे एषः वक्ष्यमाणः श्लोकः मंत्रः ॥ ५ ॥

अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः ।

तं वेद्यं पुरुषं वेदयथा मा वो मृत्युः परिव्यथा इति ॥ ६ ॥

रथनाभौ रथचक्रस्य मध्यप्रदेशे वर्तुलकाष्ठविशेषे अरा इव तिर्यक्काष्ठविशेषाः यथा प्रवेशितास्तदाश्रया भवंति, तथा कलाः प्राणाद्याः यस्मिन् पुरुषे प्रतिष्ठिता उत्पत्तिस्थितिलयकालेषु स्थिताः भवन्ति । तं कलाऽऽधारभूतम् । पुरुषं पूर्णत्वात्पुरि शयनाद्वा पुरुषम्, वेद्यं वेदनीयं वेदयथा हे शिष्याः मद्वचनात् यूयं विजानीथाः । वेदयथा इत्यत्र दीर्घत्वं छान्दसम् । वो युष्मान् मृत्युः विपरीतज्ञानरूपः मरणं वा मा परिव्यथाः मा परिव्यथयतु न व्यथयत्विति यावत् । न चेद्विज्ञायेत पुरुषो मृत्युनिमित्तां व्यथामापन्ना दुःखिन एव यूयं स्थ । अतस्तन्मा भूद्युष्माकमित्यभिप्रायः । इतिशब्दो मंत्रसमाप्तौ ॥ ६ ॥

इदानीं शिष्याणां कृतार्थताबुद्धिजननार्थं श्रुतिराह—

ता ँ होवाचैतावदेवाहमेतत्परं ब्रह्म वेद ।

न तः परमस्तीति ॥ ७ ॥

तान् सुकेशाभारद्वाजप्रभृतीन् षट्संख्याकान् शिष्यान् ह किल उवाच गुरुरुक्तवान्—एतावदेव एतावन्मात्रमेव एतत् वेद्यं परं ब्रह्म सर्वोत्कृष्टं सर्वाधिष्ठानभूतम् अहं पिप्पलादाख्यः वेद जानामि, अतः अस्मादुक्तार्थात् परम् अधिकतरं वेदितव्यं नास्ति न विद्यते इति एवं पिप्पलादेनोक्ते सति ॥ ७ ॥

ते तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति। नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥

भद्रं कर्णेभिरिति शान्तिः ॥ २ ॥

इति प्रश्नोपनिषदि षष्ठः प्रश्नः ॥ ६ ॥

ते सुकेशाभारद्वाजादयः शिष्याः तं पिप्पलादगुरुं अर्चयंतः शिरसा प्रणिपातेन पादयोः पुष्पांजलिप्रक्षेपेण पूजयंतः एवमाहुः—त्वं गुरुः हि निश्चयेन नोऽस्माकं पिता ब्रह्मशरीरस्य विद्याजनयितृत्वाज्जनकः। पितृत्वोपपत्तिमाहुः—यः त्वं गुरुः अस्माकं शिष्याणां महोदधेरिव अविद्यायाः विपरीतज्ञानाज्जन्मजरामरणरोगदुःखादिग्रहादविद्यामहोदधेः परं अपुनरावृत्तिलक्षणं पारं मोक्षाख्यं तारयसि विद्याप्लवेन प्रापयसि। इति एवमुक्तप्रकारेण हि त्वं नः पिता इत्यर्थः। उक्तं च—"जनकश्चोपनेता च यश्च विद्यां प्रयच्छति। अन्नदाता भयत्राता पंचैते पितरः स्मृताः ॥" इति स्मृतेः। परमर्षिभ्यः ब्रह्मविद्यासंप्रदायकर्तृभ्यः नमः नमस्कारोऽस्तु। नमः परमर्षिभ्य इत्यभ्यासः आदरार्थः समाप्त्यर्थो वा ॥ ८ ॥

इति श्रीमदुदासीनवर्यामरदासपदपद्ममकरन्दतृप्तमानसेन
श्रीमदमरदासाख्येन विदुषा विरचिता प्रश्नोप-
निषद्व्याख्या उपनिषन्मणिप्रभा
समाप्ता।

—:०:—



ॐ

# मुण्डकोपनिषद्

## मणिप्रभाव्याख्यासमलंकृता

तत्सद् ब्रह्मणे नमः

वेदांतप्रतिपाद्यं यत्परं ब्रह्म सनातनम् ।

सत्यं ज्ञानमनन्तं तन्नमामि कृष्णविग्रहम् ॥ १ ॥

यो गुरुर्हृदयस्थो मेऽकरोदज्ञाननाशनम् ।

व्याख्यास्ये मुण्डकं तस्मै नत्वा ध्यायंश्च तद्गिरः ॥ २ ॥

शिरसि त्वनलं धृत्वाऽध्येयत्वादधिकारिभिः ।

नाम्ना मुण्डकमित्युक्तमाथर्वणश्रुतेः शिरः ॥ ३ ॥

### प्रथममुण्डके प्रथमः खण्डः

अथाथर्वणवेदे शौनकीयशाखायां मुण्डकोपनिषत् । यस्या विषयोऽज्ञातं सत् ब्रह्म, तदेव ज्ञातं सत् प्रयोजनम, संबंधस्तु प्रतिपाद्यप्रतिपादकभावरूपः, साधनचतुष्टयसंपन्नोऽधिकारीत्यनुबंधचतुष्टयं प्रेक्षावतां प्रवृत्त्यंगभूतं तावत्सिद्धम् । उपनिषच्छब्देन ब्रह्मविद्योच्यते । ग्रंथे तु ब्रह्मविद्याप्रतिपादकत्वाल्लाक्षणिक उपनिषच्छब्दप्रयोग इति । तत्रैवं ब्रह्मविद्यास्तुत्यर्थं ब्रह्मविद्यासंप्रदायकर्तृकथनात्मकमितिहासमाह—

ॐ ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता

भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा-

मथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥

ब्रह्मा चतुर्मुखः देवानामिन्द्रादीनां मध्ये प्रथमः गुणैः प्रधानम् । यद्वा देवानां प्रथमः देवानामुत्पत्तेः प्रागेव संबभूव मायोपाधिकाद् ब्रह्मणः संजातः । कीदृशो ब्रह्मा विश्वस्य सर्वप्राणिजातस्य कर्ता उत्पादकः । पुनः कीदृशः भुवनस्य भूरादिलोकस्य भूरादिलोकस्थप्राणिजातस्य वा गोप्ता पालकः । सः ब्रह्मा अथर्वाय अथर्वनाम्ने ज्येष्ठपुत्राय प्रथमो-

त्पन्नात्मजाय ब्रह्मविद्यां वक्ष्यमाणलक्षणां ब्रह्मात्मविषयां विद्यां प्राह कथितवान्। कीदृशीं सर्वविद्याप्रतिष्ठां सर्वविद्यासु श्रेष्ठां यस्यां लब्धायामितरविद्यास्वपेक्षाभाव इति भावः ॥ १ ॥

अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचाङ्गिरे
ब्रह्मविद्याम्। स भारद्वाजाय सत्यवाहाय प्राह,
भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥

ब्रह्मा हिरण्यगर्भः यां ब्रह्मविद्यां अथर्वणे अथर्वन्नामकाय स्वशिष्याय प्रवदेत छंदसि कालस्यानियमाद्वदत्। किंच अथर्वण इति नान्तोऽत्राथर्वशब्दः। तां ब्रह्मणो लब्धां ब्रह्मविद्यां अथर्वा अङ्गिरे अङ्गिरिति रकारांतनाम्ने स्वशिष्याय पुरा पूर्वं उवाच उक्तवान्। सः अङ्गिर्नामकः भारद्वाजाय भारद्वाजगोत्राय सत्यवाहाय सत्यवाहनामकाय स्वशिष्याय प्राह उक्तवान् ब्रह्मविद्यामित्यनुषङ्गः। भारद्वाजो अङ्गिरसे अङ्गिरसिति सांतनाम्ने स्वशिष्याय परावरां परस्मादवरेण प्राप्तां ब्रह्मविद्यां प्राहेत्यनुषंगः ॥ २ ॥

अङ्गिरसः केन ब्रह्मविद्या प्राप्तेत्यत आह—

शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः
पप्रच्छ। कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं
भवतीति ॥ ३ ॥

ह वै इति निपातौ वृत्तार्थस्मरणार्थौ। शौनकः शुनकनामकस्य ऋषेः पुत्रः महाशालो बह्वन्नदानशालित्वेन महागृहस्थः अङ्गिरसं भारद्वाजस्य शिष्यं 'समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमभिगच्छेदि'-त्यादिश्रुत्युक्तलक्षणवंतं विधिवदुपसन्नः समित्प्रभृत्युपायनहस्त उपगतः सन् पप्रच्छ, अंगिरसं पृष्टवान्। किमपृच्छदित्यत आह—कस्मिन्निति। भगवो हे भगवन् कस्मिन्नु कस्मिन्नेव वस्तुनि विज्ञाते विशेषेणावगते सति सर्वं सकलं इदं कार्यजातं विज्ञातं विशेषेणावगतं भवति। सर्वविज्ञानहेतुविज्ञानकं यदेकं वस्तु तन्मह्यं वक्तव्यमिति प्रष्टुरभिप्रायः ॥ ३ ॥

एवं शौनकेन पृष्टोऽङ्गिराः शौनकेन पृष्टं वस्तुं तज्ज्ञानसाधनभूतं विद्याद्वयं तावदाह—

तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म
यद्ब्रह्मविदो वदन्ति परा चापरा च ॥ ४ ॥

सः अङ्गिराः तस्मै शौनकाय ह लिकोवाच उक्तवान् । किमुक्तवानित्यत वाह—द्वे इति । द्वे द्विसंख्याके विद्ये वक्ष्यमाणलक्षणे वेदितव्ये मुमुक्षुणा संपादनीये इति । एवं ह स्म इति निपातौ निश्चयार्थकौ । यद्ब्रह्मविदो ये वेदार्थविदो वदन्ति कथयन्ति । के वे द्वे विद्ये इत्यत आह—परा चेति । परा परमात्मविषया फलरूपा, अपरा च कर्मानुष्ठानद्वारा चित्तशुद्धिहेतुत्वेन परविद्योपकारकत्वात्साधनभूताऽवरेत्यर्थः ॥ ४ ॥

एवमुक्तविद्ययोर्मध्ये परविद्याप्राप्त्युपायभूतामपरविद्यां तावदाह—

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः

शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिष-

मिति । अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥

तत्र तयोर्द्वयोर्मध्ये अपरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः इति चत्वारो वेदाः । शिक्षा याज्ञवल्क्यादिकृतं शिक्षाशास्त्रम् । कल्पः कात्यायनादिप्रणीतं कल्पशास्त्रम् । व्याकरणं पाणिन्यादिनिर्मितं व्याकरणशास्त्रम् । निरुक्तं यास्कादिमुनिविरचितम् । छंदः पिंगलाचार्यनिर्मितं छन्दःशास्त्रम् । ज्योतिषं सूर्यविरचितं ज्योतिःशास्त्रम् । यद्यपि 'रविः शुक्रः पराशरश्च भृगुर्गर्गोऽथ जैमिनिः । षडेते ज्योतिषाचार्या मुनिभिः परिकीर्तिताः' इत्यत्र षट् ज्योतिःशास्त्रस्य कर्तार उक्ताः । 'सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः । कश्यपो नारदो गर्गो मरीचिर्मनुरंगिराः ॥ पौलिः शुक्रश्च च्यवनो यवनो भृगुशौनकौ । एते अष्टादश प्रोक्ता ज्योतिःशास्त्रप्रवर्तकाः ॥' इति हायनरत्नग्रन्थे कश्यपेनाष्टादश ज्योतिःशास्त्रस्याचार्या उक्ताः । तथापि सर्वमतेऽस्य प्रथमकर्ता सूर्य एव उक्त इति बोध्यम् । एवं शिक्षादिषडंगैः सह वेदार्थज्ञानरूपा उपनीताधिकारिकाऽपरा विद्येत्यर्थः । अथ इदानीं परा ब्रह्मधीरूपा विरक्ताधिकारिका उच्यते यया परविद्यया तत् वक्ष्यमाणविशेषणम् अक्षरं ब्रह्म अधिगम्यते प्राप्यते ॥ ५ ॥

उक्तमक्षरं विशिनष्टि—

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तद-

पाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तद-

व्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥

यत् वेदान्तशास्त्रप्रसिद्धं ब्रह्म तदद्रेश्यं अदृश्यम्, सर्वज्ञानेन्द्रियागम्यमित्यर्थः। अग्राह्यं कर्मेन्द्रियग्रहणायोग्यम्, अगोत्रं काश्यपाद्यन्वयरहितम्, अवर्णं वर्णाः द्रव्यधर्माः स्थूलत्वादयः शुक्लत्वादयश्च तद्रहितम्। अचक्षुःश्रोत्रं चक्षुःश्रोत्रादिज्ञानेन्द्रियरहितं तत् प्रकृतं ब्रह्म अपाणिपादं पाणिपादादि कर्मेन्द्रियशून्यम्। नित्यं नाशरहितं विभुं विविधप्राणिभेदेन भवतीति विभुस्तं सर्वगतं व्यापकं सुसूक्ष्मं स्थूलत्वहेतुशब्दादिगुणरहितत्वादतिसूक्ष्मं तत् प्रकृतं ब्रह्म अव्ययं न व्येतीत्यव्ययमपक्षयरहितं यत् एवंलक्षणं भूतयोनिं स्थावरजंगमानां कारणभूतं धीरा विवेकिनो यया विद्यया परिपश्यन्ति आत्मरूपेण विजानन्ति सा परेत्यर्थः॥ ६॥

भूतयोनिमित्युक्तं जगत्कारणत्वं दृष्टान्तत्रयेण स्फुटीकरणाय तत्र सहकारिणमन्तरेण ब्रह्मणो जगदुपादानत्वे प्रथमं दृष्टान्तमाह—

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति। यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह विश्वम्॥ ७॥

यथा येन प्रकारेण ऊर्णनाभिः लूताकीटः सृजते परापेक्ष एव स्वशरीरात् तन्तून्बहिः प्रसारयति च पुनः गृह्णते गृह्णाति प्रसारिततंतून्स्वस्मिन्नुपसंहरति। कार्यस्योपादानाभिन्नत्वेनोत्पत्तौ दृष्टान्तमाह—यथा च पृथिव्यां भूमितः ओषधयो व्रीहियवादिरूपाः स्वाभिन्नाः सम्भवन्ति समुत्पद्यन्ते। ननु भवत्वचेतनायाः पृथिव्या अचेतनानामोषधीनामुत्पत्तिः, चेतनाद् ब्रह्मणः कथं जडकार्यस्योत्पत्तिरिति शंकानिरासाय दृष्टान्तान्तरमाह—यथेति। यथा सतः जीवतः पुरुषाच्चेतत्वेन प्रसिद्धान्नरात् केशलोमानि केशाः शिरसि जातबालविशेषाः लोमानि शिरसोऽधोजातानि केशसहितानि लोमानि केशलोमानि अचेतनानि संभवन्तीत्यनुषंगः। तथा तद्वत् अक्षरात् ब्रह्मणः इह सृष्टिकाले विश्वं निखिलं जगत् सम्भवति जायते॥ ७॥

विश्वोत्पत्तिक्रममाह—

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।
अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्॥ ८॥

ब्रह्माक्षराख्यं तपसा स्रष्टव्यप्रपंचस्यालोचनात्मकेन चीयते एकोऽहं बहु स्यामितीच्छावद् भवति। ततः इच्छावतो ब्रह्मणः अन्नं ईश्वरोपाधि-

भूतमव्याकृतं अभिजायते व्याचिकीर्षितावस्थामापद्यते, इच्छोत्पत्त्या तत्रोत्पत्त्युपचार इति भावः। अन्नात् अव्याकृतात् प्राणः हिरण्यगर्भोऽभिजायते इत्युत्तरत्राप्यनुषङ्गः। प्राणात् मनः संकल्पविकल्पात्मकं समष्टिरूपमभिजायते। उक्तलक्षणान्मनसः सत्यं स्थूलभूतपञ्चकमभिजायते। स्थूलभूतपञ्चकात् अण्डोत्पत्तिक्रमेण लोकाः भूरादयोऽभिजायन्ते। तेषु लोकेषु मनुष्यादिक्रमेण कर्माणि वेदोक्ताग्निहोत्रादिलक्षणानि अभिजायंते। कर्मसु च उक्तकर्मभ्यश्च अमृतं भोगादृतेऽक्षयत्वादमृतपदेनोक्तं कर्मफलं अभिजायते इत्यर्थः। अत्र सृष्टौ तात्पर्याभावान्नोक्तक्रमस्यानुपपत्तिरिति भावः॥ ८॥

उक्तमेवार्थमनुवदन्नुपसंहरति—

य: सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः।
तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते॥ ९॥

इति प्रथममुण्डके प्रथमः खण्ड ॥ १॥

यः अक्षराख्यः परमात्मा सर्वज्ञः सामान्यरूपेण सर्ववेत्ता, सर्ववित् विशेषरूपेण सर्ववेत्ता। यस्य उक्ताक्षरस्य ज्ञानमयं सृज्यमानसर्वपदार्थाभिज्ञत्वलक्षणमेव तप, न तु प्रजापतिव्रतात्मकतप इव क्लेशरूपम्। तस्मात् उक्तसर्वज्ञात् एतत् पूर्वोक्तकार्यरूपं ब्रह्म हिरण्यगर्भाख्यं जायते उत्पद्यते। किञ्च नाम देवदत्तयज्ञदत्तादिलक्षणं रूपं शुक्लनीलादि अन्नं व्रीहियवादिलक्षणं च जायते॥ ९॥

इति प्रथममुण्डके प्रथमखण्डव्याख्या॥ १॥

—:०:—

अथ प्रथममुण्डके द्वितीयः खण्डः

पूर्वोक्तयोः परापरविद्ययोर्विषयौ संसारमोक्षाख्यौ वक्तुमुत्तरग्रंथ आरभ्यते। तत्र संसारस्वरूपज्ञानं विना वैराग्यासंभवाद्वैराग्यार्थमपरविद्याविषयसंसारस्य स्वरूपं तावदाह—

तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यं-
स्तानि त्रेतायां बहुधा सन्ततानि। तान्याचरथ
नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके॥ १॥

तदेतत् वक्ष्यमाणलक्षणं सत्यं फलाव्यभिचारि। किं तदेतदित्यत आह—मन्त्रेष्विति। कवयो वसिष्ठादयो विद्वांसः यानि कर्माणि अग्नि-

होत्रादीनि मंत्रेषु ऋगादिवेदेषु अपश्यन् दृष्टवन्तः तानि वेदेन विहितानि ऋषिभिर्दृष्टानि च कर्माणि त्रेतायां ऋग्यजुःसामलक्षणे वेदत्रये बहुधा अनेकप्रकारं सन्ततानि विस्तृतानि । यद्वा—त्रेतायां त्रेतायुगे बहुधा सन्ततानि कर्मिभिः क्रियमाणानि अतो नियतं नित्यं सत्यकामाः अवश्यंभावित्वात् सत्यशब्दवाच्यकर्मफलेच्छावन्तः संतः यूयं तानि वेदोक्तकर्माणि आचरथ आकुरुथ । सुकृतस्य लोके, लोक्यते भुज्यते इति लोकः कर्मफलं निमित्ते सप्तमी । तथा च सुकृतस्य स्वयंकृतस्य कर्मणः फलप्राप्तये वः युष्माकं एषः सम्यगाहुतिप्रक्षेपादिरूपकर्मकलापः पन्थाः फलप्राप्तिसाधनमित्यर्थः ॥ १ ॥

उक्तकर्माणि विशेषतो दर्शयितुं सर्वकर्मणां प्राथम्यादग्निहोत्रं तावदाह—

यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने ।

तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेत् ॥ २ ॥

यदा यस्मिन्काले हव्यवाहने अग्नौ समिद्धे इंधनैः सम्यक् प्रज्वलिते सति अर्चिः अग्निशिखा लेलायते चलति तदा अर्चिःप्रचलनकाले आज्यभागौ आज्यभागस्थानयोराहवनीयस्य दक्षिणोत्तरपार्श्वयोः अन्तरेण मध्ये आहुतीः हवनीयद्रव्यविशेषान् प्रतिपादयेत् सूर्यादिदेवतोद्देशेन प्रक्षिपेत् । यद्यप्यग्निहोत्रे आज्यभागौ न स्तस्तथापि दर्शपूर्णमासे आहवनीयस्य दक्षिणोत्तरपार्श्वयोराज्यभागाविज्येते, अग्नये स्वाहेति दर्शादौ तयोः सत्त्वात्तदभिप्रायेण तदुक्तिः । यद्वा आज्यभागावन्तरेण आज्यभागौ विनेत्यर्थः । यद्यपि सूर्याय स्वाहा, प्रजापतये स्वाहेति प्रातःकाले अग्नये स्वाहा, प्रजापतये स्वाहेति सायंकाले इत्येकस्मिन्नहन्यग्निहोत्राहुत्योर्द्वयं प्रसिद्धं तथाप्यनेकदिनप्रयोगापेक्षयाऽऽहुतीरिति बहुवचनं बोध्यम् ॥ २ ॥

एवमुक्त्वाऽग्निहोत्रस्य सम्यक्करणं दुष्करं विघ्नबाहुल्यं चेति वैराग्यायाह—

यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमना-

ग्रयणमतिथिवर्जितं च अहुतमवैश्वदेवमविधिना

हुतमश्रद्धया हुतमासप्तमांस्तस्य लोकान्हिनस्ति ॥ ३ ॥

यस्याग्निहोत्रिणः अग्निहोत्रं सायंप्रातराहुतिरूपं कर्म अदर्शं दर्शाख्य-

कर्मरहितम्। अपौर्णमासं पौर्णमासकर्मरहितम्। अचातुर्मास्यं चातुर्मास्यरूपकर्मणा वर्जितम्। अनाग्रयणं शरदृतौ वसंतऋतौ च नूतनान्नेन क्रियमाणं कर्म आग्रयणं तद्रहितम्। अतिथिवर्जितं प्रतिदिनमतिथिपूजनरहितम्। अहुतं स्वयं चाग्निहोत्रकाले सम्यक् न हुतं न कृतम्। अवैश्वदेवं वैश्वदेवसंज्ञककर्महीनम्। अविधिना हुतं शास्त्रविध्यनुसारेण हवनरहितम्। अश्रद्धया हुतं श्रद्धा प्रकृतकर्मण्यास्तिक्यबुद्धिः तां विना हुतम्। तस्य अग्निहोत्रिणः ईदृशमुक्तविशेषणमग्निहोत्रं आसप्तमान् लोकान् भूरादिसत्यांतान् सप्तलोकान् हिनस्ति नाशयति असम्यक्कृतेनाग्निहोत्रादिकर्मणा भूरादिसप्तलोकानामप्राप्तिरेव तेषां हननमिति भावः। यद्वा—पितृपितामहप्रपितामहाः पुत्रपौत्रप्रपौत्राः स्वात्मना सह सप्त, तान् हिनस्ति दुर्गतिं प्रापयतीत्यर्थः। यद्यपि दर्शादेरग्निहोत्राङ्गत्वं नास्ति तथाप्यवश्यानुष्ठेयत्वगुणयोगादंगत्वोपचारः ॥ ३ ॥

वक्ष्यमाणमन्त्रे विशेषविधित्सयाऽग्नेः सप्तजिह्वा अनुवदति—

काली कराली च मनोजवा च सुलोहिता या
च सुधूम्रवर्णा। विस्फुलिङ्गिनी विश्वरुची च
देवी लेलायमाना इति सप्तजिह्वाः ॥ ४ ॥

काली कराली मनोजवा च सुलोहिता सुधूम्रवर्णा विस्फुलिङ्गिनी विश्वरुची चेति सप्त अग्नेराहुतिग्रसनार्था जिह्वाः प्रोक्ताः। कथंभूताः लेलायमानाः प्रचलितस्वभावाः। देवीति विश्वरुच्या विशेषणम्, द्योतमाना इति तदर्थः ॥ ४ ॥

उक्तसप्तजिह्वानां प्रयोजनमाह—

एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो
ह्याददायन्। तं नयन्त्येताः सूर्यस्य रश्मयो यत्र
देवानां पतिरेकोऽधिवासः ॥ ५ ॥

एतेषु उक्ताग्निजिह्वाविशेषेषु भ्राजमानेषु दीप्यमानेषु यः अग्निहोत्री यथाकालं कर्म समयानतिक्रमणपूर्वकं चरते चरति अग्निहोत्रादिकं कर्म करोति, एताः यजमानेनाग्निजिह्वासु प्रक्षिप्ताः आहुतयः तं उक्तकर्मिणं आददायन् आददानाः सूर्यस्य रश्मयः सूर्यरश्मिभिस्तादात्म्यापन्नाः नयन्ति प्रापयन्ति। कुत्र नयन्तीत्यत आह—यत्रेति। यत्र यस्मिन्स्वर्गे देवानां पतिः इन्द्रः वर्तते इति शेषः। कीदृश इन्द्रः एकः ऐश्वर्येण सजातीयशून्यः। पुनः कीदृश इन्द्रः अधिवासः सर्वस्वर्गवासिनामुपरि वर्तमानः, सर्वस्वर्गवासिनियन्ता इत्यर्थः ॥ ५ ॥

सूर्यस्य रश्मिभिर्यजमानं कथं नयन्तीत्यत आह—

एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभि-
र्यजमानं वहन्ति । प्रियां वाचमभिवदन्त्योऽर्चयन्त्य
एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥ ६ ॥

एहि एहि आगच्छागच्छेति तं यजमानमाह्वयन्त्यः आहुतयो यजमानं कर्मिणं वहंति स्वर्गं प्रापयन्तीति सम्बन्धः । कीदृश्य आहुतयः सुवर्चसः दीप्तिमत्यः । पुनः कीदृश्यः सूर्यस्य रश्मिभिः, अभेदार्थिका तृतीया सूर्यरश्म्यभिन्नाः सत्यः । पुनः कीदृश्यः प्रियां मधुरां वाचं वाणीं अभिवदन्त्यः उच्चारयंत्यः । पुन. कीदृश्यः अर्चयन्त्यः यजमानं पूजयन्त्यश्च वहंतीति पूर्वेणान्वयः । उक्तां प्रियवाचमेव दर्शयति—एष इति । वो युष्माकं एषः पुरतो वर्तमानः पुण्यः पावनः सुकृतः सुकृतस्य कर्मणः फलरूपः ब्रह्मलोक प्रकरणात्स्वर्गलोकोऽस्तीति शेष ॥ ६ ॥

वैराग्यार्थमुक्तकर्मफलं कर्मकर्तॄंश्च निन्दति—

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु
कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं
ते पुनरेवापि यन्ति ॥ ७ ॥

एते शास्त्रप्रसिद्धाः यज्ञरूपाः यदाश्रयतया यज्ञो रूप्यते निरूप्यते ते यज्ञरूपाः यज्ञकर्तारः । प्लवाः प्लवतुल्याः, यथा हि क्षुद्रनदीतरणार्थं तृणकाष्ठादिभिर्निर्मिताः प्लवाख्याः तरणसाधनविशेषाः न समुद्रपारं गमयितुं समर्था भवन्ति तथामी यज्ञकर्तारोऽपि न भवाब्धिपारं मोक्षाख्यं कर्मद्वारा गमयितुं समर्था इत्यर्थः । तत्र हेतुमाह—अदृढा इति । हि यस्मात् अदृढाः स्वल्पविघ्नेनापि प्रतिहताः सन्तः स्वर्गमपि प्रापयितुमक्षमाः । के ते इत्यत आह—अष्टादशेति । होत्रध्वर्युब्रह्मोद्गातृ-प्रतिप्रस्थातृ-ब्राह्मणाच्छंसि-प्रस्तोतृ-मैत्रावरुणाऽच्छावाकनेष्टाग्नीध्रप्रतिहर्तृ-ग्रावस्तुदुन्नेतृपोतृसुब्रह्मण्या इति षोडशर्त्विजः पत्नी यजमानश्चेत्यष्टादश संख्याकाः । येषु उक्ताष्टादशसु उक्तं शास्त्रेण कथितम अवरम् उपासनवर्जितं केवलं कर्म वर्तते इति शेषः । ये मूढा अज्ञाः एतत् उपासनारहितं कर्म श्रेयः मोक्षसाधनमिति मत्वा अभिनन्दति हर्षं प्राप्नुवन्ति ते उक्तकर्मिणः पुनरेव किंचित्कालं स्वर्गे स्थित्वा भूय एव जरामृत्युं जरासहितं मरणं अपियन्ति प्राप्नुवन्तीत्यर्थः ॥ ७ ॥

पुनरपि कर्मिणो निन्दति—

अविद्यायामन्तरे वर्तमानाः स्वयंधीराः पण्डितं मन्यमानाः। जंघन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ ८ ॥

अविद्यायामन्तरे वर्तमानाः अविद्याकार्यनिरूपिताभिमानवंतः मूढाः विवेकशून्या धीराः प्रज्ञावंतो वयमिति स्वयमात्मानं मन्यमानाः पण्डितं विदिततत्त्वं चात्मानं मन्यमानाः सम्भावयन्तः जंघन्यमानाः नानाविध-क्रियाकलापैर्हन्यमानाः निरंतरं क्लिश्यमानाः परियन्ति जरामरणाद्यनर्थं प्राप्नुवंति। तत्र दृष्टान्तमाह—अन्धेनेति। अन्धेन नेत्रविहीनेन पुरुषेण नीयमानाः कुमार्गं प्राप्यमाणा अन्धा नेत्रहीनाः पुरुषाः यथा गर्तपतनादि-जन्यनानाऽनर्थं प्राप्नुवंति तद्वदंधेन गुरुणोपदिष्टाः कर्मिणो जन्म-मरणादिदुःखं प्राप्नुवंतीत्यर्थः ॥ ८ ॥

किञ्च—

अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभि-मन्यन्ति बालाः। यत्कर्मिणो न प्रवेदयन्ति रागा-त्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥

अविद्यायां बहुधा वर्तमानाः अविद्याकार्यविषयनानाविधाभि-मानवन्तः। बालाः आत्मज्ञानशून्याः वयं कृतार्थाः कृतकृत्याः इति एवं अभिमन्यंति अभिमानं कुर्वन्ति यत् यस्मात् कर्मिणः कर्मकर्तारः रागात् कर्मफलेच्छावशात् न प्रवेदयन्ति आत्मतत्त्वं न जानंति तेन आत्मा-ज्ञाननिमित्तेन आतुराः दुःखिनः सन्तः क्षीणलोकाः नष्टकर्मफलाः च्यवन्ते स्वर्गादधः पततीत्यर्थः ॥ ९ ॥

किञ्च—

इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति ॥१०॥

इष्टापूर्तम् इष्टं यागादिवैदिकं कर्म, पूर्तं वापीकूपतडागादिकं स्मार्तं कर्म, वरिष्ठमुत्तमं श्रयः श्रेयःसाधनं मन्यमानाः विजानंतः प्रमूढाः पुत्रादिप्रसक्ततया मूढाः अज्ञानिनः अन्यत् कर्मणो भिन्नमात्मज्ञानाख्यं श्रेयः श्रेयःसाधनं न वेदयंते न जानंति ते उक्तकर्मिणः नाकस्य स्वर्गस्य पृष्ठे उपरिस्थाने सुकृते पुण्यकर्मफलभूते अनुभूत्वा, छान्दसो ल्यब-

भ.व', कर्मफलमनुभूय इमं लोकं मनुष्यलोकं हीनतरं वा मनुष्यलोकान्निकृष्टं तिर्यङ्नरकादिलक्षणं वा विशंति प्राप्नुवंतीत्यर्थः ॥ १० ॥

केवलकर्मिणां फलमुक्त्वा सगुणब्रह्मोपासनासहिताऽऽश्रमकर्मिणां ब्रह्मलोकप्राप्तिरूपफलमाह—

तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां
चरन्तः । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स
पुरुषो ह्यव्ययात्मा ॥ ११ ॥

ये पुरुषाः अरण्ये स्त्रीजनासंकीर्णदेशे स्थिताः संतः वानप्रस्थाः तपःश्रद्धे तपः स्वाश्रमविहितं कर्म, श्रद्धा हिरण्यगर्भाद्युपासनम्, उक्ततपःश्रद्धे उपवसंति सेवन्ते। ये च विद्वांसः उपासनारूपज्ञानप्रधानाः संतो गृहस्थाः शान्ता उपरतकरणग्रामाः तपश्रद्धे उपवसंति । ये च यतयः भैक्षचर्यां चरन्तः प्रतिग्रहपरिहाराय भिक्षार्थं गृहेषु रटन्तः संतः तपःश्रद्धे उपवसंति सेवंते । ते उक्ताश्रमिणः विरजाः विगतपुण्यपापकर्माणः संतः सूर्यद्वारेण उत्तरायणमार्गेण प्रयान्ति प्रकर्षेण सत्यलोकं प्राप्नुवन्ति यत्र यस्मिन्सत्यलोके सः शास्त्रप्रसिद्धः अमृतः देवः 'अमृतो धन्वंतरिदेवयोः' इति मेदिन्युक्तेः । पुरुषः प्रथमशरीरी हिरण्यगर्भाख्यः अव्ययात्मा यावत्संसारस्थायी वर्तते इति योजना ॥ ११ ॥

एतावता संसारगतयोऽपरविद्यागम्या उक्ताः । इदानीं साध्यसाधनलक्षणात् संसाराद्विरक्तस्य परविद्यायामधिकारप्रदर्शनार्थमाह—

परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमाया-
न्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभि-
गच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ १२ ॥

कर्मचितान् कर्मणा संपादितान् लोकान् दक्षिणोत्तरमार्गगम्यान् कर्मफलभूतान् भोग्यपदार्थान् परीक्ष्य शास्त्रानुमानाभ्यामनित्यत्वेन निश्चित्य ब्राह्मणोऽधिकारी पुरुषो निर्वेदं उक्तभोग्यपदार्थेभ्यो वैराग्यं आयात् कुर्यात् । ब्राह्मणग्रहणं क्षत्रियवैश्ययोरुपलक्षणार्थम् । तयोरपि ब्रह्मविद्यायामधिकारदर्शनात् । वैराग्यप्रकारं प्रदर्शयति—नास्तीति । नास्त्यकृतः कृतेन कृतेन कार्यभूतेन कर्मणा अकृतः नित्यब्रह्मस्वरूपो मोक्षो नास्ति न भवति, अतः कारणात् तद्विज्ञानार्थं अकृतब्रह्मस्वरूपविज्ञानार्थं सः जातवैराग्यः पुरुषः समित्पाणिः समित्प्रभृत्युपायनहस्तः

सन् गुरुमेव उपदेष्टारमाचार्यमेव गच्छेत् प्राप्नुयात् न तु स्वयं धीरत्वाभिमानं कुर्यात्। तथा चोक्तम्—'वेदान्तानामनेकत्वात्संशयानां बहुत्वतः। वेद्यस्याप्यतिसूक्ष्मत्वान्न जानाति गुरुं विना" इति। गुरुं शिशिनष्ठिश्रोत्रियम् अधीतवेदवेदार्थं ब्रह्मनिष्ठं ब्रह्मणि निष्ठावंतं ब्रह्मज्ञानिनमिति यावत् ॥ १२ ॥

एतादृशशिष्याय चात्मबोधनमवश्यं गुरुणा कर्तव्यमित्याह—

तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय
शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच
तां तत्वतो ब्रह्मविद्याम् ॥ १३ ॥

सः गुरु विद्वान् ब्रह्मवित् तस्मै उक्तशिष्याय सम्यगुपसन्नाय शास्त्रोक्तविधिना आगताय प्रशान्तचित्ताय हर्षादिदोषरहितचित्ताय शमान्विताय बाह्यांतरिन्द्रियोपरमयुक्ताय तां वेदांतशास्त्रप्रतिपाद्यां ब्रह्मविद्यां ब्रह्मात्मज्ञानं तत्त्वतो यथावत् प्रोवाच प्रब्रूयात्। तां कामित्यत आह—येनेति। येन यया ब्रह्मविद्यया अक्षरं अद्रेश्यादिविशेषणं ब्रह्म पुरुषं सर्वत्र पूर्णं सत्यं त्रिकालाबाध्यस्वरूपं वेद उक्तशिष्यो विजानीयात्। आचार्यस्याप्ययं नियमो यन्न्यायप्राप्तशिष्योद्धरणं अविद्याऽब्धेरिति भावः ॥ १३ ॥

इति प्रथममुण्डके द्वितीयखण्डव्याख्या ॥ २ ॥

—:०:—

अथ प्रथममुण्डके तृतीयः खण्डः

एवं प्रथममुण्डके सफलमपरविद्याविषयभूतं कर्मोक्त्वा परविद्याविषयब्रह्मज्ञानार्थं द्वितीयमुण्डकमारभ्यते—

तदेतत्सत्यं यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद्विविधाः
सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति ॥ १ ॥

तत् पूर्वोक्तम्। एतत् वक्ष्यमाणलक्षणमक्षरं सत्यं त्रिकालाबाध्यरूपपरमार्थसत्यं न तु पूर्वोक्तकर्मफलवदापेक्षिकं सत्यम्। नन्वक्षरस्य शास्त्रैकगम्यत्वादपूर्ववदपरोक्षत्वं न संभवति, साक्षात्काराधीनश्च मोक्षः। ततः कथं सत्यमक्षरं प्रत्यक्षत्वेन प्रतिपद्येरन् मुमुक्षवो येन

मुक्ताः स्युरित्याशंक्य अपरोक्षजीवाभिन्नत्वेन अपरोक्षत्वं ब्रह्मणो वक्तुं दृष्टान्तमाह—यथेति। यथा येन प्रकारेण सुदीप्तात् सुष्टु प्रज्वलितात् पावकादग्नेः सहस्रशः अनेके विस्फुलिङ्गाः कणाः सरूपाः ज्योतिष्ट्वेन सदृशरूपाः प्रभवन्ते प्रभवन्ति निःसरंति। दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—तथेति। तथा उक्तदृष्टान्तवत् सोम्य हे प्रियदर्शन, अक्षरात् माया-शक्ति युक्ताद् ब्रह्मणः विविधाः नानादेहोपाधिभेदभिन्नाः भावाः जीवाः प्रजायन्ते जायमानदेहोपाधिमनूत्पद्यन्ते न तूपाध्युत्पत्तिं विना जीवोत्पत्ति-र्भवति, अजत्वाज्जीवस्य। तत्र चैव तस्मिन्नक्षरे एव अपियन्ति देहो-पाधिविलयमनु विलीयन्ते। यथा भिन्नदेशावच्छिन्नत्वेन विस्फुलिङ्गे-ष्ववयवत्वादिव्यवहारः, स्वतस्तु उष्णप्रकाशत्वाविशेषादग्निस्वरूपत्व-मेव, तथा चिद्रूपत्वाविशेषाज्जीवानामपि स्वतो ब्रह्मात्मकत्वमेवेति भावः ॥ १ ॥

एवमेकत्वसिद्ध्यर्थमक्षरस्य जीवोत्पत्तिप्रलयहेतुत्वमौपाधिकमुक्तम्, इदानीं तस्य निरुपाधिकस्वरूपमाह—

दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ २ ॥

दिव्यो दीप्तिमान्। यद्वा हि यस्मात् स्वयंप्रकाशत्वेन लोकविल-क्षणोऽतो दिव्योऽलौकिक इत्यर्थः। अमूर्तः सर्वमूर्तिवर्जितः पुरुषः सर्वत्र पूर्णः सबाह्याभ्यन्तरः देहापेक्षया यद्बाह्यम् अभ्यंतरं च प्रसिद्धं तेन सहाधिष्ठानतया वर्तमानः। अजः जन्मरहितः जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीति यास्कोक्तानां सर्वभावविकाराणां जनिमूलत्वात्तत्प्रतिषेधेन सर्वे भावविकाराः प्रतिषिद्धा भवन्ति इत्यर्थः। अजपदेन जन्मादिषड्भावविकाराभाववाचकेनोक्तस्य ब्रह्मणः स्थूल-देहभिन्नत्वमुक्त्वा अप्राणो ह्यमना इति पदद्वयेन सूक्ष्मदेहभिन्नत्व-माह—अप्राण इति। प्राणः पञ्चवृत्त्यात्मकः क्रियाशक्तिमान् वायुर्यस्मिन्न विद्यतेऽसावप्राणः। हि एव, अमनाः संकल्पविकल्पात्मकमनोवर्जितः। एतेन सर्वेन्द्रियरहितत्वमुक्तम्। हि यस्मात्प्राणादिवर्जितोऽत एव शुभ्रः शुद्धः परतः स्वकार्यापेक्षया परस्मात् अक्षरात् अव्याकृताख्यात् परः उत्कृष्टः, 'अव्यक्तात्पुरुषः परः' इति मन्त्रवर्णात् ॥ २ ॥

उक्तशुद्धब्रह्मैव मायाप्रतिबिम्बितरूपेण कारणं भवतीत्याह—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि खं वायु-
र्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ३ ॥

अत्र चार्थक्रमेण पाठक्रमो बाध्यते । 'गताः कलाः पंचदश प्रतिष्ठाः' इति वक्ष्यमाणग्रन्थे भूतेषु प्राणादीनां लयश्रवणेन भौतिकत्वावगमाद् भूतोत्पत्त्यनंतरं प्राणादीनामुत्पत्तिर्वाच्या । तथा हि—एतस्मात् मायाप्रतिबिंबितादक्षरात् खं शब्दगुणमाकाशं जायते उत्पद्यते । तथा एतस्मादाकाशभावापन्नाद् ब्रह्मणो वायुः शब्दस्पर्शगुणको जायते । एवमग्रेऽपि योजनीयम् । ज्योतिः शब्दस्पर्शरूपगुणवादग्निर्जायते । आपः शब्दस्पर्शरूपरसगुणकं जलम् । पृथिवी शब्दस्पर्शरूपरसगन्धवती भूमिः विश्वस्य सर्वस्य धारिणी धारणकर्त्री । एतस्मात् प्राणः शरीरान्तःसंचारी वायुरूपः । मनः संकल्पविकल्परूपं सर्वेन्द्रियाणि श्रोत्रादिज्ञानेन्द्रियाणि पंच वागादिकर्मेन्द्रियाणि च पंच जायन्ते इति योजना ॥ ३ ॥

न केवलं सर्वस्य जनिहेतुः, अपि तु विराड्रूपेण सर्वमयश्चेत्याह—

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च
वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष
सर्वभूतान्तरात्मा ॥ ४ ॥

अत्र तृतीयपादस्थस्याऽस्येति पदस्य यस्येत्येतदर्थस्य सर्वत्र संबंधः कर्तव्यः । तथा हि—अग्निः द्युलोकः । 'असौ वाव लोको गौतमाऽग्निरिति' श्रुतेः । यस्य ईश्वरस्य मूर्धा शिरः, चंद्रसूर्यौ प्रसिद्धौ यस्य चक्षुषी नेत्रे । एवमग्रेऽपि । दिशः प्राच्यादिरूपाः, श्रोत्रे कर्णौ । विवृताः प्रसिद्धाः वेदाः ऋगादिरूपाः वाग् वाणी । वायुः बाह्यो भूतात्मको वायुः । प्राणः प्राणापानादिरूपः । विश्वं सर्वं जगत् हृदयम् अन्तःकरणम् अन्तःकरणविकारं हि सर्वं जगत् सुषुप्ते मनस्येव सर्वस्य लयात् जागरिते तत एवाग्निविस्फुलिंगवद् बहिः प्रतिष्ठानाच्च । पृथिवी भूमिः पद्भ्यां पादौ । एषः उक्तविधशरीरः सर्वभूतान्तरात्मा सर्वेषां भूतानां प्राणिनां अन्तरात्मा सर्वभूतेषु द्रष्टा श्रोता मन्ता विज्ञातेत्यर्थः ॥ ४ ॥

उक्तपुरुषादेव लोकवृद्धिहेतुनां पंचाग्नीनामुत्पत्तिद्वारा प्रजोत्पत्तिमाह—

तस्मादग्निः समिधो यस्य सूर्यः सोमात्पर्जन्य ओषधयः
पृथिव्याम् । पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः
पुरुषात्संप्रसूताः ॥ ५ ॥

तस्मात् परस्मादक्षरात् अग्निः द्युलोकात्मको जात इति शेषः । कीदृशोऽग्निः यस्य स्वर्गाख्याग्नेः सूर्यः सविता समिधः काष्ठादिस्था-

नीयः समिध्यते हि समिद्भिरग्निरिव सूर्येण द्यु लोकः। सोमात् द्यु लोकाग्नेर्निष्पन्नात् चन्द्रात् पर्जन्यो मेघाख्यो द्वितीयोऽग्निः संभवतीति शेषः। पर्जन्यात् पृथिव्यां पृथिवीरूपतृतीयाग्नौ ओषधयः व्रीहियवादिरूपाः वृष्टिद्वारा संभवन्तीति शेषः। ओषधिभ्यश्चान्नरूपेण चतुर्थाग्निरूपपुरुषं प्राप्ताभ्यो रेतो भवतीत्यध्याहृत्य पुमान् चतुर्थाग्निरूपः पुरुषः रेतः शुक्रं योषितायां पञ्चमाग्निरूपायां स्त्रियां सिञ्चति प्रक्षिपतीति योजना। एवं क्रमेण बह्वीः बह्वयः प्रजाः ब्राह्मणादयः प्राणिनः पुरुषात् उक्तात्तरात् संप्रसूताः सम्यक् प्रादुर्भवन्तीत्यर्थः ॥ ५ ॥

कर्मसाधनानि फलानि च तस्मादेव जातानीत्याह—

तस्मादृचः सामयजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो

दक्षिणाश्च। संवत्सरश्च यजमानश्च लोकाः सोमो

यत्र पवते यत्र सूर्यः ॥ ६ ॥

तस्मात् उक्तपुरुषात् ऋचः नियताक्षरपादाः गायत्र्यादिछन्दोविशिष्टा मन्त्राः जाता इति शेषः। साम हिंकारप्रस्तावोद्गीथप्रतिहारनिधनाख्यपञ्चावयवात्मकं हिंकारप्रस्तावाऽऽद्युद्गीथप्रतिहारोपद्रवनिधनाख्यसप्तावयवात्मकं च स्तोमादिगीतिविशिष्टं जातम्। यजूंषि अनियताक्षरपादावसानानि वाक्यात्मकानि जातानीति शेषेण सर्वत्रान्वयः। दीक्षा मौञ्ज्यादिलक्षणा कर्तृनियमविशेषाः। सर्वे निखिलाः यज्ञाश्च यूपवर्जिता अग्निहोत्रादिरूपाः। क्रतवः सयूपा विश्वजिदश्वमेधादयः। दक्षिणाश्च एकगवादिसर्वस्वान्ताः क्रत्वङ्गविशेषाः। संवत्सरश्च कर्मांगभूतः कालविशेषः। यजमानः कर्मकर्ता। लोकाः दक्षिणायनोत्तरायणमार्गगम्या विद्वदविद्वत्कर्तृफलभूताः, यत्र लोकेषु सोमः चन्द्रः पवते पुनाति जनानीति शेषः। यत्र लोकेषु सूर्यः तपतीति शेषः। एवमुक्तलक्षणं सर्वं तस्मादक्षराज्जातमित्यर्थः ॥ ६ ॥

तस्माच्च देवा बहुधा संप्रसूताः साध्या मनुष्याः

पशवो वयांसि। प्राणापानौ व्रीहियवौ तपश्च

श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥

किञ्च तस्मात् उक्ताक्षरात् देवाः कर्मांगभूता वस्वादयः बहुधा नानाविधा संप्रसूताः सम्यगुत्पन्नाः, साध्याः साध्यसंज्ञका देवविशेषाः तस्मात्संप्रसूता इति सर्वप्रथमान्तपदैः संबन्धः कर्तव्यः। मनुष्याः कर्माधि-

कारिण पशवः गवादयो ग्राम्याः आरण्याश्च मृगादयः, वयांसि पक्षिणः, प्राणापानौ प्राणिनां जीवनहेतुभूतौ, उपलक्षणमेतद्व्यानोदानसमानानामपि। व्रीहियवौ अन्नविशेषौ हविरर्थौ। तपः प्रसिद्धं कृच्छ्रचांद्रायणादिरूपम्। श्रद्धा आस्तिक्यबुद्धिः, सत्यं यथार्थभाषणं ब्रह्मचर्यम् अष्टविधमैथुनपरित्यागात्मकम्। विधिः इतिकर्तव्यता। चकारोऽनुक्तसमुच्चयार्थः। एते उक्तलक्षणाः सर्वे तस्मात्संप्रसूता इत्यर्थः ॥ ७ ॥

> सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः सप्त समिधः
> सप्त होमाः। सप्त इमे लोका येषु चरन्ति प्राणा
> गुहाशया निहिताः सप्तसप्त ॥ ८ ॥

किंच सप्त प्राणाः द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे एका वागिति शिरसि स्थितानि सप्तेन्द्रियाणि तस्मात् उक्तपुरुषात् प्रभवन्ति उत्पद्यन्ते। सप्तार्चिषः उक्तेन्द्रियाणां सप्तवृत्तयः तस्मात्संभवन्तीति सर्वत्रानुषंगः। सप्त समिधः=सप्त विषयाः, विषयैर्हि समिध्यन्ते प्राणाः। सप्त होमाः तद्विषयोपासनानि 'यदस्य विज्ञानं तज्जुहोती'ति श्रुत्यन्तरात्। सप्त इमे लोकाः इमे प्रत्यक्षसिद्धाः सप्तसंख्याका इन्द्रियाणां गोलकरूपाः येषु सप्तगोलकेषु चरन्ति संचारं कुर्वन्ति। प्राणाः उक्तसप्तेन्द्रियाणि। कीदृशाः प्राणाः गुहाशयाः गुहायां देहे हृदये वा स्वापकाले शेरते इति गुहाशयाः निहिताः सप्तसप्त प्रतिप्राणिशरीरं सप्तसप्तसंख्याकाः स्थापिताः, धात्रेति शेषः ॥ ८ ॥

> अतः समुद्रा गिरयश्च सर्वेऽस्मात् स्यन्दन्ते सिन्धवः
> सर्वरूपाः। अतश्च सर्वा ओषधयो रसश्च येनैष
> भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥

किंच अतः अस्मात्परमात्मनः समुद्राः क्षारोद इक्षुरसोदः सुरोदो घृतोदः क्षीरोदो दध्युदकः शुद्धोदक इति सप्त सागराः प्रभवन्तीति पूर्वमन्त्रात् क्रियानुषंगः। सर्वे निखिलाः गिरयः पर्वताश्च प्रभवन्ति अस्मात् प्रकृताक्षरात्। सिन्धवः नद्यः सर्वरूपाः अनेकरूपाः स्यन्दन्ते स्रवन्ति। अतश्च प्रकृताक्षरादेव सर्वाः समस्ताः ओषधयः व्रीहियवादिरूपाः जाता इति शेषः। रसश्च मधुरादिषट्प्रकारोऽत एव जात इत्यर्थः। येन रसेन भूतैः पंचभिश्च पृथिव्यादिस्थूलतत्त्वैः परिवेष्टितः एषः स्थूलशरीरे वर्तमानः अन्तरात्मा सूक्ष्मदेहः तिष्ठते तिष्ठति हि एव स एव शरीरस्यान्तराले आत्मवद्वर्तते इत्यन्तरात्मेत्युक्तः ॥ ९ ॥

एवमध्यारोपितस्य जगतोऽपवादेन शुद्धमात्मनो रूपं दर्शयति—

पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्। एतद्यो वेद
निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥ १० ॥

इति द्वितीयमुण्डके प्रथमः खण्डः ॥ १ ॥

इदं पुरुषादुत्पन्नं विश्वं सर्वमिदं पुरुष एव परमात्मैव न हि विश्वं नाम पुरुषादन्यत्किंचिदस्ति अतो यत्पृष्टं कस्मिन्नु भगवो विज्ञाते सर्वं विज्ञातं भवतीति तदुत्तरितम्। एतस्मिन्नेव हि सर्वकारणे परमात्मनि विज्ञाते सर्वं विज्ञातं भवति, कार्यस्य कारणाव्यतिरेकात्। किमिदं विश्वमित्यत आह—कर्मेति। कर्म अग्निहोत्रादिरूपं तपः उपासना ब्रह्म कर्मतपसोः प्रकाशको वेदः सफले कर्मतपसी वेदश्चेत्येतत्त्रितयात्मकं विश्वं परामृतं परामृतस्य परब्रह्मणः कार्यत्वात् परब्रह्मस्वरूपमेवेत्यर्थः। एतत् सर्वात्मकं ब्रह्म गुहायां सर्वप्राणिनां हृदि निहितं स्थितं यः अधिकारी वेद आत्मत्वेन विजानाति सः विद्वान् अविद्याग्रन्थिं अज्ञोऽहमित्यज्ञानतादात्म्यं इह जीवितशरीरे एव विकिरति नाशयति सोम्य हे प्रियदर्शन ॥ १० ॥

इति द्वितीयमुण्डके प्रथमखण्डव्याख्या ॥ १ ॥

अथ द्वितीयमुण्डके द्वितीयखण्डः

सकृदुपदेशेनापि यस्योक्ताक्षरब्रह्मज्ञानं नोत्पद्येत तं प्रति प्रकारान्तरेण ब्रह्मबोधं जनयितुमयं खण्ड आरभ्यते—

आविः सन्निहितं गुहाचरं नाम महत्पदमत्रैतत्
समर्पितम्। एजत्प्राणन्निमिषच्च यदेतज्जानथ
सदसद्वरेण्यं परं विज्ञानाद्यद् वरिष्ठं प्रजानाम् ॥ १ ॥

आविरिति निपातः प्रकाशवाचकः। तथा च उक्तब्रह्म आविः प्रकाशस्वरूप सन्निहितं जीवरूपेण सर्वप्राणिनां हृदि स्थितं गुहाचरं गुहायां हृदि चरति दर्शनश्रवणादिप्रकारैरिति गुहाचरं नाम प्रसिद्धं महत् सर्वोत्कृष्टं पदं सर्वस्थितिस्थानम्। एतत्कुत इत्यत आह—अत्रेति। अत्र अस्मिन्ब्रह्मणि एतत् वक्ष्यमाणलक्षणम् अर्पितं रथनाभावरा इव निवेशितम्। एतत्किमित्यत आह—एजदिति। यदेजत् यच्चलनक्रियावत् पद्यादि प्राणत् यत्प्राणादिमत् निमिषत् निमेषक्रियावत्। चकारात् यदनिमिषत् एतत्सर्वं चराचरात्मकम् अत्र ब्रह्मणि समर्पितमिति पूर्वेण-

न्वयः। एतत् उक्तलक्षणं ब्रह्म जानथ हे शिष्य यूयमवगच्छथ। तदेव विशिनष्टि—सत् मूर्तं स्थूलम् असत् अमूर्तं सूक्ष्मं सदसदो ब्रह्मातिरेकेणाभावात्। वरेण्यं विवेकिभिः प्रार्थनीयं यत् ब्रह्म प्रजानां विज्ञानात्परं इन्द्रियजन्यज्ञानागोचरं वरिष्ठं प्रशस्ततरं सर्वदोषरहितत्वादित्यर्थः॥ १॥

किञ्च—

यदर्चिमद्यदणुभ्योऽणु च यस्मिँल्लोका निहिता
लोकिनश्च। तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः
तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि॥ २॥

यत् ब्रह्म अर्चिमत् दीप्तिमत्। ननु दीप्तिमत्त्वेनादित्यादिवद् ब्रह्मणोऽपि इन्द्रियग्राह्यत्वं स्यादित्यत आह—यदिति। यत् ब्रह्म अणुभ्यः सूक्ष्मेभ्यः अणु सूक्ष्मं चकाराद्यत् स्थूलेभ्यः पृथिव्यादिभ्यः स्थूलम्। यस्मिन् ब्रह्मणि लोकाः भूरादयः लोकिनः लोकनिवासिनो मनुष्यादयः निहिताः स्थिताः। लोकिनश्चेति चकारः समुच्चयार्थः। तत् कस्मिन्नु भगवो विज्ञाते इत्यादिना त्वया पृष्टं एतत् उक्तसर्वाधारभूतम् अक्षरं क्षरणरहितं ब्रह्म बृहत्स्वरूपं सप्राणः उक्तब्रह्म प्राणापानादिरूपं विधेयापेक्षया स इति पुंस्त्वेन निर्देशः। तद् तदेव ब्रह्म वाङ्मनः वागादिबाह्यकरणात्मकं मनआद्यन्तःकरणरूपं च। एतेन प्राणादिसर्वसङ्घातस्याधिष्ठानत्वात्प्राणादिसङ्घातस्य लक्ष्यस्वरूपं ब्रह्म द्रष्टव्यमित्युक्तम्। तदेतत् प्राणादीनामन्तश्चैतन्यरूपं ब्रह्म सत्यम् अवितथम् अवितथत्वादेव तत् उक्तलक्षणं ब्रह्म अमृतम् अविनाशि तत् उक्तं ब्रह्म वेद्धव्यं मनसा भावयितव्यं ब्रह्मणि मनःसमाधानं कर्तव्यमिति यावत्। सोम्य हे प्रियदर्शन विद्धि उक्तब्रह्मणि चेतः समाधत्स्व॥ २॥

आविरिति मन्त्रे जानथेत्यनेन ब्रह्मसाक्षात्कारो मोक्षफलक उक्तः। विद्धीत्युक्तिस्तु वाक्यजन्यसाक्षात्कारसाधनश्रवणादौ असमर्थस्य प्रणवमवलम्ब्य ब्रह्मात्मैकत्वे चित्तसमाधानं क्रममुक्तिफलं दर्शयितुं विद्धीत्युक्तमेव स्पष्टयति—

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं
सन्धयीत। आयम्य तद्भावगतेन चेतसा लक्ष्यं
तदेवाक्षरं सोम्य विद्धि॥ ३॥

धनुः चापम् औपनिषदम् उपनिषत्सु प्रसिद्धं प्रणवाख्यं महास्त्रं महच्च तदस्त्रं च महास्त्रं गृहीत्वा अवलंब्य तस्मिन् शरं बाणं संधयीत संधानं कुर्यात्। कीदृशं शरम् उपासानिशितं उपासया निरंतराभिध्यानेन तीक्ष्णीकृतं संस्कृतम् । तद्भावगतेन ब्रह्मभावनिष्ठेन चेतसा चित्तेन आयम्य प्रणवमाकृष्य सेन्द्रियमन्तःकरणं स्वस्वविषयेभ्यो निवर्त्य लक्ष्ये एव स्थिरं कृत्वा तदेव उक्तलक्षणमेवाक्षरात्मकं लक्ष्यं विद्धि उक्तब्रह्मणि चेतः समाधत्स्व सोम्य हे प्रियदर्शन ॥ ३ ॥

उक्तधनुरादिकमाह--

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।

अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥

प्रणवः ॐकारः धनुः चापं यथा धनुर्लक्ष्ये शरस्य प्रवेशकारण-मेवमभ्यस्यमानप्रणवः । प्रणवेन ह्यभ्यस्यमानेन संस्क्रियमाण आत्मा तदालंबनोऽप्रतिबंधेनाक्षरे अवतिष्ठते धनुषा प्रत्यस्तः शर इव लक्ष्ये । आत्मा हि जीव एव शरो बाणः ब्रह्म पूर्वोक्तलक्षणं तल्लक्ष्यं तस्योक्तात्म-रूपशरस्य लक्ष्यं शरव्यं उच्यते कथ्यते वेदविद्भिः । अप्रमत्तेन बाह्यविषयोपलब्धितृष्णात्मकप्रमादवर्जितेन सर्वतो विरक्तेन जितेन्द्रिये-णैकाग्रचित्तेन वेद्धव्यं उक्तब्रह्मलक्ष्यं वेधनादूर्ध्वं शरवत्तन्मयो भवेत् । यथा शरस्य लक्ष्यैकात्मत्वं भवति तथा देहाद्यनात्मप्रत्ययनिरासेना-क्षरैकात्मत्वं संपादयेदित्यर्थः । उपनिषज्जन्यप्रणवयाथात्म्यज्ञानं धनु-र्ग्रहणं ध्यातुरात्मनः प्रणवध्यानप्रवृत्तिर्धनुषि शरसंधानं ध्यानाभ्यासो धनुरायमनं समाधिर्लक्ष्यवेधः पुनर्देहाभिमानानुदयस्तन्मयत्वम् । उपासानिशितत्वोक्तिस्तु लक्ष्यवेधयोग्यत्वप्रदर्शनार्थेति भावः ॥ ४ ॥

अक्षरस्य दुर्लक्ष्यत्वात्सुलक्षणार्थं पुनः पुनस्तमेवाह—

यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह

प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या

वाचो विमुञ्चथ । अमृतस्यैष सेतुः ॥ ५ ॥

यस्मिन्नुक्ताक्षरे द्यौः पृथिवी च अन्तरिक्षं च ओतं समर्पितं सह प्राणैश्च सर्वैः वागादिसर्वकरणैः सहितं मनश्च संकल्पादिरूपं जानथ हे शिष्या यूयं विजानत । ज्ञात्वा चान्या वाचः आत्मातिरिक्तप्रतिपादिका अपराविद्यारूपाः विमुञ्चथ परित्यजत । अमृतस्य मोक्षस्य एषः आत्म-

साक्षात्कारः सेतुः सेतुवत् भवाब्धेः परतीरस्य मोक्षस्य प्राप्त्युपायः। 'तमेव विदित्वाऽतिमृत्युमेती'ति श्रुत्यन्तरादित्यर्थः ॥ ५ ॥

किञ्च—

अरा इव रथनाभौ संहता यत्र नाड्यः। स एषो-
ऽन्तश्चरते बहुधा जायमानः। ओमित्येवं ध्यायथ
आत्मानं स्वस्ति वः पाराय तमसः परस्तात् ॥ ६ ॥

अरा इव रथनाभौ यथा रथस्य नाभौ मध्यवर्तिकाष्ठविशेषे अराः तिर्यक्काष्ठविशेषाः अर्पिताः तद्वत् यत्र यस्मिन् हृदये नाड्यः शतसहस्रसंख्याः संहताः संलग्नाः सन्ति तस्मिन् हृदये अन्तः मध्ये स एषः प्रकृत आत्मा चरते चरति वर्तते। कीदृशः सः बहुधा जायमानः क्रुद्धहृष्टादिरूपेणानेकधा जायमानः घटजन्मनि घटाकाशवदुपाधिजन्मना जायमानत्वेन मन्यमान इति यावत्। तमात्मानम् ओमित्येवं प्रणवालंबनेन ध्यायथ हे शिष्याश्चिन्तयत तमसः पाराय अज्ञानरहितपरब्रह्मप्राप्तये। एवं शिष्येभ्य आचार्य उपदिशन् तेषां निर्विघ्नतया ब्रह्मज्ञानप्राप्तिमाशास्ते—स्वस्तीति। हे शिष्याः परस्तात् मदुपदेशादूर्ध्वं वो युष्मभ्यं स्वस्ति अस्तु तत्त्वज्ञानप्राप्तौ विघ्नाभावोऽस्त्वित्यर्थः ॥ ६ ॥

उक्तात्मनस्तत्त्वप्रदर्शनायाह—

यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे
ह्येष व्योम्न्यात्मा प्रतिष्ठितः। मनोमयः प्राणशरीरनेता
प्रतिष्ठितोऽन्ने हृदयं सन्निधाय। तद्विज्ञानेन परिपश्यन्ति
धीरा आनन्दरूपममृतं यद्विभाति ॥ ७ ॥

परमात्मा सर्वज्ञः सामान्यरूपेण सर्ववस्तुविषयकज्ञानवान् सर्ववित् विशेषरूपेण सर्वस्य वेत्ता। यस्य परमात्मनः एषः अपरोक्षो महिमा जगत्सृष्ट्यादिरूपो विभूतिः भुवि भूलोके प्रसिद्धः। किञ्च दिव्ये द्योतनवति सर्वबोद्धव्यप्रत्ययद्योतके ब्रह्मपुरे हृदयपुण्डरीके यद्व्योम छिद्रं तस्मिन् व्योम्नि एषः प्रकृत आत्मा प्रतिष्ठितः प्रतिष्ठित इवोपलभ्यते। न ह्याकाशवत्सर्वगतस्यात्मनो वस्तुतो गतिरागतिः प्रतिष्ठा वा क्वचित् संभवति। मनोमयः मनउपाधिकः प्राणशरीरनेता प्राणघटितशरीरस्य लिङ्गदेहस्य नेता स्थूलदेहात् स्थूलदेहान्तरं प्रापकः अन्ने अन्नमये स्थूलदेहे हृदयं बुद्धिं सन्निधाय हृत्पुण्डरीकच्छिद्रे स्थापयित्वा प्रतिष्ठितः

तदधिष्ठानत्वेन तत्र स्थितः। तत् उक्तात्मतत्त्वं विज्ञानेन शास्त्राचार्योपदेशजनितेन शमदमध्यानवैराग्योद्भूतेन विशेषज्ञानेन धीराः विवेकिनः परिपश्यन्ति सर्वतः पूर्णं विजानन्ति आनन्दरूपम् आनन्दात्मकम् अमृतम् अविनाशि यत् आत्मतत्त्वं विभाति सर्वस्य साक्षितया स्फुरतीत्यर्थः ॥ ७ ॥

उक्तात्मज्ञानस्य फलमाह—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ ८ ॥

तस्मिन् परमात्मनि परावरे परं कारणम् अवरं कार्यं तदुभयरूपे सर्वरूपे इति यावत्। परं सर्वदेवापेक्षयोत्कृष्टं हिरण्यगर्भमप्यवरं निकृष्टं यस्मादिति वा परावरे। दृष्टे तदेवाहमिति साक्षात्कृते सति अस्य विदुषः हृदयग्रन्थिः चिदहङ्कारयोः परस्परतादात्म्याध्यासरूपः भिद्यते विनश्यति। सर्वसंशयाः ज्ञेयविषयाः छिद्यन्ते नश्यन्ति कर्माणि अनारब्धफलानि सञ्चितागामिरूपाणि क्षीयन्ते नश्यन्तीत्यर्थः ॥ ८ ॥

उक्तमेवात्मानं संक्षेपेणाह—

हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ ९ ॥

हिरण्मये ज्योतिर्मये परे सर्वाभ्यन्तरे आनन्दमयाख्ये कोशे कोशवत् आत्मन आच्छादके विरजं अविद्यादिरजोमलवर्जितं ब्रह्म महत्स्वरूपं निष्कलं निरवयवम्, विरजत्वादेव तदात्मतत्त्वं शुभ्रं शुद्धं ज्योतिषां सर्वप्रकाशकानामादित्यानामपि ज्योतिः प्रकाशकं तत्। किं तदित्यत आह—यदिति। यत् उक्तलक्षणं ब्रह्मात्मतत्त्वं आत्मविदः विवेकिनः विदुः विजानन्तीत्यर्थः ॥ ९ ॥

तज्ज्योतिषां ज्योतिरित्युक्तमेव स्पष्टयति—

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो
भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति
सर्वं तस्य भासा सर्वमिदं विभाति ॥ १० ॥

तत्र तस्मिन्स्वात्मभूते ब्रह्मणि सूर्यः सर्वप्रकाशक आदित्यः न भाति न तद्ब्रह्म प्रकाशयति। न चन्द्रतारकं चन्द्रश्च तारकाश्च तेषां समाहारः चन्द्रतारकं न भाति न प्रकाशयति। इमाः अतिज्योतिष्ट्वे न

सर्वजनप्रसिद्धाः विद्युतः सौदामिन्यो न भान्ति न प्रकाशयन्ति। अय-मस्मद्दृष्टिगोचरोऽग्निः कुतो भासेत् कथं भासयेत् न भासयतीत्यर्थः। तमेव उक्तब्रह्मस्वरूपमेव भान्तं दीप्यमानं सन्तं सर्वं सूर्यादिकम् अनुभाति तत्प्रकाशानन्तरमेव प्रकाशाश्रयो भवतीत्यर्थः। ननु गच्छन्त-मनुगच्छतः पुरुषस्य स्वतन्त्रातिरक्तेषामपि स्वतन्त्रप्रकाशः किं न स्यादित्यत आह—तस्येति। तस्य स्वप्रकाशरूपस्य ब्रह्मणो भासा दीप्त्या सर्वमिदम् उक्तसूर्यादिकं सर्वं विभाति प्रकाशश्रयो भवति न स्वतन्त्र प्रकाशवानित्यर्थः॥ १०॥

उक्तमेव सर्वावभासकं ब्रह्मोपसंहरति—

ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चात् ब्रह्म दक्षिणतश्चोत्तरेण।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्॥ ११॥

इति द्वितीयमुण्डके द्वितीयः खण्डः॥ २॥

पुरस्तादग्रे वर्तमानमिदं वस्तुजातम् अमृतमविनाशिरूपं ब्रह्मैव ब्रह्मस्वरूपमेव, पश्चात् पृष्ठतो वर्तमानमपि ब्रह्मैव, दक्षिणतश्च दक्षिणतो वर्तमानमपि ब्रह्मैव, उत्तरेण उत्तरे वर्तमानमपि ब्रह्मैव, अधश्चोर्ध्वं च अधोदेशे ऊर्ध्वदेशे च ब्रह्मैव प्रसृतं व्याप्तम्। किम्बहुना इदं विश्वं दृश्यमानं सर्वं जगत् ब्रह्मैवेति बाधायां सामानाधिकरण्यं 'योऽयं स्थाणुः पुमानेवासौ' इतिवत्। कीदृशं ब्रह्म वरिष्ठं वरतमम्॥ ११॥

इति द्वितीयमुण्डके द्वितीयखण्डव्याख्या॥ २॥

अथ तृतीयमुण्डके प्रथमः खण्ड

उक्तस्यापि ब्रह्मणो अतिदुर्विज्ञेयत्वात् प्रकारान्तरेण तन्निर्धारणार्थं तत्प्राप्तिसाधनभूतसत्यादिविधानार्थं चोत्तरग्रन्थ आरभ्यते। तत्र तावत् तत्त्वंपदार्थावाह—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥ १॥

द्वा सुपर्णेत्यादौ द्विवचनस्याकारः छान्दसः। द्वा द्वौ सुपर्णा सुपर्णौ पक्षिणौ सयुजा सयुजौ सर्वदा युक्तौ सखाया सखायौ चिन्मयत्वेन समानरूपौ एवंभूतौ जीवेशौ समानं अविशेषमेकं वृक्षं उच्छेद-सामान्याद्वृक्षतुल्यं शरीरं परिषस्वजाते परिष्वक्तवन्तौ। तयोः पक्षि-रूपेणोक्तयोः जीवेशयोर्मध्ये अन्यः ईशाद्भिन्नो जीवः पिप्पलं सुखदुःखा-

त्मकं कर्मफलं स्वादु यथा स्यात्तथा अत्ति भुंक्ते अन्यः जीवाद्विलक्षणो नित्यशुद्धस्वभाव ईश्वरः अनश्नन् कर्मफलमभुञ्जानः सन् अभिचाकशीति केवलं पश्यत्येव ॥ १ ॥

ततः किमायातमित्यत आह—

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति
मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य
महिमानमिति वीतशोकः ॥ २ ॥

समाने निर्विशेषे एकरूपे वृक्षे वृक्षतुल्ये शरीरे पुरुषः कर्मफलभोक्ता जीवः निमग्नः अयमेवाहमिति देहेन सह तादात्म्याभिमानमापन्नः अनीशया इष्टानिष्टप्राप्तिपरिहारं कर्तुमसमर्थोऽहमिति दीनभावोऽनीशा तया शोचति संतप्यते मुह्यमानः अविवेकतया नानाविधचिन्ताम् आपद्यमानः । यदा यस्मिन्काले जुष्टं योगिभिः कर्मिभिश्च सेवितम् अन्यं देहोपाधिपरिच्छिन्नाज्जीवाद्विलक्षणं ईशं सर्वस्य नियन्तारं पश्यति ईश्वरोऽहं सर्वस्यात्मेत्यभेदेन जानाति अस्येश्वरस्य महिमानं जगद्रूपविभूतिं ममैवेश्वरस्यायं महिमा इति एवं च यदा पश्यति विजानाति, तदा वीतशोकः शोकरहितः कृतकृत्यो भवतीत्यर्थः ॥ २ ॥

उक्तमेवार्थं विशदयति—

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं
ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निर-
ञ्जनः परमं साम्यमुपैति ॥ ३ ॥

यदा यस्मिन्काले पश्यः ज्ञानयोग्योऽधिकारी रुक्मवर्णं प्रकाशस्वरूपं कर्तारं जगदुत्पादकम् ईशं नियन्तारं पुरुषं सर्वत्र पूर्णं ब्रह्मयोनिं ब्रह्म च तद्योनिश्च कारणमिति ब्रह्मयोनिस्तम् । यद्वा ब्रह्मणो हिरण्यगर्भस्य योनिं कारणं पश्यते पश्यति आत्मत्वेन विजानाति । तदा तस्मिन् ज्ञानकाले विद्वान् आत्मज्ञानी पुण्यपापे शुभाशुभे कर्मणी समूले विधूय निरस्य निरञ्जनः अविद्याक्लेशरहितः परमं निरतिशयं साम्यं नामरूपरहितं ब्रह्मभावम् उपैति प्राप्नोति तदभिन्नो भवतीति यावत् ॥ ३ ॥

किञ्च—

प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन्विद्वा-
न्भवते नातिवादी । आत्मक्रीड आत्मरतिः
क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥

प्राणोपाधिक एव एषः प्रकृतः परमेश्वरः सर्वभूतैः, अभेदस्तृतीयार्थः, ब्रह्मादिस्तंबान्तसर्वभूतात्मा सन् विभाति नानाविधो दीप्यते । यो विद्वान् शास्त्रार्थवेत्ता विजानन् उक्तप्राणमात्मभावेन साक्षात्कुर्वन् सन् अतिवादी आत्मातिरिक्तान् सर्वान् अतिक्रम्य वदितुं शीलमस्य सोऽतिवादी भवति । आत्मवित्तु नात्मनोऽन्यत्पश्यति अतोऽतिवादी न भवते न भवति । किञ्च आत्मक्रीडः आत्मन्येव क्रीडा केलिर्यस्य न बाह्यपुत्रादावित्यात्मक्रीडः । आत्मरतिः आत्मनि रतिः प्रीतिर्यस्य स आत्मरतिः । बाह्यसाधनसापेक्षा क्रीडा बाह्यसाधननिरपेक्षा रतिरिति तयोर्भेदः । क्रियावान् ज्ञानध्यानवैराग्यादिक्रियावान् । समासपाठे तु आत्मरतिरेव क्रिया तद्वानित्यर्थः । एष उक्तविशेषणो विद्वान् ब्रह्मविदां ब्रह्मज्ञानिनां मध्ये वरिष्ठः अतिश्रेष्ठ इत्यर्थः ॥ ४ ॥

उक्तात्मज्ञानस्य साधनान्याह—

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन
ब्रह्मचर्येण नित्यम् । अन्तःशरीरे ज्योतिर्मयो
हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥

नित्यमित्यस्य तृतीयान्तसत्यादिपदचतुष्टयेनान्वयः । तथा हि एषः प्रकृत आत्मा नित्यं सत्येन सर्वदा यथार्थसंभाषणेन लभ्यः प्राप्तव्यः नित्यं तपसा सर्वदा मनस इन्द्रियाणां चैकाग्रतालक्षणेन लभ्य इत्यनुषङ्गः । नित्यं सम्यग्ज्ञानेन तत्त्वंपदार्थशोधनरूपेण लभ्यः नित्यं ब्रह्मचर्येण अष्टविधमैथुनपरित्यागेन लभ्य इत्यर्थः । ननु कोऽसावात्मा य उक्तसाधनैर्लभ्यते इत्यत आह—अन्त इति । शरीरे अन्तःशरीरमध्ये हार्दाकाशे ज्योतिर्मयः प्रकाशस्वरूपः हि प्रसिद्धः शुभ्रः शुद्धः यम् आत्मानं यतयः संन्यासिनः क्षीणदोषाः कामक्रोधादिदोषरहिताः पश्यन्ति अपरोक्षतया विजानन्तीत्यर्थः ॥ ५ ॥

उक्तसाधनेषु सत्यस्य प्राधान्यमाह—

सत्यमेव जयते नानृतं सत्येन पन्था विततो देव-

यानः । येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्

सत्यस्य परमं निधानम् ॥ ६ ॥

सत्यमेव सत्यवानेव जयति अनृतवादिनमभिभवति नानृतम् अनृतवादी न जयतीति लोके सत्यस्योत्कृष्टत्वं प्रसिद्धं शास्त्रेऽपि सत्यस्योत्कृष्टत्वं प्रसिद्धमित्याह—सत्येनेति । सत्येन यथाभूतार्थकथनेन पन्था देवयानमार्गः विततः सातत्येन प्रवृत्तः । येन पथा ऋषय उपासकाः आप्तकामाः विगततृष्णाः आक्रमन्त्याक्रमन्ते हि प्रसिद्धम् । आक्रमणस्थानमाह—यत्रेति । यत्र यस्मिन् तत् परमार्थतत्त्वं सत्यस्य सत्यरूपोत्कृष्टसाधनस्य सम्बन्धि साध्यं परमं प्रकृष्टं निधानं भूमिनिधेयधनवत् पुरुषार्थरूपं प्रवर्तते इत्यर्थः ॥ ६ ॥

यत्सत्यादिप्राप्तिसाधनं ब्रह्मोक्तं तत्कीदृशं किं धर्मकञ्चेत्यत आह—

बृहच्च तत् दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं

विभाति । दूरात्सुदूरे तदिहान्तिके च पश्य-

त्स्विहैव निहितं गुहायाम् ॥ ७ ॥

तत् प्रकृतं ब्रह्म बृहत् महत् महत आकाशादेरप्याधारत्वात् दिव्यं स्वप्रकाशम् अचिन्त्यरूपं न चिन्तयितुं शक्यं रूपमस्येत्यचिन्त्यरूपं तत् ब्रह्म सूक्ष्मात्सूक्ष्मतरं सूक्ष्मात् परमाण्वादेरप्यत्यन्तसूक्ष्मं तदान्तरत्वात् । विभाति विविधं चन्द्रसूर्यादिरूपेण भाति दीप्यते दूरात्सुदूरे असमाहितचित्तानामत्यन्तदूरप्रदेशे वर्ततेऽविदुषामत्यन्ताऽगम्यत्वात् । तत् प्रकृतं ब्रह्म इह शरीरे अन्तिके च समाहितचित्तानामत्यन्तसमीप एव स्थितं विदुषामात्मत्वात् । तदेव स्पष्टयति—इहैवेति । इहैव अत्यन्तसमीपे एव पश्यत्सु चेतनावत्सु प्राणिषु गुहायां बुद्धौ निहितं स्थितमित्यर्थः ॥ ७ ॥

पुनरप्यसाधारणं तदुपलब्धिसाधनमाह—

न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा

कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु

तं पश्यते निष्कलं ध्यायमानः ॥ ८ ॥

प्रकृतमात्मतत्त्वं चक्षुषा चक्षुरिन्द्रियेण न गृह्यते केनापि पुरुषेण न ज्ञायते अरूपत्वात्, नापि वाचाऽनभिधेयत्वात् वागिन्द्रियेणापि न गृह्यते वक्तुं न शक्यते । अन्यैर्देवैः अन्यैरिन्द्रियैरपि न गृह्यते नोपलभ्यते । तपसा

चान्द्रायणादिरूपेण कर्मणा वा अग्निहोत्रादिना च न गृह्यते केनापि नोपलभ्यते । केन तर्हि गृह्यते इत्यत आह—ज्ञानप्रसादेनेति । ज्ञानप्रसादेन बुद्धेर्बाह्यविषयेषु रागादिमलनिराकरणेन विशुद्धसत्त्वः शुद्धान्तःकरणो ब्रह्मदर्शनयोग्यः । ततस्तु ब्रह्मदर्शनयोग्यत्वात् तम् आत्मानं निष्कलं निरवयवं ध्यायमानः एकाग्रेण मनसा चिन्तयन् सन् पश्यते पश्यति अपरोक्षतया विजानातीत्यर्थः ॥ ८ ॥

पुनरप्यसाधारणं तदुपलब्धिसाधनमाह—

एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः

पञ्चधा संविवेश । प्राणैश्चित्तं सर्वमोतं प्रजानां

यस्मिन्विशुद्धे विभवत्येष आत्मा ॥ ९ ॥

यस्मिन् शरीरे प्राणः प्राणवायुः पञ्चधा प्राणापानसमानव्यानोदानभेदेन संविशेश सम्यक् प्रविष्टः, तस्मिन्नेव शरीरे हृदये एषः प्रकृतः आत्मा प्रत्यक्चैतन्यरूपः अणुः सूक्ष्मः करणागोचरः चेतसा विशुद्धज्ञानेन केवलेन वेदितव्यः ज्ञातव्य इत्यर्थः । चेतसा वेदितव्यत्वसंभावनार्थं चेतस आत्मव्याप्तत्वमाह—प्राणैरिति । प्रजानां जनानां सर्वं चित्तम् अन्तकरणं प्राणैः चक्षुरादीन्द्रियैः सहितम् ओतं चेतनेन व्याप्तं चित्तादौ चैतन्याध्यासदर्शनात् । ननु यदि सर्वं चित्तं चैतन्येन व्याप्तं तर्हि किमिति सर्वचित्तं तद्ब्रह्मापरोक्षं नानुभवतीत्यत आह—यस्मिन्निति । यस्मिन् चित्ते विशुद्धे पञ्चक्लेशादिमलररहिते एषः प्रकृतः आत्मा विभवति विशेषेण स्वस्वरूपेण भवति आत्मानं प्रकाशयतीति यावत् ॥ ९ ॥

एवमुक्तलक्षणं सर्वात्मानमात्मत्वेन विजानतः पुरुषस्य सर्वात्मत्वादेव सर्वावाप्तिलक्षणं फलमाह—

यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः

कामयते यांश्च कामान् । तं तं लोकं जायते

तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ १० ॥

इति तृतीयमुण्डके प्रथमः खण्डः ॥ १ ॥

यं यं लोकं पित्रादिलक्षणं मनसा संविभाति मह्यं अन्यस्मै वा भवेदिति मनसा सङ्कल्पयति विशुद्धसत्त्वः निर्मलान्तःकरणः आत्मवित् यांश्च कामान् यादृशान् विषयान् कामयते प्रार्थयते तं तं लोकं

पित्रादिसंज्ञकं जायते प्राप्नोति तांश्च कामान् तादृशानभिलषितपदार्थान् च जायते इत्यनुषङ्गः। तस्मात् विदुषः सत्यसङ्कल्पत्वात् भूतिकामः विभूतेरिच्छावान्पुरुषः आत्मज्ञं हि आत्मविदमेव अर्चयेत् पूजयेत् पादप्रक्षालनशुश्रूषानमस्कारादिभिः। अत्र च निर्गुणब्रह्मविदः सगुणब्रह्मविद्याफलोक्तिः निर्गुणब्रह्मविद्यास्तुत्यर्था ॥ १० ॥

इति तृतीयमुण्डके प्रथमखण्डव्याख्या ॥ १ ॥

अथ तृतीयमुण्डके द्वितीयः खण्डः

उक्तविदुषः सर्वावाप्तौ हेतुमाह—

स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं
भाति शुभ्रम्। उपासते पुरुषं ये ह्यकामास्ते
शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥

यस्मात् सः विद्वान् एतत् प्रकृतं परममुत्कृष्टं ब्रह्म धाम सर्वकामानामाश्रयभूतं ब्रह्म वेद विजानाति यत्र यस्मिन्ब्रह्मणि विश्वं समस्तं जगन्निहितमर्पितं यच्च शुभ्रं शुद्धं ब्रह्म स्वेन ज्योतिषा भाति प्रकाशते। उक्तब्रह्मविदं ये निष्कामतयोपासते तेषां फलमाह—ये हीति। ये ह्यकामाः विभूतितृष्णारहिता एव ये मुमुक्षवः सन्तः पुरुषम् आत्मज्ञम् उपासते सेवन्ते ते आत्मविदुपासकाः धीराः धीमन्तः एतत् सर्वजनप्रसिद्धं शुक्रं शरीरोत्पत्तिकारणं रेतः अतिवर्तन्ति रेतो भूत्वा स्त्रीयोनौ न प्रविशन्तीत्यर्थः ॥ १ ॥

मुमुक्षोः कामत्याग एव प्रधानं साधनमित्येतद्दर्शयति—

कामान्यः कामयते मन्यमानः स कामभिर्जायते
तत्र तत्र। पर्याप्तकामस्य कृतात्मनस्तु इहैव
सर्वे प्रविलीयन्ति कामाः ॥ २ ॥

यः पुरुषः कामान् दृष्टादृष्टेष्टविषयान् कामयते प्रार्थयते मन्यमानः उक्तविषयगुणांश्चिन्तयमानः स विषयान्प्रार्थयमानः पुरुषः कामभिः धर्माधर्मप्रवृत्तहेतुभिर्विषयेच्छारूपैः कामैः सह तत्र तत्र जायते यत्र यत्र विषयप्राप्तिनिमित्तकामाः कर्मसु पुरुषं नियोजयन्ति तेषु तेषु विषयेषु तैः कामैरेव वेष्टित उत्पद्यते। निष्कामस्य ततो वैलक्षण्यमाह—पर्याप्तेति। पर्याप्तकामस्य पर्याप्ता विषयेषु दोषदर्शनेन

निवृत्ताः कामा यस्य स पर्याप्तकामस्तस्य । यद्वा—परि समन्तात् आप्ताः सर्वात्मकत्वात् प्राप्ताः सर्वकामा येन तस्य पर्याप्तकामस्य । कृतात्मनस्तु विषयेभ्योऽपनीय विद्यया स्वेन रूपेण कृत आत्मा मनो येन तस्यात्मविदस्तु इहैव जीवितशरीरे एव सर्वे कामाः दृष्टादृष्टेष्टविषयेच्छारूपाः प्रविलीयन्ति विलयमुपयान्ति नश्यन्तीत्यर्थः । कामास्तज्जन्महेत्वविद्याविनाशान्न जायन्त इत्यभिप्रायः ॥ २ ॥

आत्मज्ञानस्य प्रकृष्टमुपायं वक्तुं वेदाध्ययनादीनां ज्ञानसाधनत्वं निराकरोति—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥३॥

अयमात्मा प्रत्यगभिन्नब्रह्मरूपः प्रवचनेन वेदाध्यापनेन लभ्यः न ज्ञातुं शक्यः, न मेधया ग्रन्थार्थधारणशक्तिरूपया न लभ्यः, न बहुना श्रुतेन उपनिषद्विचारातिरिक्तानेकशास्त्रश्रवणेन गुरूपदेशं विनोपनिषच्छ्रवणेनापि न लभ्यः। तर्हि केनोपायेन लभ्यत इत्यत आह—यमिति । एष मुमुक्षुः यमेव स्वात्मानमेव वृणुते श्रवणमननादिभिः प्राप्तुमिच्छति श्रवणादिकालेऽपि प्रत्यग्ब्रह्मैवाहमित्यनुसन्धानं करोतीति यावत् । तेन अभेदानुसन्धानवता पुरुषेण लभ्यः ज्ञेयः स आत्मेति शेषः । यद्वा—एषः परमात्मा गुरुमूर्तिस्थः यमेव यमधिकारिणमेव वृणुते अनुगृह्णाति, तेन गुर्वनुगृहीतेन पुरुषेण लभ्यः ज्ञातुं शक्यः स आत्मेत्यर्थः । नित्यप्राप्तस्य लाभो न दर्शनादन्य इत्यत आह—तस्येति । तस्य गुरुणाऽनुगृहीतस्य मुमुक्षोः एषः प्रकृत आत्मा स्वां तनुं स्वकीयमानन्दात्मकं स्वरूपं विवृणुते दर्शयतीत्यर्थः ॥ ३ ॥

बलादीनामात्मज्ञाने सहकारितामाह—

नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो
वाऽप्यलिङ्गात् । एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष
आत्मा विशते ब्रह्मधाम ॥ ४ ॥

अयमात्मा प्रकृतः परमात्मा बलहीनेन कामादिशत्रुभिरनभिभाव्यता लक्षणबलरहितेन पुरुषेण न लभ्यः न ज्ञेयः । न च प्रमादात् विषया-

सक्तिलक्षणप्रमादात् अयमात्मा न लभ्य इत्यनुषङ्गः । तपसो वाप्यलिङ्गात् तपो ज्ञानं लिङ्गमान्तरबाह्यत्यागलक्षणः संन्यासः संन्यासरहितज्ञानादपि अयमात्मा न लभ्य इत्यर्थः । एतैः बलाऽप्रमादलिङ्गतपोभिः उपायैः साधनैः यस्तु विद्वान् यो विवेकी यतते तत्परः सन् यत्नवान् भवति, तस्य बलादिसाधनैर्यतमानपुरुषस्य एष आत्मा प्रत्यक्चैतन्यरूपः ब्रह्मधाम ब्रह्मस्वरूपं विशते संप्रविशतीत्यर्थः ॥ ४ ॥

उक्तप्रवेशमेव विशदयति—

संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति ॥५॥

ये ऋषयः शास्त्रविदः एनम् आनन्दलक्षणमात्मानं संप्राप्य सम्यक् ज्ञात्वा ज्ञानतृप्ताः आत्मज्ञानेन सन्तुष्टाः कृतात्मानः परमात्मस्वरूपेणैव निष्पन्नात्मानः सन्तः आत्मति संलग्नचित्ता वा वीतरागाः रागादिदोषरहिताः प्रशान्ताः निगृहीतेन्द्रियाः धीराः विवेकिनः युक्तात्मानः समाहितचित्ताः सन्तः ते उक्तलक्षणा ऋषयः सर्वगं सर्वव्यापकं ब्रह्मात्मानं सर्वतः सर्वत्र प्राप्य ज्ञात्वा सर्वमेवाविशन्ति सर्वमेव समस्तमेव शरीरपातकालेऽप्याविशन्ति घटे भिन्ने घटाकाशस्य महाऽऽकाशाभेदवदविद्याकृतोपाधिपरिच्छेदं जहति एवं ब्रह्मविदो ब्रह्मधाम प्रविशन्तीत्यर्थः ॥ ५ ॥

किञ्च—

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ ६ ॥

यतयः उक्तबलादिसाधनैर्यतमानाः वेदान्तविज्ञानसुनिश्चितार्थाः वेदान्ता महावाक्यानि तज्जन्यविज्ञानस्यार्थो विज्ञेयः परमात्माः सः सुनिश्चितः संशयविपर्ययरहितो येषां ते । तथा संन्यासयोगात् शुद्धसत्त्वाः संन्यासः कर्मत्यागः योगः श्रवणादिरूपा ब्रह्मनिष्ठा ताभ्यां शुद्धं रागादिमलरहितमन्तःकरणं येषां ते तथा । ते सर्वे उक्तलक्षणवन्तः सर्वे यतयः । परान्तकाले लिङ्गशरीरभङ्गरूपचरममरणसमये परं सर्वोत्कृष्टम् अमृतं ब्रह्मात्मभूतं येषां ते तथा सन्तः । ब्रह्मलोकेषु ब्रह्मलोकः अधिकारिबहुत्वमादाय बहुवचनं ब्रह्मणीति यावत् । परिमुच्यन्ति उपाधिपरित्यागेन ब्रह्मण्येकतां प्राप्नुवन्तीत्यर्थः ॥ ६ ॥

मोक्षप्रकारमाह—

गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥ ७ ॥

विदुषो मोक्षकाले पञ्चदशकलाः प्राणश्रद्धामहाभूतपञ्चकेन्द्रिय-मनोऽन्नवीर्यतपोमन्त्रकर्मलोकात्मकाः पञ्चदशसंख्याकाः कलाः देहारंभकाः प्रतिष्ठा गताः। प्रतिष्ठा इति द्वितीयाबहुवचनम्, स्वस्वकारणं प्राप्ता भवन्तीत्यर्थः। देवाश्च सर्वे चक्षुरादिकरणस्थाः सूर्यादीनां शक्तयः प्रतिदेवतासु सूर्यादिषु गता भवन्तीत्यनुषङ्गः। कर्माणि विदुषा कृतानि प्रारब्धव्यतिरिक्तानि प्रारब्धस्य भोगादेव क्षयात्। विज्ञानमयश्च विज्ञानप्रायः कर्ता चात्मा सर्वे उक्तकर्मादयः सर्वे परे अव्याकृतात्परे अव्यये अनन्ते ब्रह्मणि एकीभवन्ति जलाद्याधारापनये सति सूर्यादिप्रतिबिम्बवत् स्वाश्रयदेहादौ नष्टे सति ब्रह्मण्येकतां प्राप्नुवन्तीत्यर्थः॥ ७॥

उक्तविज्ञानमयस्यैकीभावं दृष्टान्तेन स्पष्टयति—

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे
विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुष-
मुपैति दिव्यम्॥ ८॥

नद्यः गङ्गायमुनाद्याः स्यन्दमानाः गच्छन्त्यः नामरूपे नाम च रूपं च नामरूपे गङ्गाद्यात्मके विहाय त्यक्त्वा यथा समुद्रेऽस्तं गच्छन्ति समुद्रं प्राप्य यथा समुद्ररूपा भवन्ति तथा विद्वान् आत्मज्ञः नामरूपात् देवताद्यात्मकात् विमुक्तः रहितः सन् परात् व्याकृतपरादव्याकृतात् परम् उत्कृष्टं दिव्यं प्रकाशरूपं पुरुषं सर्वत्र पूर्णं ब्रह्म उपैति प्राप्नोतीत्यर्थः॥ ८॥

ब्रह्मविद्याप्राप्तौ सत्यां न कोऽपि मोक्षे प्रतिबन्धोऽस्तीत्याह—

स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले
भवति। तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तो-
ऽमृतो भवति॥ ९॥

यः कोपि पुरुषः ह वै निश्चयेन तत् प्रकृतं परमं ब्रह्म सर्वोत्कृष्टं ब्रह्म वेद अहमेव ब्रह्मास्मीति साक्षाज्जानाति सः ब्रह्मवित्पुरुषः ब्रह्मैव भवति ब्रह्मस्वरूप एव भवति। किञ्च अस्य विदुषः कुले पुत्रादिवंशे शिष्यादिवंशे वा अब्रह्मवित् ब्रह्मज्ञानरहितो न भवति ब्रह्मविदेव भवतीत्यर्थः। किञ्च तरति शोकं इष्टवस्तुवैकल्येन मनसि जायमानः सन्तापः शोकः, जीवन्नेव तद्रहितो भवतीत्यर्थः। पाप्मानं धर्माधर्माख्यं पापं तरति अतिक्रामति गुहाग्रन्थिभ्यो बुद्धिगताऽविद्याग्रन्थिभ्यः

विमुक्तः रहितः सन् अमृतो भवति मुक्तो भवतीत्युक्तमेव 'भिद्यते हृदयग्रन्थिरि'त्यादिना ॥ ६ ॥

ब्रह्मविद्यासम्प्रदाने विधिमुपदर्शयन्नुपसंहरति—

तदेतदृचाऽभ्युक्तं क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः । तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥ १० ॥

तदेतद् ब्रह्मविद्यासम्प्रदानविधानं ऋचा मन्त्रेण अभ्युक्तं कथितम् । तं मन्त्रं दर्शयति—क्रियेति । क्रियावन्तः निष्कामकर्मानुष्ठानेन शुद्धचित्ताः श्रोत्रियाः वेदार्थविदः ब्रह्मनिष्ठाः सगुणब्रह्मोपासकाः श्रद्धयन्तः श्रद्धधानाः सन्तः स्वयमेकऋषिम् एकर्षिसंज्ञकमग्निं जुह्वते जुह्वति । यैस्तु यैश्चाधिकारिभिः शिरोव्रतं शिरस्यग्निधारणरूपं व्रतं विधिवत् अथर्ववेदोक्तविधानेन चीर्णं कृतं तेषामेव उक्ताधिकारिणामेव एतां पूर्वोक्तां ब्रह्मविद्यां ब्रह्मविषयां विद्यां वदेत् ब्रूयात् ॥ १० ॥

उक्तग्रन्थाधिकारिणं दर्शयन् प्रकृतकथामुपसंहरति—

तदेतत्सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते ।
नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ११ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः शान्तिः शान्तिः ।

इति तृतीयमुण्डके द्वितीयः खण्डः ॥ २ ॥

तदेतत् प्रकृतमक्षरं पुरुषं सत्यं त्रिकालाबाध्यं पुरा पूर्वकाले ऋषिरङ्गिराः अङ्गिरसनामक ऋषिः उवाच शौनकायोक्तवान् । एवमन्योऽपि विधिवदुपसन्नाय मुमुक्षवे ब्रूयादिति भावः । किञ्च एतत्प्रकृतं ग्रन्थम् अचीर्णव्रतः न चीर्णं शिरस्याग्निधारणलक्षणं व्रतं येन सः पुरुषः नाधीते न पठति । नमः परमऋषिभ्यः परमं ब्रह्म साक्षाद्दृष्टवन्तो ये ब्रह्मादयस्तेभ्यो नमः । द्विरुक्तिरत्यन्तादरार्था समाप्त्यर्था च ॥ ११ ॥

इति श्रीमदुदासीनवर्यामरदासपदपद्ममकरन्दतृप्तमानसेन
श्रीमदमरदासाख्येन विदुषा रचिता मुण्डको-
पनिषद्व्याख्या उपनिषन्मणिप्रभा
समाप्ता ।



# माण्डूक्योपनिषद्

## मणिप्रभाव्याख्यासमलंकृता

ॐ तत्सद् ब्रह्मणे नमः

यद्वाचकत्वादोंशब्दः स्तूयते वेदमस्तकैः ।
तं वन्दे परमात्मानं कृष्णनामामृतं परम् ॥ १ ॥
श्रीगुरूणां पदद्वन्द्वं प्रणम्याद्वन्द्वतास्पदम् ।
माण्डूक्योपनिषद्व्याख्या क्रियते पदगामिनी ॥ २ ॥

ॐ कारस्य ब्रह्मवाचकत्वात् वाक्यवाचकयोरभेदस्य लोकप्रसिद्धत्वाद् ब्रह्मनामधेयमोङ्कारं ब्रह्मदृष्ट्या तावदाह--

**ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥१॥**

ब्रह्मबुद्ध्या दृष्टः सन् द्रष्टॄन् अवतीत्योम् इति-शब्द ॐकारानुकरणार्थः। तथा च ॐ इत्येतत् ॐ इत्याकारकम् अक्षरं वर्णात्मकम् इदं विविक्तप्रतीतिगोचरं चराचरात्मकं जगत् सर्वं निखिलमस्तीति शेषः। तस्य उक्तस्य सर्वात्मकोङ्कारस्य उपव्याख्यानं उप ब्रह्मधीहेतुत्वाद् ब्रह्मसामीप्येन विस्पष्टम् आ आसमन्तात् ख्यानं विवरणं क्रियत इति शेषः। भूतम् अतीतकालिकं वस्तु भवत् वर्तमानकालिकं भविष्यदनागतकालिकम्। इति एवंभूतं सर्वं निखिलवस्तुजातं ॐकार एव प्रणव एव, न त्वन्यत्। भूतादिकालिकानां नामाभिन्नत्वान्नाम्नां चोंकाराभेदस्य श्रत्यन्तरसिद्धत्वात् भूतादिकालिकानां नामद्वारोङ्कारत्वमिति भावः। यच्चान्यत् उक्तभिन्नं यत् कार्यगम्यं त्रिकालातीतम् उक्तकालत्रयसम्बन्धशून्यं कालस्यापि कारणमव्याकृतसूत्रात्मकं तदपि उक्तलक्षणमपि ओंकार एव ओंकारवाच्यत्वात् प्रणवात्मकमेवेत्यर्थः॥ १ ॥

एवमोङ्कारवाच्यस्य भूतादिकालिकस्य सर्वस्य वाचकेनो ॐकारेणा-भेदमुक्त्वा इदानीमोङ्काराभिन्नस्य सर्वस्य ब्रह्मकार्यत्वाद् ब्रह्माभेदमाह—

सर्वं ह्येतद् ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात् ॥ २ ॥

हि निश्चितं सर्वं निखिलं एतत् उक्तलक्षणमोङ्कारमात्रं प्रपञ्चजातं ब्रह्म सत्यज्ञानानन्तलक्षणस्वरूपमित्यर्थः। जडवस्तुन एव ब्रह्मात्मत्व-मुक्तम्, न तु चेतनस्येति शंकानिवृत्त्यर्थमाह—अयमात्मेति। अयम् अस्म-त्प्रत्ययगोचरश्चेतनस्त्वंपदार्थः। ब्रह्म सत्यादिलक्षणं तत्पदार्थः। सः कार्यकारणभावं विना ब्रह्मतादात्म्यापन्नः अयमात्मा उक्तलक्षणस्त्वं-पदार्थः चतुष्पात् चत्वारः पादा यस्य स चतुष्पात्। विश्वादीनां त्रयाणां विलापनेन तुरीयं प्रतिपद्यतेऽनेनेति करणव्युत्पत्त्या पादशब्दो विश्वादि-परः, कर्मव्युत्पत्त्या तु तुरीयपर इति भावः ॥ २ ॥

कथं चतुष्पात्त्वमित्यत आह—

जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः
स्थूलभुग्वैश्वानरः प्रथमः पादः ॥ ३ ॥

जागरितस्थानः जागरितं स्थानमभिमानविषयभूतं यस्य स तथा। बहिःप्रज्ञः बहिः स्वात्मव्यतिरिक्तशब्दादिविषयेषु प्रज्ञा बुद्धिवृत्तिरूपा यस्य स बहिःप्रज्ञः। सप्ताङ्गः सप्तसंख्याकानि द्युसूर्यवाय्वाकाशरयिपृथि-व्याहवनीयाख्यानि अङ्गानि मूर्धचक्षुःप्राणदेहमध्यबस्तिपादमुख-स्थानीयानि यस्य स सप्ताङ्गः। एकोनविंशतिमुखः ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणपञ्चकं अन्तःकरणचतुष्कमित्येकोनविंशतिसंख्या-कानि मुखानि विषयोपलब्धिद्वाराणि यस्य स एकोनविंशतिमुखः। स्थूलभुक् स्थूलान् शब्दादिविषयानुक्तैकोनविंशतिमुखैर्भुङ्क्त इति स्थूलभुक्। वैश्वानरः विश्वान्सर्वान्नरान्भोक्तृत्वेन व्यवस्थितान् प्रति-धर्माधर्मकर्मानुसारेण सुखदुःखादिकर्मफलप्रापणाद्वैश्वानर इत्युच्यते। यद्वा—विश्वे नरा अस्येति विश्वानरः, 'नरे संज्ञायाम्' इति पूर्वपदस्य दीर्घता। विश्वानर एव वैश्वानरः, 'प्रज्ञादिभ्यश्चे'ति सूत्रेण स्वार्थिकोऽण्, सर्वपिण्डात्माऽनन्यत्वात्। यद्वा विश्वश्चासौ नरश्चेति विश्वानरः, उक्तसूत्रेण पूर्वपदस्य दीर्घता। विश्वानर एव वैश्वानरः, राक्षसवायसा-दिवत् प्रज्ञादिभ्यश्चेति सूत्रेण स्वार्थे तद्धितः। यद्वा—विश्वेषां नरशब्द-वाच्यानां चतुर्विधस्थूलदेहानामधिष्ठाताऽयं वैश्वानरः। प्रथमः पादः उक्तात्मनः प्रथमांऽशः। न च विश्वस्य तैजसादुत्पत्तेस्तैजसस्यैव प्राथम्यं युक्तम्, कारणापेक्षया कार्यस्य पश्चाद्भावित्वनियमादिति वाच्यम्;

वलापनापेक्षयाऽत्र प्राथम्यस्योक्तत्वात्, न तु सृष्ट्यपेक्षया। व्यष्टि-समष्ट्योरेकत्वविवक्षणं तु युगपदुभयविलापनेन अद्वैतप्रतिपत्त्यर्थ-मित्यभिप्रायः ॥ ३ ॥

इदानीं द्वितीयपादमाह—

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः
प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ ४ ॥

स्वप्नस्थानः स्वप्नः जागरितवासनाजन्यः स्थानं यस्य स तथा। अन्तःप्रज्ञः अन्तर्हृदि मानसविषयेषु प्रज्ञा बुद्धिर्यस्य स तथा। सप्ताङ्गः एकोनविंशतिमुख इति पदद्वयं पूर्ववद् व्याख्येयम्। प्रविविक्तभुक् प्रविविक्तं स्थूलात् सूक्ष्मं वासनामयं भुङ्क्ते इति तथा। तैजसः तेजसि वासनामयप्रज्ञायामाश्रयत्वेन वर्तमानः। द्वितीयः पादः जागरितानन्तभावित्वादात्मनो द्वितीयोंऽशः ॥ ४ ॥

तृतीयं पादमाह—

यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ॥ ५ ॥

यत्र यस्मिन्काले स्थाने वा सुप्तः उपरतकरणग्रामः सन् कञ्चन कमपि कामं पुण्यपापहेतुभूतं पुत्रदारादिविषयजातं न कामयते न वाञ्छति, कञ्चन कमपि स्वप्नं शुभाशुभजागरितवासनाजन्यं पदार्थं न पश्यति नावलोकयति, तत् उक्तकामाकामनस्वप्नादर्शनरूपं सुषुप्तं गाढनिद्रानिमित्तकमवस्थाविशेषं सुषुप्तस्थानः सुषुप्तं श्रुत्या स्वयमेवोक्तं स्थानं यस्य स सुषुप्तस्थानः। एकीभूतः निखिलजगद्बीजस्यावरणात्मकाज्ञानस्यानुपरमादनेकोऽप्यन्तःकरणादिविक्षेपाभावादेकतां प्राप्तः प्रज्ञानघन एव जाग्रत्स्वप्नज्ञानानां कारणरूपेण घन एकपिण्डीभावो यस्मिन् सः प्रज्ञानघनः। एवकारान्न जात्यन्तरं प्रज्ञानव्यतिरिक्तमस्तीत्यर्थः। आनन्दमयः स्वरूपसुखाभिव्यक्तिप्रतिबन्धकदुःखाभावादानन्दप्रायः हि यस्मादानन्दमयः तस्मात् आनन्दभुक् आनन्दं विक्षेपास्याभावादात्मसुखं भुङ्क्तेऽज्ञानवृत्तिभिरनुभवतीत्यानन्दभुक्। यथा लोके निरायासस्थितः सुखी आनन्दभुगुच्यते तद्वत्। चेतोमुखः चेतः स्वप्नजागरितं तत्प्रति कारणत्वेन मुखं द्वारभूतो यः स चेतोमुखः। नहि स्वप्नजागरितयोः सुषुप्तद्वारं विना संभवोऽस्ति तयोस्तत्कार्यत्वात्, अतः सुषुप्ताभिमानी प्राज्ञः चेतोमुख-

इत्युच्यते। यद्वा—आत्मचैतन्यरूपं चेतो मुखं स्वप्नजागरितागमनं प्रति द्वारभूतमस्येति चेतोमुखः। नहि चैतन्यमन्तरेण कापि चेष्टा सिद्ध्यतीति भावः। प्राज्ञः प्रकृष्टे स्वयंप्रकाशानन्दात्मनि ज्ञा ज्ञप्तिरज्ञानवृत्त्यात्मको बोधो यस्य सः प्रज्ञः। प्रज्ञ एव प्राज्ञः, स्वार्थे तद्धितः। तृतीयः पादः जागरितस्वप्नानन्तरभावित्वादात्मनस्तृतीयोंऽशः॥ ५॥

सर्वस्य कारणत्वादुक्तं प्राज्ञमेव स्तौति—

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः

सर्वस्य प्रभवाप्ययौ हि भूतानाम्॥ ६॥

एषः प्राज्ञः सर्वेश्वरः सर्वस्य नियन्ता। एषः प्राज्ञः सर्वज्ञः सर्वं जानातीति सर्वज्ञः। एषः प्राज्ञः अन्तर्यामी अन्तरनुप्रविश्य सर्वभूतयमयिता। एषः प्राज्ञः सर्वस्य योनिः चेतनाचेतनात्मकनिखिलजगतः कारणम्। उक्तसर्वकारणत्वे हेतुमाह—प्रभवेति। हि यस्मात् भूतानां चेतनाचेतनानां प्रभवाप्ययौ उत्पत्तिविनाशौ इतो भवत इति शेषः॥ ६॥

चतुर्थपादमाह—

नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा सविज्ञेयः॥ ७॥

नान्तःप्रज्ञं स्वप्नावस्थायां मनोविरचितविषयज्ञानशून्यम्। न बहिःप्रज्ञं जागरिते इन्द्रियजन्यविषयज्ञानरहितम्। नोभयतःप्रज्ञं जागरितस्वप्नयोः सन्ध्यवस्थावबोधरहितम्। न प्रज्ञानघनं सुषुप्तावस्थायां जाग्रत्स्वप्नज्ञानानां कारणरूपेण घनीभावानाश्रयम्। न प्रज्ञं युगपत्सर्वविषयज्ञातृत्वशून्यम्। नाप्रज्ञं न ज्ञानाभावरूपम्। अदृष्टं ज्ञानेन्द्रियाविषयभूतम्। अव्यवहार्यम् अर्थक्रियारहितम्। अग्राह्यं कर्मेन्द्रियैरगम्यम्। अलक्षणम् अलिङ्गम् अननुमेयम् इति यावत्। अचिन्त्यम् अन्तःकरणवृत्त्यविषयभूतम्। अव्यपदेश्यं शब्दशक्त्यविषयभूतम्। एकात्मप्रत्ययसारं जाग्रदाद्यवस्थासु एक एवात्मेत्याकारकः प्रत्ययोऽव्यभिचारिज्ञानमेव सारं प्रमाणं यस्मिन् तत्तथा। यद्वा एक आत्मप्रत्यय एव सारं प्रमाणं यस्याधिगमे तत्तुरीयमेकात्मप्रत्ययसारम्, 'आत्मेत्येवोपासीते'ति श्रुतेः। प्रपञ्चोपशमं प्रपञ्चस्य कार्यकारणरूपस्य उपशमोऽभावो यस्मिंस्तत्तथा। शान्तमविक्रियम्। शिवम् आनन्दस्वरूपम्।

अद्वैतं भेदशून्यं चतुर्थं तुरीयं पादं मन्यन्ते संख्याविषयत्वाभावेऽपि पूर्वोक्तपादत्रयापेक्षया चतुर्थमिति कल्पयन्ते शास्त्रविदः। सः वस्तुतः अतुरीयरूपोऽप्यविद्यया चतुर्थपादत्वेन कल्पितः आत्मा अस्मत्प्रत्ययविषयः सः तुरीयरूपः विज्ञेयः मुमुक्षुभिः साक्षात्कर्तव्य इत्यर्थः ॥ ७ ॥

एवं तत्त्वज्ञानसमर्थानामुत्तममध्यमाधिकारिणां त्रिभिः पादैरात्मन्यध्यारोपितस्य प्रपञ्चस्य चतुर्थपादेन अपवादाद्विशेयमात्मतत्त्वमुक्तम्। इदानीं तु येऽधमाधिकारिणोऽसम्भावनादिदोषाद् उपदेशप्रमाणाभ्यामुपस्थापितमप्यात्मतत्त्वं न जानन्ति तेषामनुकम्पया आरोपदृष्टिमेवावष्टभ्य आत्मोङ्कारयोरभेददृष्टिं विधत्ते—

सोऽयमात्मा अध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा
मात्राश्च पादा अकार उकारो मकार इति ॥ ८ ॥

सः चतुर्थपादत्वेन कल्पितोऽयमात्मा अस्मत्प्रत्ययगोचरः अध्यक्षरम् अक्षरं वाचकं प्रकरणमधिकृत्य वर्तते इत्यध्यक्षरम् अक्षराभिन्न इत्यर्थः। किं तदक्षरमित्यत आह—ॐकार इति। ॐकारस्वरूप एवेत्यर्थः। आत्मोङ्कारयोरभेदे हेतुमधिमात्रत्वसाम्यमाह—अधीति। अधिमात्रं मात्रा अकाराद्याश्चतस्रो अधिवर्तते इत्यधिमात्रमित्यर्थः। ननु ॐकारस्यैवाधिमात्रत्वं नात्मनः, तस्य पादशो विभक्तत्वादित्याशङ्क्य मात्राणां पादानां च अभेदमाह—पादा इति। पादाः विश्वतैजसप्राज्ञतुरीयाख्याश्चत्वारः। मात्राः अकारोकारमकारार्धमात्ररूपाः। उक्ताभेदं दृढीकर्तुं व्यतिहारेण निर्दिशति—मात्राश्चेति। मात्राश्च पादाः, चकार एवार्थकः। मात्रा अकाराद्याः पादाः विश्वादिपादस्वरूपा एवेत्यर्थः। अर्धमात्रायां स्तुरीयपादत्वात् तुरीयस्य च पूर्वपादत्रयादत्यन्तविलक्षणत्वादेवार्धमात्र त्यक्त्वा शेषमात्रा विभजते—अकार इति। अकार उकारो मकार इति इत्याकारिका मात्राः सन्तीत्यर्थः ॥ ८ ॥

अकारादिमात्राणां पादरूपताविभागमाह—

जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राऽऽप्तेरादिमत्त्वाद्वाऽऽप्नोति ह सर्वान् कामानादिश्च भवति य एवं वेद ॥ ९ ॥

जागरितं स्थानं यस्य स जागरितस्थानः। वैश्वानरः विश्वश्चासौ नरश्चेति विश्वानरः, विश्वानर एव वैश्वानरः वायसादिवत्। अकारः अकारसंज्ञकः। प्रथमा मात्रा ॐकारस्याद्यमात्रारूप इत्यर्थः। अकारवैश्वानरयोरभेदहेतुं तयोः साम्यमाह—आप्तेरिति। आप्तेर्व्याप्तेः 'अकारो वै सर्वा वागि'ति श्रुतेः अकारस्य व्यापकत्वं वैश्वानरस्यापि सप्ताङ्गत्वेन व्यापकत्वं पूर्वोक्तमिति हेत्वर्थः। हेत्वन्तरमाह—आदीति

आदिमत्वाद्वा वाशब्दः पक्षान्तरे, अकारः उकाराद्यपेक्षयाऽऽदिमान्, वैश्वानरस्तु तैजसाद्यपेक्षयाऽऽदिमान्, तस्य भाव आदिमत्त्वं तस्मात् आदिमत्त्वसाम्यादित्यर्थः। यद्वा—अआइई इत्येवमाद्यपेक्षया अकारस्यादिमत्त्वं ज्ञेयम्। विश्वाकारयोरैक्यज्ञानवतः सादृश्यविकल्पात्फलभेदमाह—आप्नोतीति। यः पुरुषः एवं उक्तप्रकारेण विश्वाकारयोरैक्यं वेद जानाति सः ह प्रसिद्धान् वै निश्चयेन सर्वान् अखिलान् कामान् काम्यमानान् पुत्रदारादिपदार्थान् आप्नोति प्राप्नोति, आदिश्च महतां मध्ये प्रथमो भवतीत्यर्थः॥ ६॥

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वोत्कर्षति। ह वै ज्ञानसन्ततिं समानश्च भवति नास्याऽब्रह्मवित्कुले भवति य एवं वेद॥ १०॥

स्वप्नस्थानस्तैजसः पूर्वं चतुर्थमन्त्रेषु उक्तः तैजसो द्वितीयः पादः उकारो द्वितीया मात्रा उकारसंज्ञकद्वितीयमात्रास्वरूप एव। उकारतैजसयोरैक्ये हेतुमाह—उत्कर्षादिति। उत्कर्षात् उकारस्याकारादूर्ध्वपाठेनोत्कर्षः, तैजसस्य तु विश्वात्सूक्ष्मत्वेनोत्कर्षः, तस्मादुकारतैजसयोरुत्कर्षसाम्यादित्यर्थः। उभयत्वाद्वा, वा इति पक्षान्तरे विश्वाकाराभ्यां तैजसोकारयोर्द्वितीयत्वात्। तैजसोकारयोरैक्यज्ञानवतः, फलमाह—य इति। यः पुरुषः एवं उक्तप्रकारेण तैजसोकारयोरैक्यं वेद जानाति ह वै प्रसिद्धः सः ज्ञानसन्ततिं शिष्यप्रशिष्यादिद्वारा ज्ञानस्य सन्तानम् उत्कर्षति वर्धयति, समानश्च शत्रुमित्रयोस्तुल्यश्च भवतीति स्पष्टम्। प्रत्येकं हेतुफलमुक्त्वा हेतुद्वयसमुच्चयज्ञानफलमाह—अस्येति। अस्य उत्कर्षोभयत्वाभ्यां तैजसोकारयोरेकत्वविदः कुले शिष्यप्रशिष्यादिरूपान्वये अब्रह्मविद् ब्रह्मज्ञानरहितो न भवतीति योजना॥ १०॥

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा मिनोति ह वा इदꣳ सर्वमपीतिश्च भवति य एवं वेद॥११॥

सुषुप्तस्थानः प्राज्ञः तृतीयपादत्वेन यः पूर्वोक्तः सः मकारस्तृतीया मात्रा, ॐकारस्य तृतीयमात्रारूपो मकारस्वरूप इत्यर्थः। प्राज्ञमकारयोरैक्ये सामान्यं हेतुमाह—मितेरिति। मितेः यथा यवाः प्रवेशनिर्गमनाभ्यां प्रस्थपरिमितपात्रेण मीयन्ते तथा विश्वतैजसावपि लयोत्पत्तिभ्यां प्राज्ञेन मीयेते एवमोङ्कारसमाप्तौ अकारोकारौ मकारे प्रविष्टाविव

भवतः पुनरोङ्कारोच्चारणे कृते सति मकाराग्निर्गताविव च लक्ष्येते। एवमिति हेतोरुभयत्र तुल्यत्वात्। अपीतेर्वा, वा-शब्दः पूर्ववत्पक्षान्तरे। अपीतिर्नाम स्वस्मिन्नेकीभावः। ॐकारस्योच्चारणेऽकारोकारौ अन्तिमाक्षरे मकारे एकीभूताविव लक्ष्येते तथा विश्वतैजसावपि सुषुप्तकाले प्राज्ञे एकीभूताविव भवतः। सामान्यद्वयद्वारेण प्राज्ञमकारयोरैकत्वज्ञानवतः फलभेदमाह—मिनोतीति। यः पुरुषः एवं सामान्यद्वयद्वारेण उक्तं प्राज्ञमकारयोरैक्यं वेद जानाति स इदं विविधप्रत्ययगम्यं सर्वं निखिल जगत् ह इति प्रसिद्धेन वै इति निश्चयेन मिनोति जगतो मायामयत्वात्मकयथार्थस्वरूपं जानाति। अपीतिश्च, अप्येति लीयते जगदस्मिन्निति व्युत्पत्त्या जगत्कारणात्मा च भवतीत्यर्थः। अङ्गभूतोक्तोपासनत्रयस्य विभागेन फलोक्तिस्तु प्रणवब्रह्मणोरभेदध्यानरूपप्रधानोपासनस्य स्तुत्यर्थ इत्यभिप्रायः॥ ११॥

अङ्गोपासनमुक्त्वा प्रधानोपासनमाह—

अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद य एवं वेद॥ १२॥

इति माण्डूक्योपनिषत्समाप्ता।

अमात्रः अकारादिमात्राहीनः ॐकारः प्रणवः चतुर्थः तुरीय आत्मैवेति विज्ञेय इति शेषेणान्वयः। अमात्रपदेनोङ्कारोऽत्रोक्तः न त्वर्धमात्रा, तेनोङ्कारार्धमात्रयोरभेदोऽवगम्यते। उक्तात्मानं विशिनष्टि—अव्यवहार्यः अर्थक्रियाशून्यः प्रपञ्चोपशमः प्रपञ्चस्योपशमो लयो यस्मिन्स तथा, जगल्लयाधारभूत इति यावत्। शिवः परमानन्दस्वरूपः। अद्वैतः अद्वयो भेदरहितः। एवं उक्तप्रकारेण ओंकार आत्मैव सर्वद्वैतकल्पनाऽधिष्ठानत्वेन वर्तमान एव यः उपासकः एवं पूर्वप्रकारेण ॐकारात्मनोस्तादात्म्यं वेद जानाति स आत्मना ॐकारेणालम्बनेन आत्मानं पारमार्थिकं ब्रह्मात्मस्वरूपं संविशति सम्यक् प्राप्नोतीत्यर्थः। पदाभ्यास उपनिषत्समाप्त्यर्थः। उत्तमाधिकारी ॐकारद्वारा ब्रह्मविदोङ्कारमालम्बनं नापेक्षते। मन्दमध्यमाधिकारिणां तु मात्रापादसाम्यविदां यथावदुपास्यमान ॐकारो ब्रह्मप्रतिपत्तये आलम्बनो भवति। उपासकानामोङ्कारालम्बनप्राप्तिद्वारा ब्रह्मप्रतिपत्तिर्भवति। तत्त्वनिश्चयसमर्थानां त्वोङ्कारालम्बनं विना ब्रह्मप्रतिपत्तिर्भवतीति भेदः॥ १२॥

इति माण्डूक्योपनिषद्व्याख्या उपनिषन्मणिप्रभा समाप्ता।

—:०:—

# तैत्तिरीयोपनिषद्

## मणिप्रभाव्याख्यासमलंकृता

०:*:०

ॐ तत्सद् ब्रह्मणे नमः

यतो जातमिदं सर्वं स्थितं यत्र च लीयते ।
सत्यं ज्ञानमनन्तं तं नमामि कृष्णनामकम् ॥ १ ॥
विद्याऽऽचार्यान् गुरून् भक्त्या गूढार्थानां प्रकाशकान् ।
वरिष्ठान्विदुषां सोऽहं प्रणमामि निरन्तरम् ॥ २ ॥
तैत्तिरीयकटीकेयमुपनिषन्मणिप्रभा ।
यथामति मया मृद्वी क्रियते पदगामिनी ॥ ३ ॥

अथ कृष्णयजुर्वेदीयतैत्तिरीयशाखायामुपनिषदारम्भः । तत्रोपनिषच्छब्देन ब्रह्मविद्योक्ता । ग्रन्थस्तु तदर्थत्वादुपनिषदित्युच्यते । मानान्तरेणानधिगतं ब्रह्मास्य विषयः, तद्विद्याद्वारा मुक्तिः प्रयोजनम्, प्रतिपाद्यप्रतिपादकभावः सम्बन्धः, साधनचतुष्टयसम्पन्नोऽधिकारीत्यनुबन्धचतुष्टयं प्रेक्षावतां प्रवृत्त्यंगभूतं तावत्सिद्धम् । अन्तःकरणशुद्धिमन्तरेण ब्रह्मविद्याप्राप्त्यसम्भवादन्तःकरणशुद्ध्यर्थं शिक्षा तावदुच्यते । तत्रापि नानाविधविघ्ननिवृत्त्यर्थं शान्तिकरं मन्त्रं तावदाह—

ॐ शं नो मित्रः शं वरुणः ।
शं नो भवत्वर्यमा ।
शं न इन्द्रो बृहस्पतिः ।
शं नो विष्णुरुरुक्रमः ।
नमो ब्रह्मणे । नमस्ते वायो ।

मित्रः अह्नः प्राणवृत्तेश्चाभिमानिदेवतारूपः नः अस्माकं शं सुखकृत् भवतु स्यात्। वरुणः रात्रेरपानवृत्तेश्चाभिमानिदेवतारूपः नः अस्माकं शं सुखकृत् भवतु। एवं शं नो भवत्विति सर्वत्रानुषंगः। अर्यमा चक्षुषः सूर्यमण्डलस्य चाभिमानिदेवतात्मकः शं नो भवतु। इन्द्रः बाह्वोर्बलस्य चाभिमानी देवः शं नो भवतु। बृहस्पतिः वाचो बुद्धेश्चाभिमानी देवः शं नो भवतु। विष्णुः पादयोरभिमानी देवः। तस्यैव विशेषणं 'उरुक्रम' इति। त्रिविक्रमावतारे विस्तीर्णपादयुक्त इति तदर्थः। शरीरस्थप्राणकरणाभिमानिनीनां देवतानां सुखकृत्त्वप्रार्थना त्वप्रतिबन्धेन विद्याश्रवणावधारणार्थो। ब्रह्मणे सूत्रात्मकवायवे नमः, प्रह्वीभावं करोमीति शेषः। हे वायो, ते तुभ्यं नमः नमस्करोमीति। नमो ब्रह्मणे इत्यत्र सूत्रात्मरूपेण वायोः परोक्षत्वात्सम्बोधनाभावः। नमस्ते वायो इत्यत्र प्राणवायुरूपेण वायोरपरोक्षत्वात् सम्बोधनमिति भावः।

तदेव स्पष्टयति—

त्वमेव प्रत्यक्षं ब्रह्मासि।
त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि।
ऋतं वदिष्यामि।
सत्यं वदिष्यामि।
तन्मामवतु।
तद्वक्तारमवतु।
अवतु माम्।
अवतु वक्तारम्।
ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥

इति तैत्तिरीयोपनिषदि प्रथमोऽनुवाकः ॥ १ ॥

त्वमेव प्राणात्मको वायुरेव प्रत्यक्षं साक्षिप्रत्यक्षं ब्रह्मासि ब्रह्म भवसि बृंहणहेतुत्वाद् ब्रह्म प्राणकृतेनाशनादिना शरीरादेर्बृंहणस्य प्रसिद्धत्वात् प्राण एवात्र ब्रह्मरूपेणोक्त इत्यर्थः। त्वामेव प्राणात्मकमेव प्रत्यक्षं ब्रह्म अपरोक्षब्रह्मस्वरूपं वदिष्यामि वदामि। ऋतं शास्त्रानुसारेण कर्तव्यतया निश्चितार्थं त्वां प्राणवाय्वात्मकं वदिष्यामि। सत्यं पूर्वनिश्चितमेव वाचा उच्चार्यमाणं सत्यशब्दितं भवति, तदपि त्वामेव वदिष्यामीति पूर्ववत्। तत् सूत्रात्मकं समष्टिरूपं प्राणात्मकं व्यष्टिरूपं

ब्रह्मशब्दितं मां शिष्यं अवतु विद्याग्रहणशक्तिप्रदानेन पालयतु। तत् उक्तलक्षणं ब्रह्म वक्तारम् उपदेष्टारमाचार्यम् अवतु वक्तृत्वसामर्थ्यप्रदानेन पालयतु। एवं साधनकाले शिष्याचार्ययोः श्रोतृत्ववक्तृत्वशक्तिप्रदानविषयां प्रार्थनामभिधाय फलकाले फलसिद्ध्यर्थं पुनः प्रार्थयते—अवतु माम् अवतु वक्तारम्। तत्र शिष्यस्य अविद्यातत्कार्यनिवृत्तिः फलम्, आचार्यस्य तु तादृशशिष्यप्रदर्शनेन विद्यासंप्रदायप्रवृत्तिप्रयुक्तपरितोषः फलम्। शान्तिरिति त्रिर्वचनं तु आध्यात्मिकादित्रिविधविघ्नप्रशमनार्थम्। तत्र ज्वरादय आध्यात्मिकाः, चौरव्याघ्राद्युपद्रवा आधिभौतिकाः, यक्षराक्षसाद्युपद्रवाश्च आधिदैविका इति विभागः॥ १॥

इति प्रथमोऽनुवाकः॥ १॥

एवं प्रथमानुवाकोक्तमन्त्रजपेन परिहृतविघ्नस्य पुरुषस्याध्ययनकाले स्वरादिष्वौदासीन्यनिवृत्त्यर्थं शिक्षामाह—

ॐ शीक्षां व्याख्यास्यामः। वर्णः स्वरः मात्रा बलं

साम सन्तानः इत्युक्तः शीक्षाध्यायः॥ २॥

शिक्षैव शीक्षा दैर्घ्यं च्छान्दसम्। शिक्षा शिक्ष्यतेऽनयेति शिक्षा, वर्णाद्युच्चारणलक्षणं शिक्ष्यते वेदनीयत्वेनोपदिश्यत इति वा शिक्षा, तां शीक्षां व्याख्यास्यामः विस्पष्टमासमन्तात्कथयिष्यामः। तत्र वर्णोऽकारादिः। स्वरः उदात्तोऽनुदात्तः स्वरितसंज्ञकश्च। मात्रा ह्रस्वदीर्घप्लुतरूपा। बलं स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतादिरूपः प्रयत्नविशेषः। साम वर्णानां मध्यमवृत्त्योच्चारणम्। समतेति साम, अतिद्रुतमतिविलम्बं च परिहृत्य यस्य यावदुच्चारणकालस्तावति काले तस्योच्चारणरूपमिति वा साम। सामगीतिविशेष इति वा साम। जैमिनिनाऽप्युक्तम्—'गीतिषु सामाख्ये'ति। सन्तानः वर्णयोरव्यवधानम्। तथा च वर्णादयः सन्तानान्ताः षट् इति एतावान् शीक्षाध्यायः, शीक्षा यस्मिन्नध्याये सोऽयं शीक्षाऽध्यायः उक्तः कथितः। नातोऽधिकं वेदोच्चारणे शिक्षणीयमस्तीत्यर्थः।

इति द्वितीयोऽनुवाकः॥ २॥

पूर्वोक्तशान्तिमन्त्रेण विघ्नोपशमः प्रार्थितः। इदानीं विद्यातत्फलोत्कर्षः शिष्येण प्रार्थ्यते—

सह नौ यशः। सह नौ ब्रह्मवर्चसम्। अथातः संहिताया उपनिषदं व्याख्यास्यामः। पञ्चस्वधिकरणेषु अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम्।

नौ आवयोः शिष्याचार्ययोः सह युगपदेव यशः वक्ष्यमाणोपासनानिमित्तककीर्तिरस्त्विति शेषः। नौ आवयोः सह युगपदेव ब्रह्मवर्चसम् उपनिषत्परिज्ञाननिमित्तकं मुखकान्त्यादिरूपतेजोऽस्त्विति शिष्यवचनमाशीर्वाद इत्यर्थः। इदानीं संहिताविषयकोपासनमाह—अथेति। अथ वर्णस्वराद्युच्चारणाभ्यासानन्तरम्, अतः चित्तैकाग्रताहेतुत्वात् संहितायाः वर्णानामत्यन्तसामीप्यं संहिता। तथा च पाणिनिना सूत्रितम् 'परः सन्निकर्षः संहिता' इति। तस्याः उपनिषदं तद्विषयकोपासनं व्याख्यास्यामः निरूपयिष्यामः। पञ्चस्वधिकरणेषु पञ्चस्विति सप्तमी तृतीयार्थे विपरिणेया, अधिकरणशब्दश्च विषयपर्यायः। तथा च विष्णुप्रतिमायां दर्शनमिव पञ्चभिः पदार्थैर्विशेषितं ज्ञानं संहितावर्णेषु कर्तव्यमित्यर्थः। के ते पञ्च विषया इत्यत आह—अधिलोकमिति। अधिलोकं लोकान्पृथिव्यादीनधिकृत्य ध्येयत्वेनोपादाय वर्तमानं दर्शनमित्यधिलोकम्। अधिज्यौतिषं ज्योतिरात्मकाग्न्यादीन् ध्येयत्वेनोपादाय वर्तमानम्। अधिविद्यं विद्याशब्देन आचार्यादयो जहल्लक्षणया ग्रहीतव्याः। तथा चाचार्यादीन् ध्येयत्वेनोपादाय वर्तमानम्। अधिप्रजं अत्र सन्ततिवाचकप्रजाशब्देन अजहल्लक्षणया मात्राद्या अपि ग्राह्याः। तथा च मात्रादीन् ध्येयत्वेनोपादाय क्रियमाणम्। अध्यात्मम् आत्मा देहस्तदवयवविषयमुपासनम्। ताः उक्तलक्षणा अधिलोकादिरूपा उपासनाः पञ्चविषयाः।

महासँहिता इत्याचक्षते। अथाधिलोकम्। पृथिवी पूर्वरूपम्। द्यौरुत्तररूपम्। आकाशः सन्धिः। वायुः सन्धानम्। इत्यधिलोकम्॥ १॥

महत्यश्च ताः संहिताश्चेति महासंहिताः महोपनिषदः इति एवं आचक्षते कथयन्ति वेदविद इति शेषः। संहितायां महत्त्वं बहुत्वं च लोकादिविषयाणां महत्त्वाद्बहुत्वाच्चेति बोध्यम्। ता एव दर्शयति—अथेति। अथाधिलोकमथाधिज्यौतिषमित्यादिपञ्चपर्यायस्था अथशब्दाः उपासनक्रमविवक्षार्थाः। प्रथमावयवमाह-अथाधिलोकम्। उपासनमुच्यते इति शेषः। एवं सर्वत्र योज्यम्। पृथिवी पूर्वरूपं पठ्यमानवर्णानामतिशयेन सन्निधिरूपसंहितायाः पूर्वरूपं पूर्वो वर्णः पृथिवी। तथा च संहितायाः पूर्ववर्णे पृथिवीदृष्टिः कर्तव्या। केचित्तु पृथिव्यादिशब्दैः पृथिव्याद्यभिमानिन्यो देवता ग्राह्याः, अन्यस्योपास्यत्वासंभवादित्याहुः। द्यौरुत्तररूपम् उत्तररूपम् संहिताया उत्तरवर्णः द्यौः स्वर्गः। तथा च संहिताया उत्तरवर्णे स्वर्गलोकदृष्टिः कर्तव्या। आकाशः सन्धिः

सन्धीयेते सम्बध्येते पूर्वोत्तररूपे यस्मिन्सः सन्धिः पूर्वोत्तरवर्णयोर्मध्यदेशः आकाशः अन्तरिक्षलोकः । तथा चोक्तसन्धौ अन्तरिक्षलोकदृष्टिः कर्तव्या । वायुः सन्धानं सन्धीयेते पूर्वोत्तरवर्णावनेनेति सन्धानं संहितारूपं तत्र वायुदृष्टिः कर्तव्या । इति इत्याकारकं अधिलोकं लोकविषयकमुपासनमुक्तमिति शेषः ॥ १ ॥

द्वितीयावयवमाह—

अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धिः । वैद्युतः सन्धानम् । इत्यधिज्यौतिषम् ॥ २ ॥

अथाधिज्यौतिषं ज्योतिर्विषयकमुपासनमुच्यते । अग्निः पूर्वरूपम् । पूर्वरूपं पूर्ववर्णः अग्निः । तथा च संहितायाः पूर्ववर्णेऽग्निदृष्टिः कर्तव्या । आदित्य उत्तररूपम् उत्तररूपम् उत्तरवर्ण आदित्यः, तथा च संहिताया उत्तरवर्णे आदित्यदृष्टिः कर्तव्या । आप सन्धिः । आपः जलानि सन्धिः पूर्वोक्तसन्धौ जलदृष्टिः कर्तव्या । वैद्युतः, विद्युदेव वैद्युतः, स्वार्थे तद्धितः । सन्धानं संहितारूपं तत्र वैद्युतदृष्टिः कर्तव्या । इति इत्याकारकं अधिज्यौतिषं ज्योतिर्विषयकोपासनमुक्तमिति शेषः ॥ २ ॥

तृतीयावयवमाह—

अथाधिविद्यम् । आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनꣳसन्धानम् । इत्यधिविद्यम् ॥ ३ ॥

अथाधिविद्यं विद्याविषयकमुपासनमुच्यत इति शेषः । आचार्यः पूर्वरूपम्, पूर्वरूपं पूर्ववर्णः आचार्यः । तथा च संहितायाः पूर्ववर्णे आचार्यदृष्टिः कर्तव्या । अन्तेवास्युत्तररूपम्, उत्तररूपं उत्तरवर्णः अन्तेवासी शिष्यः । तथा च संहिताया उत्तरवर्णे शिष्यदृष्टिः कर्तव्या । विद्या सन्धिः । विद्याप्रतिपादको ग्रन्थः सन्धिः पूर्वोक्तसंधौ विद्यादृष्टिः कर्तव्या । प्रवचनं ग्रन्थाध्ययनं सन्धानं संहितारूपम् । तथा च पूर्वोक्तसन्धाने प्रवचनदृष्टिः कर्तव्या । इति इत्याकारकम् अधिविद्यं विद्याविषयकमुपासनमुक्तिमिति शेषः ॥ ३ ॥

चतुर्थावयवमाह—

अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननꣳसन्धानम् । इत्यधिप्रजम् ॥ ४ ॥

अथाधिप्रजं प्रजाविषयकमुपासनमुच्यत इति शेषः । माता पूर्वरूपं पूर्वरूपं पूर्वो वर्णः माता जनयित्री । तथा च संहितायाः पूर्ववर्णे मातृ-

दृष्टिः कर्तव्या । पितोत्तररूपम् उत्तररूपम् उत्तरवर्णः पिता जनयिता । तथा च संहिताया उत्तरवर्णे पितृदृष्टिः कर्तव्या । प्रजा सन्धिः प्रजा पुत्रपौत्रादिरूपा सन्ततिः सन्धिः पूर्वोक्तसन्धौ प्रजादृष्टिः कर्तव्या । प्रजननं प्रजाया उत्पत्तिः सन्धानं संहितारूपम् । तथा च पूर्वोक्तसन्धाने प्रजननदृष्टिः कर्तव्या । इति इत्याकारकम् अधिप्रजं प्रजाविषयकमुपासनमुक्तमिति शेषः ॥ ४ ॥

पञ्चमावयवमाह—

अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् ॥ ५ ॥

आत्मानमधिकृत्य वर्तत इत्यध्यात्मम् । अत्रात्मशब्देनायं संघातो विवक्षितः । तथा च संघातविषयकमुपासनमुच्यत इति शेषः । अधराहनुः पूर्वरूपं पूर्वरूपं पूर्वो वर्णः अधरा हनुः । तथा च संहितायाः पूर्ववर्णेऽधरहनुदृष्टिः कर्तव्या । उत्तरा हनुरुत्तररूपम् उत्तररूपम् उत्तरवर्णः उत्तरा हनुः । तथा च संहिताया उत्तरवर्णे उत्तरहनुदृष्टिः कर्तव्या । वाक् सन्धिः वाक्शब्देन कण्ठताल्वादिस्थानगतवागिन्द्रियमुच्यते । सन्धिः पूर्वोक्तसन्धौ वाक्दृष्टिः कर्तव्या । जिह्वा सन्धानं सन्धानं संहितारूपम् । तथा च पूर्वोक्तसन्धाने जिह्वादृष्टिः कर्तव्या । इति इत्याकारकम् अध्यात्मं संघातविषयकमुपासनमुक्तमिति शेषः ॥ ५ ॥

प्रतिपादितरूपान् संहितावयवानुपसंहरति—

इतीमा महासँहिताः । य एवमेता महासँहिता व्याख्याता वेद । संधीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥ ६ ॥

इति उक्तलक्षणा इमा अधिलोकादिरूपाः महासंहिताः महत्य उपासना उक्ताः । फलसाधनत्वविशिष्टोपासनं विधत्ते । यः कोऽप्यधिकारी एता अधिलोकादिरूपा महासंहिता व्याख्याताः श्रुत्या निरूपिताः एवं उक्तया लोकादिदृष्ट्या वेद उपास्ते, सः प्रजया पुत्रपौत्रादिरूपया पशुभिः गवादिलक्षणैः ब्रह्मवर्चसेन ब्रह्मणः तपःस्वाध्यायादेर्वर्चस्तेजो ब्रह्मवर्चसं तेन अन्नाद्येन अदनीयान्नेन सुवर्ग्येण लोकेन स्वर्गाख्यभोगभूमिरूपेण सन्धीयते सम्बध्यत इत्यर्थः । अत्र सकामेन क्रियमाणं संहितोपासनं कामितफलाय भवति । निष्कामेन क्रियमाणं ब्रह्मविद्यासाधनं भवतीति ब्रह्मविद्यासन्निहिताऽऽम्नानसामर्थ्यात्कल्प्यत इति भावः ॥ ६ ॥

इति तृतीयोऽनुवाकः ॥ ३ ॥

इदानीं मेधारहितस्य श्रुतग्रन्थार्थविस्मृतौ ब्रह्मविद्योदयासंभवात् मेधासिद्ध्यर्थं प्रणवजपमन्त्रानाह—

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ॥ १ ॥

प्रणवः छन्दोभ्यो वेदेभ्यो अमृतादिति वेदविशेषणं 'वेदा ह्यमृता' इति श्रुत्यन्तरात् । एकवचनं छान्दसम् । तथा च अमृतेभ्यो नित्येभ्यो अधि अधिक संबभूव अभवत् सः ओंकारः मा मामुपासकं मेधया प्रज्ञया स्पृणोतु प्रीणयतु, प्रज्ञाबलं हि प्रार्थ्यत इति यावत् । यद्वा 'नायमात्मा बलहीनेन लभ्य' इति श्रुत्यन्तरात् बलवन्तं करोत्वित्यन्वयः । वेदानां नित्यत्वं चावान्तरप्रलये नाशाभावरूपं विवक्षितं न त्वात्यन्तिकं नित्यत्वं कल्पादौ सृष्टिश्रवणात्, महाप्रलये नाशाभ्युपगमाच्च । उक्तं ओंकारं विशिनष्टि—छन्दसामिति । यः प्रणवो गायत्र्यादिछन्दोयुक्तवेदानां मध्ये ऋषभः श्रेष्ठः । स च प्रणवो विश्वरूपः सर्वजगदात्मकः, प्रणवस्य प्रथमावयवेऽकारे सर्ववाचामन्तर्भावात्, 'अकारो वै सर्ववागि'ति श्रुतेः, वाचि च वाच्यानामन्तर्भावात्सर्वात्मक इत्यर्थः । पुनः कीदृश ओंकारः इन्द्रः सर्वकामेशः परमेश्वरः । देव हे दीप्तिमन् प्रणवः अमृतस्य अमृताख्यमोक्षसाधनभूतज्ञानस्य धारणः धारकः भूयासम् अहं भवेयम् । मेधाहेतुमन्त्रमुक्त्वा रोगादिराहित्यहेतुमन्त्रमाह—शरीरमिति । मे मम शरीरं विचर्षणं रोगरहितं भूयादिति शेषः । मे मम जिह्वा वागिन्द्रियरूपा मधुमत्तमा मधुमत्यतिशयेन मधुरभाषिणी भूयात् । कर्णाभ्यां श्रोत्राभ्यां भूरि बहु विश्रुवम् अडभावश्छान्दसः, व्यश्रुवं झटिति श्रोता भूयासमित्यर्थः । आत्मज्ञानयोग्यः कार्यकरणसंघातोऽस्त्विति वाक्यार्थः । नन्वचेतनं शब्दात्मकं प्रणवं प्रति प्रार्थना कथं घटते, कथं चेन्द्रशब्देन तस्याभिधानमित्याशंक्य तस्य ब्रह्माभेदविवक्षया प्रार्थनादिकमित्यभिप्रेत्याह—ब्रह्मण इति । ब्रह्मणः परमात्मनः कोशोऽसि असेः कोशवदुपलब्धिस्थानमसि ब्रह्मदृष्ट्याऽऽलम्बनोऽसीत्यर्थः । मेधया लौकिकप्रज्ञया पिहितः आच्छादितः सामान्यप्रज्ञैरविदितोऽसीत्यर्थः । मे मम श्रुतं श्रवणपूर्वकमधीतं गोपाय विस्मृत्यादिनिवारणेन पालयेत्यर्थः ॥ १ ॥

एते व्याख्याता जपमन्त्रा मेधाकामस्य । इदानीमन्नादिश्रीसिद्धये होमाङ्गभूतान् मन्त्रानाह—

आवहन्ती वितन्वाना कुर्वाणा चीरमात्मनः । वासाꣳसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा । आ मायन्तु ब्रह्मचारिणः स्वाहा । वि मायन्तु ब्रह्मचारिणः स्वाहा । प्र मायन्तु ब्रह्मचारिणः स्वाहा । द मायन्तु ब्रह्मचारिणः स्वाहा । श मायन्तु ब्रह्मचारिणः स्वाहा ॥ २ ॥

यत आत्मनो ममोपासकस्य वासांसि वस्त्राणि गावश्च गाश्च अन्नपाने च अन्नं व्रीहियवादिलक्षणं पानं जलपयआदिरूपम् एतानि सर्वदा सर्वस्मिन्काले आवहन्ती प्रापयन्ती प्राप्तानि च वितन्वाना विस्तारयन्ती। चीरं छान्दसं दीर्घम्, चिरकालम् कुर्वाणा एतान् जनयन्ती या श्रीः तां श्रियं विभूतिं ततः मेधाजननानन्तरं मे मम हे प्रणवाख्येश्वर आवह आनय । आवहेत्यत्र प्रकरणादोंकार एव कर्तृत्वेन सम्बध्यते । किंविशिष्टां श्रियं लोमशां लोमवतीं अजाऽव्यादिरूपां पशुभिः सह अन्यैश्च पशुभिः सह युक्तां च । स्वाहापदं तस्मै श्रीप्रदाय इदं द्रव्यं हुतमस्त्विति हवनीयद्रव्यप्रक्षेपार्थम् । इदानीं विद्यासंप्रदायप्रवृत्त्यर्थं शिष्यसम्पादकहोमार्थान् पञ्च मन्त्रानाह—आ मायन्त्विति । मा मां मत्समीपं ब्रह्मचारिणः शिष्याः आयन्तु आगच्छन्तु । वि मायन्तु मा मां व्यायन्तु विविधकामनावन्तः सन्तः आयन्तु आगच्छन्तु । प्र मायन्तु मा मां प्रायन्तु प्रज्ञाऽतिशयेन प्रकृष्टाः सन्तः आयन्तु । द मायन्तु देत्यव्ययेन दम उच्यते । तथा च मा मां प्रति दान्ताः सन्तः आयन्तु । श मायतु शेत्यव्ययेन शम उच्यते शमशब्दः शान्तिपरः क्रोधादिचित्तदोषराहित्यं शान्तिः । तथा च मा मां प्रति शान्ताः सन्तः आयन्तु ॥ २ ॥

कीर्तिप्रदौ मन्त्रावाह—

यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन् सहस्रशाखे नि भगाऽहं त्वयि मृजे स्वाहा ॥ ३ ॥

जने सर्वेषु जनेषु मध्ये यशः यशस्वी विद्यासंप्रदायजनितकीर्तिमानिति यावत् असानि अहं भवानि। वस्यसः वसु धनं तदस्यास्तीति वसुमान्, अतिशयेन वसुमान् वसीयान्, वसुमच्छब्दादीयसुन्प्रत्ययः, विन्मतोर्लुगिति मतुब्लोपः छान्दसः, ईयसुन ईकारलोपश्च, तस्माद्वस्यसः धनवत्तरात् पुरुषात् श्रेयान् प्रशस्यतरः असानि भवानि। यशस्वित्वश्रैयस्त्वहेतुप्रतिपादकान् त्रीन् मन्त्राह—तमिति। भगशब्द ऐश्वर्यादिषड्गुणवाचकः, 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना' इति स्मरणात्। भगशब्देन तद्वानुपलक्ष्यते। हे भगवन् परमेश्वर तं भगवन्तं कोशभूतं त्वा त्वां प्रणवाख्यं प्रविशानि त्वदात्मैव भवानीत्यर्थः। सः प्रणवाख्यस्त्वं मा मामुपासकं भग हे भगवन् प्रविश आवयोरेकत्वमेवास्त्वित्यर्थः। भग हे भगवन् तस्मिन् प्रकृते त्वयि प्रणवाख्ये सहस्रशाखे अनेकमूर्तिभेदयुक्ते अहम् उपासकः निमृजे नितरां शोधयामि पापमपनयामीत्यर्थः॥ ३॥

यत्पूर्वमुक्तं ब्रह्मचारिणो मामायन्त्विति, तत्र दृष्टान्तमाह—

यथाऽऽपः प्रवता यन्ति यथा मासा अहर्जरम्। एवं मां

ब्रह्मचारिणः धातरायन्तु सर्वतः स्वाहा। प्रतिवेशोऽसि

प्र मा भाहि प्र मा पद्यस्व॥ ४॥

यथा येन प्रकारेण आपः जलानि प्रवता प्रवणता निम्नदेशमार्गेण यन्ति गच्छन्ति, यथा येन प्रकारेण मासाः वैशाखादयो द्वादश अहर्जरं अहोभिः परिवर्तमानो लोकान् जरयतीत्यहर्जरः संवत्सरस्तम्। यद्वा अहानि त्रिशतषष्टिसंख्यानि जीर्यन्ति अन्तर्भवन्ति यस्मिन्सोऽहर्जरः, तं यन्ति। हे प्रणव धातः सर्वस्य जगतो विधातस्त्वं एवं तथा मामाचार्यं ब्रह्मचारिणः शिष्याः सर्वतः सर्वदिग्भ्य आयन्तु आगच्छन्तु। प्रतिवेशोऽसि श्रमापनयनगृहं त्वं भवसि। अतः मा मां प्रभाहि आचार्यत्वेन प्रख्यातं कुरु, तदर्थं मा मां प्रपद्यस्व अनुगृहाणेत्यर्थः। काम्यानामप्येषां पापनिवृत्तिद्वारा ब्रह्मविद्यायामुपयोगित्वान्न ज्ञानप्रकरणविरोधः। तथा चोक्तम्—'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मण' इति।

इति चतुर्थोऽनुवाकः

तृतीयानुवाके संहिताविषयकमुपासनमुक्तम्। चतुर्थानुवाके मेधाश्रियोः सिद्ध्यर्थं मन्त्रा उक्ताः। इदानीं पञ्चमे षष्ठेऽनुवाके प्राधान्येनोपास्यतया

वक्ष्यमाणस्य हार्दाकाशस्थब्रह्मणो या अङ्गदेवतास्तासामुपासनं वक्तुमादौ तत्प्रतीकभूतं व्याहृतित्रयं दर्शयति—

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः। तासामु ह स्मै तां चतुर्थीं माहाचमस्यः प्रवेदयते। मह इति। तद् ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः॥

भूर्भुवः सुवः इति इत्याकारिकाः वै प्रसिद्धाः एताः प्रदर्शिता भूरादिरूपाः तिस्रः त्रिसंख्याकाः व्याहृतयः व्याहरणमुच्चारणं तद्विषयत्वान् मन्त्राणां व्याहृतिशब्दवाच्यत्वम्। तासां भूरादिनां तिसृणां व्याहृतीनाम् एतां वक्ष्यमाणां चतुर्थीं चतुःसंख्यापूरिकां व्याहृतिं माहाचमस्यः महान्सोमपानार्थश्चमसः पात्रविशेष उच्यते बहुषु सोमयागेषु वर्तमानत्वात् चमस्यमहत्त्वेन। यद्वा महाचमसगोत्रत्वाद्गोत्रार्थस्तद्धितो भवेदिति वार्तिककृदुक्तेः। तथा च महाचमसस्य गोत्रापत्यं माहाचमस्य आचार्यः प्रवेदयते प्रकर्षेण विदितवान् ददर्शेत्यर्थः। माहाचमस्यग्रहणमृष्यनुस्मरणार्थम्, ऋष्यनुस्मरणस्याप्युपासनाङ्गत्वात्। उ ह स्म इति निपातत्रयं उक्तसमुदायप्रसिद्ध्यर्थम्। का सा चतुर्थी व्याहृतिरित्यत आह—मह इति। महः इत्याकारिकेत्यर्थः। तद्ब्रह्म ब्रह्मवस्त्विति चिन्तयेत्। सः ब्रह्मत्वादेव चतुर्थव्याहृतिरूपः सोऽयं शरीरमध्येऽवस्थित आत्मा। यद्वा ब्रह्म हिरण्यगर्भाख्यम्, तदिति विधेयापेक्षया नपुंसकनिर्देशः। एवं स इत्यत्रापि बोध्यम्। मह इति व्याहृतावङ्गिब्रह्मदृष्टिः कर्तव्या। सः महोव्याहृतिः रूप आत्मा हिरण्यगर्भाख्यब्रह्मणो मध्यभाग आत्मेति कल्प्यते। व्याप्नोतीत्यात्मा, व्याप्यन्ते हि मह इत्यनेन वक्ष्यमाणादित्यचन्द्रब्रह्मान्नभूतेन इतराश्च व्याहृतयो लोका देवा वेदाः प्राणाश्च अतोऽन्याः महोव्याहृतितभिन्नाः देवताः। देवता इति ग्रहणं लोकादीनामप्युपलक्षणम्। तथा च देवता लोका वेदाः प्राणाश्च, अङ्गानि। मह इति व्याहृत्यात्मनो हिरण्यगर्भस्य पादाद्यवयवा इति कल्प्यन्ते॥

उक्तासु चतसृषु व्याहृतिषु क्रमेण लोक-देव-वेद-प्राणानां दृष्टिं विधत्ते—

भूरिति वा अयं लोकः। भुव इत्यन्तरिक्षम्। सुवरित्यसौ लोकः। मह इत्यादित्यः। आदित्येन वाव सर्वे लोका महीयन्ते॥ १॥

भूरिति भूः इत्याकारिका व्याहृतिः वै प्रसिद्धः अयं लोकः प्रत्यक्षगोचरः पृथिवीलोकः। भुव इति भुव इत्याकारिका व्याहृतिः अन्तरिक्षम् अन्तरिक्षलोकः। सुवरिति सुव इत्याकारिका व्याहृतिः असौ लोकः शास्त्रप्रसिद्धो द्युलोकः। मह इति मह इत्याकारिका व्याहृतिः आदित्यः सूर्यः। आदित्येन वाव प्रसिद्धेन सर्वे लोकाः पृथिवीलोकान्तरिक्षलोकद्युलोकाः प्रकाशिताः सन्तः महीयन्ते प्राणिनां व्यवहारक्षमत्वलक्षणां वृद्धिं प्राप्नुवन्ति तस्मान्मह इति व्याहृतेरादित्यरूपत्वं युक्तम्॥ १॥

तास्वेव व्याहृतिषु देवविशेषदृष्टिं विधत्ते—

भूरिति वा अग्निः। भुव इति वायुः। सुवरित्यादित्यः। मह इति चन्द्रमाः। चन्द्रमसा वाव सर्वाणि ज्योतीँषि महीयन्ते॥ २॥

भूरिति इत्याकारिका व्याहृतिः वै प्रसिद्धः अग्निः इयमग्निदेवता। भुव इति भुव इत्याकारिका व्याहृतिः वायुः अन्तरिक्षे स्थितः वायुदेवता। सुवरिति सुव इत्याकारिका व्याहृतिरादित्यः सर्वलोकप्रकाशकः सूर्यदेवता। मह इति मह इत्याकारिका व्याहृतिः चन्द्रमाः चन्द्रदेवता। चन्द्रमसा चन्द्रेण सर्वाणि ज्योतींषि अग्निवाय्वादित्यदेवतारूपाणि निखिलानि महीयन्ते वर्धन्ते। वायौ ज्योतिःशब्दप्रयोगस्त्वजहल्लक्षणया बोध्यः। वावशब्देन चन्द्रकलापानेन तेषां वृद्धिः—'प्रथमां पिबते वह्निः' इत्यादिशास्त्रप्रसिद्धेति स्मारयते॥ २॥

तास्वेव व्याहृतिषु वेददृष्टिं विधत्ते—

भूरिति वा ऋचः। भुव इति सामानि। सुवरिति यजूँषि। मह इति ब्रह्म। ब्रह्मणा वाव सर्वे वेदा महीयन्ते॥ ३॥

भूरित्याकारिका व्याहृतिः वै प्रसिद्धा ऋचः ऋग्वेदीयाः पादबद्धमन्त्राः। भुव इति भुव इत्याकारिका व्याहृतिः सामानि सामवेदीयगीतिसहिता ऋचः। सुवरिति सुव इत्याकारिका व्याहृतिः यजूंषि यजुर्वेदीया अविवक्षितच्छन्दस्का मन्त्राः। मह इति मह इत्याकारिका व्याहृतिः ब्रह्म प्रणवः। 'भूरिति वा ऋचः' इत्यादिवेदावयवभूतशब्दसन्निधाने मुख्यार्थग्रहणयोगात् चतुर्थव्याहृतौ पूर्वमेव मुख्यब्रह्मदृष्टेरुक्तत्वेन पुनरुक्तिप्रसङ्गाच्च। ब्रह्मणा प्रणवेन वाव प्रसिद्धाः सर्वे निखिलाः वेदाः ऋगादयः महीयन्ते वर्धन्ते, वेदवृद्धेः प्रणवोच्चारणपूर्वका-

ध्ययनाधीनत्वात् । तथा चाष्टमानुवाके वक्ष्यति—ओमिति ब्राह्मणः प्रवक्ष्यन्नाहेति ॥ ३ ॥

तास्वेव व्याहृतिषु प्राणादिदृष्टिं विधत्ते—

भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते ॥ ४ ॥

भूरित्याकारिका व्याहृतिः वै प्रसिद्धः प्राणः मुखनासिकाभ्यां प्राग्गमनवान् वायुः । भुव इति भुव इत्याकारिका व्याहृतिः अपानः अर्वाग्गमनवान् वायुः । सुवरिति सुव इत्याकारिका व्याहृतिः व्यानः नानाविधगतिमान् वायुः । मह इति मह इत्याकारिका व्याहृतिः अन्नं व्रीहियवादिलक्षणमन्नम् अन्नेन भुक्तेनोक्तान्नेन वाव प्रसिद्धाः सर्वे प्राणाः प्राणापानव्यानरूपाः महीयन्ते तर्प्यन्ते वर्धन्ते एतत्प्रसिद्धं लोके । श्रुतिरप्याह—'शुष्यन्ति वै प्राणा ऋतेऽन्नादि'ति ॥ ४ ॥

यथोक्तलोकादिदृष्टिभिरुक्ता व्याहृतीरुपसंहरति—

ता वा एताश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ॥ ५ ॥

इति पञ्चमोऽनुवाकः ॥ ५ ॥

ताः प्रकृताः वै प्रसिद्धा एताः भूर्भुवःसुवर्महर्लक्षणाः चतस्रः चतुःसंख्याकाः चतुर्धा एकैका चतुःप्रकारा सती चतस्रश्चतस्रो व्याहृतयः । एकैका व्याहृतिर्यदा चतुःसंख्याका चतुःसंख्याका चिन्त्यते तदा षोडशकलः पुरुष उपासितो भवतीति शेषः । ताः उक्तप्रकाराः व्याहृतीः योऽधिकारी वेद उपास्ते सः व्याहृत्युपासकः ब्रह्म वेद जानाति । तद्ब्रह्म, स आत्मेति प्रथमपर्याये ब्रह्ममात्रमवगतं नतु तद्गुणजातम् । स वेद ब्रह्मेति वाक्ये तु वक्ष्यमाणगुणविशिष्टत्वेन ज्ञातव्यतोच्यते । तथा च वक्ष्यमाणगुणविशिष्टस्याज्ञातत्वान्न पौनरुक्त्यम् । परमफलमुक्त्वा अवान्तरफलमाह—एवं इति । अस्मै व्याहृत्युपासकाय सर्वे निखिलाः देवाः अङ्गभूता लोकाद्यभिमानिनः बलिम् उपहारं आवहन्ति प्रापयन्ति उपहारसमर्पणेन पूजां कुर्वन्तीत्यर्थः । न च व्याहृत्युपासकस्य ब्रह्मलोकप्राप्त्यभावेन कथं सर्वदेवपूज्यत्वमिति वाच्यम्; व्याहृत्युपासनब्रह्मोपासनयोरङ्गाङ्गिभावेन उपासनैक्यात् वक्ष्यमाणब्रह्मोपास्त्या ब्रह्मलोकप्राप्तिसम्भवेन सर्वदेवपूज्यत्वसंभवात् ॥ ५ ॥

इति पञ्चमोऽनुवाकः ।

पञ्चमानुवाकेऽङ्गोपासनमुक्तम् । षष्ठे त्वङ्गिब्रह्मोपासनमुच्यते । तत्रादौ उपास्यब्रह्मणः स्वरूपमाह—

स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले । भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ ॥ १ ॥

हृदयपुण्डरीकस्य मध्ये स्वाङ्गुष्ठपरिमित आकाशो वर्तते, स एष इत्येताभ्यां दूरसामीप्यवाचिभ्यां व्यवहितयोगशास्त्रप्रसिद्धः सन्निहितश्रुत्यन्तरप्रसिद्धश्चोच्यते । ईदृशः यः हृदये पुण्डरीकाकारमांसपिण्डे ऊर्ध्वनालेऽधोमुखे अन्तः अन्तर्वर्तमानः आकाशः दहराकाशः स्वाङ्गुष्ठपरिमित आकाश इत्यर्थः । तस्मिन्नाकाशे तद्ब्रह्म स आत्मेत्यनेन पूर्वं परोक्षतया उक्तस्यात्मनः अपरोक्षवाचकायंशब्देन साक्षात्कारयोग्यताभिधानादयम् अहंप्रत्ययगोचरः पुरुषः शरीरात्मकपुरि शयनात्पुरुषः, भूरादयो लोकाः पूर्णा येनेति वा पुरुषः परमात्मा । वर्तत इत्यध्याहारेण सम्बन्धः । यद्यप्यसौ सर्वत्र वर्तते, तथापि तस्योपलब्ध्यर्थमुपासनार्थं च हृदयस्थानमुपदिश्यते । हृदयकमलमध्ये हि समाधिना निरुद्धमेकाग्रं मनः कृत्वा परमात्मानं साक्षात्कर्तुं प्रभवतीति भावः । तमेव विशिनष्टि—मनोमयः मननं मनः ज्ञानं तन्मयः ज्ञानप्रायः, मनसैव जिज्ञासुभिर्ज्ञेयत्वात् ध्यायिभिश्च ध्यानाकारपरिणामिना मनसैवोपलभ्यमानत्वाच्च वा मनोमय इत्यर्थः । अमृतः नाशरहितः, हिरण्मयः ज्योतिर्मयः स्वप्रकाशस्वरूप इत्यर्थः । एवमुपास्यब्रह्मस्वरूपमभिधाय उपासकस्य ब्रह्मलोकगतये मार्गविशेषमाह—अन्तरेण तालुके, मुखबिलस्यान्तर्जिह्वामूलस्योपरि स्थितौ वामदक्षिणभागौ तालुके इत्युच्येते, तयोस्तालुकयोरन्तरेण मध्ये स्तन इव स्तनसदृशः स्वल्पः कश्चित् मांसखण्डः अवलम्बते लम्बमानस्तिष्ठति संलग्नो भवतीति वा । तस्य मांसखण्डस्य योगशास्त्रप्रसिद्धिं द्योतयितुं यच्छब्दः । तस्यैव प्रत्यक्षतां द्योतयितुं एषशब्दः । तथा च लम्बिकाकरणप्रवीणस्य जिह्वाऽग्रस्पर्शनेन प्रत्यक्षः परकीयमुखे परकीयचक्षुषैव प्रत्यक्षः । स च मांसखण्डः शाखाग्रचन्द्रदर्शनन्यायेन स्वसमीपवर्तिनीं योगशास्त्रप्रसिद्धां सुषुम्णाख्यां नाडीमुपलक्षयति । तथा च तत्समीपगा सुषुम्नाख्या नाडी । यत्र यस्मिन्मूर्धदेशेऽसौ सर्वजनप्रत्यक्षः केशान्तः केशानामन्तोऽवसानं मूलं विवर्तते विभागेन वर्तते तं मूर्धदेशं प्राप्यमाणा शीर्षकपाले शिरसो वामदक्षिणकपाले व्यपोह्य भित्त्वा

निर्गता या सा सुषुम्नाख्या नाडी इन्द्रयोनिः इन्द्रस्य ब्रह्मणो योनिः ब्रह्मलोकप्राप्तिमार्गः स्वरूपप्रतिपत्तिद्वारमिति यावत् । तेनैव द्वारेणोर्ध्वं गच्छन्नुपासको मुच्यत इत्यर्थः। एवं ब्रह्मलोकमार्गमभिधाय यथोक्तोपासकस्य फलमाह—भूरिति। भूः इत्याकारकव्याहृतिरूपो योऽग्निरस्य लोकस्याधिष्ठाता तस्मिन्नग्नौ प्रतितिष्ठति व्यष्टयग्न्यात्मना भूर्लोकं व्याप्नोतीत्यर्थः। भुवरिति भुवः इत्याकारकद्वितीयव्याहृतिरूपवायौ प्रतितिष्ठतीत्यनुषङ्गः। व्यष्टिवायुरूपेण अन्तरिक्षलोकं व्याप्य तिष्ठतीत्यर्थः ॥ १ ॥

सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम्। वाक्पतिश्चक्षुष्पतिः। श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो भवति। आकाशशरीरं ब्रह्म। सत्यात्मप्राणारामं मनआनन्दम्। शान्तिसमृद्धममृतम्। इति प्राचीनयोग्योपास्स्व ॥ २ ॥

इति षष्ठोऽनुवाकः ॥ ६ ॥

सुवः इत्याकारकतृतीयव्याहृतिरूपादित्ये प्रतितिष्ठति । मह इति अङ्गिभूतचतुर्थव्याहृतिरूपे ब्रह्मणि प्रतितिष्ठति तत्रात्मभावेन स्थितो भवतीत्यर्थः। ततश्च स्वराज्यं स्वाराड्भावं आप्नोति प्राप्नोति अङ्गभूतानां भूरादीनां स्वयमेव राजाऽधिपतिर्भवतीत्यर्थः। मनसस्पतिं सर्वेषां हि प्राणिनां मनसां पतित्वं आप्नोति सर्वात्मकब्रह्मस्वरूपस्य विदुषः सर्वजीवात्मकत्वात् सर्वजीवमनसामधिपतिर्भवति । वाक्पतिः सर्वेषां प्राणिनां वाचां पतिः नियन्ता भवतीति शेषः। चक्षुष्पतिः सर्वेषां प्राणिनां चक्षुरिन्द्रियाणां पतिर्भवति। श्रोत्रपतिः सर्वेषां प्राणिनां श्रोत्रेन्द्रियाणां पतिर्भवति। विज्ञानपतिः सर्वप्राणिनां बुद्धीनां पतिर्भवति। ततः समष्टिरूपविराड्भावप्राप्त्यनन्तरम् उत्पन्नतत्त्वज्ञानः सन् एतत् वक्ष्यमाणं ब्रह्म स्वोपास्यस्वरूपं भवति। कीदृशं ब्रह्म आकाशशरीरं ब्रह्म आकाशवन्मूर्तिरहितं शरीरं स्वप्रकाशस्वरूपं यस्य ब्रह्मणस्तदाकाशशरीरम्। पुनः कीदृशं सत्यात्म सत्यमबाध्यं सर्वजगत्कल्पनाधिष्ठानमात्मा स्वरूपं यस्य ब्रह्मणस्तत्सत्यात्म। पुनः कीदृशं प्राणारामं प्राणानां वागादीनाम् आरामम् उत्पत्त्यादिस्थानम्, यद्वा प्राणेषु वागादिषु विषयेष्वारमणमाक्रीडा यस्य तत्प्राणारामं मनआनन्दं मनस आनन्दो यस्मिन्ब्रह्मणि तन्मनआनन्दम्। शान्तिसमृद्धं शान्तिश्च तत्समृद्धं च शान्तिसमृद्धम्, शान्तिरुपशमः, समृद्धं सम्पूर्णं ब्रह्म शान्तिस्वरूपं सर्वद्वैतरहितमिति

यावत्, अमृतम् अमरणधर्मि । एवं ब्रह्मस्वरूपमुक्त्वा तदुपासनं विधत्ते—इतीति । इति उक्तलक्षणं ब्रह्म प्राचीनयोग्य प्राचीनैः पूर्वकाण्डोक्तकर्मभिः योग्य क्षीणपाप हे जीव उपास्व त्वं चिन्तयेति श्रुतेः जीवं प्रत्युपदेशः, प्राचीनयोग्यसंज्ञकशिष्यं प्रति गुरोरुपदेशो वा । अत्र व्याहृत्युपासने प्रथमा व्याहृतिः पादौ, द्वितीया बाहू, तृतीया शिरः, चतुर्थी हिरण्यगर्भस्य ब्रह्मणो मध्यमभाग आत्मेति कल्पना द्रष्टव्या ॥ २ ॥

इति षष्ठोऽनुवाकः ।

पूर्वमतीन्द्रियमनोमयत्वादिगुणविशिष्टब्रह्मोपासनमुक्तम् । ततश्च भूरित्यादिव्याहृत्यात्मकं हिरण्यगर्भाख्यं ब्रह्मोपास्यमुक्तम् । इदानीं सप्तमानुवाके तु मन्दाधिकारिणं प्रति स्थूलपृथिव्यादिपाङ्क्तस्वरूपेण उपासनमाह--

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशः । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा । इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक्त्वक् । चर्म मांसं स्नावाऽस्थि मज्जा । एतदधिविधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳ सर्वम् । पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोतीति ॥ १ ॥

इति सप्तमोऽनुवाकः ॥ ७ ॥

भूलोकः अन्तरिक्षं द्यावापृथिव्योरन्तरालवर्तिलोकः द्यौः द्युलोकः दिशः प्राच्यवाचीप्रतीच्युदीचीरूपाः अवान्तरदिशः अग्निकोणनैरृतकोणवायुकोणेशानकोणरूपाः इत्येकं पञ्चकम् । अग्निर्वायुरादित्यः चन्द्रमा नक्षत्राणि इति द्वितीयपञ्चकम् । आपः जलानि ओषधयः व्रीह्यादयः वनस्पतयः वृक्षादिरूपाः आकाशः भूताकाशः आत्मा विराड् इति तृतीयपञ्चकम् । इत्यधिभूतम्, इति इत्याकारकं अधिभूतं पृथिव्यादिभूतमधिकृत्य वर्तत इत्यधिभूतम् । तथा च भूतविषयोपासनमुक्तमित्यर्थः । अधिभूतवचनमधिलोकाधिदैवतयोरप्युपलक्षणम् । तथा च पृथिव्यादिकमधिलोकम्, अग्न्यादिकमधिदैवतम्, अबादिकमधिभूतमिति विभागः । अन्यत्पञ्चकत्रयं दर्शयति—अथेति । अथ अधिभूतादित्रयपञ्चककथनानन्तरम् अध्यात्मम् आत्मानं देहादिसंघातमधिकृत्य वर्तमानमुच्यते, देहमध्यवर्तिन एवास्यैव वायोः प्राणादीन् पञ्चवृत्तिभेदान् दर्शयति—प्राण

इति। तेषां च स्थानान्युक्तानि—'हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः। उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः' इति। तथा च प्राणादिवायुपञ्चकम्, चक्षुरादित्वगन्तमिन्द्रियपञ्चकम्, चर्मादिधातुपञ्चकम्। स्नावशब्देन नाड्य अभिधीयन्ते। मज्जा अस्थ्यन्तर्गतधातुः। ऋषिरतीन्द्रियस्य वेदार्थस्य द्रष्टा कश्चिन्मुनिः एतत् उक्तं पृथिव्यादिपञ्चकषट्कम अधिविधाय परिकल्प्य अवोचत् उक्तवान्। किमुक्तवानित्यत आह—पाङ्क्तमिति। वै प्रसिद्धम् इदम् उक्तपृथिव्यादिपञ्चकषट्कोपलक्षितं सर्वं निखिलं जगत् पाङ्क्तं पङ्क्तिछन्दस इदं सम्बन्धीति पाङ्क्तं संख्यासामान्यात् पञ्चाक्षरपादा पंक्तिः। तथा च सूत्रम्—'अक्षरपंक्तिः पञ्चकाक्षराः' इति पञ्चाक्षरैश्चतुर्भिश्च पादैरुपलक्षिता अक्षरपङ्क्तिर्नाम छन्दो भवतीति सूत्रार्थः। तथा च पञ्चत्वसंख्यासाम्यात्—१. पृथिव्यादि लोकपाङ्क्तम्, २. अग्न्यादि दैवपाङ्क्तम् ३. अबादि भूतपाङ्क्तम्, ४. प्राणादि वायुपाङ्क्तम्, ५. चक्षुरादि इन्द्रियपाङ्क्तम्, ६. चर्मादि धातुपाङ्क्तम्। तच्च पाङ्क्तात्मकजगद्विशिष्टं ब्रह्म ध्येयमिति तात्पर्यम्। एवं पाङ्क्तेन पृथिव्यादिलोकादिषु पाङ्क्तोपासनेन पाङ्क्तं विराडभिमानि प्रजापतिं स्पृणोति प्राप्नोति। इतिशब्दः पाङ्क्तोपास्तिसमाप्त्यर्थः॥ १॥

इति सप्तमोऽनुवाकः।

पूर्वं षष्ठेऽनुवाके किञ्चित्सूक्ष्मदर्शिनो मध्यमस्य मनआद्युपाधिकब्रह्मोपासनमुक्तम्। सप्तमे स्थूलदर्शिनो मन्दस्य पृथिव्याद्युपाधिकब्रह्मोपासनमुक्तम्। इदानीमुत्तमाधिकारिणं प्रति सर्वोपासनानां सर्वकर्मणां चाङ्गभूत ओंकारे ब्रह्मदृष्टिर्विधित्स्यते—

ओमिति ब्रह्म। ओमितीदँ सर्वम्। ओमित्येतदनुकृतिर्ह स्म वा अप्योश्रावयेत्याश्रावयन्ति। ओमिति सामानि गायन्ति। ओँ शोमिति शस्त्राणि शँसन्ति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा प्रसौति। ओमित्यग्निहोत्रमनुजानाति। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति। ब्रह्मैवोपाप्नोति॥ १॥

इति अष्टमोऽनुवाकः॥ ८॥

ओङ्कारः परमात्मनो वाचकः। ॐ इत्याकारकमक्षरं ब्रह्म परापरब्रह्मस्वरूपमिति ध्यायेत्। ओम् इत्याकारकमक्षरं इदं विविधप्रतीतिगोचरं सर्वं चराचररूपं निखिलं जगदस्तीति शेषः। सर्वं हि शब्द-

जातमोङ्कारेण व्याप्तम्, अभिधेयस्य चाभिधानाधीनसिद्धिकत्वादभिधेयस्याभिधानेऽन्तर्भावः सम्भवतीति ओंकारस्य सर्वात्मकत्वमिति भावः। ओंकारं स्तुवन्नोमः सर्वसंबंधं केषुचिद्वैदिकव्यवहारेषु उदाहृत्य दर्शयति—ओमित्येतत्। ओमित्याकारकमक्षरम् एतदनुकृतिः अनुज्ञा। ह स्म वा इति त्रयो निपाताः प्रसिद्धिद्योतकाः। प्रसिद्धं हि लोके यथा केनचित्करोमीत्युक्तेऽन्य ओमित्यनुज्ञां करोति। अप्योश्रावय, अपिशब्दो वक्ष्यमाणोदाहरणसमुच्चयार्थः। ओकारोऽग्नीध्रसम्बोधनार्थः। तथा चोक्तं वेदभाष्ये—'मन्त्रगत ओकारोऽग्नीध्रसम्बोधनार्थ' इति। हे आग्नीध्र देवान्प्रति हविःप्रदानावसरे श्रावय अस्मभ्यं श्रवणं कारयेति मन्त्रार्थः। इति एवमुक्ते सति आश्रावयन्ति आश्रवणं कारयन्ति। तथा ओमिति ओमित्याकारकमक्षरमुच्चार्य सामानि गीतिविशिष्टा ऋचः गायन्ति सामगा उद्गातार इति शेषः। बह्वृचा होतारोऽपि वयं किं शंसनं कुर्म इत्यर्थकं 'शोंसावो ३ म्' इति मन्त्ररूपशस्त्राणि गीतिरहिता ऋचः शंसति पठन्ति। तद्यथा—'शोंसावो ३ मि'ति प्रातःसवने अध्वर्यो 'शोंसावो ३ मि'ति माध्यन्दिनसवने अध्वर्यो 'शोंसावो ३ मि'ति तृतीयसवने। अध्वर्युः यजुःकर्मकर्ता ओमिति प्रणवमुच्चार्य प्रतिगरम् 'ओथामोद इवे'ति मन्त्रं प्रतिगृणाति प्रयुंक्ते ओकारेण होता सम्बोध्यते। हे होता अथ अर्धर्चः शंसनानन्तरम आमोद इव अस्माकं हर्ष इव सम्पन्नम् इति मन्त्रार्थः। ओमिति ओं इत्याकारकं प्रणवमुच्चार्य ब्रह्मा ऋत्विग्विशेषः प्रसौति प्रसवकर्म करोति। सर्वकर्मणामनुज्ञादानं प्रसवकर्म। यथा प्रोक्षेत्येवं प्रोक्षणे प्रेरयति। अग्निहोत्रं अहं जुहोमीत्युक्ते सति ओमिति ओमित्युच्चारणेन अनुजानाति अग्निहोत्रकरणानुज्ञां प्रयच्छतीत्यर्थः। ब्राह्मणः द्विजः प्रवक्ष्यन् अध्ययनं करिष्यन् ओमिति प्रणवम्, आह अध्ययनादौ वक्तीत्यर्थः। ब्रह्मोपाप्नवानि अहं ब्रह्म प्राप्नोमीति एवं यः कामयते सोऽपि तदुपासनेन ब्रह्म परमपरं वा उपाप्नोत्येव प्राप्नोत्येव। तस्मादोंकारं ब्रह्मेत्युपासीतेति वाक्यार्थः। यद्यपि ओश्रावयेत्यादिमन्त्रे ओथामोद इवेति प्रतिगरमन्त्रे च मकारो नास्ति, तथापि ओंकारैकदेशत्वादोङ्कार एवेति बोध्यम्॥ १॥

इति अष्टमोऽनुवाकः।

पूर्वोक्तोपासकेन ऋतादिकर्मापि कर्तव्यमित्याह—

ऋतं च स्वाध्यायप्रवचने च। सत्यं च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च। दमश्च स्वाध्यायप्रवचने च।

शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रं च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषं च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्यायप्रवचने च। प्रजातिश्च स्वाध्यायप्रवचने च। सत्यमिति सत्यवचा राथीतरः। तप इति तपोनित्यः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः॥

इति नवमोऽनुवाकः॥ ९॥

ऋतं शास्त्रानुसारेण कर्तव्यतया निश्चितार्थः। स्वाध्यायः अधीतस्य वेदस्य प्रत्यहं यथाशक्ति पाठः। प्रवचनं तस्य व्याख्यानम् अध्यापनं वा। उक्तऋतादीनि अनुष्ठेयानीति वाक्यशेषः। सत्यं पूर्वं शास्त्रतो निश्चितमेव वाचोच्चार्यमाणम् अनुष्ठेयं च स्वाध्यायप्रवचने च अनुष्ठातव्ये एवमग्रेऽपि व्याख्येयम्। तपः कृच्छ्रचान्द्रायणादि भोगत्यागरूपं वा तपोऽनुष्ठेयम्। अग्निहोत्रादीनां शमादीनां च परस्परविरुद्धानां वैकल्पिकत्वेऽपि स्वाध्याय प्रवचनयोरत्यन्तोपकारकत्वेन अवश्यानुष्ठेयत्वप्रदर्शनार्थं तयोः प्रत्येकमभ्यासः। दमः बाह्यचक्षुरादीन्द्रियाणां निषिद्धविषयेभ्यो निवर्तनम्। शमः मनसो निषिद्धानुचिन्तनान्निवर्तनम्। अग्नयः गार्हपत्याहवनीयादयः, आधानादिसंस्कारेण निष्पन्ना इति शेषः। अग्निहोत्रं आहिताग्नौ सायं प्रातश्च हवनं कर्तव्यमिति शेषः। अतिथयः ब्राह्मणादयः, यदा कदाचित् याचनार्थं गृहे समागताः पूजनीयाः। मानुषं शिष्टाचारप्राप्तत्वाच्छ्रौतस्मार्तवत् विवाहाद्युत्सवेषु क्रियमाणं वध्वादिपूजनम्। प्रजा पुत्रोत्पत्तिविषया गर्भाधानादिसंस्काराः। प्रजनः पुत्रोत्पत्त्यर्थं ऋतुकाले भार्यागमनम्। प्रजातिः श्रुतिस्मृत्युदितं स्ववर्णाश्रमानुसारेण पुत्रोत्पत्तिः। अन्यथा विहिताकरणप्रत्यवायेन प्रतिबद्धं फलपर्यवसायिनः स्यात्। एतानि कर्माण्यपि कर्तव्यानीत्यर्थः। यथोक्तकर्मसु सत्यतपःस्वाध्यायप्रवचनानां प्राशस्त्यात्तेषां प्रत्येकमेव अवश्यकर्तव्यतां मतभेदेनाह—सत्यमितीति। राथीतरः रथीतरस्य गोत्रो राथीतर आचार्यो मन्यते। यतः सर्वदा सत्यमेव वक्ति, अतः सत्यवचाः सत्यं वचो यस्य सोऽयं सत्यवचः इति एवं तस्य नामधेयम्। स हि सत्यवचनमेवोत्तमं कर्मेति ब्रूते। पौरुशिष्टिः पुरुशिष्टस्यापत्यं पौरुशिष्टिराचार्यो

मन्यते, यतः तपसि नियतो वर्तते अतः तपोनित्य इति एवं तस्य नामधेयम्। स त्वनशनरूपमेव तपः कर्मोत्तममिति वदति। मुद्गलस्यापत्यं मौद्गल्य आचार्यो मन्यते, यतः सर्वदा स्वाध्यायप्रवचनाभ्यां तुष्टः सन्निर्दुःखो वर्तते अतो नाक इति एवं तस्य नामधेयम्। स तु स्वाध्यायप्रवचने एवोत्तमे कर्मणी इति ब्रवीति। स्वाध्यायप्रवचनवादिनो मौद्गल्यस्य न हानिः। तद्धि तपः हि यस्मात् स्वाध्यायप्रवचने एव तपस्तत् तस्मात्ते एवानुष्ठेये। तथा चाम्नायते—'तपो हि स्वाध्याय इति उत तिष्ठन्नुत व्रजन्नुतासीन उत शयानोऽधीयीतैवे'ति। हिशब्दोऽनशनाद्यपेक्षया स्वाध्यायादेरधिकफलत्वात्तपस्त्वमिति सूचनार्थः। तद्धि तप इत्यभ्यासो मुख्यतपस्त्वद्योतनार्थः।

इति नवमोऽनुवाकः।

पूर्वं स्वाध्यायादिब्रह्मयज्ञस्योत्तमतपस्त्वमुक्तम्। इदानीं तु श्रद्धालोरपि प्रज्ञामान्द्यादिदोषेण वेदाध्ययनाशक्तस्य स्वाध्यायरूप-ब्रह्मयज्ञफलसिद्धये तत्प्रतिनिधिरूपं मन्त्रमाह—

अहं वृक्षस्य रेरिवा। कीर्तिः पृष्ठं गिरेरिव। ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि। द्रविण ँ सवर्चसम्। सुमेधा अमृतोऽक्षितः। इति त्रिशङ्कोर्वेदानुवचम्।

इति दशमोऽनुवाकः॥ १०॥

वृक्षस्य वृश्च्यते तत्त्वज्ञानेनोच्छिद्यत इति वृक्षः, तदेव संसाररूपवृक्षस्य रेरिवा विषयवैराग्यरूपशस्त्रेण छेत्ता अन्तर्यामिरूपेण प्रेरयिता वा अहं स्यामिति शेषः। संसारवृक्षे च्छिन्ने सति कीर्तिः मदीया ख्यातिः। तत्र दृष्टान्तः—गिरेः पृष्ठमिव यथा पर्वतस्योपरिभागोऽत्यन्त उन्नतः तथा मदीया मोक्षविषया कीर्तिरत्यन्तोच्छ्रिता सती देवलोकेष्वपि प्रसरति ततो देवा अपि मदीयं पुरुषार्थं विहन्तुं न क्षमन्ते। तथा च श्रूयते—'तस्य ह न देवाश्च नाभूत्या ईशत' इति। ऊर्ध्वपवित्रः ऊर्ध्वमुत्कृष्टं पवित्रं शुद्धिर्यस्य सोऽहमूर्ध्वपवित्रः, स्वमृतं सुष्ठु सर्वोत्तमम् अमृतं विशुद्धब्रह्मात्मतत्त्वमस्मि भवामि। तत्र दृष्टान्तमाह—वाजिनीवेति, वाजमन्नमस्यास्तीति वाजी सूर्यः, तस्मिन् वाजिनि सूर्ये यथा अमृतं 'स यश्चायं पुरुषे यश्चासावादित्ये' इत्यादिश्रुतिप्रसिद्धं ब्रह्मात्मतत्त्वविशुद्धमस्ति तद्वदहमस्मीत्यन्वयः। अन्नवत्त्वं चादित्यस्य मधुविद्यायां प्रसिद्धम्। धनिकस्य रत्नादिधनमस्ति, ब्रह्मविदस्तु आत्मतत्त्वमेव धनमित्याह—द्रविणमिति। द्रविणं निरतिशयस्वरूपं ब्रह्मात्मतत्त्वं सर्वसन्दीप्तिमत्

तदेवाहमस्मीत्यनुषंगः । यद्वा ब्रह्मज्ञानम् आत्मतत्त्वप्रकाशकत्वात् सवर्चसं द्रविणमिव द्रविणं मोक्षसुखहेतुत्वादित्यर्थः । सुमेधाः शोभना मेधा ब्रह्मज्ञानप्रतिपादकग्रन्थतदर्थावधारणशक्तिरूपा बुद्धिर्यस्य सोऽहं सुमेधा अस्मि । अत एव अमृतोऽमरणधर्मा, अक्षितः क्षितिरहितोऽव्ययः । यद्वा अमृतोक्षित इत्येकं पदम् अमृतेन स्वरूपानन्दानुभवेन उक्षितः सिक्तो व्याप्तोऽस्मीत्यर्थः । इति इत्याकारकं वाक्यं त्रिशंकोः त्रिशंकुनामऋषेः वेदानुवचनं वेदो वेदनम् आत्मज्ञानरूपं तदनु आत्मज्ञानप्राप्त्यनन्तरं वचनं कथनं वामदेववत् स्वस्य कृतकृत्यप्रख्यापनार्थमस्तीत्यर्थः । अहं वृक्षस्येति मन्त्रस्य त्रिशंकुः ऋषिः, पंक्तिश्छन्दः, परमात्मा देवता, ब्रह्मविद्यार्थे जपे विनियोग इति विद्योत्पत्त्यर्थेऽस्य मन्त्रस्य जपः कर्तव्य इति भावः ॥ १ ॥

इति दशमोऽनुवाकः ।

एकादशेऽनुवाके केवलकर्मणामपि विविदिषोत्पादनद्वारेण मोक्षहेतुब्रह्मविद्याहेतुत्वमभिप्रेत्य तदनुशासनं विधत्ते—

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर ॥

आचार्यः गुरुः वेदमनूच्य उपनयनपूर्वकमध्याप्य अन्तेवासिनं शिष्यं अनुशास्ति अध्यापनादूर्ध्वं वेदार्थं ग्राहयति । अनुशासनप्रकारं संग्रहेण दर्शयति—सत्यमिति । सत्यम् अहिंसासत्यमस्तेयमित्यादिशास्त्रप्रमाणेनावगतं सर्वस्मार्तधर्मं वद कथय । धर्मं श्रुतिविहिताऽग्निहोत्रादिरूपं 'चोदनालक्षणोऽर्थो धर्मः' इति जैमिनिनोक्तं चर आचर कुर्वित्यर्थः ॥

पूर्वोक्तधर्मादीनां सकृदनुष्ठितानां त्यागरूपं प्रमादं निषेधति—

स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् ॥ १ ॥

स्वाध्यायात् वेदाध्ययनात् मा प्रमदः प्रमादं मा कार्षीः आचार्याय आचार्यार्थं प्रियम् इष्टं धनं गोसुवर्णवस्त्रादिरूपम् आहृत्य आनीय विद्यानिष्क्रयार्थं दत्त्वा आचार्येण चानुज्ञातः सन् अनुरूपां भार्यामाहृत्य प्रजातन्तुं पुत्रादिसन्ततिविस्तारं मा व्यवच्छेत्सीः प्रजासन्ततेर्विच्छित्तिर्न कर्तव्या । अनुत्पद्यमानेऽपि पुत्रे पुत्रकाम्यादिकर्मणा तदुत्पत्तौ यत्नः कर्तव्य इत्यभिप्रायः । न च मुक्तिसाधनप्रकरणे प्रजाविस्तारस्य अनुप-

योग इति वाच्यम्; पितृऋणस्यापि मोक्षप्रतिबन्धकत्वेन तदपाकरणद्वारा मोक्षप्राप्तिसंभवात्। तथा चोक्तं मनुना—'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य वै तानि मोक्षमिच्छेत् पतत्यधः' इति। पूर्वोक्तयोः सत्यधर्मयोः कदाचिदप्यालस्याद् अननुष्ठानरूपः प्रमादो न कर्तव्य इत्याह—सत्यादिति। सत्यान्न प्रमदितव्यं प्रमादो न कर्तव्यः। सत्याच्च प्रमदनमनृतप्रसंगः, प्रमादशब्दसामर्थ्याद् विस्मृत्याप्यनृतं न वक्तव्यमित्यर्थः। धर्मान्न प्रमदितव्यं धर्मशब्दस्य अनुष्ठेयविषयत्वादननुष्ठानरूपः प्रमादो न कर्तव्योऽवश्यानुष्ठातव्य इत्यर्थः। कुशलात् आयुरारोग्यादिक्लेसकराद् वैदिकाल्लौकिकाच्चात्मरक्षणार्थात् कर्मणो न प्रमदितव्यम्। भूत्यै विभूत्यर्थं तदुपायभूतात्कर्मणो न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां अध्ययनाध्यापनाभ्यां न प्रमदितव्यम्। ते नियमेन कर्तव्ये इत्यर्थः। देवपितृकार्याभ्यां देवकार्यं यागादि, पितृकार्यं श्राद्धादि ताभ्यां न प्रमदितव्यं तयोरकरणरूपप्रमादो न कर्तव्य इत्यर्थः॥ १॥

मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि, तानि सेवितव्यानि। नो इतराणि। यान्यस्माकँ सुचरितानि, तानि त्वयोपास्यानि। नो इतराणि॥२॥

मातृदेवो भव माता देवः देववत्पूज्या यस्य स एवंभूतस्त्वं भव स्याः। एवं पितृदेवो भव, आचार्यदेवो भव, अतिथिदेवो भव देवबुद्ध्या तेषां पूजनं कुर्वित्यर्थः। द्विविधानि कर्माण्यनिन्द्यानि निन्द्यानि चेत्याह—यानीति। यानि कर्माणि लोकप्रसिद्धानि अनवद्यानि अनिन्दितानि शिष्टाचाररूपाणि तानि सेवितव्यानि, त्वया सेव्यानि। नो इतराणि न त्वभिचारादीनिकर्माणि, शत्रुवधद्वारा नरकप्रदत्वेन निन्दितानि, अतो न कर्तव्यानीत्यर्थः। यानि कर्माणि अस्माकम् आचार्याणां सुचरितानि सुष्ठु चरितान्यनिन्दितानि श्रुतिस्मृत्यविरुद्धानि तानि कर्माणि त्वया अस्मच्छिष्येण उपास्यानि नियमेन कर्तव्यानि। नो इतराणि शापदानादीनि आचार्यैः कृतान्यपि तानि त्वया न कर्तव्यानि। एतदुभयचरितानि षोडशाध्याये भगवानप्याह—'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः' इत्यादिना 'दैवीसंपद्विमोक्षाय निबन्धायासुरी मता' इत्यन्तेन ग्रन्थेन॥ २॥

आचार्यसेवायां कञ्चिद्विशेषमुपदिशति—

ये के चास्मच्छ्रेयाँसो ब्राह्मणाः, तेषां त्वयाऽऽसनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्॥ ३ ॥

ये के च लोकप्रसिद्धाः ब्राह्मणाः ब्राह्मणत्वजातीयाः अस्माच्छ्रेयांसः अस्मत्तोऽप्यतिशयेन प्रशस्ताः तेषां उक्तलक्षण ब्राह्मणानां त्वया अस्मच्छिष्येण आसनेन आसनप्रदान-पादप्रक्षालनादिशुश्रूषया प्रश्वासितव्यं श्रमापनयनं कर्तव्यम्। यद्वा तेषां ब्राह्मणानामासने स्थानदाने न प्रश्वसितव्यं प्राणोच्छ्वासोऽपि त्वया न कर्तव्यः, कुतो विवादादिकम्। तैर्यदुक्तं तथैव त्वया सारग्राहिणा भवितव्यमित्यर्थः। धनादिदाने कश्चिद्विशेषमुपदिशति—श्रद्धयेति। श्रद्धया आस्तिक्यबुद्ध्या देयम् अन्नादिकं प्रदातव्यम्। अश्रद्धया नास्तिकबुद्ध्या अदेयं न दातव्यम्,श्रद्धारहितस्य दानस्य लोकद्वयेऽप्यनुपयोगात्, अतः श्रद्धायुक्तेनैव भवता देयम्। श्रिया देयम् धनं बह्वस्ति, तद् दासा इव याचका अपि गृह्णन्तु, मम का क्षतिरिति बुद्ध्या यद्दानं तच्छ्रिया दानं देयम्। ह्रिया देयं मत्समाः पुरुषाः दानं कुर्वन्ति, मम त्वदानेन महती लज्जा इत्येवं लोकलज्जया च दातव्यम्। भिया देयम् ऋत्विगादिभ्यो यद्दानं शास्त्रेण विहितं तस्यादाने मम प्रत्यवायः स्यादिति शास्त्रभीत्या दातव्यम्। कार्पण्यापवादभयेन लोके दातव्यं वा। संविदा देयं यद्विवेकज्ञानेन युक्तं तद्देयं देशकालादिविवेकेन न्यूनाधिकं दानं सर्वथा दातव्यं वित्तशाठ्यं न कार्यमित्यर्थः॥ ३ ॥

एवमनुष्ठेयमर्थमुपादिश्य अनन्तरं कर्मानुष्ठानकाले समुत्पन्नसंशयस्य निरासार्थं शिष्टाचारं प्रमाणयति—

अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्। ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्त्तेरन्। तथा तत्र वर्तेथाः॥ ४ ॥

अथ पक्षान्तरे यदि कदाचित् ते तव कर्मविचिकित्सा वा श्रौते स्मार्ते च कर्मणि विरुद्धार्थकवचनद्वयेन विप्रतिपत्तिदर्शितः संशयो भवति। तथा हि—तावदग्निहोत्रादिके श्रौते कर्मणि 'उदिते जुहोति' 'अनुदिते जुहोती'ति वाक्यद्वयं विरुद्धार्थं श्रुतवत इदं कर्तव्यं न वेत्याकारकः सन्देहः स्यात्। तथा सन्ध्यावन्दनादिके च स्मार्ते कर्मणि संध्यादेवता पुरुषमूर्तिः स्त्रीमूर्तिर्वा इति वचनद्वयेन सन्देहः स्यात्। वृत्तविचिकित्सा वा स्यात् वृत्ते कुलपरम्परागते लौकिक आचारे

तत्रापि मातुलसुताविवाहे मांसभक्षणादिके च विप्रतिपत्तिदर्शनादेव-माचरणीयं न वेत्याकारकः सन्देहो यदि स्यात् भवेत् तदा ये प्रसिद्धाः ब्राह्मणाः वेदविदः। तत्र कर्मणि वृत्ते च युक्ताः कुशलाः संमर्शिनः विचारकारिणः नित्यनैमित्तिकाद्यनुष्ठाने स्वयं प्रवृत्ताः, तत्रापि आयुक्ताः आसमन्तात् स्वतन्त्रा अवैकल्येन सम्यगनुष्ठास्याम इत्येवमभियुक्ता इत्यर्थः। अलूक्षा अरूक्षाः, तथा च रूक्षः क्रोध आग्रहो वा तेन रहिताः शान्तस्वभावा इति यावत्; धर्मकामाः धर्ममेव कामयन्ते न तु लाभ-पूजादिकं एवंभूताः स्युः भवेयुः। तत्र कर्मणि वृत्ते वा ते उक्ताः संमर्शादि-पञ्चविशेषणविशिष्टाः ब्राह्मणाः, यथा येन प्रकारेण तस्मिन्संदिग्धे विषये वर्तेरन् प्रवृत्ता भवेयुः तथा तेनैव प्रकारेण तत्र कर्मणि वृत्ते च वर्तेथाः, रागद्वेषौत्सुक्यादिदोषराहित्येन त्वमपि वर्तस्वेत्यर्थः॥ ४॥

अथाभ्याख्यातेषु। ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तेषु वर्तेरन्। तथा तेषु वर्तेथाः॥ ५॥

अथ एवं संदिग्धधर्मनिर्णयोपायोपदेशानन्तरम्, यदि अभ्याख्यातेषु पातकशंकया दूषितेषु पुरुषेषु, तदव्यवहार्यत्वादिसंशयः स्यादिति शेषः। तदा तत्र तस्मिन्देशे ये ब्राह्मणाः स्युः यथा येन प्रकारेण तेषु अभ्या-ख्यातेषु वर्तेरन् व्यवहरेयुः तथा तेनैव प्रकारेण तेषु अभ्याख्यातेषु वर्तेथाः त्वमपि तथा व्यवहारं कुर्वित्यर्थः। संमर्शिन इत्यादिपदपञ्चक पूर्ववत् व्याख्येयम्॥ ५॥

उक्तानुशासनमुपसंहरति—

एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशा-सनम्। एवमुपासितव्यम्। एवमु चैतदुपास्यम्॥ ६॥

इति एकादशोऽनुवाकः॥ ११॥

एषः 'सत्यं वदे'त्यारभ्य तथा 'तेषु वर्तेथा' इत्यन्तवाक्यसंदर्भः आदेशः श्रौतो विधिः यथा राजा स्वभृत्यमादिशति तथा वैदिको विधिरनुष्ठातारमादिशति। एषः सत्यं वदेत्यादिः उपदेशः स्मार्तो विधिः। एषा सत्यं वदेत्याद्युक्तिः वेदोपनिषत् वेदे विधिमन्त्रार्थवाद-राशिरूपे उपनिषत् रहस्यसारभागः। एतत् सत्यं वदेत्यादिकम् अनु-शासनं ईश्वरस्याज्ञा 'श्रुतिस्मृती ममैवाज्ञे' इति भगवदुक्तेः। एवं उक्त-प्रकारेण उपासितव्यम् अनुष्ठातव्यम्। एवमु एवमेव च एतत् उक्तं कर्मजातम् उपास्यं कर्तव्यम्। द्विरुक्तिरादरार्था। उचेत्यव्ययसमुदायो

ऽवधारणार्थो वा। उक्तप्रकारेण एतदनुष्ठेयमेव, न तु कदाचिदपि परित्यक्तुं शक्यमित्यभिप्रायः॥ ६॥

इति एकादशोऽनुवाकः।

अध्यापनान्ते शान्तिपाठप्रकारमाह—

शन्नो मित्रः शं वरुणः। शन्नो भवत्वर्यमा। शन्न इन्द्रो बृहस्पतिः। शन्नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्॥ १॥

ॐ शान्तिः शान्तिः शान्तिः।

इति द्वादशोऽनुवाकः॥ १२॥

वदिष्यामीत्यस्य स्थाने अवादिषमित्युक्तिः। वदामीति तस्य विपरिणामः पूर्ववत्। आवीत् अवतु अन्यत्पूर्ववद्व्याख्येयम्।

द्वादशोऽनुवाकः

इति शीक्षावल्ली समाप्ता॥ १॥

—:o:—

अथ ब्रह्मवल्ली।

इदानीं तु वक्ष्यमाणपरविद्याप्राप्तये विघ्नप्रशमनार्थं शान्तिमन्त्रमाह--

ॐ स ह नाववतु। स ह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै।

ॐ शान्तिः शान्तिः शान्तिः॥

ह प्रसिद्धः स परमेश्वरः नौ आवां शिष्याचार्यौ अवतु विद्यास्वरूपप्रकाशनेन रक्षतु। स ह प्रसिद्धः परमेश्वरः नौ आवां शिष्याचार्यौ भुनक्तु विद्याफलं भोजयतु। सह शिष्याचार्यौ परस्परं मिलित्वा वीर्यं विद्याकृतसामर्थ्यं करवावहै निष्पादयावहै। नौ आवाभ्यां शिष्याचार्याभ्याम् अधीतं पठितं तेजस्वि अतिशयेन वीर्यवदस्तु। यद्वा तेजस्विनौ तेजस्विनोरावयोर्यदधीतं तत्सफलमस्त्विति शेषः। मा विद्विषावहै प्रमादकृतान्यायेनाध्ययन अध्यापनकृतदोषप्रयुक्तं परस्परं द्वेषम् आवां शिष्याचार्यौ मा करवावहै। ॐशब्दो मङ्गलार्थः। शान्तिशब्दस्य त्रिर्वचनं अध्यात्मादिदोषत्रयनिवृत्त्यर्थम्॥ १॥

पूर्वग्रन्थे संहितादिविषयाणि कर्मभिःअविरुद्धानि उपासनान्युक्तानि सोपाधिकात्मदर्शनं च व्याहृतिद्वारेण स्वाराज्यफलकमुक्तम्।

न चैतावता अशेषतः संसारबीजस्य उपमर्दनमस्तीत्याशयेन सर्वानर्थ-बीजाविद्यादाहाय निर्विशेषब्रह्मात्मदर्शनमुपदिशन्ती श्रुतिः शिष्यप्रवृत्ति-निमित्तभूतं प्रयोजनं तावदाह—

ॐ ब्रह्मविदाप्नोति परम्। तदेषाऽभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म ॥

ब्रह्मेत्यादि। ब्रह्मशब्देन बृहत्तमं किमपि वस्तूच्यते तद्वेत्ति विजानातीति ब्रह्मवित् ब्रह्मवेत्ता परम् उक्तब्रह्मस्वरूपम् आप्नोति प्राप्नोति। न ह्यत्र परशब्देन ब्रह्मणोऽन्यद्वस्तूच्यते विदुषो वेद्यस्वरूपस्यैव प्राप्यत्व-नियमात् 'ब्रह्मवेद ब्रह्मैव भवती'ति श्रुत्यन्तरे ब्रह्मण एव प्राप्यत्वोक्तश्च। यद्यपि सर्वगतस्य ब्रह्मणः सर्वात्मकत्वान्नाप्त्यर्थो मुख्यः संभवति, तथाप्यविद्यानिवृत्तिरूपगौणार्थ एवात्र ग्राह्यः, गत्यन्तराभावात्। बृहत्त्वाद् ब्रह्मेति व्युत्पत्तिबलेन अस्ति किमपि बृहद्वस्त्विवति प्रतीयते, न तु तस्य स्वरूपविशेषः प्रतीयते, अतः सर्वतो व्यावृत्तस्वरूपविशेष-समर्पणे समर्थस्य लक्षणस्याभिधानेन स्वरूपानिर्धारणाय मन्त्रमाह—तदिति। तत् तत्र ब्राह्मणवाक्योक्तेऽर्थे एषा ऋक् अभ्युक्ता आम्नाता। सत्यं ज्ञानमनन्तं ब्रह्मेति। ब्रह्मणः स्वरूपलक्षणार्थमिदं वाक्यम्। तत्र विशेष्यं ब्रह्म, सत्यादीनि च त्रीणीतरव्यावृत्त्यर्थानि विशेषणानि। विशेषणविशेष्यभावादेव तेषां समानाधिकरणतया एकविभक्त्यन्तत्वं भवति। लोके यथा नीलं महत्सुगन्ध्युत्पलमिति। सत्यादिभिः सम्बध्यमानं हि ब्रह्म अनृतादिभिर्व्यावृत्तं भवति। ननु यत्र विशेष्यं वस्तु विशेषणान्तरैर्व्यभिचरद्वर्तते तत्रैव विशेष्यं वस्तु विशेषणैर्विशिष्यते। यथा उत्पलं वस्तु नीलं रक्तं चास्ति। तथा च रक्तं व्यभिचरत् सदुत्पलं नीलेन विशेष्यते नीलमुत्पलमिति। एकजातीयानेकद्रव्याणामनेकविशेषण-सम्बन्धे सत्येव विशेषणानामर्थवत्त्वं भवति, न त्वेकस्मिन्वस्तुनि। यथा 'असावेक आदित्यः सत्यः' इत्यत्र विशेषणान्तरसम्बन्ध्यादित्यसजातीयस्यान्यस्याभावादादित्यस्य विशेषणमर्थवन्न भवति। तथा ब्रह्मणोऽद्वितीयत्व-श्रवणात्तत्सजातीयब्रह्मान्तरस्य व्यावर्त्यस्याभावान्नास्ति सत्यादीनामर्थ-वत्त्वमिति चेन्न। वस्तुतो ब्रह्मेतरेषामभावेऽपि जलादिगतकल्पितादित्य-व्यावृत्त्यर्थमम्बरस्थः सविता सत्य इति सवितुः सत्यविशेषणस्यार्थ-वत्त्ववत् कल्पितानामव्याकृतभूताकाशादिब्रह्मेतरेषां सापेक्षव्यापकत्व-रूपवृद्धिमत्त्वेन ब्रह्मशब्दवाच्यानां व्यावर्त्यानां सत्त्वेनौपचारिकविशेषणविशेष्यभावस्य निष्प्रत्यूहत्वात्। ननु सजातीयविजातीयेभ्यो हि व्यावर्तकं लक्षणम्। यथा गन्धवती पृथिवीत्यत्र गन्धवत्त्वं भूतत्वेन

सदृशाज्जलादेर्विसदृशादात्मादेश्च पृथिव्यां व्यावृत्तिसाधकमिति लक्षण-विशेषणयोर्भेदात् कथं लक्षणार्थं वाक्यमित्युपक्रम्य विशेषणार्थतया व्याख्यायते इति चेन्न। सजातीयविजातीयव्यावर्तकस्य लक्षणस्य विशेषणस्येव सजातीयव्यावर्तकत्वांशस्य विद्यमानतयवात्र विशेषणत्व-व्यवहाराङ्गीकारेण सजातीयमात्रव्यावर्तकत्वात्मकमुख्यविशेषणत्वस्य अविवक्षितत्वात्। न च ब्रह्मणः स्वरूपभूतस्य सत्यादेः कथं लक्ष-णत्वं व्यावर्तकधर्मस्यैव वादिभिर्लक्षणत्वेनाभ्युपगमादिति वाच्यम्; गौरवेण धर्मत्वांशस्य तत्र प्रवेशायोगाद् व्यावर्तकत्वमात्रस्य स्वरूपेऽपि सम्भवात्। सत्यमिति। यद्वस्तु कालत्रयेऽप्यव्यभिचरितं तत्सत्यं यथा मृदादि, यद्वस्तु कादाचित्कं तदनृतं यथा मृत्कार्यं घट-शरावादिकम्। तथा च श्रुतिः—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति। एवं मृदादिवत्सत्यं परमार्थभूतं ब्रह्म, तद्विकारस्तु प्रपञ्चो मृद्वि-कारवदनृत एवेत्यवगम्यते। एवं च विकारस्य सत्यत्वाभावात् सत्यं ब्रह्मेति सत्यपदेन ब्रह्मणो विकाराद् व्यावृत्तिर्भवतीत्यर्थः। ननु भव-त्वेवम्; तथापि मृदादिवद् वस्तुत्वादचेतनं ब्रह्म स्यादित्यत आह—ज्ञानमिति। ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्तिकोऽत्र ज्ञानशब्दः, चिन्मात्र-स्वरूपमित्यर्थः। यद्यपि क्रियासामान्यमन्यत्र भाव उच्यते, तथाप्यत्र निर्विशेषं चिन्मात्रं भावव्युत्पन्नेन ज्ञानशब्देन लक्ष्यते, सत्यादिशब्देन सह ब्रह्मविशेषणत्वादिति द्रष्टव्यम्। एतेन जडव्यावृत्तिरप्युक्ता। ननु लौकिकज्ञानस्यानित्यत्वदर्शनाज्ज्ञानरूपब्रह्मणोऽप्यागतम् अन्तवत्त्वमित्या-शंक्याह—'अनन्तमिति'। अन्तो देशकालवस्तुकृतपरिच्छेदो न विद्यते यस्य तदनन्तम्। ननु सत्यादिपदैरनृतादिव्यावृत्तेरुक्तत्वादनृतादिव्यावृत्ति-रेव सत्यादिपदवाच्यत्वेनोक्ता स्यात्। ब्रह्मपदमप्यनर्थकमेव ब्रह्मणो मानान्तरासिद्धत्वेन तत्सत्त्वे मानाभावात्। तथा च 'मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः। एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः' इति वाक्यवदसदर्थमेव सत्यादिवाक्यमिति चेन्न। मिथ्यार्थस्य रज्जु-सर्पादेः सदधिष्ठानत्वदर्शनात् दृश्यत्वादिहेतुभिर्मिथ्यात्वेनावगतस्य प्रपञ्चस्याधिष्ठानत्वेन सम्भावितस्य ब्रह्मणः स्वरूपविशेषलक्षणार्थत्वेन उक्तस्य सत्यादिवाक्यस्यासदर्थत्वाभावात्॥

सत्यादिपदानां विशेषणत्वेऽपि न सत्यादिवाक्यस्यासदर्थत्वं सत्यादि-शब्दानामबाधितसत्त्वस्वप्रकाशसंवेदनादिरूपस्वार्थसमर्पणेन विरोधि-व्यावर्तकत्वे सत्यनृतादिव्यावृत्तिमात्रे पर्यवसानाभावात्। तथा चोक्तं सुरेश्वराचार्यैः—'प्रतिपद्य पदार्थं हि विरोधात्तद्विरोधिनः। पश्चा-

द्भावं जानाति वध्यघातकवत्पदात् ॥ शब्दात्प्रतीयते तावत्सङ्गति-र्धर्मधर्मिणोः। मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृतः' इति। अस्यायमर्थः—पदात् सत्यादिरूपात् पदार्थं सत्यत्वादिरूपं प्रतिपद्य ब्रह्मणि ज्ञात्वा पश्चात् विरोधाद्धेतोः विरोधिनोऽनृतादेः अभावं व्यावृत्तिं जानाति। तत्र निदर्शनं वध्यघातकवत्। यथा खल्वाखुभूषितां भूमिं दृष्ट्वा अर्थात् मार्जाराभावोऽवगम्यते, तद्वदित्यर्थः। किं तदुभयमपि शाब्दम्, आहोस्विदन्यतरदिति ? तत्राह—शब्दादिति। तावत् प्रथम धर्मधर्मिणोः सत्यत्वादेर्ब्रह्मणश्च सङ्गतिः सम्बन्धः शब्दात्प्रतीयते। तावता चास्यास्तात्पर्यविषयत्वं द्योत्यते। अपोहस्तु विरोधिव्यावृत्तिश्च मानान्तरात् अनुपपत्तिलक्षणाज्ज्ञायते। तेन अपोहस्य मानान्तरगम्यत्वेन सः अपोहस्तु न शाब्दः सत्यादिशब्दजन्यो न भवतीत्यर्थः। ननु त्रयाणां किं तुल्योऽयं न्यायो वर्तते इति चेन्न। अनन्तशब्दः साक्षादेव इतरव्यावर्तकत्वेन ब्रह्मविशेषणम्। नहि यथा अनन्तमित्युक्तेऽन्ताभावः साक्षात्प्रतीयते, तथा सत्यं ज्ञानमित्यत्र अनृताद्यभावः प्रतीयते, अपि तु स्वार्थसमर्पणव्यवधानेन। उक्तं च वार्तिककृद्भिस्तत्र—'अनन्तोऽनन्तवद्वस्तुव्यावृत्त्यैव विशेषणम्। स्वार्थार्पणप्रणाड्या च परिशिष्टौ विशेषणे' इति। तत्र सत्यादिषु मध्ये परिशिष्टौ सत्यज्ञानशब्दौ प्रनाड्या व्यवधानेन इति वार्तिकपदानामर्थः। यद्यपि सत्यं ब्रह्मेत्युक्ते जाड्यव्यावृत्तिः परिच्छेदव्यावृत्तिश्च लभ्यते, जडस्य परिच्छिन्नस्य सर्वस्यानृतत्वात्। ज्ञानं ब्रह्मेत्युक्ते चानृतपरिच्छेदव्यावृत्तिर्लभ्यते, स्वप्रकाशस्य बाधाविषयत्वात् परिच्छेदग्राहकप्रमाणाविषयत्वाच्च। एवं चैकं वैकल्पिकं लक्षणमदुष्टं भवति। तथापि मन्दमतिव्युत्पत्त्यर्थं समुच्चितं लक्षणं स्यादिति द्रष्टव्यम् ॥

यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते
सर्वान् कामान् सह ब्रह्मणा विपश्चितेति ॥ १ ॥

एवमुक्तलक्षणं ब्रह्म परमे परमपुरुषस्थितिस्थानत्वादुत्कृष्टे व्योमन् व्योमनि हार्दाकाशे या बुद्धिरूपा गुहा तस्यां गुहायां निहितं स्थितम् अभिव्यक्तं ब्रह्म योऽधिकारी वेद अहं ब्रह्मास्मीति जानाति, स विद्वान् ब्रह्मणा सत्यज्ञानादिरूपेण विपश्चिता सर्वज्ञरूपेणाभिन्नः सर्वान् निखिलान् कामान् काम्यमानभोगान्सह युगपदेव अश्नुते भुङ्क्ते सर्वानन्दराशिभूतं ब्रह्मानन्दमश्नुवानस्तल्लेशभूतान् सर्वकामानपि युगपदश्नुत इत्यर्थः। इतिशब्दो मन्त्रसमाप्त्यर्थः ॥ १ ॥

ब्रह्मविदाप्नोति परमिति ब्राह्मणवाक्येन सूत्रितोऽर्थः संक्षेपतो मन्त्रेण व्याख्यातः। पुनस्तमेव विस्तरेण वक्तुमुत्तरग्रन्थ आरभ्यते—

तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नाद्रेतः। रेतसः पुरुषः। स वा एष पुरुषोऽन्नरसमयः॥

तस्मात् व्यवहितब्राह्मणवाक्येनोक्तात् एतस्मात् सत्यादिमन्त्रेणोक्तात् आत्मनः प्रत्यग्रूपात् ब्रह्मणः आकाशः शब्दगुणो भूताकाशः संभूतः समुत्पन्नः। आकाशात् आकाशभावापन्नात् परमात्मनः वायुः शब्दस्पर्शद्विगुणो वायुः संभूत इत्यनुषङ्गः। वायो उक्तलक्षणात् अग्निः शब्दस्पर्शरूपत्रिगुणोऽग्निः संभूतः। अग्नेः उक्तरूपात् आपः शब्दस्पर्शरूपरसचतुर्गुणकानि जलानि संभूतानि। अद्भ्यः उक्तलक्षणाभ्यः पृथिवी शब्दस्पर्शरूपरसगन्धपञ्चगुणवती भूमिः संभूता। पृथिव्याः उक्तरूपायाः ओषधयः फलपाकान्ता व्रीहियवादिरूपाः संभूताः। ओषधीभ्यः व्रीहियवादिभ्यः अन्नम् ओदनादिरूपं संभूतम्। अन्नाद्रेतः भक्षितादुक्तान्नाद्रेतो वीर्यम्। रेतसः वीर्यात् पुरुषः शिरःपाण्यादिमानाकृतिविशेषः स्थूलदेहः संभूतः। सः अन्नाज्जायमानः वै प्रसिद्धः एषः सर्वजनप्रत्यक्षः पुरुषः शिरःपाण्यादिमान् स्थूलदेहः अन्नरसमयः अन्नरसविकारः। कोशपञ्चकोपन्यासं दृष्टान्तेनाह—यथा लोके कश्चिच्चन्द्रं दिदर्शयिषुः शाखाग्रं चन्द्रत्वेन बोधयति, बोद्धा च दिगन्तराणि त्यक्त्वा शाखाग्रं पश्यन् तद्द्वारा चन्द्रं पश्यति, तथा श्रुतिरपि पूर्वोक्तब्रह्म बुबोधयिषुः कोशपञ्चकं क्रमेणात्मत्वेन दर्शयति, ततश्च दिदृक्षुः पूर्वपूर्वकोशेष्वात्मबुद्धिं परित्यज्य सर्वकोशाधिष्ठानभूतं सर्वान्तरतमं ब्रह्माहमस्मीति द्रक्ष्यतीत्यभिप्रायः॥

तस्य दिदृक्षोश्चित्तैकाग्र्यसिद्ध्यर्थं कोशेषु पक्षिरूपत्वेनोपासनं विधत्ते—

तस्येदमेव शिरः। अयं दक्षिणः पक्षः। अयमुत्तरः पक्षः। अयमात्मा। इदं पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥ १॥

इति प्रथमोऽनुवाकः॥ १॥

तस्य अन्नरसमयस्य पुरुषस्य इदमेव शिरस्त्वेन प्रसिद्धमेव शिरः

प्रसिद्धे शिरस्येव शिरोदृष्टिः कर्तव्येत्यर्थः। अयं प्रसिद्धः पूर्वाभिमुखस्य दक्षिणो बाहुः दक्षिणः पक्षः दक्षिणः छन्दः। अयं प्रसिद्धः सव्यो बाहुः उत्तरः पक्षः सव्यः पक्षः। अयं बाहुद्वयमध्यमो देहभागः आत्मा सर्वाङ्गानामात्मभूतः 'मध्यं ह्येषामङ्गानामात्मे'ति श्रुतेः। इदं प्रसिद्धं नाभेरधोभागरूपं पुच्छं पक्षिपुच्छमिव पुच्छं प्रतिष्ठा, प्रतितिष्ठत्यनयेति प्रतिष्ठा स्थितिसाधनभूतमित्यर्थः। तत् तस्मिन् ब्राह्मणोक्तेऽन्नमयात्मन्यर्थे एषः वक्ष्यमाणः श्लोकः मन्त्रो भवति॥ १॥

इति प्रथमोऽनुवाकः।

अन्नाद्वै प्रजाः प्रजायन्ते। याः काश्च पृथिवी ँ श्रिताः। अथो अन्नेनैव जीवन्ति। अथैनदपियन्त्यन्ततः। अन्न ँ हि भूतानां ज्येष्ठम्। तस्मात्सर्वौषधमुच्यते। सर्वं वै तेऽन्नमाप्नुवन्ति। येऽन्नं ब्रह्मोपासते॥

अन्नात् रसबीजभावापन्नात् समष्टिविराडात्मकाद्वा वै प्रसिद्धाः प्रजाः स्थावरजङ्गमरूपाः प्रजायन्ते प्रकर्षेणोत्पद्यन्ते। याः काश्च प्रसिद्धाप्रसिद्धरूपाश्च पृथिवीं श्रिताः पृथिवीमाश्रिताः, ताः सर्वा अन्नादेव प्रजायन्त इति पूर्वेणान्वयः। अथो अपि अन्नाज्जाता अन्नेनैव अदनीयरूपेण ओदनाद्यात्मकेनैव जीवन्ति प्राणान् धारयन्ति वर्धन्त इत्यर्थः। अन्ततः अन्ते जीवनहेतुभूतकर्मपरिसमाप्तौ, अथो अपि एनत् अन्नम् अपियन्ति। अत्र अपिशब्दः प्रतिशब्दार्थे ज्ञेयः। प्रतिगच्छन्ति पृथिव्यात्मकमन्नं प्रति लयं प्राप्नुवन्तीति यावत्। हि यस्मात् भूतानां प्राणिनां मध्ये अन्नं समष्ट्यात्मकं ज्येष्ठं सकलप्रजोत्पत्तिहेतुत्वात् प्रथमोत्पन्नम्। तस्मात् ज्येष्ठत्वादेव हेतोः सर्वौषधं सर्वरोगात्मिकायाः क्षुधाया अपहारकत्वात् सकलभैषजरूपम् उच्यते कथ्यते, मनीषिभिरिति शेषः। ये अधिकारिणः अन्नं समष्टिरूपं ब्रह्मोपासते अन्ने ब्रह्मबुद्धिं कुर्वन्ति ते उपासकाः वै प्रसिद्धं सर्वं सकलम् अन्नम् आप्नुवन्ति प्राप्नुवन्ति यथेष्टमन्नं लभन्त इत्यर्थः। अत्र सर्वान्नप्राप्त्यादिफलवचनं त्वर्थवादत्वेन नेयम्। ब्रह्मविद्योपक्रमोपसंहारविरोधेन मध्ये ग्रन्थस्यान्यपरत्वायोगात्॥

अन्नब्रह्मविदः सर्वान्नप्राप्तौ हेतुं वक्तुं पुनराह—

अन्न ँ हि भूतानां ज्येष्ठम्। तस्मात्सर्वौषधमुच्यते। अन्नाद्भूतानि जायन्ते। जातान्यन्नेन वर्धन्ते। अद्यतेऽत्ति च भूतानि।

तस्मादन्नं तदुच्यत इति ॥

हि यस्मात्सर्वभूतानां जन्मजीवनादिकारणत्वात् अन्नं ज्येष्ठं तस्मात्सर्वौषधमुच्यते, पूर्वं व्याख्यातम्। अनेन पुनर्वचनेनान्नदेवताऽऽत्मनो विराजः स्वकार्येषु सर्वप्राणिषु व्याप्तिः प्रतिपाद्यते। सा च व्याप्तिर्विराडात्मभावमापन्नस्य स्यात्, न ब्रह्मविदः सर्वप्राण्यात्मना सर्वान्नात्तृत्वे हेतुर्भवतीत्यर्थः। तथा चोक्तं सुरेश्वराचार्यैः—'कार्यं सर्वं यतो व्याप्तं कारणेनात्तृरूपिणा। इति हेतूपदेशाय त्वन्नं हीत्युच्यते पुनः' इति। अन्नाद् भूतानि जायन्ते, जातान्यन्नेन वर्धन्त इति पुनर्वचनमुपसंहारार्थम्। इदानीमन्नशब्दनिर्वचनमाह—अद्यते इति। अद्यते व्यष्टिरूपेण भुज्यते प्राणिभिः अत्ति च समष्टिरूपेण भुंक्ते स्वयं सर्वभूतानि तस्मात् अदनीयत्वादत्तृत्वाच्च तत् अद्यमत्तृभूतं च वस्तु अन्नम् उच्यते कथ्यते मनीषिभिरिति शेषः। इति शब्दोऽन्नमयकोशसमाप्त्यर्थः॥

एवमन्नमयकोशमात्मत्वेन निरूप्य तदभ्यन्तरं प्राणमयकोशमात्मत्वेनाह—

तस्माद्वा एतस्मादन्नरसमयात् अन्योऽन्तर आत्मा प्राणमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधतामन्वयं पुरुषविधः॥

तस्मात् ब्राह्मणवाक्योक्तात् एतस्मात् मन्त्रोक्तात् अन्नरसमयात् अन्नरसविकारात् स्थूलदेहात् अन्यो व्यतिरिक्तः अन्तरः अभ्यन्तरः आत्मा आत्मत्वेन परिकल्पितः प्राणमयः वायुविकारः। तेन प्राणमयेन एष उक्तः स्थूलदेहः पूर्णः व्याप्तः। सः उक्तलक्षणः वै प्रसिद्धः एषः स्थूलदेहे वर्तमानः प्राणमयः पुरुषविध एव शिरआद्यवयवैः पुरुषाकार एव। तस्य अन्नमयस्य पुरुषविधतां पुरुषाकारतां अनु पश्चात् अयं प्राणमयः पुरुषविधः पुरुषाकारो मूषानिषिक्तप्रतिमावत्, न त्वन्नमयस्येवास्य स्वतः पुरुषविधता भवतीत्यर्थः। एवं पूर्वस्य पूर्वस्य पुरुषविधतामनूत्तरोत्तरः पुरुषविधो भवति पूर्वपूर्वश्चोत्तरोत्तरेण पूर्णो भवतीति द्रष्टव्यम्॥

पुरुषविधतामेव दर्शयति—

तस्य प्राण एव शिरः। व्यानो दक्षिणः पक्षः। अपान उत्तरः

पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ १ ॥

इति द्वितीयोऽनुवाकः ॥ २ ॥

तस्य प्राणमयस्य प्राण एव मुखनासिकासंचारी वृत्तिविशेष एव शिरः शिरस्त्वेन ध्येयः। व्यानो व्यानाख्यः सर्वनाडीसंचारी वृत्तिविशेषः दक्षिणः पक्षः दक्षिणपक्षत्वेन ध्येयः। अपानः अधःसंचारी वृत्तिविशेषः उत्तरः पक्षः वामपक्षत्वेन ध्येयः। आकाशः शरीरमध्यवर्त्याकाशस्थः समानाख्यो वृत्तिविशेषः आत्मा शरीरमध्यत्वेन ध्येयः। पृथिवी पृथिवीदेवताक उदानवृत्तिविशेषः पुच्छं प्रतिष्ठा पुच्छत्वेन प्रतिष्ठात्वेन च ध्येयः। उत्क्रमणशीलो ह्युदानो यदा निर्गच्छेत्तदा सर्वः प्राणमयो बहिर्गच्छेदतः पृथिवीदेवतया गुरुत्वेन प्रतिबद्धोत्क्रमणशक्तिकः सन्नुदानः प्रतिष्ठापदप्रयोगयोग्यो भवतीति भावः । तदपि तस्मिन्ब्राह्मणोक्तेऽर्थे एव प्राणमयात्मविषय एषः वक्ष्यमाणः श्लोको मन्त्रो भवति।

प्राणं देवा अनुप्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यत इति। तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥

प्राणं पञ्चवृत्त्यात्मकं मुख्यं प्राणम् अनु अनुसृत्यैव देवाः देवदेहाः मनुष्याः मानवा पशवः गवादयः, चकारात्सर्वे प्राणिनः प्राणन्ति चेष्टन्ते, प्राणनक्रिययैव क्रियावन्तो भवन्तीत्यर्थः। तत्र हेतुमाह—हि यस्मात्प्राणः मुख्यप्राणः भूतानां प्राणिनाम् आयुः जीवनम्, 'यावदस्मिञ्छरीरे प्राणो वसति तावदायुरि'ति श्रुत्यन्तरात् । तस्मात् प्राणस्य जीवनहेतुत्वात् सर्वायुषमुच्यते सर्वायुषमित्याकारकं नाम वेदे कथ्यते । शतवर्षाणीति तु युक्त 'सर्वमायुरि'ति श्रुत्यन्तरात्। प्राणस्य ब्रह्मत्वेनोपासनात्पूर्णायुर्लाभात्मकफलमाह—सर्वमिति। अधिकारिणः प्राणम् उक्तलक्षणं प्राणमयमात्मानं ब्रह्मोपासते प्राणोऽहमस्मीत्येवं ब्रह्मत्वेन चिन्तनं कुर्वन्ति ते उपासकाः सर्वमेव पूर्णमेव शतसंवत्सरात्मकमेव आयुः जीवनं यन्ति प्राप्नुवन्ति। यो यद्गुणकं ब्रह्मोपास्ते स तद्गुणभाग्भवतीति विद्याफलप्राप्तेर्हेत्वर्थं प्राणो हि भूतानामायुरित्यादिपुनर्वचनं पूर्ववद्व्याख्येयम्। इतिशब्दो मन्त्रसमाप्त्यर्थः। तस्य पूर्वोक्तस्यान्नमयस्य एष एव साक्षिप्रत्यक्ष एव शारीरः शरीरे-

ऽन्नमये भवः आत्मा भवति। एष क इत्यत आह– य इति। यः प्राणमय इत्यर्थः। एतेनान्नमयकोशादात्मबुद्धिमपकृष्य प्राणमये निदध्यादिति सूचितम्। यद्वा पूर्वस्य पूर्वोक्तस्यान्नमयस्य यः आकाशादिकारणत्वेन प्रकृतः चिद्धातुरात्मा एष एव प्रकृतचिद्धातुरेव तस्य ब्राह्मणोक्तस्य प्राणमयस्य आत्मा परमार्थरूपमुख्य आत्मा। अस्मिन्पक्षे आत्मनः शारीरत्वविशेषणं तु शरीरे साक्षितयोपलभ्यमानत्वादुपपद्यते॥

एवं प्राणमयं निरूप्य मनोमयमाह—

तस्माद्वा एतस्मात्प्राणमयात् अन्योऽन्तर आत्मा मनोमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधता-मन्वयं पुरुषविधः। तस्य यजुरेव शिरः। ऋग्दक्षिणः पक्षः। सामोत्तरः पक्षः। आदेश आत्मा। अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥

इति तृतीयोऽनुवाकः॥ ३॥

तस्माद्वा ब्राह्मणोक्तात् वै स्मर्यमाणात् एतस्मात् मन्त्रोक्तात् प्राण-मयात् अन्यः व्यतिरिक्तः अन्तरः अभ्यन्तरः आत्मा आत्मत्वेन कल्पितः मनोमयः मनोऽन्तःकरणं तद्विकारः। तेन मनोमयेन एषः प्राणमयः पूर्णः व्याप्तः। सः प्रकृतः वै प्रसिद्धः एषः मनोमयः पुरुषविध एव शिर-आद्यवयवैः पुरुषाकार एव। तस्य प्राणमयस्य पुरुषविधतां पुरुषाकारताम् अनु पश्चात् अयं मनोमयः पुरुषविधः पुरुषाकारः। उक्तपुरुषाकारस्य पक्षावयवानाह—तस्येति। तस्य मनोमयात्मनः यजुरेव अनियताक्षर-पादावसानो मन्त्रविशेषराशिरूपयजुर्वेद एव शिरः प्रधानशिरस्त्वेन ध्येयः। ऋग्दक्षिणः पक्षः ऋग्वेदो दक्षिणपक्षत्वेन ध्येयः। सामोत्तरः पक्षः सामवेदो वामपक्षत्वेन ध्येयः। आदेशः विशेषानतिदिशतीत्या-देशो ब्राह्मणभागः, आत्मा आत्मत्वेन दक्षिणोत्तरपक्षयोर्मध्यमभागत्वेन ध्येयः। अथर्वाङ्गिरसः अथर्ववेदः पुच्छं प्रतिष्ठा पुच्छत्वेन प्रतिष्ठात्वेन च ध्येयः। न च यजुरादिवेदानां बाह्यशब्दराशौ रूढत्वात् कथमान्तर-मनोमयाङ्गत्वमिति वाच्यम्; यजुरादिशब्दानां स्वविषयकमनोवृत्तिपर-त्वाङ्गीकारेण मनोमयाङ्गत्वोपपत्तेः। एवं मनोवृत्तित्वे मन्त्राणां वृत्ति-रवावर्त्यत इति मानसो जप उपपद्यते। न हि केवला वर्णा एव यजुरादिशब्दैर्ग्राह्याः, किन्तु ताल्वादिस्थानेषु वाय्वाद्यभिघातानुकूलेन प्रयत्नेन जनितो यो ध्वनिविशेषस्तद्व्यङ्ग्या ये उदात्तादिस्वरयुक्ता वर्णाः ते च पदानि वाक्यानि च विषया यासां या वृत्तयोऽत्र यजुरादिशब्दै-रुच्यन्त इति भावः। यद्वा— श्रुतेरनतिशंकनीयत्वात् श्रौतविधिबलादेव

शिरस्त्वादिकल्पना । एवमग्रेऽपि शिरस्त्वादिकल्पना वाचनिकी यौक्तिकी च यथासम्भवं ग्राह्या । सर्वत्र युक्तेरसम्भवात् । तदपि, तत् तत्र ब्राह्मणोकार्थेऽपि एषः वक्ष्यमाणः श्लोकः मनोमयात्मप्रकाशको मन्त्रो भवति ॥

इति तृतीयोऽनुवाकः ।

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति ॥

यजुरादिवाग्रूपावयवोपेतात् मनोमयात् मनसा संकल्पाद्यात्मकेन सह वाचः यजुरादिरूपाः अप्राप्य अगत्वा निवर्तन्ते निवृत्ता भवन्ति स्वात्मनि वृत्तिविरोधात् । अतो वाङ्मनोविशिष्टमनोमयाद्वाचो मनसा सह निवर्तन्त इत्यर्थः । मनसो ब्रह्मज्ञानसाधनत्वात्तत्र ब्रह्मत्वमध्यारोप्य तदुपासनफलमाह—आनन्दमिति । ब्रह्मणः मनोमयस्य स्वरूपं यजुराद्यवयवोपेतं विद्वान् उपासीनः सौत्रं पदं प्राप्य आनन्दं तत्र भवं सुखविशेषमनुभवन् कदाचन कस्मिन्नपि काले गर्भवासादिदुःखान्न बिभेति भयं न प्राप्नोतीत्यध्याहारेण योजना । एतेन स्तुतिवाक्येन भयमात्रं निषिध्यते न तु भयहेतुः, मनोमयज्ञानेऽप्यविद्याया अनिवृत्तेः । ब्रह्मसाक्षात्कारे तु न बिभेति कुतश्चनेति भयहेतुमपि निषेत्स्यति, अद्वैतज्ञाने भयहेतोरभावात् । इति शब्दो मन्त्रसमाप्त्यर्थः ।

तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मान्मनोमयात् अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधतामन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥

इति चतुर्थोऽनुवाकः ॥ ४ ॥

पूर्वस्य पूर्वोक्तस्य तस्य प्राणमयस्य एष एव साक्षिप्रत्यक्ष एव शारीरः शरीरे प्राणमये भवः शारीरः । एषः क इत्यत आह—य इति । यः मनोमय इत्यर्थः । एतेन प्राणमयादात्मत्वदृष्टिमपकृष्य मनोमये परमानन्दलाभहेतौ तां कुर्यादिति सूचितम् । तस्यैष एवेत्यादिवाक्यस्य पूर्वोक्ततृतीयानुवाके पक्षान्तरमप्यनुसन्धेयम् । तस्माद्वै ब्राह्मणोक्तात् वै स्मरणात् एतस्मात् मन्त्रवर्णोक्तात् मनोमयात्संकल्पवृत्तिकात् मनोमयरूपादात्मनः

अन्यः व्यतिरिक्तः अन्तरः अभ्यन्तरः आत्मा आत्मत्वेन कल्पितः विज्ञानमयः निश्चयवृत्तिकः। तेन विज्ञानमयेन एषः मनोमयः पूर्णः व्याप्तः। सः प्रकृतः वै प्रसिद्धः एषः विज्ञानमयः पुरुषविधः एव शिरआद्यवयवैः पुरुषाकार एव। तस्य विज्ञानमयस्य पुरुषविधतां पुरुषाकारताम् अनु पश्चात् अयं विज्ञानमयः पुरुषविधः पुरुषाकारः। उक्तपुरुषाकारस्य पञ्चावयवानाह—तस्येति। तस्य विज्ञानमयस्य श्रद्धैव आस्तिक्यबुद्धिरूपा सर्वकर्ममूलभूता एव शिरः प्रधानशिरस्त्वेन ध्येया। ऋतं शास्त्रानुसारेण कर्तव्यतया निश्चितं दक्षिणः पक्षः विज्ञानमयस्य दक्षिणपक्षत्वेन ध्येयम्। सत्यं शास्त्रतो निश्चितस्यैवानुसन्धानम् उत्तरः पक्षः वामपक्षत्वेन ध्येयम्। योगः चित्तवृत्तिसमाधानम् आत्मा देहमध्यभागत्वेन ध्येयः। मह इति महत्तत्त्वं प्रथमजं 'महद्यक्षं प्रथमजम्' इति श्रुत्यन्तरात्, हिरण्यगर्भस्य बुद्धिः समष्टिरूपेति यावत् पुच्छं प्रतिष्ठा पुच्छत्वेन प्रतिष्ठात्वेन च ध्येयमित्यर्थः। तदपि यथा अन्नमयादीनां ब्राह्मणोक्तानां प्रकाशकाः श्लोकाः एवं विज्ञानमयेऽपि एषः वक्ष्यमाणः श्लोकः मन्त्रः प्रकाशको भवति॥

इति चतुर्थोऽनुवाकः

विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपि च। विज्ञानं देवाः सर्वे। ब्रह्म ज्येष्ठमुपासते। वज्ञानं ब्रह्म चेद्वेद। तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वा। सर्वान्कामान् समश्नुत इति।

विज्ञानं विज्ञानाख्या बुद्धिः यज्ञं वैदिकं कर्मजातं तनुते श्रद्धादिपूर्वकं विस्तारयति। कर्माण्यपि च लौकिकान्यपि च कर्माणि तनुते तनोति। सर्वे निखिलाः देवा इन्द्रादयः विज्ञानं विज्ञानमयमात्मानं ज्येष्ठं प्रथमजं ब्रह्मोपासते ब्रह्मरूपत्वेन ध्यायन्ति। एतदुपासनफलप्रदर्शकं द्वितीयं मन्त्रमाह—विज्ञानमिति। चेत् यदि विज्ञानं विज्ञानमयमात्मानं ब्रह्म वेद ब्रह्मस्वरूपत्वेन जानाति चेत् यदि तस्मात् ब्रह्मज्ञानात् न प्रमाद्यति विज्ञानमयातिरिक्तेष्वन्नमयादिकोशेषु ब्रह्मबुद्धिं न करोति तदा शरीरे जीवद्दशायामेव पाप्मनः पापानि हित्वा त्यक्त्वा केवलविज्ञानमय ब्रह्मण्यात्मत्वं भावय स्त इति यावत्। देहे मनुष्यत्वब्राह्मणत्वादिधर्मवति मनुष्योऽहं ब्राह्मणोऽहमित्याद्यभिमानं निमित्तीकृत्य प्रतिषिद्धकर्माचरणैः पाप्मानो भवन्ति। तेषां च विज्ञानमये ब्रह्मण्यात्माभिमानात् पापनिमित्तस्य शरीरे आत्मत्वाभिमानस्यापाये सत्यपायो भवति यथा छत्रापाये छायाऽपायस्तद्वदिति भावः। विज्ञानमये ब्रह्मस्वरूपापन्ने

फलमाह—सर्वानिति । सर्वान् कामान् देहपातानन्तरं विज्ञानमयब्रह्म-भावेनैव स्थित्वा तल्लोकस्थान्निखिलान् भोगान् समश्नुते अनुभवतीत्यर्थः । इतिशब्दो मन्त्रसमाप्त्यर्थः ॥

तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधतामन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥

इति पञ्चमोऽनुवाकः ॥ ५ ॥

यः उक्तलक्षणो विज्ञानमयः एष एव साक्षिप्रत्यक्ष एव पूर्वस्य पूर्वोक्तस्य मनोमयस्य शारीरः, शरीरे मनोमये भवः शारीरः आत्मा आत्मत्वेनाभिमत इत्यर्थः । मनोमयादात्मत्वदृष्टिमपकृष्य विज्ञानमये आत्मत्वबुद्धिं कुर्यादिति भावः । आनन्दमयमात्मानमाह—तस्मादिति । तस्माद्वा ब्रह्मणोक्तात् वै स्मर्यमाणात् एतस्मात् मन्त्रवर्णोक्तात् विज्ञानमयात् कर्तृरूपात् अन्यो व्यतिरिक्तः अन्तरः अभ्यन्तरश्चास्ति आत्मा आनन्दमयः शुभकर्मफलानुभवकाले धीवृत्तिरन्तर्मुखा सती आत्मानन्दप्रतिबिम्बिता भवति, सैव कर्मफलभोगोपरमे सति निद्रारूपेण लीना भवति, सा वृत्तिरानन्दमय आत्मा भोक्तृरूपो भवतीति शेषः । तेन आनन्दमयेन एष विज्ञानमयः पूर्णः व्याप्तः । सः प्रकृतः वै प्रसिद्धः एषः आनन्दमयः पुरुषविध एव शिरआद्यवयवैः पुरुषाकार एव । तस्य आनन्दमयस्य पुरुषविधतां पुरुषाकारताम् अनु पश्चात् अयम् आनन्दमयः पुरुषविधः पुरुषाकारः । आनन्दमयस्य पञ्चावयवानाह—तस्येति । तस्य आनन्दमयस्यात्मनः प्रियमेव इष्टार्थदर्शनजन्यसुखमेव शिरः प्रधानशिरस्त्वेन ध्येयम् । मोदः इष्टार्थलाभजन्यसुखविशेषः दक्षिणः पक्षः दक्षिणपक्षत्वेन ध्येयः । प्रमोदः इष्टार्थस्य भोगजन्यसुखविशेषः उत्तरः पक्षः वामपक्षत्वेन ध्येयः । आनन्दः प्रियाद्यवयवेषु विशेषेषु सामान्यरूपेणानुगतं सुखम् आत्मा आनन्दमयस्य मध्यभागत्वेन ध्येयम् । ब्रह्म यत्प्रकृतं सत्यज्ञानानन्तलक्षणं यस्य च प्रतिपत्त्यर्थमन्नमयादिकोशपञ्चकमुपन्यस्तं तत्सर्वान्तरभूतं परं ब्रह्म पुच्छं प्रतिष्ठा आनन्दमयस्य पुच्छत्वेन प्रतिष्ठात्वेन ध्येयम् । अविद्यापरिकल्पितद्वैतस्यावसानभूतमद्वैतं

ब्रह्म प्रतिष्ठेत्यर्थः। तदपि तदेतस्मिन्नप्युक्तब्राह्मणार्थे आनन्दमयात्मनि एषः वक्ष्यमाणः श्लोको मन्त्रो भवति ॥

इति पञ्चमोऽनुवाकः।

असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। अथातोऽनुप्रश्नाः। उताविद्वानमुं लोकं प्रेत्य। कश्चन गच्छति ३ आहो विद्वानमुं लोकं प्रेत्य कश्चित् समश्नुता ३ उ।

असत् सर्वव्यवहारातीतत्वादविद्यमानं ब्रह्म इति एवं चेत् यदि यो वेद विजानाति सः असद्रूपत्वेन ब्रह्मवेदिता असन्नेव पुरुषार्थशून्यत्वादसत्तुल्य एव भवति स्यात्। यद्वा योऽश्रद्धया असद् ब्रह्म नास्ति ब्रह्म इति एवं चेत् यदि वेद विजानाति क सः? नास्तिकः असन्नेव असाधुरेव भवति। अस्ति ब्रह्म सर्वद्वैताधिष्ठानं सर्वजगत्कर्तृ सर्वलयाधारभूतं ब्रह्मास्ति विद्यते इति एवं चेत् यदि यो वेद ततः तस्मात् अस्तित्वेन ब्रह्मवेदनात् एनं ब्रह्मविदं सन्तं विद्यमानं ब्रह्मस्वरूपेण परमार्थसदात्मभावापन्नं विदुः विजानन्ति, ब्रह्मविद इति शेषः। तस्मादस्तीत्येव ब्रह्म वेदितव्यमिति वाक्यार्थः। इति शब्दो मन्त्रसमाप्त्यर्थः। यः उक्तलक्षण आनन्दमयः एष एव आनन्दमय एव पूर्वस्य पूर्वोक्तस्य तस्य विज्ञानमयस्य शारीरः शरीरे विज्ञानमये भवः शारीरः आत्मा आत्मत्वेन कल्पित इत्यन्वयः। एवं श्रवणविधयाऽऽत्मतत्त्वं प्रदर्श्य मननविधया तत्प्रदर्शनाय शिष्यस्य प्रश्नानाह—अथेति। अथानन्तरम् अतः ब्रह्मण आकाशादिकारणत्वेन सर्वं प्रति सामान्यात् अनु ब्रह्मविदाप्नोति परमिति विद्यया प्राप्यं ब्रह्मेत्याद्याचार्योपदेशात् पश्चात् शिष्यस्य प्रश्नाः सन्तीति शेषः। तानेव दर्शयति—उतेति। उत अपि अविद्वान् अब्रह्मविदपि प्रेत्य मृत्वा अमुं बुद्ध्यादिसाक्षितया प्रत्यक्षसिद्धं लोकं स्वप्रकाशात्मकब्रह्मस्वरूपं कश्चन किं गच्छति प्राप्नोति किं वा न प्राप्नोति द्वौ प्रश्नौ द्रष्टव्यौ। यद्यविद्वान् सामान्यकारणमपि ब्रह्म न गच्छति तर्हि विदुषोऽपि ब्रह्मागमनमित्याशङ्क्यते—आहो इति। समश्नुता उ इत्यत्र समश्नुते+उ इति स्थिते अयादेशे यलोपे च कृते अकारस्य प्लुतिः समश्नुता ३ उ इति। तथा च उतेति पूर्वोक्तोतशब्दात् तकारमाकृष्य उशब्देन वक्ष्यमाणेन संयोज्य उतेति सिध्दं कृत्वाऽऽहो इत्यस्मात्पूर्वं

संयोज्यं उताहो इति प्रश्नार्थं विद्वान् कश्चित् ब्रह्मविदपि इतः प्रेत्य मृत्वा अमुं लोकं व्याख्यातं समश्नुते प्राप्नोति उताहो किं वा अविद्वानिव न समश्नुते इति द्वौ प्रश्नौ। अनुप्रश्ना इति बहुवचनसामर्थ्यात् प्रश्नचतुष्टयं बोध्यम्। यद्वा—द्वावेव प्रश्नौ विद्वदविद्वद्विषयौ, बहुवचनसामर्थ्यं तु प्रकारान्तरेणाप्युपपद्यते। तथा हि—असद् ब्रह्मेति वेद चेदस्ति ब्रह्मेति चेद्वेदेति श्रवणात् पाक्षिकसत्त्वासत्त्वसंशयात् किं तद् ब्रह्मास्ति नास्ति वेति प्रश्नः कल्प्यते। ब्रह्मणोऽपक्षपातित्वादविद्वान् गच्छति न गच्छतीति द्वितीयः प्रश्नः। किं विद्वान्समश्नुते न समश्नुते इति तृतीयः प्रश्नः॥

एतेषां प्रतिवचनार्थमुत्तरो ग्रन्थ आरभ्यते। तत्र नास्तित्वशङ्कानिरासायाह—

सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इद ँ सर्वमसृजत। यदिदं किंच। तत्सृष्ट्वा। तदेवानुप्राविशत्॥

यद्यपि विशेषतो नोपलभ्यते तथापि विमतं जगत् सदुपादानकं कार्यत्वाद् घटादिवदित्यादिना तदस्तित्वमनुमीयते। सत्यं ज्ञानमनन्तं ब्रह्मेति ऋचोक्तं सत्यत्वं सत्त्वोक्त्यैव सिद्धं भवति, सत्सत्यत्वशब्दयोः पर्यायत्वात्। न ह्यसतः सज्जन्म सम्भवति, 'कथमसतः सज्जायेते'ति श्रुत्यन्तरात्। सः परमात्मा आकाशादिकारणत्वेन प्रकृतः अकामयत कामितवान् कथं बहु प्रभूतं स्याम् भवेयम्। कथमेकस्य बहुभवनमित्यत आह—प्रजायेयेति। उत्पद्येयेत्यर्थः। न हि पितुरर्थान्तरभूतानां पुत्रादीनां बहुभवनवद् ब्रह्मणोऽर्थान्तरभूतानामाकाशादिविकाराणां बहुभवनमत्र विवक्षितम्, आकाशादिविकारानुप्रवेशेनैव बहुभवनस्य विवक्षितत्वात्। न च पूर्वसिद्धस्य ब्रह्मणः स्वरूपत उत्पत्तिरयुक्तेति वाच्यम्; आकाशाद्यर्थान्तरानुप्रवेशेनैव उत्पत्यङ्गीकारात्। इति एवंकामः सन् स आत्मा तपोऽतप्यत सृज्यमानजगद्रचनादिविषयाम् आलोचनामकरोदित्यर्थः। स आत्मा तपस्तप्त्वा आलोचनं कृत्वा इदं सर्वं प्राणिकर्मादिनिमित्तानुरूपं देशतः कालतो नाम्ना रूपेण च यथासम्भवं सर्वप्राणिभिर्देवत्वमनुष्यत्वादिसर्वावस्थैरनुभूयमानं निखिलं जगत् असृजत सृष्टवान्। यदिदं किञ्च यत्किं चेदमविशिष्टम्। तत् जगत् सृष्ट्वा उत्पाद्य तदेव सृष्टं जगदेव अनुप्राविशत् अनुप्रवेशं कृतवान्। अत्र गुहात्वेन विज्ञानमयकोशत्वेनोक्ता दीपादिवज्जडत्वेऽपि स्वभाववैचित्र्यात् संयुक्ता-

र्थोपलम्भहेतुभूता बुद्धिरेवेह तच्छब्देन विवक्षिता । तस्यामेव स्रष्टुर्ब्रह्मणः प्रत्यग्रूपेणोपलम्भादनुप्रवेश उपचर्यते । ब्रह्मप्रत्यगात्मनो-र्वास्तवैक्यमादाय सृष्ट्यनुप्रवेशयोरेककर्तृकत्वमिति भावः ॥

तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च । सत्यमभवत् । यदिदं किञ्च । तत्सत्यमित्या-चक्षते । तदप्येष श्लोको भवति ॥

इति षष्ठोऽनुवाकः ॥ ६ ॥

तत् कार्यम् अनुप्रविश्य सृष्टं सच्च पृथिव्यप्तेजोभूतत्रयं मूर्तं चक्षुरादिगोचरं त्यच्च वाय्वाकाशात्मकभूतद्वयममूर्तं परोक्षम् अभवत् पञ्चीकृतपञ्चमहाभूतो बभूव । निरुक्तं नामरूपादिभिर्निरूपयितुं शक्य-मभिव्यक्तं भूतभौतिकम् । अनिरुक्तं नामरूपादिभिर्निरूपयितुमशक्य-मनभिव्यक्तम् । निलयनम् आधारतया प्रसिद्धं गृहप्रासादादि । अनिलयनं निराश्रयतया प्रसिद्धं आकाशादिकम् । विज्ञानं चेतनं मनुष्यादिकम् । अविज्ञानम् अचेतनं पाषाणादिकम् । सत्यं व्यवहारविषयं नद्युदका-दिकम्, अनृतं प्रातिभासिकं मरीच्युदकादिकम् । सत्यं परमार्थसत्यस्वरूपं ब्रह्म अभवत् सत्यं ब्रह्मैव सदादिरूपेण बभूवेत्यर्थः । सदादिकमेव पुनरविशेषेणाह—यदिदं किं चेति । यत्किं चेदमविशेषितं वस्तुजातं तत् उक्तानुक्तलक्षणं सर्वं सत्यं परमार्थसत्यम् इति एवं आचक्षते कथयन्ति ब्रह्मविद इति शेषः । एवमुक्तात्मप्रवेशेन अस्ति-नास्तीति प्रश्नस्य प्रति-वचनविषये एतदुक्तम्—आत्माऽकामयत बहु स्यामिति । स यथाकामं चाकाशादिकार्यं सच्च त्यदादिलक्षणं सृष्ट्वा तदनुप्रविश्य पश्यन् शृण्वन् मन्वानो विजानंश्च बहुभवँस्तस्मात्तदेवेदमाकाशादिकारण-कार्यस्थं परमे व्योमन् हृदयगुहायां निहितं तत्प्रत्ययावभासविशेषेणोप-लभ्यमानमस्तीत्येवं विजानीयात् असतः प्रवेशायोगादित्यवबोद्धव्यम् । तदपि तदेतस्मिन्नपि ब्राह्मणोक्तार्थे एषः वक्ष्यमाणः श्लोको मन्त्रो भवति ।

इति षष्ठोऽनुवाकः ।

असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मान ँ स्वयमकुरुत । तस्मात्तत्सुकृतमुच्यत इति ।

वै प्रसिद्धम् इदं दृष्टिगोचरं जगत् अग्रे उत्पत्तेः प्राक् असत् अव्यक्तं ब्रह्म आसीत् अभवत् । न त्वसच्छब्देन शून्यमुच्यते, 'कथमसतः सज्जायते' इति श्रुतिवाक्येन निषेधात् । ततः अव्यक्तात् ब्रह्मणः व प्रसिद्धं

सत् प्रविभक्तनामरूपविशेषं जगत् अजायत उत्पन्नम्। ननु तत्किं प्रविभक्तकार्यं पितुरिव पुत्रः ? नेत्याह—तदिति। तत् असच्छब्दवाच्यं ब्रह्म स्वयम् अन्यानधिष्ठितं सत् आत्मानमकुरुत आत्मानमेव जगद्रूपेण कृतवदित्यर्थः। यस्मादेवं तस्मात् स्वयमेवात्मनो जगदाकारकरणात् तत्सुकृतं तद्ब्रह्म सुष्ठु कर्तृ उच्यते श्रुत्या इति शेषः। इति शब्दो मन्त्रसमाप्त्यर्थः। तस्मादस्ति ब्रह्मेति सिद्धम्॥

इतश्चास्ति ब्रह्मेत्याह—

यद्वै तत्सुकृतम्। रसो वै सः। रसꣳ ह्येवायं लब्ध्वाऽऽनन्दीभवति। को ह्येवान्यात् कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयंगतो भवति॥

यत् वै यदेव तत्प्रकृतं ब्रह्म सुकृतं सुष्ठु कर्तृ। सः वै स एव ब्रह्म रसः मधुरादिरसवत् सुखहेतुत्वाद् ब्रह्मानन्दो गौण्या वृत्त्या रसपदेनोच्यते। स इति विधेयापेक्षया पुल्लिङ्गनिर्देशः। सुखहेतुत्वमेवाह—रसमिति। हि यस्मात् अयं लोकः रसं लब्ध्वा सत्त्वप्रधानान्तःकरणेऽभिव्यक्तं ब्रह्मानदं प्राप्य आनन्दीभवति सुखीभवति ब्रह्मानन्देन निरुपाधिकेन विद्वांसः सानन्दा भवन्ति, सोपाधिकेन त्वितरे जनाः। तथा चानन्दकरत्वादानन्दरूपं ब्रह्मास्तीति भावः। प्राणादिक्रियाहेतुत्वादप्यस्त्यानन्दात्मा ब्रह्मेत्याह—क इति। यदि एषः सर्वसाक्षिभूतः आकाशः हार्दाकाशस्थबुद्धिगुहायां निहितः आनन्दः आनन्दरूप आत्मा न स्यात् जीवनानुकूलप्राणादिव्यापारप्रयोजको न भवेत् हि तर्हि क एवान्यात् अपानव्यापारं निःश्वासं को नाम कुर्यात्; कः प्राण्यात् प्राणव्यापारमुच्छ्वासं कः कुर्यात्, न कोऽपीत्यर्थः। प्राणापानोपलक्षितकार्यकरणानां प्रवृत्तिर्यदधीना सः कार्यकरणप्रवर्तकश्चेतनोऽस्तीति भावः। तत्कृत एव लोकस्यानन्दो भवतीत्याह—एष इति। हि यस्मात् एष एव प्रकृत आनन्दात्मैव आनन्दयाति आनन्दयति लोकं स्वधर्मानुरूपं सुखयतीत्यर्थः। विद्वदविदुषोर्भयाभयहेतुत्वादप्यस्ति ब्रह्म। तत्राभयहेतुत्वं विदुषां दर्शयति—यदा हीति। हि यस्मात् एषः साधकः यदा एव यस्यां विद्यावस्थायामेव एतस्मिन् ब्रह्मणि अभयं यथा स्यात्तथा

प्रतिष्ठाम् आत्मभावं विन्दते लभते, अथ तदा सः ब्रह्मवित्तमः सन् अभयंगतो भवति ब्रह्मानन्दं प्राप्नोति, भयहेतोरविद्याकृतनानात्वदर्शनस्याभावादिति सम्बन्धः। यद्वा अभयम् अभयामिति लिङ्गव्यत्यासेन प्रतिष्ठाविशेषणम् । कीदृशे ब्रह्मणि अदृश्ये दृश्यत्ववर्जिते, अनात्म्ये आत्मपदेन आत्मीयं शरीरमुच्यते तद्रहिते, अनिरुक्ते इदंतया निर्वचनीयभिन्ने, अनिलयने निलयनमाश्रयस्तद्वर्जिते सर्वकार्यधर्मविलक्षणे ब्रह्मणीति वाक्यार्थः ॥

एवमैक्यदर्शनं विदुषोऽभयकारणमुक्त्वा भेददर्शनमविदुषो भयकारणमाह—

यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति ।
तत्त्वेव भयं विदुषो मन्वानस्य । तदप्येष श्लोको भवति ॥

इति सप्तमोऽनुवाकः ॥ ७ ॥

यदैव यस्यामविद्याऽवस्थायामेव हि यस्मात् एषः अनात्मदर्शी एतस्मिन् ब्रह्मणि उत् अपि अरम् अल्पमपि अन्तरं भेदं कुरुते अन्योऽसावन्योऽहमस्मीति पश्यति । अथ तस्माद्भेददर्शनात् तस्य भेददर्शिनः भयं भीतिर्भवति 'द्वितीयाद्वै भयं भवती'ति श्रुतेः । न केवलमविदुष एव ब्रह्म भयरूपम्, किन्तु विदुषोऽपीत्याह—तदिति । तुशब्दोऽप्यर्थः भिन्नस्थानकः । एवकारोऽपि भिन्नक्रमः । तथा च तद्ब्रह्म विदुषोऽपि ज्ञानिनोऽपि मन्वानस्य ज्ञानापरिपाकवशात् उपास्योपासकभावं पश्यतो ज्ञानावस्थातः प्रच्युतस्य भयमेव भवतीति योजना । तदपि तदेतस्मिन्नपि ब्राह्मणोक्तार्थे एषः वक्ष्यमाणः श्लोको मन्त्रो भवति ।

इति सप्तमोऽनुवाकः ।

भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च ।
मृत्युर्धावति पञ्चम इति । सैषाऽऽनन्दस्य मीमाꣳसा भवति ॥

अस्मात् प्रकृताद् ब्रह्मणः भीषा भयेन वातः वायुः पवते गच्छति । भीषा ब्रह्मणो भयेन सूर्य उदेति प्राचीदिशात उद्गच्छति । अस्माद्ब्रह्मणः भीषा भयेन अग्निः पावकः ज्वलतीति शेषः । अस्माद्भीषा इन्द्रः वर्षादिस्वकार्यं करोतीति शेषः । अस्माद् ब्रह्मणो भीषा मृत्युः सर्वप्राणहर्ता पञ्चमः पञ्चसंख्यापूरकः धावति शीघ्रं गच्छति, क्षीणायुषं प्रतीति शेषः । इतिशब्दो मन्त्रसमाप्त्यर्थः । एवं यद्वा वातादीनामपि भयकारणं ब्रह्म, तदन्येषां किं वक्तव्यमित्याशयेन श्रुतौ वातादयः पूज्यतमा उदाहृता इति भावः । ननु वातादिभयकारणब्रह्मणः 'यदेष आकाश आनन्दो

न स्यादिति वाक्योक्तं यदानन्दरूपत्वं तदनुपपन्नम्, आनन्दस्य बाह्याभ्यन्तरसाधनसम्पत्तिजन्यत्वनियमाद् इत्याशंक्य जन्यानन्दः क्वचित् काष्ठां प्राप्तः सातिशयत्वात् परिमाणवदित्यनुमानात् आनन्दतारतम्यावधित्वेन निरतिशयस्वाभाविकानन्दरूपब्रह्मानन्दनिश्चयार्थं विचारमाह—सैषेति। आनन्दस्य ब्रह्मानन्दस्य सा एषा वक्ष्यमाणलक्षणा मीमांसा किमयमानन्दो विषयविषयिसम्बन्धजनितो लौकिकानन्दवदस्ति आहोस्वित् स्वाभाविक इत्येवंरूपा विचारणा भवति। तत्र लौकिकानन्दस्य बाह्याध्यात्मिकसाधनसम्पत्तिजन्यस्योत्तरोत्कर्षो निर्दिश्यते ब्रह्मानन्दानुमानार्थम्। निर्दिष्टे हि लौकिकानन्दे तदवधित्वेन निरतिशयो ब्रह्मानन्दोऽनुमीयते इत्येवमर्थमयमारम्भः॥

तत्र मानुषानन्दमर्यादामाह—

युवा स्यात्साधुयुवाऽध्यायकः। आशिष्ठो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः॥ १॥

युवा स्यात् यौवनसम्पन्नो भवेत्। साधुयुवा, साधु यथोक्तकारी, साधुश्चासौ युवा चेति साधुयुवा। युवाऽप्यसाधुर्भवति, साधुरप्ययुवा। अतो यूनो विशेषणं साधुयुवा स्यात्। अध्यायकः अधीतवेदवेदाङ्गः। आशिष्ठः आशास्तृतमः आशुतमो वा क्षिप्रकारिषु मध्ये स्वयमतिशयत्वात्। यद्वा—आसमन्तात् शिष्टः मातृपित्राचार्यैः क्रमेण शिक्षितः। द्रढिष्ठः अतिशयेन दृढः। बलिष्ठः अतिशयेन बलवान्। एवमाभ्यन्तरसाधनसम्पत्तिमुक्त्वा बाह्यसम्पत्तिमाह—तस्येति। तस्य उक्तलक्षणस्य पुरुषस्य इयं प्रत्यक्षविषया सर्वा पृथिवी सप्तसमुद्रान्ता सुमेरुमध्यका भूमिः वित्तस्य वित्तेन धनेन पूर्णा स्यात् वशे भवेत्। सः तस्य चित्तप्रसादः एकः सर्वमानुषानन्दसमष्टिरूपः मानुषः मनुष्यसम्बन्धी आनन्दो भवतीत्यर्थः॥ १॥

ते ये शतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य॥ २॥

ते ये उक्तरूपाः शतं शतगुणिताः मानुषाः मनुष्यसम्बन्धिनः आनन्दाः स एकः मानुषानन्दशतं मिलित्वा एकत्वसंख्यामापन्नः मनुष्य-

गन्धर्वाणां मनुष्याः सन्तो ये कर्मोपासनाबलाद् गन्धर्वत्वं प्राप्तास्ते मनुष्यगन्धर्वाः अन्तर्धानादिशक्तिसम्पन्ना द्वीपान्तरवासिनः। उक्तं च वार्तिके—'सुगन्धिनः कामरूपा अन्तर्धानादिशक्तयः। नृत्यगीतादि-कुशला गन्धर्वाः स्युर्नृलौकिकाः' इति। तेषां मनुष्यगन्धर्वाणामानन्दः सुखविशेषो भवति श्रोत्रियस्य छन्दोऽध्यायित्वे सत्याचारनिष्ठस्य शुद्ध-चेतसो वा। अकामहतस्य उक्तमानुषानन्दविषयककामनारहितस्य। चकारादवृजिनस्यापि ग्रहणं 'यश्च श्रोत्रियोऽवृजिनोऽकामहत' इति श्रुत्य-न्तरात्। उक्तमनुष्यगन्धर्वानन्दो भवतीति सम्बन्धः। अकामहतस्येत्यनेन केवलमानुषानन्दे कामरहितत्वं बोध्यम्, न तु मनुष्यगन्धर्वानन्दे। तथा चोक्तं वार्तिके—'मर्त्याद् भोगाद्विरक्तस्य ह्युत्तराह्लादकामिनः' इति। एव-मुत्तरत्रापि पूर्वपूर्वानन्देषु कामानभिभूतत्वम् उत्तरोत्तरानन्देषु कामना-वत्त्वं चोहनीयम्। अत एव प्रथमपर्यायेऽकामहतस्येति नोक्तम्। यदि तत्राप्यकामहतो गृह्येत तदा तस्यैव सार्वभौमानन्दतुल्य आनन्दः स्यादिति व्याघातो भवेत्। मानुषानन्दे निःस्पृहो मानुषानन्दभोगभागी चेति। ततो मनुष्यगन्धर्वानन्देन तुल्यमानन्दं तस्य दर्शयितुं प्रथम-पर्याये तदग्रहणमिति भावः। न च मनुष्यगन्धर्वस्य नृत्तगीतादिसामग्री-विशेषजन्यो हर्षविशेषोऽत्रस्थश्रोत्रियस्य कथं भवेदिति वाच्यम्; नृत्यादिजन्यहर्षविशेषस्य क्षणिकस्यासत्त्वेऽपि मनुष्यगन्धर्वसम्बन्धि-मुख्यानन्दस्य सत्त्वात्। न हि नृत्तादिजन्यहर्षमात्रमेव मनुष्यगन्धर्वा-नन्दत्वेन गृह्यते, किन्तु मनुष्यगन्धर्वस्य स्वोचितविषयप्राप्त्या तदिच्छा-निवृत्तौ नृत्तगीतादिजनितहर्षविशेषे च शान्ते सति या तृप्तिरनुगच्छति स वै मुख्यानन्दः। तेन मनुष्यगन्धर्वाणां मुख्यानन्देन सदृश आनन्दः श्रोत्रियस्य भवतीत्यर्थः। तथा च स्मर्यते—'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्' इति। न च श्रोत्रियत्वावृजिनत्वाकामहतत्वानामानन्दसाधनानां तुल्यरूपत्वेऽपि कस्य-चिच्छ्रोत्रियस्य मनुष्यगन्धर्वानन्देन तुल्य आनन्दः, कस्यचित्तु देव-गन्धर्वानन्देनेत्यादिरूपो भेदः किं निबन्धन इति वाच्यम्; सर्वपर्यायेषु श्रोत्रियत्वावृजिनत्वयोस्तुल्यत्वाङ्गीकारेण अकामहतत्वस्य भेदादानन्द-भेदोपपत्तेः। अयमाशयः—मनुष्यगन्धर्वपर्यायस्थश्रोत्रियस्य मानुषा-नन्दमात्रे कामाभावो न तु तदतिरिक्तानन्देषु। तथा देवगन्धर्वपर्यायस्थ-श्रोत्रियस्य मानुषानन्दे मनुष्यगन्धर्वानन्दे च कामाभावो न तु देवगन्ध-र्वादीनामानन्देषु। एवं चाकामहतत्वभेदेनानन्दभेदे सति यावद्यावद-कामहतत्वोत्कर्षस्तावन् श्रोत्रियस्यानन्दोत्कर्षो भवति, सर्वथा

कामोपशमे सति सर्वोत्कृष्टपरमानन्दप्राप्तिर्भवतीति निरतिशयस्याकामहतत्वस्य परमानन्दप्राप्तिसाधनत्वविधानार्थमकामहतस्य ग्रहणमित्यवगम्यत इति ॥ २ ॥

ते ये शतं मनुष्यगन्धर्वाणामानन्दाः स एको देवगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य ॥ ३ ॥

ते ये उक्तरूपाः शतं शतसंख्याकाः मनुष्यगन्धर्वाणां उक्तलक्षणानामानन्दाः स एकः मनुष्यगन्धर्वानन्दशतं मिलित्वा एकत्वसंख्यामापन्नः देवगन्धर्वाणां कल्पादावेव देवलोके जाता गायका देवगन्धर्वाः तेषामानन्दो भवति । श्रोत्रियस्य पूर्वोक्तलक्षणस्य अकामहतस्य मानुषानन्दे मनुष्यगन्धर्वानन्दे च कामनारहितस्य देवगन्धर्वानन्दे कामनावतश्च । चकारादवृजिनस्य देवगन्धर्वानन्दो भवतीति पूर्वेण सम्बन्धः ॥ ३ ॥

ते ये शतं देवगन्धर्वाणामानन्दाः स एकः पितॄणां चिरलोकलोकानामानन्दः श्रोत्रियस्य चाकामहतस्य ॥ ४ ॥

ते ये शतमित्यादि पूर्ववद् व्याख्येयम् । पितॄणाम् अग्निष्वात्तादीनां चिरलोकलोकानां चिरकालस्थायिलोकान् लोकयन्त्यनुभवन्तीति चिरलोकलोकास्तेषामानन्दः । श्रोत्रियस्येत्यादि पूर्ववत् ॥ ४ ॥

ते ये शतं पितॄणां चिरलोकलोकानामानन्दः स एक आजानजानां देवानामानन्दः श्रोत्रियस्य चाकामहतस्य ॥ ५ ॥

ते ये शतमित्यादि पूर्ववत् । आजानजानाम् आजानो देवलोकस्तत्र स्मार्तकर्मानुष्ठानेन जातानां देवानां देवयोनिगतानामानन्दो भवति । श्रोत्रियस्येत्यादि पूर्ववत् ॥ ५ ॥

ते ये शतमाजानजानां देवानामानन्दाः स एकः कर्मदेवानामानन्दः ये कर्मणा देवानपियन्ति श्रोत्रियस्य चाकामहतस्य ॥ ६ ॥

ते ये शतमाजानजानामित्यादि पूर्ववत् । कर्मदेवानां श्रौतकर्मणा देवभावं गतानाम् । कर्मदेवत्वं स्वयमेव श्रुतिराह—ये कर्मणेति । ये पुरुषाः कर्मणा वैदिकेनाग्निहोत्रादिना । देवानिति । त्रयस्त्रिंशत्, अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रः प्रजापतिश्चेति तान् इन्द्रादिदेवाधिष्ठितान् लोकान् अपियन्ति प्राप्नुवन्ति तेषामानन्दो भवति । श्रोत्रियस्येत्यादि पूर्ववत् ॥ ६ ॥

ते ये शतं कर्मदेवानामानन्दाः स एको देवानामानन्दः श्रोत्रियस्य चाकामहतस्य ॥ ७ ॥

ते ये शतं कर्मदेवानामित्यादि पूर्ववद् व्याख्येयम्। स एको देवानां जातितो देवानामानन्दः ॥ ७ ॥

ते ये शतं देवानामानन्दाः स एक इन्द्रस्यानन्दः श्रोत्रियस्य चाकामहतस्य ॥ ८ ॥

ते ये शतं देवानामिति व्याख्यातम्। इन्द्रस्य देवराजस्यानन्दः ॥८॥

ते ये शतमिन्द्रस्यानन्दाः स एको बृहस्पतेरानन्दः श्रोत्रियस्य चाकामहतस्य ॥ ९ ॥

ते ये शतमिन्द्रस्येति व्याख्यातम्। बृहस्पतेः देवगुरोः ॥ ९ ॥

ते ये शतं बृहस्पतेरानन्दाः स एकः प्रजापतेरानन्दः श्रोत्रियस्य चाकामहतस्य ॥ १० ॥

ते ये शतं बृहस्पतेरित्यादिप्रसिद्धः प्रजापतेः विराजः त्रैलोक्य-शरीरिणः ॥ १० ॥

ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य ॥ ११ ॥

ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मणः हिरण्यगर्भस्य समष्टि-व्यष्टिरूपस्य संसारमण्डलव्यापी यत्रैते आनन्दभेदा एकतां गच्छन्ति तस्य एक आनन्दः श्रोत्रियस्यावृजिनस्य अकामहतस्य च सर्वतः प्रत्यक्ष-मुपलभ्यते । तस्मादेतानि त्रीण्यानन्दसाधनानीत्येवावगम्यते । एव-मुक्तः सार्वभौमादिहिरण्यगर्भान्तानन्दोऽपि यस्यानन्दस्यैकदेशो दर्शितः 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुत्यन्तरात् मात्रापदेनैकदेश उच्यत इत्यर्थः। यत्रानिरतिशयानन्द अकामहतत्वादि-विशेषणविशिष्टत्वेन ब्रह्मवित्प्रत्यक्षा एकतां गताः तत्राकामहतत्वाद्यभि-धानाद्भेदसिद्धिं प्राप्ताः। अत एव स परमानन्दो निरतिशयो नित्य इति मीमांसया निर्णीतं भवतीति भावः ॥ ११ ॥

उक्तयोराध्यात्मिकाधिदैविकयोरानन्दयोः स्वरूपैक्यमाह—

स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः ॥

सः गुहानिहितवाक्येनोक्तः यश्च आकाशाद्यन्नमयान्तं कार्यं सृष्ट्वा तदनुप्रविष्टः अयं अपरोक्षः प्रत्यगात्मा पुरुषे शरीरे व्यष्ट्युपाधौ वर्तते। यश्च प्रकृतः असौ सकलकामनारहितविद्वत्प्रत्यक्षः लौकिकानन्दकाष्ठात्वेन मीमांसितो मायाऽवच्छिन्नः परमानन्दात्मा आदित्ये सूत्रात्मके समष्टिलिङ्गोपाधौ वर्तते स उक्तद्विविधोऽप्यानन्दात्मा एकः भिन्नदेशस्थयोर्घटमठाकाशयोरवकाशस्वरूपेण एकत्ववद्वस्तुतो भेदरहित इत्यर्थः। एवं कार्यरसलाभप्राणनाभयप्रतिष्ठाभयदर्शनरूपोक्तोपपत्तिभ्य आकाशादिकारणं ब्रह्मास्तीति प्रथमानुप्रश्नः प्रत्युक्तः॥

स य एवंविद् अस्माल्लोकात्प्रेत्य। एतमन्नमयमात्मानमुपसंक्रामति। एतं प्राणमयमात्मानमुपसंक्रामति। एतं मनोमयमात्मानमुपसंक्रामति। एतं विज्ञानमयमात्मानमुपसंक्रामति। एतमानन्दमयमात्मानमुपसंक्रामति। तदप्येष श्लोको भवति॥ १२॥

इति अष्टमोऽनुवाकः॥ ८॥

द्वावन्यौ अनुप्रश्नौ विद्वदविदुषोर्ब्रह्मप्राप्त्यप्राप्तिविषयौ अवशिष्टौ भवतः। तत्र विद्वान्समश्नुते न समश्नुते वा इत्यन्तानुप्रश्नापाकरणाय विदुषो ब्रह्मप्राप्तिरुच्यते। अविदुषो ब्रह्मप्राप्त्यप्राप्तिलक्षणो मध्यमप्रश्नस्तु विदुषो ब्रह्मप्राप्तिप्रतिपादनरूपान्त्यप्रश्नप्रतिवचनेन अर्थादविदुषो ब्रह्मप्राप्तिर्नास्तीति प्रत्युक्तो भवति। अतस्तदपाकरणार्थं श्रुत्या न पृथग् यत्यते। स यः कश्चिदधिकारी एवंवित् सत्यज्ञानानन्तलक्षणमद्वितीयमानन्दरूपं ब्रह्माहमस्मीत्येवंप्रकारेण वेत्तीत्येवंवित् ब्रह्मवेत्ता अस्माल्लोकात् प्रेत्य दृष्टादृष्टेष्टविषयसमुदायान्निरपेक्षो भूत्वा एतं 'स वा एष पुरुषोऽन्नरसमय' इत्यत्र अन्नरसविकारत्वेनोक्तम् अन्नमयं स्थूलदेहम् आत्मानं भ्रान्त्याऽऽत्मत्वेन गृहीतं उपसंक्रामति बाधते ज्ञानकृतभ्रान्तिनाशे एवात्रोपसंक्रमशब्द उपचर्यते मुख्यार्थानुपपत्तेरिति भावः। एतम् अन्योऽन्तर आत्मा प्राणमय इत्यत्र प्रकृतं प्राणमयं वायुविकारं आत्मानमुपसंक्रामतीति पूर्ववद् व्याख्येयम्। एतम् अन्योऽन्तर आत्मा मनोमय इत्यत्र प्रकृतं मनोमयं संशयात्मकवृत्तिमदन्तःकरणम् आत्मानमुपसंक्रामतीति पूर्ववद् व्याख्येयम्। एतमन्योऽन्तर आत्मा विज्ञानमय इत्यत्र प्रकृतं विज्ञायमयं निश्चयात्मकवृत्तिमदन्तःकरणम् आत्मानमुपसंक्रामतीति पूर्ववत्। एतम् अन्योऽन्तर आत्माऽऽनन्दमय इत्यत्र प्रकृतम् आनन्दमयं पूर्वोक्तलक्षणम् आत्मानमुपसंक्रामतीति पूर्ववत्। यद्यपि कोशानामुपसंक्रमणं नाम भ्रमनिवृत्तिरूपो बाध इत्युक्तम्। स

च बाधोऽधिष्ठानतत्त्वसाक्षात्कारे तदज्ञाननिवृत्त्या युगपदेव संभवति, रज्जुतत्त्वसाक्षात्कारे तत्राध्यस्तसर्पधारादिबाधवत्, न तु क्रमेण। तथापि पूर्वमात्मतत्त्वप्रतिपत्त्युपायतया उक्तस्य क्रमस्येहानुवादः श्रुत्या क्रियते, न तु तात्पर्येणोच्यत इति बोध्यम्। एवं भ्रान्त्यात्मत्वेन गृहीतान् अन्नमयादीन् बाधयित्वा निर्विकल्पके आत्मन्यभयं प्रतिष्ठां विन्दत इति पूर्वोक्तम्। तत्र प्रमाणमाह—तदपीति। तत्रापि ब्राह्मणोक्तार्थे एषः वक्ष्यमाणः श्लोको मन्त्रो भवति ॥ १२ ॥

इति अष्टमोऽनुवाकः

यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति। एतँ ह वाव न तपति। किमहँ साधु नाकरवम्। किमहं पापमकरवमिति। स य एवं विद्वानेते आत्मानँ स्पृणुते ॥

यतो यस्मात् अद्वयानन्दात्मनः स्वप्रकाशरूपात् वाचः वाचकाः शब्दाः द्रव्यादिसविकल्पवस्तुविषयाः वस्तुत्वसामान्यात् निर्विकल्पवस्तुप्रकाशनाय प्रयोक्तृभिः प्रयुक्ता अपि मनसा सह शब्दशक्तिजनितविज्ञानेन सह अप्राप्य तमप्रकाश्यैव निवर्तन्ते स्वशक्तिहीना भवन्ति। एतेन शब्दशक्त्यविषयत्वेऽपि लक्षणाङ्गीकारात् 'तं त्वौपनिषदं पुरुषमि'त्युपनिषत्प्रकाश्यत्वश्रुतेर्न विरोध इति सूचितम्। यत्र हि शब्दशक्तिविषयत्वं प्रथममेव प्रवृत्तं भवति, तत्र तदनु शब्दशक्तिजनितज्ञानप्रकाश्यत्वमपि भवति। यत्र च तादृशज्ञानप्रकाश्यत्वं तत्र शब्दशक्तिविषयत्वमस्त्येवेति कृत्वा वाङ्मनसयोः सहभाव उक्त इति भावः। तं ब्रह्मण आनन्दं राहोः शिरः इतिवदभेदे षष्ठी। विषयविषयिभावरहितं स्वाभाविकं नित्यं ब्रह्मात्मकानन्दं विद्वान् उक्तपञ्चकोशविवेचनेनोक्तानन्दमात्मत्वेन साक्षात्कृतवान् कुतश्चन कुतोऽपि न बिभेति भयं न प्राप्नोति, भयनिमित्ताभावादित्यर्थः। इति शब्दो मन्त्रसमाप्त्यर्थः। ननु साध्वकरणपापकरणयोर्भयनिमित्तयोः सत्त्वात्कथं न बिभेति? इत्यत आह—एतमिति। एतम् आनन्दं ब्रह्मणो विद्वानित्यादौ प्रकृतं विद्वांसं ह प्रसिद्धं वाव अवधारणे न तपति नैव सन्तापयति। किं न संतापयतीत्यत आह—किमिति। किं कस्मात् अहं साधु शोभनं कर्म नाकरवं न कृतवानस्मि। तथा किं कस्मात् अहं पापं प्रतिषिद्धं कर्म अकरवं कृतवानस्मि इति एवं साध्वकरणादिकं न संतापयतीत्यर्थः। यद्वा—एतमिति प्रथमार्थे द्वितीया। तथा च एष विद्वान्

कस्मादहं साधु नाकरवं कस्मादहं पापमकरवमिति न तपति पश्चात्तापं न करोतीत्यर्थः। अविदुषस्तु मरणकालासन्ने भवति पश्चात्तापः—कुतोऽहं साधु नाकरवं पापमकरवमिति। कुतो विदुषस्तापो न भवतीत्यत आह—स य इति। यः पुरुषः एवंविद्वान् आनन्दं ब्रह्मणो विद्वानित्युक्तप्रकारेण ब्रह्मात्मानं साक्षात्कृतवान् सः ब्रह्मात्मवेत्ता एते साध्वसाध्वकरणकरणद्वारा तापहेतुत्वेनोक्ते पुण्यपापकर्मणी आत्मानं स्पृणुते आत्मत्वेनैव पश्यति न तु पुण्यपापकर्मत्वेनेत्यर्थः॥

उक्तार्थमनूद्य तापाभावे हेतुमाह—

उभे ह्येवैष एते आत्मान ँ स्पृणुते। य एवं वेद। इत्युपनिषत्॥१॥

नवमोऽनुवाकः॥ ६॥

हि यस्मात् यः पुरुषः एवं सर्वात्मकमानन्दरूपं ब्रह्मात्मत्वेन वेद जानाति स एषः विद्वान् उभे एते पुण्यपापे अपि आत्मानमेव आत्मरूपेणैव स्पृणुते पश्यतीत्यर्थः। तस्मात् विदुष आत्मभूतेनैव दृष्टे पुण्यपापे तापके जन्मान्तरारम्भके च न भवत इति भावः। इति इयं यथोक्तलक्षणा ब्रह्मविद्या परं श्रेयोऽस्यां निषण्णमिति उपनिषत् सर्वाभ्यो विद्याभ्यः परमरहस्यं दर्शितमिति शेषः।

नवमोऽनुवाकः। इति ब्रह्मवल्ली

—:o:—

## अथ भृगुवल्ली

ॐ ब्रह्मविदः शुभाशुभे कर्मणी तापके जन्मान्तरारम्भके च न भवत इत्येवमर्थ आनन्दवल्ल्यां विवक्षितः। एतावता च ब्रह्मविद्या परिसमाप्ता। अथ ब्रह्मविद्यासाधनानि तपोऽन्नादिविषयाण्युपासनानि च वक्तुमिदमारभ्यते। तत्र पिता प्रियाय पुत्राय प्रशस्तामेव विद्यामुपदिशेन्नान्यामिति विद्यास्तुत्यर्थं पितापुत्रसंवादमाह—

सह नाववतु इति शान्तिः शान्तिः शान्तिः ॥ ३ ॥

ॐ भृगुर्वै वारुणिः। वरुणं पितरमुपससार।

अधीहि भगवो ब्रह्मेति। तस्मा एतत्प्रोवाच।

अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति॥

भृगुः नामतः वै प्रसिद्धः वारुणिः वरुणस्यापत्यम्। वरुणं वरुणसंज्ञकं पितरं स्वजनकम् उपससार उप समीपं गतवान्। भगवो हे भगवन् ब्रह्म सत्यादिलक्षणं अधीहि अध्यापय, कथयेत्यर्थः। इति

एवं पुत्रवचनं श्रुत्वा वरुणः पिता यद्ययं शुद्धधीः स्यात्तर्हि स्वमेवोपलक्ष्यं ब्रह्म ज्ञास्यतीत्याशयेन शिष्यबुद्धिपरीक्षार्थमुपलक्षणान्येव प्रदर्शयन् त्वंपदार्थोपलक्षणभूतान् शरीरादिपदार्थान् तावदाह—तस्मा इति। तस्मै विधिवदुपसन्नाय स्वपुत्राय भृगवे एतत् वचनं प्रोवाच उक्तवान्। अन्नं शरीरं प्राणं शरीराभ्यन्तरं पञ्चवृत्तिरूपं चक्षुः श्रोत्रमिति ज्ञानेन्द्रियोपलक्षणम्। मनःपदेनान्तःकरणचतुष्टय ग्राह्यम्। वाचमिति कर्मेन्द्रियोपलक्षणार्थम्। इति एतान्युक्तान्यन्नादीनि ब्रह्मोपलब्धौ द्वाराणि प्रोवाच इति पूर्वेणान्वयः॥

एवमन्नादीनां स्वचेष्टाऽन्यथानुपपत्त्या स्वातिरिक्तसाक्षिसिद्धिद्वारत्वमुक्त्वा तत्पदार्थस्योपलक्षगतया जगज्जन्मादिकमाह—

तꣳहोवाच। यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।

इति प्रथमोऽनुवाकः॥ १॥

तं भृगुं ह किल उवाच ब्रह्मलक्षणं पिता उक्तवान्। यतः यस्मादुपादानात्। वै प्रसिद्धौ। इमानि ब्रह्मादीनि स्तम्बपर्यन्तानि भूतानि प्राणिनः जायन्ते उत्पद्यन्ते। येन जातानि येन कारणात्मना जातानि उत्पद्यमानानि जीवन्ति प्राणान् धारयन्ति वर्धन्ते। विनाशकाले च प्रयन्ति म्रियमाणानि सन्ति यत् यत्र कारणब्रह्मणि अभिसंविशति तादात्म्यमेव प्रतिपद्यन्ते प्रलीयन्ते इति यावत्। तत् जन्मादिकारणभूतं वस्तु ब्रह्म सच्चिदानन्दरूपम्। तद्‌ब्रह्म विजिज्ञासस्व तद्‌ब्रह्मणो लक्षणं विशेषेण ज्ञातुमिच्छ। यदेवंलक्षणं ब्रह्म तदन्नादिद्वारेण प्रतिपद्यस्व। इतिशब्दो वरुणस्योक्तिसमाप्त्य :। एवं पित्रोक्तमर्थं ज्ञातुमशक्तः सर्वेषां ज्ञानसाधनानां मध्ये तपो ज्ञानं प्रत्युत्कृष्टसाधनत्वेन मन्यमानः स भृगुः तपोऽतप्यत विचारं कृतवान्, वाक्यार्थावगतिपर्यन्तं तात्पर्येण लक्ष्यपदार्थविचारणमावृत्त्याऽनुष्ठितवानित्यर्थः। तपःशब्देनात्र विचारो विवक्षितः। ननु 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः। तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते' इति स्मृत्युक्तं बाह्यान्तःकरणसमाधानलक्षणं तपो गृह्यते। वाक्यार्थज्ञानं प्रति तत्त्वंपदार्थशोधनरूपस्यालोचनस्यैव साधकतमत्वात्। गुरूपदिष्टस्य परब्रह्मलक्षणस्यापि क्रमेण कोशेभ्य आत्मतत्त्वस्य विवेचने एवोपयोगाच्च। नहि ब्रह्मजिज्ञासोर्भृगोर्जिज्ञासिते ब्रह्मणि विचारं विना जिज्ञासानिवर्तकमन्यदस्ति। अत एव 'तद्विजिज्ञासस्वे'ति श्रुतिमूलके 'अथातो

ब्रह्मजिज्ञासा' इति सूत्रे ब्रह्मजिज्ञासोर्विचार एव कर्तव्यत्वेनोपदिष्टः। सुरेश्वराचार्यैरपि तपःशब्देन विचार एवोक्तः। तदुक्तम्—'अन्वयव्यतिरेकादिचिन्तनं वा तपो भवेत्। अहं ब्रह्मेति वाक्यार्थबोधायालमिदं यतः' इति। सूतसंहितायामपि परमेश्वरेणोक्तम्—'कोऽहं मुक्तः कथं केन संसारं प्रतिपन्नवान्। इत्यालोचनमर्थज्ञास्तपः शंसन्ति पण्डिताः' इति। सः भृगुः तपस्तप्त्वा कुत्रेदं पित्रा उक्तं लक्षणं वर्तते, क्वेदं लक्षणं परिपूर्णं भवतीत्येकाग्रचेतसा पर्यालोच्य॥

इति प्रथमोऽनुवाकः

अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपसार। अधीहि भगवो ब्रह्मेति। तँ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥ २॥

इति द्वितीयोऽनुवाकः॥ २॥

अन्नं समष्टिव्यष्ट्यात्मकं विराट्संज्ञकं ब्रह्म इति एवं व्यजानात् विज्ञातवान्। अन्नस्य ब्रह्मत्वे पित्रा प्रोक्तलक्षणं योजयति—अन्नादिति। हि यस्मात् अन्नादेव विराडात्मकादेव खलु किल इमानि प्रसिद्धानि भूतानि चराचरशरीराणि जायन्ते उत्पद्यन्ते। जातानि उत्पद्यमानानि अन्नेन उक्तरूपेण जीवन्ति प्राणान् धारयन्ति। प्रयन्ति म्रियमाणानि सन्ति अन्नं अभिसंविशन्ति आभिमुख्येन प्रविशन्ति। इतिशब्दो वाक्यसमाप्त्यर्थः। तत् उक्तब्रह्मलक्षणोपेतमन्नं विज्ञाय ब्रह्मत्वेन ज्ञात्वा तत्रोत्पत्तिमत्त्वेन परिच्छिन्नत्वविनाशित्वादिदोषं विचिन्त्य पुनरेव भूय एव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति पूर्ववद् व्याख्येयम्। तं भृगुं ह प्रसिद्धः पितोवाच। यावद् ब्रह्मणो लक्षणं निरतिशयं न भवति यावच्च जिज्ञासा न निवर्तते तावत्तप एव ते साधनम्। तपसा आलोचनात्मकेन तपसैव ब्रह्म जगदुत्पत्तिस्थितिलयहेतुत्वेनोक्तं विजिज्ञासस्व विज्ञातुमिच्छ। तपो ब्रह्म तपसो ब्रह्मावगतिहेतुत्वात्तपो ब्रह्मेति तपसः स्तुत्यर्थमुक्तम्। इतिशब्दो वाक्यसमाप्त्यर्थः। सः भृगुः तपोऽतप्यत। अन्नस्य सूत्रात्मरूपप्राणपारतन्त्र्यान्न तत्र निरपेक्षं ब्रह्मलक्षणं सम्भवति। प्राणस्य तु स्वातन्त्र्याद्भवति तत्र ब्रह्मलक्षणमित्यादिविचारं कृतवान्। सः भृगुः तपस्तप्त्वा एवं विचारं कृत्वा॥ २॥

प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। त ँ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा ॥ १ ॥

इति तृतीयोऽनुवाकः ॥ ३ ॥

प्राणः क्रियाशक्त्याश्रयतया प्राणशब्दलक्ष्यभूतो हिरण्यगर्भो ब्रह्मेति एवं व्यजानात् विज्ञातवान्। तत्र ब्रह्मलक्षणं योजयति—प्राणादिति। प्राणात् हिरण्यगर्भात्। व्याख्यातमन्यत्। तद्विज्ञाय लक्षणोपपत्तिभ्यां प्राणं ब्रह्मत्वेन ज्ञात्वा। तत्रापि मनःपारतन्त्र्यं ज्ञानशक्तिराहित्यादिदोषं दृष्ट्वा पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति व्याख्यातम्। तं होवाचेत्यादि पूर्ववद् व्याख्येयम्। सः भृगुः तपोऽतप्यत, प्राणस्य मनसा निरोधदर्शनेन पारतन्त्र्यान्न तत्र ब्रह्मलक्षणं सम्भवति, मनसस्तु स्वातन्त्र्याज्ज्ञानशक्तिमत्त्वाद्भवति तत्र ब्रह्मलक्षणमिति विचारं कृतवान्। सः भृगु तपस्तप्त्वा एवं विचारं कृत्वा ॥ १ ॥

मनो ब्रह्मेति व्यजानात्। मनसो ह्येव खल्विमानि भूतानि जायन्ते। मनसा जातानि जीवन्ति। मनः प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। त ँ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा ॥ १ ॥

इति चतुर्थोऽनुवाकः ॥ ४ ॥

मनो ब्रह्मेति व्यजानात्। मन आधिदैविकं समष्ट्यन्तःकरणमेव ब्रह्मत्वेन निश्चितवानित्यर्थः। तत्र ब्रह्मलक्षणं योजयति—मनस इति। आधिदैविकसमष्ट्यन्तःकरणात्। व्याख्यातमन्यत्। तद्विज्ञाय उक्तलक्षणोपपत्तिभ्यां मनो ब्रह्मत्वेन ज्ञात्वा, तत्रापि कर्तृपारतन्त्र्यादिदोषमवलोक्य। 'पुनरेव वरुणं पितरमुपससारे'त्यादि 'तपो ब्रह्मे'त्यन्तं पूर्ववद् व्याख्येयम्। सः भृगुः तपोऽतप्यत मनसो विज्ञानरूपकर्तृपारतन्त्र्यात्तत्र ब्रह्मलक्षणं न युक्तं कर्तरि च स्वातन्त्र्येण सम्भवति ब्रह्मलक्षण-

मिति विचारं कृतवान् । सः भृगुः तपस्तप्त्वा एवं विचारं कृत्वा ॥ १ ॥

इति चतुर्थोऽनुवाकः

विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ १ ॥

इति पञ्चमोऽनुवाकः ॥ ५ ॥

विज्ञानं आधिदैविकमहत्तत्त्वं ब्रह्मेति व्यजानात् विज्ञातवान् । तत्र ब्रह्मलक्षणं योजयति—विज्ञानादिति । विज्ञानात् महत्तत्त्वादित्यादि पूर्ववद् व्याख्येयम् । तद्विज्ञाय लक्षणोपपत्तिभ्यां विज्ञानं ब्रह्मत्वेन ज्ञात्वा । तत्रापि पारतन्त्र्यादिदोषमाशंक्य पुनरेव वरुणं पितमुपससारेत्यादि ब्रह्मेत्यन्तं पूर्ववद्व्याख्येयम्' । सः भृगु तपोऽतप्यत विज्ञानमपि ब्रह्मत्वं नार्हति, कार्यत्वाद् देहादिवत्परिच्छिन्नत्वात् । कर्तृरूपविज्ञानस्योदये भोक्तृरूप आनन्द एव निमित्तं भवति । अतस्तत्रैव ब्रह्मलक्षणं सम्पूर्णं भवतीति विचारं कृतवान् । सः भृगुः तपस्तप्त्वा एवं विचारं कृत्वा ॥१॥

इति पञ्चमोऽनुवाकः

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति । सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता ॥

आनन्दः मायाविशिष्ट ईश्वराख्यः । सर्वैः प्रार्थ्यमानतयाऽऽनन्दरूपः ब्रह्मेत्याध्यात्मिककोशानामिव आधिदैविकान्नप्राणादिकोशानामप्युत्तरोत्तरस्य पूर्वपूर्वापेक्षया क्रमेणान्तरत्वं निश्चित्य विशिष्टस्यान्तरात्मत्वानुपपत्त्या कारणत्वेन लक्षितः विशुद्धानन्दो ब्रह्मेति व्यजानात् विज्ञातवानित्यर्थः । तत्रापि ब्रह्मलक्षणं योजयति—आनन्दादिति । आनन्दाद्ध्येव मायाविशिष्टेश्वराद्ध्येव खल्विमानीत्यादि संविशन्तीत्यन्तं पूर्ववद् व्याख्येयम् । एवमन्नादिषु साकल्येन ब्रह्मलक्षणमपश्यञ्छनैः शनैरन्तरान्तरमनुप्रविश्य अन्तरतमं विशुद्धानन्दं ब्रह्म विज्ञातवान्भृगुः तपसैव साधनेन ।

तस्माद् ब्रह्मविजिज्ञासुना बाह्यकरणान्तःकरणसमाधानलक्षणं परमं तपः-साधनमनुष्ठेयमिति समुदायप्रकरणार्थः। अधुना पितापुत्रसंवादं परित्यज्य आख्यायिकया निष्पन्नमर्थं स्ववचनेन श्रुतिराह—सैषे ति। सा पूर्ववल्ल्या प्रकृता एषा अस्यां वल्ल्यां सन्निहिता भार्गवी भृगुणा विदिता वारुणी वरुणेन प्रोक्ता विद्या ब्रह्मविद्या अन्नं ब्रह्मेत्यारभ्य पूर्वपूर्वप्रहाणेनोपर्युपरि प्रवृत्ता परमे व्योमन् हृदयाकाशगुहायां परमानन्दाद्वैत-स्वरूपे ब्रह्मणि प्रतिष्ठिता परिसमाप्ता।

उक्तब्रह्मविद्याफलमाह—

य एवं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या ॥ १ ॥

इति षष्ठोऽनुवाकः ॥ ६ ॥

यः भृगुतो भिन्नोऽपि कश्चित् एवं उक्तक्रमेण अन्नादिषु तपसैव साधनेन ब्रह्मलक्षणयोजनया तत्र तत्र गृहीतब्रह्मत्वबुद्धिपरित्यागेन सर्वान्तरतमानन्दं ब्रह्मात्मत्वेन जानाति, स विद्वान् प्रतितिष्ठति परे ब्रह्मणि स्थितो भवति, ब्रह्मैव भवतीति यावत्। उक्तविदुषो जीवन्मुक्त-स्याप्यविद्यालेशवशात् द्वैताभासं पश्यतो दृष्टफलमप्याह—अन्नवानिति। अन्नवान् प्रभूतान्नवान् भवति अन्नादः दीप्ताग्निर्भवति, महान्भवति महत्त्वं प्राप्नोति। केन महत्त्वमित्यत आह—प्रजया पुत्रादिना पशुभिः गवाश्वा-दिभिः ब्रह्मवर्चसेन शमदमज्ञानादिनिमित्तभूतेन ब्रह्मतेजसा। महान्भवति कीर्त्या शिष्टाचारनिमित्तभूतेन यशसा महान् भवतीति क्रियानुषंगः ॥१॥

इति षष्ठोऽनुवाकः

विदुषः कर्तव्याभावेऽप्यन्नस्तुत्यर्थं तस्य कर्तव्यमाह—

अन्नं न निन्द्यात्। तद्व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्न-मन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्च-सेन। महान् कीर्त्या ॥

इति सप्तमोऽनुवाकः ॥ ७ ॥

अन्नं व्यपकृष्टं प्राप्तं न निन्द्यात् गुरुमिव निन्दां मा कुर्यात् यदृच्छया उपपन्नं वरमवरं वाऽन्नमादरेण भुञ्जीतेति ब्रह्मविदो नियमाभिधानं साधकस्यानुष्ठानार्थम्। तत् तस्य विदुषः व्रतं व्रतमिवानुष्ठेयं स तु

व्रतोपदेशोऽप्यन्नस्तुतये । अन्नस्य स्तुतेर्ब्रह्मोपलब्ध्युपायत्वादिति बोध्यम् । एतावता ग्रन्थेन वाक्यार्थज्ञाने तत्त्वंपदलक्ष्यार्थानुसन्धानं मुख्यसाधनं तद्दृष्टफलं चोक्तम् । इदानीं तु विचारासमर्थस्य मन्दाधिकारिणोऽन्नान्नादरूपेण प्राणाद्युपासनानि काम्यानि गौणसाधनानि विधीयन्ते—प्राण इति । न चैवं सति ब्रह्मविद्याप्रकरणविच्छेदप्रसग इति वाच्यम्; काम्यानां प्राजापत्यफलसम्पादकत्वेऽपि निष्कामनया अनुष्ठितानां चित्तैकाग्र्यद्वारा ब्रह्मविद्याहेतुत्वेन संगतत्वात् । प्राणः पञ्चवृत्त्यात्मको वायुः वै प्रसिद्धः अन्नम् अदनीयं शरीरमन्नादम् अन्नस्य भक्षकम् । तत्र शरीरे इति व्यवहितवाक्यं हेतुत्वेनाह—यतः शरीरे प्राणः प्रतिष्ठितः । शरीरान्तःस्थितत्वेन साम्यात्प्राणेऽन्नबुद्धिः शरीरेऽन्नादबुद्धिश्च कर्तव्येत्यर्थः । एवं शरीरमन्नं प्राणोऽन्नादः, यतः प्राणे शरीरं प्रतिष्ठितं शरीरस्थितेः प्राणनिमित्तत्वाच्छरीरेऽन्नबुद्धिः प्राणेऽन्नादबुद्धिश्च कर्तव्या । तत् तस्मात् शरीरे प्राणस्य प्राणे शरीरस्य प्रतिष्ठितत्वात् एतत् उभयं शरीरं प्राणश्च अन्नमन्नादं च भवति । एवमुभयोरन्नत्वे अन्नादत्वे सति अन्नमन्ने प्रतिष्ठितं अन्नादोऽन्नादे प्रतिष्ठित इत्यर्थः सिद्धो भवति । प्राणशरीरयोरुभयोरन्नान्नादत्वगोचरमुपासनं विधत्ते—स य इति । यः पुरुषः एतद् उभयमन्नान्नादरूपं प्राणं शरीरं च अन्नमन्ने अन्नादमन्नादे प्रतिष्ठितं वेद उपास्ते सः उपासकः प्रतितिष्ठति शरीरप्राणात्मनैव स्थितो भवति, चिरंजीवी भवतीति यावत् । अन्नवानन्नादो भवतीत्यादि महान् कीर्त्येत्यन्तं पूर्ववद् व्याख्येयम् ॥ १ ॥

इति सप्तमोऽनुवाकः

शरीरप्राणमुभयम् अन्नान्नादत्वगुणकमुपासीनस्य अन्नापरिहाररूपव्रतमाह—

अन्नं न परिचक्षीत । तद्व्रतम् । आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठतम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ १ ॥

इति अष्टमोऽनुवाकः ॥ ८ ॥

अन्नम् अपकृष्टमग्रे प्राप्तं न परिचक्षीत । लोके यथा शुभाशुभमन्नं दृष्ट्वा गुणदोषौ कल्पयित्वा गुणवदन्नमुपादत्ते दोषवदन्नं परिहरति तथा न परिहरेत् भोजनपात्रे परिवेषितमपि भुक्तोच्छिष्टं न त्यजेत् ।

किन्तु निःशेषमपि भुञ्जीतेति । तत् तस्योपासकस्य व्रतं नियमाभिधानम् । अत्राशुभपदमन्नगतावरत्वरूपदोषपरम्, न तु शास्त्रीयदोषपरम् । तस्मिन् सति परिहारावश्यंभावादिति बोध्यम् । एवमग्रेऽपि व्याख्येयम् । आपो वा अन्नं ज्योतिरन्नादमित्यत्र शरीरादिसंघातान्तःप्रविष्टमेव जलं तेजश्च गृह्यते, प्राणशरीरसमभिव्याहारात् । तत् तस्मात् अप्सु ज्योतिषः ज्योतिषि अपां प्रतिष्ठितत्वात् । एतत् उभयं तेजो जलं चान्नमन्नादं च भवति । एवमुभयोरन्नत्वे अन्नादत्वे सति अन्नमन्ने प्रतिष्ठितम् अन्नादोऽन्नादे प्रतिष्ठित इत्युपासकस्य फलमाह—य इति । यः पुरुष एतत् उभयमन्नान्नादरूपं जलं तेजश्च अन्नमन्ने अन्नादमन्नादे प्रतिष्ठितं वेद उपास्ते सः उपासकः प्रतितिष्ठति चिरकालं स्थितो भवति । अन्नवानन्नादो भवतीत्यादि पूर्ववद् व्याख्येयम् ॥ १ ॥

इत्यष्टमोऽनुवाकः

अन्नं बहु कुर्वीत । तदव्रतम् । पृथिवी वा अन्नम् ॥ आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता ॥

अब्ज्योतिषोरन्नान्नादगुणत्वेन उपासकस्य व्रतमाह—अन्नं बहु कुर्वीत बह्वन्नं संपादयेदिति । तद्व्रतं तस्योपासकस्य व्रतं नियमाभिधानम् । एवं पृथिव्याकाशयोरपि शरीरादिसङ्घातेऽन्तःप्रविष्टयोरेव ग्रहणम् । पृथिवी वा अन्नम् आकाशोऽन्नादः । एवमाकाशोऽन्नं पृथिव्यन्नाद इत्यन्योऽन्यमन्नान्नादमपि बोध्यम् । पृथिव्यामाकाशः प्रतिष्ठितः घटोदरे आकाशवत् । आकाशे पृथिवी प्रतिष्ठिता कार्यस्य कारणाश्रितत्वात् ॥

तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ १ ॥

इति नवमोऽनुवाकः ॥ ९ ॥

तत् तस्मात् पृथिव्यामाकाशस्य आकाशे पृथिव्याः प्रतिष्ठितत्वात् एतत् उभयं पृथिव्याकाशं चान्नान्नादं च भवति । एवमुभयोरन्नत्वे अन्नादत्वे सति अन्नमन्ने प्रतिष्ठितम् अन्नादोऽन्नादे प्रतिष्ठित इत्युपासकस्य फलमाह—य इति । यः पुरुषः एतत् उभयमन्नान्नादरूपं पृथिव्याकाशं च अन्नमन्ने अन्नादमन्नादे प्रतिष्ठितं वेद उपास्ते । सः उपासकः प्रतितिष्ठति चिरकालं स्थितिं प्राप्नोति । अन्नवानन्नादो भवतीत्यादिपूर्ववद् व्याख्येयम् ।

इति नवमोऽनुवाकः

पृथिव्याकाशयोरन्नान्नादगुणत्वेन उपासकस्य व्रतमाह—

न कञ्चन वसतौ प्रत्याचक्षीत । तद्व्रतम् । तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद् वै मुखतोऽन्नꣳ राद्धम् । मुखतोऽस्मा अन्नꣳ राध्यते । एतद् वै मध्यतोऽन्नꣳ राद्धम् । मध्यतोऽस्मा अन्नꣳ राध्यते ॥

कञ्चन कञ्चिदपि वसतौ स्वगृहे निवासार्थमागतं न प्रत्याचक्षीत न निवारयेत् । तद्व्रतं तत् तस्योपासकस्य व्रतं नियमाभिधानम् । तस्मात् वासे दत्ते अन्नस्याप्यवश्यं देयत्वात् यया कया च विधया येन केन च प्रकारेण बह्वन्नं प्राप्नुयात् बह्वन्नसंग्रहं कुर्यात् । बह्वन्नसंग्रहे वसत्यर्थमागतानामप्रत्याख्यानरूपव्रतमेव हेतुमुक्त्वा विद्वदाचाररूपं हेत्वन्तरमाह—अराद्धीति । यस्मादन्नवन्तो विद्वांसो अस्मै अभ्यागतायाऽन्नार्थिने अन्नमराद्धि अन्नं संसिद्धं इति एवं आचक्षते कथयन्ति बुधाः, नास्तीति प्रत्याख्यानं न कुर्वन्तीत्यर्थः, तस्मात् हेतोर्बह्वन्नं प्राप्नुयादिति पूर्वेण सम्बन्धः । अन्नदानमाहात्म्यमाह—एतदिति । एतद्वै प्रसिद्धं एतत् प्रकृतमन्नं राद्धं संसिद्धं मुखतः प्रथमे वयसि । मुख्यया वृत्त्या वा पूजापुरःसरमभ्यागताय अन्नार्थिने यः प्रयच्छतीति वाक्यशेषः । तस्य किं फलं स्यादित्यत आह— मुखत इति । मुखतः पूर्वे वयसि मुख्या वृत्त्या वा श्रद्धाभक्तिरूपयाऽस्मै अन्नदाय अन्नं राध्यते, यथा दत्तं तथैवोपतिष्ठत इत्यर्थः । एवं एतत्प्रकृतमन्नं राद्धं संसिद्धं मध्यतो मध्यमे वयसि मध्यमेनोपचारेण वा योऽन्नार्थिने प्रयच्छतीति शेषः । मध्यतो मध्यमे वयसि मध्यमोपचारेण वा अस्मै अन्नार्थिने अन्नं राद्ध्यते यथा दत्तं तथैव संसिद्ध्यतीत्यर्थः ॥

एतद् वै अन्ततोऽन्नꣳ राद्धम् । अन्ततोऽस्मा अन्नं राध्यते ॥ १ ॥

एतदन्नं राद्धं संसिद्धं अन्ततोऽन्ते वयसि जघन्यसत्कारेण वा । योऽन्नार्थिने प्रयच्छतीति वाक्यशेषः । अस्मै अन्नदाय अन्ततोऽन्ते वयसि जघन्यसत्कारेण वा अन्नं राद्ध्यते सिद्धं भवति ॥ १ ॥

कस्येदं फलं भवतीत्यत आह—

य एवं वेद । क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः ॥ २ ॥

यः पुरुषः एवं यथोक्तप्रकारेण अन्नमाहात्म्यं तद्दानफलं च वेद जानाति तस्यैव यथोक्तफलं भवतीत्यर्थः। इदानीं ब्रह्मण उपासना प्रकारमाह—क्षेम इति। क्षेमः प्राप्तस्य परिरक्षणम्। वाचि वागिन्द्रिये क्षेमरूपेण ब्रह्म स्थितमिति एवम् उपास्यम्। योगक्षेम इति प्राणापानयोः। योगोऽप्राप्तस्य प्राप्तिलक्षणः। योगरूपेण प्राणे ब्रह्म प्रतिष्ठितमित्युपास्यम्। क्षेमरूपेण अपाने ब्रह्म प्रतिष्ठितमित्युपास्यमित्यर्थः। हस्तयोः कर्मरूपेण ब्रह्म प्रतिष्ठितमित्युपास्यम। गतिरिति पादयोः पादयोर्गतिरूपेण ब्रह्म प्रतिष्ठितमित्युपास्यम्। पायौ गुदे विमुक्तिरिति विसर्ग इति एवंरूपेण ब्रह्म प्रतिष्ठितामित्युपास्यम्। इति उक्तलक्षणाः मानुषीः मनुष्येषु भवाः मानुष्य आध्यात्मिक्यः समाज्ञाः आध्यात्मिकान्युपापासनानीत्यर्थः॥ २॥

**अथ दैवीः। तृप्तिरिति वृष्टौ। बलमिति विद्युति। यश इति पशुषु। ज्योतिरिति नक्षत्रेषु। प्रजातिरमृतमानन्द इत्युपस्थे॥३॥**

अथ आध्यात्मिक्युपासनाकथनानन्तरं दैवीः देव्यः देवतासम्बन्धिन्या उपासना उच्यन्ते इति शेषः। तृप्तिरिति वृष्टौ वृष्टेरन्नादिद्वारा तृप्तिहेतुत्वाद् ब्रह्मैव तृप्तिरूपेण वृष्टौ प्रतिष्ठितमित्युपास्यमित्यर्थः। बलमिति विद्युति। तडिति बलमित्याकारेण ब्रह्म प्रतिष्ठितमित्युपास्यम्। यश इति यशोरूपेण पशुषु गवादिषु ब्रह्म प्रतिष्ठितमित्युपास्यम्। ज्योतिरिति प्रकाशरूपेण नक्षत्रेषु तारकेषु ब्रह्म प्रतिष्ठितमित्युपास्यम्। प्रजातिः पुत्रादिसन्ततिः। अमृतं पुत्रजन्मना पितृऋणविमोक्षद्वारा पितुरमृतत्वप्राप्तिरत्र अमृतपदेन विवक्षिता। आनन्दः स्त्रीसंपर्कजन्यं सुखम्। यत एतत् त्रयमुपस्थहेतुकं तस्मादुपस्थे शिश्ने प्रजात्यादिरूपेण ब्रह्म प्रतिष्ठितमिति एवम् उपास्यम्। इदमुपासनं विमुक्तिरिति पायावित्यत्र द्रष्टव्यम् आध्यात्मिकत्वात्। यद्वा—उपस्थानन्दस्य देवमनुष्यसाधारण्येऽपि देवेषु उपस्थसुखप्राचुर्याद् दैवीष्वस्या गणना कृतेति बोध्यम्॥ ३॥

**सर्वमित्याकाशे। तत्प्रतिष्ठेत्युपासीत। प्रतिष्ठावान् भवति। तन्मह इत्युपासीत। महान् भवति। तन्मन इत्युपासीत। मानवान् भवति॥ ४॥**

सर्वमित्याकाशे आकाशे सर्वरूपेण ब्रह्म प्रतिष्ठितमित्युपास्यम्। तत् ब्रह्माभिन्नमाकाशं प्रतिष्ठा सर्वाश्रयमित्युपासीत ध्यायेत्। प्रतिष्ठागुणोपासनात् प्रतिष्ठावान् भवति। अन्नपानादिभिः स्थितिमान् भवतीत्यर्थः। एवं पूर्वद्वितीयमन्त्रोक्तवागाद्युपासनेष्वपि क्षेमादिगुणेन ब्रह्मोपासनात् क्षेमादिमान् भवतीति द्रष्टव्यम्। तं यथायथोपास्ते तदेव भवतीति वचनात्। तन्महः इत्यत्र तच्छब्देन ब्रह्मोच्यते। तथा च वार्तिकम्—'तद् ब्रह्म मह इत्येवमुपासीत ततः फलम्' इत्यादि। तत् ब्रह्म महः महत्त्वगुणवदित्येवमुपासीत ध्यायेत्। महान् भवति प्रजादिभिः समृद्धो भवति। तत् ब्रह्म मनः मननगुणवदित्युपासीत। तत्फलमाह—मानवान् भवति मनने समर्थो भवतीत्यर्थः॥ ४॥

तन्नम इत्युपासीत। नम्यन्तेऽस्मै कामाः। तद् ब्रह्मेत्युपासीत। ब्रह्मवान् भवति। तद् ब्रह्मणः परिमर इत्युपासीत। पर्येणं म्रियन्ते द्विषन्तः सपत्नाः। परि येऽप्रिया भ्रातृव्याः॥ ५॥

तत् ब्रह्म नमः नमनगुणवदित्येवमुपासीत। अस्मै उपासकाय कामाः काम्यन्त इति कामा भोग्या विषयाः नम्यन्ते प्रह्वीभवन्ति। तत् प्रकृतं ब्रह्म, ब्रह्म विराडात्मकमित्येवमुपासीत। तत्फलमाह—ब्रह्मवान् भवति स्थूलभोगसाधनवान् विराड्ब्रह्मगुणवान् वा भवतीत्यर्थः। ब्रह्मणः मायोपाधिकस्य तत्स्वरूपतया उक्तमाकाशं परिमरः परिम्रियन्ते लीना भवन्त्यस्मिन्निति परिमरः, परिमरत्वगुणकमाकाशमित्युपासीत। एनम् उक्तोपासकं द्विषन्तः द्वेषं कुर्वन्तः सपत्नाः शत्रवः परिम्रियन्ते परितो मृता भवन्ति। ये चाप्रिया अद्विषन्तः भ्रातृव्याः शत्रवस्तेऽपि च परिम्रियन्ते इत्यर्थः॥ ५॥

एवं प्राणो वा अन्नं शरीरमन्नादमित्यारभ्य आकाशान्तस्य कार्यस्यैव उपासनजातं मन्दाधिकारिविषयमध्यारोपदशायामुक्तम्। ततश्च प्रत्यगात्मोपाधिभूतानामेव प्राणशरीरादीनां भोगसाधनत्वरूपमन्नत्वं भोक्तृत्वरूपमन्नादत्वं चोक्तम्। तथा च कार्यविषय एव भोग्यभोक्तृत्वरूपः संसारः, न त्वात्मविषयः। आत्मनि तु संसारो भ्रान्त्योपचर्यते इत्यपवाददृष्टिमभिप्रेत्याह—

स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवंवित्। अस्माल्लोकात् प्रेत्य। एतमन्नमयमात्मानमुपसङ्क्रम्य। एतं प्राणमयमात्मानमुपसङ्क्रम्य। एतं मनोमयमात्मानमुपसङ्क्रम्य।

एतं विज्ञानमयमात्मानमुपसङ्क्रम्य । एतमानन्दमयमात्मान-
मुपसङ्क्रम्य । इमांल्लोकान् कामान्नी कामरूप्यनुसंचरन् ।
एतत् साम गायन्नास्ते ॥ ६ ॥

सः गुहानिहितवाक्येनोक्तः यः आकाशादिकार्यं सृष्ट्वा तदनुप्रविष्टः अयमपरोक्षः प्रत्यगात्मा पुरुषे शरीरे व्यष्ट्युपाधौ वर्तते । यश्च प्रकृतः असौ विद्वत्प्रत्यक्षः परमानन्दात्मा आदित्ये आदित्यमण्डले वर्तते । सः द्विविधत्वेनोक्तश्चेतनः एकः वस्तुतो भेदरहित इत्यर्थः । यः पुरुषः एवंवित् जीवात्मपरमात्मनोरभेदवित् सः विद्वान् अस्माल्लोकात् प्रेत्य दृष्टादृष्टेष्टविषयजातादुपरतो भूत्वा एतमन्नरसविकारेणोक्तम् अन्नमयं स्थूलदेहम् आत्मानं भ्रान्त्याऽऽत्मत्वेन गृहीतम् उपसङ्क्रम्य बाधित्वा । एतम् अन्नमयादान्तरत्वेनोक्तं प्राणमयं वायुविकारमात्मानमुपसङ्क्रम्य । एतं प्राणमयादान्तरत्वेनोक्तं मनोमयं संशयात्मकवृत्तिमदन्तःकरणमात्मानमुपसङ्क्रम्य । एतं मनोमयादान्तरत्वेनोक्तं विज्ञानमयम् । निश्चयात्मकवृत्तिमदन्तःकरणमात्मानमुपसङ्क्रम्य एतं विज्ञानमयादान्तरत्वेनोक्तमानन्दमयं निद्राऽऽत्मकसुखानुभवरूपमात्मानमुपसङ्क्रम्य एवं पूर्ववद् व्याख्येयं सर्वत्र । कामान्नी कामतोऽन्नमस्येति कामान्नी । कामरूपी कामतो रूपाण्यस्येति कामरूपी सन् इमान् शास्त्रप्रसिद्धान् लोकान् भूरादीन् अनुसञ्चरन् आत्मत्वेनानुभवन् एतत् प्रकृतं ब्रह्म साम समत्वात् साम सर्वाभिन्नरूपम् । तद्विज्ञानफलं चातिशयेन कृतार्थतारूपं गायन् लोकानुग्रहार्थं प्रख्यापयन् आस्ते तिष्ठतीति सम्बन्धः । एतेन सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेत्यस्य फलवाक्यस्यार्थो विवृत ॥ ६ ॥

सामगानप्रकारमाह—

हा ३ वु ३ हा ३ वु हा ३ वु । अहमन्नमहमन्नमहमन्नम् ।
अहमन्नादो ३ ऽहमन्नादो ३ ऽहमन्नादः ॥

हावुशब्दो विस्मयार्थः । अभ्यासस्तु तत्रातिशयद्योतनार्थः । तथा च अद्वैत आत्मा निरञ्जनोऽपि सन् अहमेवान्नं भोग्यरूपमस्मि । अहमेवान्नादो भोक्तृरूपोऽस्मीति हावु महानाश्चर्योऽस्तीत्यर्थः ॥

अहँ२ श्लोककृदहँ२ श्लोककृदहँ२ श्लोककृत् । अहमस्मि
प्रथमजा ऋता ३ स्य पूर्वं देवेभ्योऽमृतस्य ना ३ भायि । यो
मा ददाति स इदेवमा ३ वाः । अहमन्नमन्नमदन्त-

मा३द्मि । अहं विश्वं भुवनमभ्यभवां ३ सुवर्नज्योतिः । य एवं वेद । इत्युपनिषत् ॥ ७ ॥

इति दशमोऽनुवाकः ॥ १० ॥

किञ्च अहं श्लोककृत् अचेतनानामनेकेषां देहेन्द्रियादिरूपाणां श्लोककृत् संघातकर्ताऽहमेवास्मीत्यपि महान् विस्मयोऽस्ति । त्रिरुक्तिस्तु सर्वत्र विस्मयाऽतिशयद्योतनार्था । किञ्च ऋतस्य सत्यस्य मूर्तामूर्तस्य जगतः प्रथमजाः प्रथमोत्पन्नः हिरण्यगर्भोऽहमस्मि भवामि । देवेभ्यः पूर्वं हिरण्यगर्भोत्पत्त्यनन्तरमिन्द्रादिदेवेभ्यः पूर्वमेवोत्पन्नो विराट् पुरुषश्चाहमस्मीत्यर्थः । अमृतस्य अमृतत्वस्य नाभायि नाभिर्मध्यमहमस्मि । मुमुक्षूणां प्राप्तव्यं यदमृतं तन्मत्स्वरूपमेव, मम परमानन्दस्वरूपत्वादित्यर्थः । यः पुरुषः मा माम् अन्नरूपं ददाति अन्नार्थिभ्यः प्रयच्छति सः अन्नदाता इत् इत्थमेवमविनष्टं यथा स्यात्तथा मा माम् आवाः अवति दातुरन्नवृद्धिर्भवतीत्यर्थः । यस्तु अन्नमर्थिभ्योऽदत्वा भुङ्क्ते तमन्नमदन्तम् अन्नं भक्षयन्तं पुरुषम् अहमन्नम् अहमेवान्नरूपः सन् अद्मि भक्षयामि । विश्वं समस्तं भुवनं भूरादिलोकजातम् अहमभ्यभवाम् अभिभवामि संहर्तृरुद्ररूपेणाहमेव संहरामीत्यर्थः । सुवर्नज्योतिः नशब्द इवार्थः । सुवः न आदित्य इव ज्योतिः अस्मदीयचैतन्यप्रकाशोऽस्तीत्यर्थः । इति इयं वल्लीद्वयेन निरूपिता उपनिषत् परमात्मज्ञानं यः कश्चिदन्योऽपि एवं भृगुवदुक्ततपआदिसाधनैः वेद सम्पादयति, तस्याप्युक्तफलं ब्रह्मभावापत्तिलक्षणं भवतीत्यर्थः ॥ ७ ॥

इति दशमोऽनुवाकः

सह नाववत्वित्यादिः शान्तिपाठः ॥ इति तैत्तिरीयोपनिषत् ॥

तत्र तावत् शिक्षावल्ल्याः प्रारम्भात् पूर्वं शन्नो मित्र इत्यादिशान्तिपाठस्य व्याख्या कृता । ततश्च द्वितीयब्रह्मानन्दवल्ल्या आरम्भात् पूर्वं सह नाववत्वित्यादिशान्तिपाठस्य व्याख्या कृता । तथैवात्र भृगुवल्ल्यन्तेऽपि शान्तिद्वयपाठस्य व्याख्या अवगन्तव्या ॥

इति श्रीमदुदासीनवर्यामरदासपदपद्ममकरन्दतृप्तमानसेन
श्रीमदमरदासाख्येन विदुषा विरचिता तैत्तिरीयोपनिषद्व्याख्या उपनिषन्मणिप्रभा
समाप्तिं गता ।

—:○—

ॐ

॥ ॐ तत्सद्ब्रह्मणे नमः ॥

# ऐतरेयोपनिषत्

## मणिप्रभाव्याख्यासमलङ्कृता

ॐ यत्राध्यस्तमिदं सर्वं रज्ज्वामुरगवज्जगत् ।
तं वन्दे परमात्मानं कृष्णनामभृतं परम् ॥ १ ॥

ऋग्वेदीयैतरेयोपनिषदि पूर्वोक्ताध्यायत्रयेण प्राणोपासना प्रपञ्चिता । कर्मकाण्डोक्तैः कर्मभिरुपासनया च शुद्धान्तःकरणस्य तत एव साधनचतुष्टयसम्पन्नस्य ब्रह्मविद्याऽधिकारिणो ब्रह्मस्वरूपावस्थानलक्षणमोक्षसिद्धये वक्ष्यमाणाध्यायत्रयेण केवलात्मविद्यारभ्यते—

ॐ आत्मा वा इदमेक एवाग्र आसीत् ।

'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते' इति स्मृतौ आत्मशब्दार्थ उक्तः । एवं स्मृत्युक्त आत्मा द्विविधः—व्यवहारविशिष्टः केवलश्चेति । व्यवहारोऽपि त्रिविधः—जागरणं स्वप्नः सुषुप्तिश्चेति । तत्र सुषुप्तावयं जीवः स्वोपाधिविलये सति परमानन्दरूपं ब्रह्म यत् यस्मादाप्नोति प्राप्नोति तस्मादात्मेति स्मृत्युक्तं प्रथमात्मशब्दनिर्वचनं द्रष्टव्यम् । तथा च कैवल्योपनिषदि श्रूयते—'सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति' इति । अस्यायमर्थः—सुषुप्तिकाले आनन्दभोगावसरे सकले विलीने निखिले विशेषविज्ञाने स्वकारणे लयं गते तमोऽभिभूतः अज्ञानावृतः सुखस्वरूपमेति आनन्दात्मस्वरूपं गच्छतीत्यर्थः । स्वप्नावास्थायामयं जीवो जागृतिस्थपदार्थवासनाः यत् यस्मादादत्ते गृह्णाति तस्मादात्मेति द्वितीयमात्मशब्दनिर्वचनम् । तथा च वाजसनेयिन आमनन्ति—'स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय

स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' इति। अस्यायमर्थः—सः प्रकृतात्मा यत्र यस्मिन् काले प्रस्वपिति प्रकर्षेण वागादिबाह्यकरणोपरतिकालीनेन्द्रियाऽजन्यविषयगोचरापरोक्षान्तःकरणवृत्त्यवस्थारूपं स्वप्नमनुभवति, तदाऽस्य दृष्टस्य लोकस्य जागरितलक्षणस्य कथम्भूतस्य सर्वावतः सर्वा भूतभौतिकमात्रा अध्यात्मादिविभागयुक्ता विद्यन्तेऽस्येति सर्ववान् तस्य सर्वावतः छान्दसो दीर्घः। यद्वा—सर्वरवकस्य मात्रां लेशरूपां वासनाऽऽत्मिकामुपादाय गृहीत्वा स्वयमात्मैव जाग्रद्देहं तदभिमानं च विहत्य निःसम्बन्धमापाद्य स्वयं स्वयमेव स्वकर्मानुसारेण स्वप्नदेहं प्रातिभासिकं निर्माय निष्पाद्य स्वेनात्मीयेन भासा दीप्त्या वासनोपादानलक्षणान्तःकरणवृत्तिप्रकाशरूपेण स्वेन ज्योतिषा आत्मज्योतिषाऽलुप्तदृक्स्वभावेन निर्मितं वस्तु विषयीकुर्वन् प्रस्वपितीत्यर्थः। यत् यस्मादिह जाग्रदवस्थायां चक्षुरादोन्द्रियैर्बाह्यान् रूपादिविषयानत्ति भुङ्क्ते तस्मादात्मेति तृतीयमात्मशब्दार्थनिर्वचनम्। तत्रापि कैवल्यश्रुतिः—'स्त्रियाऽन्नपानादिविचित्रभोगैः स एव जाग्रत् परितृप्तिमेती'ति। अस्यायमर्थः—स्त्रियाऽन्नपानादिविचित्रभोगैः स्त्रियो मनोऽनुकूला युवतयोऽन्नपाने मनोऽनुकूले आदिशब्देन स्थानाऽऽच्छादनादीनि मनोऽनुकूलानि तैः स्त्र्यन्नपानादिभिर्विचित्रैर्भोगैः। स्त्रियेति च्छान्दसम्। स एव मायापरिमूढ एव, न त्वन्यः। जाग्रज्जागरणमिन्द्रियैर्बाह्यविषयोपलब्धिरूपं कुर्वन् परितृप्तिं सर्वतो विषयसुखजां तृप्तिमेति गच्छति सुखं दुःखं च प्राप्नोतीत्यर्थः। एवमुपाधिविशिष्टस्यात्मनोऽवस्थात्रयमुपजीव्य निर्वचनत्रयमुक्तम्। इदानीं केवलात्मपरस्यात्मशब्दस्य निर्वचनमुच्यते। यत् यस्मादस्यात्मनो भावः स्वरूपविशेषः सन्ततः परिच्छेदरहितः तस्माद् अतति सातत्येन सर्वत्र सङ्गच्छतीत्यात्मेति चतुर्थमात्मशब्दार्थनिर्वचनम्। तथा च तैत्तिरीये श्रूयते—'सत्यं ज्ञानमनन्तं ब्रह्मे'ति। अत्रानन्तपदेन देशकालवस्तुपरिच्छेदराहित्यमुक्तम्। तथा सति केवलात्मा चात्र प्रतिपिपादयिषितः। एक एवेत्युपक्रमः सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानं ब्रह्मेति सर्वस्य प्रत्यगात्मब्रह्मणि कल्पितत्वप्रतिपादके उपसंहारे च केवलात्मप्रतिपादनात् अमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवदिति फलवचनाच्च मध्ये स एतमेव पुरुषं ब्रह्म ततमपश्यदिति परामर्शान्मानान्तराविषयत्वेनापूर्वत्वावगमात् सृष्ट्याद्युक्तेरर्थवादस्य सत्त्वाच्च, स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यतेति प्रवेशवचनस्य, तस्य त्रय आवसथास्त्रयः स्वप्ना इति जाग्रदाद्यवस्थात्रयस्य स्वप्नत्वेन मिथ्यात्ववचनस्य चोपपत्त्यभिधानस्य

सत्त्वाच्चेति। वैशब्दोऽवधारणे। इदं सर्वजनैः प्रत्यक्षादिप्रमाणैः प्रतीयमानं जगत् अग्रे सृष्टेः प्राक् आत्मा वै आत्मैव आसीत् अभवत्, न तु तत्कार्यभूतं नामरूपात्मकं जगदासीत्। यथा लोके मृत्कार्यघटशरावाद्युत्पत्तेः पूर्वं मृदेवास्ति, न तु घटादिकार्यम्। तथापि मृद्गोचरशब्दप्रत्ययौ विद्येते। तथाऽत्रापि प्रसक्तौ शब्दप्रत्ययावपि वैशब्देन व्यावर्त्येते। देहेन्द्रियादीनामभावेन जिह्वानिष्पाद्यशब्दस्य मनोनिष्पाद्यप्रत्ययस्य च सुतरामभावात्। न चेदमात्मा वा आसीदिति सामानाधिकरण्यश्रवणेन नीलमुत्पलमितिवत् वैशिष्ट्यस्य प्रतिभानादात्मकेवलत्वासिद्धिरिति वाच्यम्; यश्चोरः सः स्थाणुरेवेतिवत् यज्जगत्त्वेनेदानीं प्रतिभासते तज्जगन्न भवति, किन्त्वात्मैवेति बाधायामपि सामानाधिकरण्योपपत्तेः। न चैवमप्यग्र आसीदिति पूर्वकालवचनमनर्थकम्, अद्याप्यात्माद्वैतस्य जगन्मिथ्यात्वस्य च सुवचत्वादिति वाच्यम्; इदमात्मैव भवतीत्युक्ते प्रत्यक्षविरोधान्न सहसाऽर्थग्रहणं स्यात्। प्रागेवेति बोधिते तु तन्न्यायेनेदानीमपि तथेति स्वयमेव ज्ञास्यतीत्याशयेन पूर्वकालोक्त्युपपत्तेः। यद्वा—'तद्धेदं तर्ह्यव्याकृतमासीत्' 'तम आसीत्' इत्यादिवाक्यान्तरेषु जगतो मायामयत्वमुक्तम्। इह त्वात्मरूपत्वमिति श्रुत्योर्विरोधपरिहाराय वाक्यान्तरेषु आत्मपदम्। इह त्वव्याकृतपदमुपसंह्रियते। तथा चेदमग्रेऽव्याकृतमासीद् व्याकृतं चात्मैवेत्यर्थपर्यवसानेन परिणममानाऽविद्याऽधिष्ठानतया आत्मनो विवर्तोपादानत्वं जगतो मिथ्यात्वं च सिद्ध्यति। तथा चेदानीं जगतोऽव्याकृतावस्थाविरहाद् अग्र इत्यस्य न वैयर्थ्यम्। यद्वा—इदमग्र आत्मैवासीदित्यंशेन कार्यस्य प्राग्रूपं मानान्तरसिद्धमनूद्य एक एव नान्यत्किञ्चनेत्यनेनात्मनोऽखण्डैकरसत्वं विधीयत इति न कस्यापि वैयर्थ्यम्। मानान्तरं तु उत्पत्तिप्राक्कालीनमिदं जगत् सोपादानं सकर्तृकं च, कार्यत्वात् घटादिवदित्यादिरूपं बोध्यम्। नहि कर्त्रुपादानयोर्भेदोऽस्ति गौरवप्रसङ्गात्। एवमुक्तात्मनोऽखण्डैकरसत्वमेकादिशब्दैः स्पष्टीक्रियते। यथा लोके वृक्षादौ स्वगतः सजातीयो विजातीयश्चेति त्रिविधो भेदो दृश्यते। तत्र स्कन्धशाखापत्रादिप्रतियोगिको वृक्षस्य स्वगतभेदोऽस्ति। वृक्षान्तरप्रतियोगिकः सजातीयः। पाषाणादिप्रतियोगिको विजातीयश्च। एवमात्मनोऽपि भेदत्रयप्रसक्तौ एकशब्देन स्वगतभेदो व्यावर्त्यते। तथा च एकः स्वगतभेदरहित इत्यर्थः। एवकारेणात्मान्तर व्यावर्त्यते। योऽयमेकः स एव न त्वन्यः कश्चित् सजातीयोऽस्तीत्यर्थः।

विजातीयभेदं व्यावर्तयति—

नान्यत् किञ्चन मिषत् ॥

अन्यत् प्रकृतात्मनो विलक्षणं किञ्चन किञ्चिदपि वस्तु न मिषत् धातूनामनेकार्थत्वान्नासीदित्यर्थः । न च ब्रह्मणो जगदुपादानत्वाय स्वीकृतया मायाशक्तेः पुरापि सत्त्वात् कथं विजातीयनिषेध इति वाच्यम्; आत्मशक्तित्वेन अवस्तुत्वेन च मायायाः पृथग्गणनाऽयोग्यत्वात् । यद्वा मिषत् सव्यापारं नासीत् । तथा च निर्व्यापारस्य परिणाम्युपादानस्य सत्त्वेऽपि न क्षतिः । यद्वा मिषत् स्वतःसत्ताकं नासीत् । तथा चाग्रेऽधिष्ठानसत्ताकस्य सत्त्वेऽपि न क्षतिः । न च कालस्याऽपि सृष्ट्यन्तर्भावात् कालवाचकोऽग्रशब्दोऽनुपपन्न इति वाच्यम्; प्राक्काले घटशरावादिकं मृदेवासीदित्यादिवाक्येषु कालासम्बन्धेनैव बोधनस्य प्रसिद्धत्वेन अत्रापि तथैव बोधयितुं कालसम्बन्धारोपोपपत्तेः । दीपिकायां तु पररीत्या परो बोधनीय इति न्यायेन परमते कालस्य नित्यत्वेन प्रागपि विद्यमानत्वात् तद्रीत्या कालसम्बन्धोपपत्तिरित्युक्तम् । न चात्मा वा आसीदिति सत्तावैशिष्ट्यमेव प्रतीयते कर्तुः क्रियाश्रयत्वादिति वाच्यम्; सविता प्रकाशत इत्यादौ कर्तृवाचिप्रत्ययस्य साधुत्वमात्रार्थत्वेन लक्षणयाऽभेदार्थकत्वेन वा सवितुः प्रकाशरूपत्वप्रत्ययवदात्मन एव सद्रूपत्वप्रतीतेः आत्मातिरिक्तसत्ताजात्यभावाच्च ॥

एवं सूत्रितमात्मनोऽखण्डैकरसत्वं साधयितुमुपक्षिप्तं जगतो मिथ्यात्वमध्यारोपापवादाभ्यां दृढीकर्तुमध्यायशेषः । तत्रापि स जातो भूतानीत्यतः प्राक्तनो ग्रन्थोऽध्यारोपार्थः । तत्प्रभृति ग्रन्थोऽपवादार्थः । तत्रापि वाचारम्भणन्यायेनात्मातिरिक्तस्य विकारस्य मृषात्वं वक्तुं सृष्टिवाक्यम् । तत्र स्रष्टुरात्मनः सम्भावितं चेतनत्वं दृढीकर्तुमीक्षणमाह—

स ईक्षत लोकान्नु सृजा इति ॥ १ ॥

सः 'आत्मा वा' इत्यनेन सूचितः परमेश्वरः एकः सन्नीक्षत इच्छां कृतवान् । नन्वेकस्याखण्डस्य कथमीक्षणमुपपद्यते साधनाभावादित्याशङ्क्य न तस्य साधनापेक्षेत्यभिप्रेत्य एकः सन्नपि परमेश्वरः सर्वज्ञस्वरूपत्वादीक्षत इति युक्तमुक्तम् । ईक्षत इत्यत्र अडागमाभावश्छान्दसः । ईक्षणस्वरूपमेवाह—लोकान्नु सृजा इति । नुशब्दो वितर्कार्थे । लोकान् प्राणिकर्मफलभोगस्थानभूतान् पृथिव्यादीन् सृजै अहं सर्जनं करवाणीति ईक्षणं कृतवानित्यर्थः ॥ १ ॥

स इमाँल्लोकानसृजत । अम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः। पृथिवी मरो या अधस्तात्ता आपः ॥ २ ॥

सः परमेश्वरः एवं ईक्षणं कृत्वा इमां वक्ष्यमाणलोकानम्भः-प्रभृतीन् प्राणिनां कर्मफलभोगस्थानान् असृजत सृष्टवान् । यद्यपीह त्वात्मा वा इदमेक एवासीदिति केवलात्मतत्वं प्रकृतम्, तथापि निर्विकारस्य जगद्भावापत्त्यसम्भवेन 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुत्यन्तराभ्यां मायाशक्तिरप्यत्रार्थादुक्तेति द्रष्टव्यम् । यद्यपि लोकान्नु सृजा इति ईक्षणमात्रश्रवणेन कुलालवन्निमित्तकारणत्वमेव प्रतीयते न तूपादानत्वम् ; तथापि 'सोऽकामयत बहु स्यां प्रजायेये'ति शाखान्तरगतस्वबहुभवनबोधकवाक्यस्य गुणोपसंहारन्यायेनात्र उपसंहारादुपादानत्वमपि सिद्ध्यति । तथा च भगवता व्यासेनोक्तम्—'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति । अस्यायमर्थः—अयं परमात्मा प्रकृतिरुपादानकारणं चकारान्निमित्तत्वं चापि भवति, कुतः ? 'प्रतिज्ञादृष्टान्तानुपरोधात्'—'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात'मित्येकात्मज्ञानेन सर्वविज्ञानप्रतिज्ञा। 'यथा सोम्यैकेन मृत्पिण्डेन न सर्वं मृण्मयं विज्ञातं स्यादि'ति दृष्टान्तश्च । तयोः प्रतिज्ञादृष्टान्तयोः सामञ्जस्यादिति । स्रष्टव्यानां लोकानां भौतिकत्वेन भूतोत्पत्तिव्यतिरेकेण तेषामुत्पत्त्यसम्भवाद् भूतसृष्टिरप्यत्रोपसंहरणीया । सा च तैत्तिरीये आम्नायते—'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी' इति । कान् लोकानसृजत इत्याकाङ्क्षायां स्वस्वनाम्ना तान्निर्दिशति—'अम्भो मरीचीर्मरमाप' इति । आकाशाद्युत्पत्तिक्रमेणाण्डमुत्पाद्य अम्भः मरीचीः मरम् आप इति नामकान् लोकान्सृजतेत्यर्थः, अम्भआदिशब्दानां लोकेष्वप्रसिद्धत्वात् । अतः स्वयमेव श्रुतिस्तान् शब्दान् व्याचष्टे—'अदोऽम्भ' इति । दिवं परेण द्युलोकस्योपरि महर्लोक-जनलोक-तपोलोक-सत्यलोकाख्या ये लोकाः या च द्यौः प्रतिष्ठा सर्वेषां देवानामाश्रयभूतो द्युलोकः अदोऽम्भः एतत् सर्वमम्भःशब्दवाच्यो लोक इत्यर्थः । लोकानां पाञ्चभौतिकत्वेऽप्यपां भरणादप्प्राधान्यमभिप्रेत्याऽदोऽम्भ इत्युक्तम् । अन्तरिक्षं मरीचयः द्युलोकादधस्तादन्तरिक्षलोकः सूर्यस्य मरीचीनामाधारत्वान्मरीचिशब्देन सूर्यकिरणसम्बन्धादन्तरिक्षलोकं लक्षयित्वा तस्यैकत्वेऽप्यनेकस्थानभेदान्मरीचय इति बहुवचनमुक्तम् । पृथिवी मरः .भूलोकस्थप्राणिनां

सहसा म्रियमाणत्वात् मरशब्देन भूलोक उपलक्ष्यते। याः प्रसिद्धा अधस्तात् पृथिव्या अधोवर्तिन्यः पातालादिविशेषभोगभूमयः सन्ति, ताः उक्तलक्षणाः सर्वाः तत्तल्लोकवासिभिर्नागादिभिराप्यमानत्वादपि इत्युच्यन्त इत्यर्थः॥ २॥

एवं लोकसृष्टिमुक्त्वा लोकपालसृष्टिं श्रुतिराह—

स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति।

सोऽद्भ्य एव पुरुषं समुद्धृत्याऽमूर्च्छयत्॥ ३॥

सः प्रकृतः परमेश्वरः पुनरेवैक्षत, अव्ययानामनेकार्थत्वात् नुशब्दस्तुशब्दार्थः। वैलक्षण्यं लोकानामाह—इमे नु पूर्वोक्तास्त्वम्भःप्रभृतयो मया सृष्टा लोकाः तत्परिपालयितृवर्जिता विनश्येयुस्तस्मादम्भःप्रभृतिलोकानां रक्षणार्थं लोकपालान् लोकानां पालयितॄन् देवान् नु निश्चयेन सृजै अहं सृजे इति एवं ईक्षत ईक्षणं कृतवानिति पूर्वेण सम्बन्धः। सः ईक्षणवानीश्वरः अद्भ्य एव अप्शब्देन तल्लक्षितपञ्चभूतेभ्य एव पुरुषं पुरुषाकारं शिरःपाण्यादिमन्तं विराजं समुद्धृत्याऽद्भ्यः सम्यक् उपादाय अमूर्च्छयत् मूर्तं कठिनमकरोत्। यथा कुलालस्तडागस्थजलस्याधस्तादार्द्रां मृदमानीय शोषयित्वा कठिनं पिण्डं करोति तद्वदित्यर्थः॥ ३॥

विराडुत्पत्तिमुक्त्वा तदवयवेभ्यो लोकपालोत्पत्तिमाह—

तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डम्। मुखाद् वाग् वाचोऽग्निः। नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुः। अक्षिणी निरभिद्येतामक्षीभ्यां चक्षुश्चक्षुष आदित्यः। कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद् दिशः। त्वङ् निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयः। हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमाः। नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः। शिश्नं निरभिद्यत शिश्नाद् रेतो रेतस आपः॥ ४॥

इति प्रथमः खण्डः॥ १॥

तं विराट्पुरुषम् अभ्यतपत् तच्छिद्रतद्गतेन्द्रियतत्तदभिमानिदेवता-सृष्ट्यर्थं परमेश्वरः पर्यालोचितवान्। अभितप्तस्य अभितो विचारितस्य तस्य विराट्पिण्डस्य मुखं मुखाकारच्छिद्रं निरभिद्यत विदारित-मभूत्। यथाऽण्डं पक्षिसर्पादीनां पक्वमण्डं येन प्रकारेण निर्भिन्नं भवति तद्वत्। मुखात् मुखाकारच्छिद्रात् वाग् वागिन्द्रियं निष्पन्नमिति शेषः। यद्यपि वागादिकरणजातमपञ्चीकृतभूतकार्यं न मुखादिगोलककार्यम्; तथापि मुखाश्रये तदभिव्यक्तेः मुखाद् वागित्युक्तमिति भावः। वाचः वागिन्द्रियात् अग्निः लोकपालो वागधिष्ठात्री देवता निष्पन्ना। एव-मुत्तरपर्यायेष्वपि छिद्रेन्द्रियदेवतानां चोत्पत्तिर्व्याख्येया। तथा नासिके नासाच्छिद्रे निरभिद्येताम् अजायेताम्। नासिकाभ्यां प्राण इत्यत्र प्राण-शब्देन प्राणवृत्तिसहितं घ्राणेन्द्रियमुच्यते। तथा च नासिकाभ्यां घ्राणे-न्द्रियमजायतेति शेषः। प्राणाद् वायुः घ्राणेन्द्रियाद् वायुरूपदेवताऽजायत। अक्षिणी छिद्रे निरभिद्येताम् अजायेताम्। अक्षीभ्याम् उक्तच्छिद्राभ्यां चक्षुः चक्षुरिन्द्रियमजायतेति शेषः। चक्षुषः चक्षुरिन्द्रियादादित्यः सूर्यो देवताऽजायत। कर्णौ कर्णच्छिद्रौ निरभिद्येताम् अजायेतां कर्णाभ्यां उक्तकर्णच्छिद्राभ्यां श्रोत्रं श्रोत्रेन्द्रियम् अजायतेति शेषः। श्रोत्राद् दिशः श्रोत्रेन्द्रियाद् दिग्देवताऽजायत। त्वक् त्वग्गोलकं चर्म निरभिद्यत त्वचो त्वग्गोलकात् लोमानि लोमशब्देन लोमाधारभूतत्वङ्निष्ठं स्पर्शनेन्द्रियमुच्यते तदजायत। लोमानीत्यत्र बहुवचनं छान्दसम्। लोमभ्यः लोमाधारस्पर्शनेन्द्रियादोषधिवनस्पतयः ओषध्यादिशब्देन तदधिष्ठात्री वायुदेवतोच्यते। हृदयशब्दस्यान्तःकरणार्थत्वदर्शनात् मनः-शब्देनाऽपि तस्यैवाभिधाने पौनरुक्त्यमित्याह—हृदयमि त। हृदयम् अष्टदलं हृदयकमलं निरभिद्यत अजायत। हृदयात् हृदयकमलान्मनः अन्तःकरणमजायतेति शेषः। मनसोऽन्तःकरणात् तदधिष्ठात्री चन्द्रमा देवता निरभिद्यतेति पूर्वेणान्वयः। नाभिः गुदमूलं नाभ्याः गुद-च्छिद्रात् अपानः अपानसम्बन्धि पाय्विन्द्रियम् अपानात् पाय्विन्द्रियात् मृत्युः पाय्विधिष्ठात्री देवता यमः निरभिद्यत अजायत। शिश्नं प्रज-ननोपस्थेन्द्रियगोलकं निरभिद्यत। शिश्नात् उपस्थेन्द्रियगोलकात् रेतः वीर्यविसर्गनिमित्तभूतमुपस्थेन्द्रियम्। रेतसः उपस्थेन्द्रियात् आपः अप्शब्देन तल्लक्षितपञ्चभूतोपाधिकः प्रजापतिरधिष्ठात्री देवता निर-भिद्यतेति पूर्वेणान्वयः। एवं सर्वत्र पर्यायेषु गोलकम् इन्द्रियं देवता चेति त्रयं क्रमेग निर्भिन्नमुक्तमित्यर्थः॥ ४॥

इति प्रथमः खण्डः॥

एवं पूर्वखण्डे समष्टीनामिन्द्रियाणां तदभिमानिदेवतानां च सृष्टिरुक्ता। इदानीं तासां देवतानां भोगयोग्याल्पदेहसृष्टिं व्यष्टिदेहेषु भोगार्थं देवतानां व्यष्टिरूपेण प्रवेशं च विवक्षुस्तदुपोद्धातत्वेन क्षुत्-पिपासयोः सृष्टिं दर्शयति—

ता एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतँस्तमशनाया-पिपासाभ्यामन्ववार्जत्। ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ॥ १ ॥

ता एताः उक्तलक्षणाः इन्द्रियतदभिमानिदेवताः अग्न्यादयः सृष्टा ईश्वरेणोत्पादिताः सत्यः अस्मिन् पूर्वोक्ते महत्यर्णवे समुद्रवदत्यन्त-विस्तृते ब्रह्माण्डरूपे विराड्देहे प्रापतन् प्रकर्षेण पतिता अभूवन्। तं पूर्वोक्तं स्थानकरणदेवतोत्पत्तिबीजभूतं पुरुषं प्रथमोत्पादितं विराट्-शरीरम्। अशनायापिपासाभ्यां क्षुत्तृड्भ्याम् अन्ववार्जन् अनुगमितवान् संयोजितवानित्यर्थः। अल्पदेहसृष्टिमाह—ता एनमिति। तास्ततोऽश-नायापिपासाभ्यां पीड्यमाना इन्द्रियतदभिमानिदेवताः एनं स्वस्रष्टारं पितामहं परमेश्वरं अब्रुवन् उक्तवत्यः। तदुक्तिमाह—भोः परमेश्वर नः अस्मभ्यम् आयतनं शरीरं प्रजानीहि विधत्स्व अवधारय सम्पादयेति यावत्। यस्मिन् शरीरे प्रतिष्ठिताः स्थिताः अन्नं भोग्यरूपम् अदाम भक्ष-याम इति एनमब्रुवन्निति पूर्वेणान्वयः। तासामयमाशयः—अत्यन्त-विस्तीर्णोऽयं विराड्देहः अस्माकं भोगयोग्यो न भवति। यतोऽतिप्रौढं विराड्देहमापूर्य तत्र स्थातं वयमसमर्थाः। एतद्देहपर्याप्तमन्नं च वयं सम्पादयितुं न क्षमाः। अतो यस्मिन्नल्पशरीरे स्थिताः सत्यः वयं देहपर्याप्त-मन्नं सम्पादयितुं शक्ता भवामः तादृशं व्यष्टिशरीरं सृजेति ॥ १ ॥

एवमुक्त ईश्वरः—

ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति। ताभ्योऽश्व-मानयत्ता अब्रुवन् न वै नोऽयमलमिति ॥ २ ॥

ताभ्यः देवताभ्यः गां गवाऽऽकृतिविशिष्टं पिण्डम् आनयत् पञ्च-भूतेभ्यः समुद्धृत्य दर्शितवान्। ताः देवताः गवाऽऽकृतिं दृष्ट्वा अब्रुवन् उक्तवत्यः नोऽस्माकं अयं गोपिण्डः न वै अलं भोगक्षमो नैव भवति गोशरीरस्योपरिदन्तानामभावेन दूर्वादिमूलस्योत्खातुमशक्यत्वे उप-भोगासमर्थत्वादतोऽन्यं देहम् उभयतो दन्तवन्तं सृज इति एवमब्रुवन्निति

योजना। एवं गोशरीरे प्रत्याख्याते सति ताभ्यः देवताभ्यः अश्वमानयत् पञ्चभूतेभ्योऽश्वशरीरं समुद्धृत्य आनीतं दर्शितवान्। ताः देवताः अश्वाकृतिं दृष्ट्वा इति एवम् अब्रुवन् उक्तवत्यः अश्वशरीरस्योभयतो दन्तवत्त्वेनोक्तदोषाभावेऽपि पशुत्वेन विवेकायोग्यत्वादयं अश्वदेहोऽपि नोऽस्माकं न वै अलं विवेकज्ञानाभावाद् भोगाय पर्याप्तो नैव भवति। गवाऽश्वशरीरग्रहणस्य सर्वतिर्यग्देहोपलक्षकत्वमभिप्रेत्येत्युक्तमिति भावः॥ २॥

एवं सर्वशरीरे दर्शिते प्रत्याख्याते सति—

ताभ्यः पुरुषमानयत् ता अब्रुवन् सुकृतं बतेति। पुरुषो वाव सुकृतम्। ता अब्रवीद्यथाऽऽयतनं प्रविशतेति॥ ३॥

ताभ्यः देवताभ्यः पुरुषं पुरुषशरीरम् आनयत् परमेश्वरम् आनीतवान् ताः देवताः पुरुषशरीरं दृष्ट्वाऽखिन्नाः सत्यः बतेति हर्षे। सुकृतं परमेश्वरेण शोभनं कृतम् इति एवमब्रुवन्, यतो लोकेऽपि पुरुषो वाव पुरुषशरीर एव सुकृतं 'सुकृतं तु शुभे पुण्ये' इति मेदिन्युक्तेः। पश्वाद्यपेक्षया सर्वपुण्यकर्महेतुत्वात् शोभनं कृतमित्यर्थः। एवमीश्वररचितेषु भोगयोग्यव्यष्टिदेहेषु करणानां देवतानां च व्यष्टिरूपेण स्वस्वस्थाने प्रवेशाय ईश्वरस्यानुज्ञां दर्शयति—ता इति। ताः देवताः प्रतीश्वरोऽब्रवीत् उक्तवान् यथाऽऽयतनं यस्य यद्वदनादिक्रियायोग्यं यद्यद्गोलकरूपस्थानमस्ति तदनतिक्रम्य प्रविशत प्रवेशं कुरुत, यथा राज्ञोऽनुज्ञां प्रतिलभ्य सेनापत्यादयो नगर्यां स्वस्वस्थाने प्रविशन्ति। इति एवमीश्वरस्यानुज्ञां प्रतिलभ्य अग्नयादयोऽपि देवताः मुखादिस्वस्वस्थाने प्राविशन्नित्यर्थः॥ ३॥

एवमीश्वरेणानुज्ञातानां देवतानां स्वस्वस्थाने प्रवेशं दर्शयति—

अग्निर्वाग् भूत्वा मुखं प्राविशत्। वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशँश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशत्॥ ४॥

अग्निः वागिन्द्रियाभिमानी देवः वाग्भूत्वा वागिन्द्रियेऽन्तर्भूय मुखं मुखात्मकच्छिद्रं प्राविशत् प्रवेशं कृतवान्। यद्यपि वागभिमानी देवोऽग्निः वागिन्द्रियम्, तथाप्यग्निरूपदेवस्य वाचं विना प्रत्यक्षमनुपलब्धेः

वाचोऽपि देवतां विना स्वविषयग्रहणासामर्थ्यात् तयोरेकलोलीभावेनाभेदोक्तिरिति भावः। यद्यपि देवतानामेवेश्वरेण प्रवेश उक्तो न त्विन्द्रियाणाम्, तथापि करणैर्विना देवतानां साक्षाददनादिभोगासम्भवात् तेषामपि प्रवेशोऽर्थादुक्त एवेति बोध्यम्। वायुः देवतारूपः प्राणो भूत्वा घ्राणेन्द्रियेऽन्तर्भूय नासिके नासाच्छिद्रे प्राविशत् प्रवेशं कृतवान्। आदित्यः सूर्यो देवतारूपः चक्षुर्भूत्वा चक्षुरिन्द्रियेऽन्तर्भूय अक्षिणी छिद्रे प्राविशत्। पूर्ववद् व्याख्येयं सर्वत्र। दिशः दिग्देवतारूपाः श्रोत्रं भूत्वा श्रोत्रेन्द्रियेऽन्तर्भूय कर्णौ कर्णच्छिद्रे प्राविशन्। ओषधिवनस्पतयः ओषध्याद्यधिष्ठाता वायुः देवतारूपः लोमानि भूत्वा लोमाधारभूतत्वङ्निष्ठं स्पर्शनेन्द्रियं भूत्वा त्वचं स्पर्शनेन्द्रियस्थानं चर्मात्मकं प्राविशत् प्रवेशं कृतवान्। चन्द्रमा देवता मनो भूत्वा मनोऽन्तर्भूय हृदयं अष्टदलाकारं हृदयकमलं प्राविशत्। मृत्युः यमरूपो देवताऽपानो भूत्वा पाय्विन्द्रियं भूत्वा नाभिं पायुस्थानं गुदमूलं प्राविशत्। आपः अप्शब्देन लक्षितपञ्चभूतोपाधिकः प्रजापतिरधिष्ठात्री देवता रेतो भूत्वा उपस्थेन्द्रियं भूत्वा शिश्नम् उपस्थेन्द्रियगोलकं प्राविशदित्यर्थः॥ ४॥

अशनायापिपासयोपि व्यष्टिदेहेऽपि करणाधिष्ठातृदेवतासम्बन्धप्रवेशं प्रश्नपूर्वकं दर्शयति—

तमशनायापिपासे अब्रूतामावाभ्यामभिप्र जानीहीति। ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति। तस्माद् यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनायापिपासे भवतः॥ ५॥

इति द्वितीयः खण्डः॥ २॥

तं परमेश्वरम अशनायापिपासे क्षुत्तृषे इति एवम् अब्रूताम् उक्तवत्यौ। तयोरुक्तिमाह—आवाभ्यामिति। हे परमेश्वर आवाभ्यां क्षुत्पिपासाभ्याम् अभिप्रजानीहि स्थानविशेषं चिन्तय सम्पादयेति यावत्। परमेश्वरस्तु तयोः स्थानविशेषमदृष्ट्वा एतासु उक्तलक्षणासु देवतास्वेव अग्न्यादिरूपदेवतास्वेव वां युवाम् आभजामि भागैकदेशप्रदानेनानुगृह्णामि। उक्तमेव स्पष्टीकरोति—एतासु भागिन्याविति। एतासु अग्न्यादिदेवतासु यद्दैवत्यो भागो हविरादिलक्षणः स्यात् तस्याः तेनैव भागेन भागिन्यौ भागवत्यौ वां युवां करोमि इति। एवं ते अशनायापिपासे प्रति परमेश्वरः अब्रवीत् उक्तवानिति योजना। उक्तमर्थमिदानीन्तनलोकव्यवहारेण दृढीकर्तुमाह—तस्मादिति। यस्मात् सृष्ट्यादावीश्वरेणैव-

मुक्तम् तस्मात् कारणात् लोके इदानीमपि यस्यै कस्यै च देवतायै अग्न्यादिदेवतार्थं हविः चरुपुरोडाशादिलक्षणं भोग्यवस्तु गृह्यते समर्प्यते अस्याम् अग्न्यादिदेवतायाम् अशनायापिपासे क्षुत्तृषे अपि भागिन्यावेव भागवत्यौ एव भवतः। तथा च हविषाऽग्न्यादिदेवतातृप्तौ अशनायापिपासयोरपि तृप्तिरूपशान्तिर्जायत इति तद्भागेन भागवत्त्वमुक्तमित्यर्थः। न च चक्षुरादिना रूपादिग्रहणदशायामशनायापिपासयोर्न शान्तिर्दृश्यत इति न सर्वत्र भागवत्त्वं तयोरिति शक्यम्। क्षुत्पिपासार्तस्यान्नपानदर्शनश्रवणादिना अन्नपानप्रत्यासत्तिपरितोषेण मनसि तृष्णा शान्तेव भाति न तु यथापूर्वं बाधत इति चक्षुरादिष्वपि तयोर्भागवत्त्वमुक्तम्॥ ५॥

इति द्वितीयः खण्डः

एवं देवानामिन्द्रियाणां चोत्पत्तिमभिधाय तेषां प्रवृत्तिहेतुभूतयोरशनायापिपासयोश्च भोगसाधनसृष्टिमुक्त्वा इदानीं भोग्यसृष्टिमाह—

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति॥ १॥

सः ईश्वरः इति एवम् ईक्षत ईक्षणं कृतवान्। ईक्षणस्वरूपमाह—इमे इति। नुशब्दो वितर्कार्थे। इमे पूर्वोक्ताः लोकाः पृथिव्यादयः लोकपालाः सेन्द्रियशरीरादिदेवतारूपाश्च मया सृष्टा इति शेषः। अतोऽन्नमन्तरेण तेषां जीवनासम्भवात् एभ्यः उक्तलोकलोकपालेभ्यः अन्नं व्रीहियवादिलक्षणं सृजै सृजेऽहमित्यर्थः॥ १॥

सोऽपोऽभ्यतपत् ताभ्योऽभितप्ताभ्यो मूर्तिरजायत। या वै सा मूर्तिरजायताऽन्नं वै तत्॥ २॥

सः परमेश्वरः अपः अप्शब्देन लक्षितानि पञ्चभूतानि अभ्यतपत् एतेभ्यो भूतेभ्यो मानुषाणां व्रीह्यादिरूपं पशूनां तृणादिरूपं सिंहादीनां मृगादिरूपं सर्पादीनां वाय्वादिरूपं मार्जारादीनां मूषकादिरूपमन्नं जायतामिति पर्यालोचनं सङ्कल्पं कृतवानित्यर्थः। ताभ्यः अद्भ्यो जलोपलक्षितभूतेभ्यः अभितप्ताभ्यः अन्नोपादानत्वेन पर्यालोचितेभ्यः मूर्तः घनीभूतं द्रव्यं चराचरात्मकम् अजायत उत्पन्नम्। या वै प्रसिद्धा सा उक्तलक्षणा मूर्तिरजायत तत् वै तदेव मूर्तिरूपम् अन्नं प्राणिनामदनीयमित्यर्थः॥ २॥

अन्नसृष्टिमुक्त्वाऽन्वयव्यतिरेकाभ्यां तद्ग्रहणसाधनं निश्चिनोति—

तदेनदभिसृष्टं पराङत्यजिघांसत्। तद्वाचाऽजिघृक्षत्। तन्ना-

शक्नोद्वाचा ग्रहीतुम्। स यद्धैनद् वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् ॥ ३ ॥

तत् श्रुत्युक्तम् एतत् व्रीहियवादिरूपमन्नम् अभिसृष्टं लोकपालादीनामभिमुखेनोत्पादितं सत् पराङ् परागञ्चतीति पराङ् बहिर्मुखमेव स्थितं सत् अत्यजिघांसत् स्वात्तनतीत्यातिगन्तुमैच्छत् पलायितुं प्रारभतेत्यर्थः। यद्यपि सूपकादिरूपस्यान्नस्य चेतनत्वात् पलायनं सम्भवति न त्वचेतनस्य व्रीहियवाद्यन्नस्य, तथापि भोक्तृशरीरान्तर्न प्रविष्टं किन्तु बहिरेव स्थितमित्येव श्रुतेस्तात्पर्यम्। तत् व्रीहिमूषकादिरूपमन्नं पलायितुमुद्युक्तमिव दृष्ट्वा स लोकलोकपालसङ्घातः कार्यकरणलक्षणः पिण्डस्तदन्नं वाचा वागिन्द्रियेणाजिघृक्षत् ग्रहीतुमैच्छत्। तत् व्रीह्याद्यन्नं वाचा वागिन्द्रियेण ग्रहीतुम् उपादातुं नाशक्नोत् न समर्थोऽभवत्। इदानीन्तनोदाहरणेन सृष्टिकालीनाऽन्नग्रहणशक्तिं स्पष्टीकरोति—स इति। सः प्रथमजो भोक्तृवर्गः यत् यदि ह प्रसिद्धम् एनम् उक्तमन्नं वाचा वागिन्द्रियेण अग्रहैष्यत् गृहीतवान् स्यात्, तर्हि तत्कार्यवर्गोऽपि सर्वजनः ह प्रसिद्धम् अन्नं व्रीह्यादिलक्षणम् अभिव्याहृत्यैव तद्वाचकैः शब्दैरभिधायैव अत्रप्स्यत् तृप्तोऽभविष्यत्। न हि वागिन्द्रियस्याभिधानव्यतिरेकेण किञ्चिदप्याकर्षणसामर्थ्यमस्ति। न ह्यन्नवाचकशब्दोच्चारणमात्रेण तृप्तिश्च दृश्यते। अत एव सृष्टिकालेऽपि वाचाऽन्नग्रहणसामर्थ्यं नास्तीत्यनुमीयते इति भावः ॥ ३ ॥

तत्प्राणेनाजिघृक्षत् तन्नाशक्नोत् प्राणेन ग्रहीतुम्। स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् ॥ ४ ॥

तत् पूर्वोक्तमन्नं प्राणेन घ्राणेन्द्रियेण अजिघृक्षत् ग्रहीतुमैच्छत् तत् व्रीह्याद्यन्नं प्राणेन घ्राणेन्द्रियेण ग्रहीतुम् उपादातुं नाशक्नोत् न समर्थोऽभवत्। स प्रथमजः शरीरी यत् यदिह प्रसिद्धम् एनत् उक्तमन्नं प्राणेन घ्राणेन्द्रियेण अग्रहैष्यत् गृहीतवान् स्यात् तर्हि तत्कार्यवर्गः सर्वोऽपि जनः ह प्रसिद्धम् अन्नं व्रीह्यादिलक्षणम् अभिप्राण्यैव आघ्रायैव अत्रप्स्यत् तृप्तोऽभविष्यत् ॥ ४ ॥

तच्चक्षुषाऽजिघृक्षत् तन्नाशक्नोच्चक्षुषा ग्रहीतुम्। स यद्धैनच्चक्षुषाऽग्रहैष्यद् दृष्ट्वा हैवान्नमत्रप्स्यत् ॥ ५ ॥

तत् उक्तान्नं चक्षुषा चक्षुरिन्द्रियेण अजिघृक्षत् ग्रहीतुमैच्छत्। तत् व्रीह्यादिलक्षणान्नं चक्षुषा चक्षुरिन्द्रियेण ग्रहीतुम् उपादातुं नाशक्नोत्

न समर्थोऽभवत्। सः प्रथमजः शरीरी यत् यदिह प्रसिद्धम् एनत् उक्तान्नं चक्षुषा चक्षुरिन्द्रियेण अग्रहैष्यत् गृहीतवान् स्यात्, तर्हि तत्कार्यवर्गः सर्वोऽपि जनः ह प्रसिद्धम् अन्नं दृष्ट्वैव अत्रप्स्यत् तृप्तोऽभविष्यत् ॥ ५ ॥

तच्छ्रोत्रेणाजिघृक्षत् तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम्।

स यद्धैनत् श्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् ॥ ६ ॥

तत् पूर्वोक्तान्नं श्रोत्रेण श्रोत्रेन्द्रियेण अजिघृक्षत् ग्रहीतुमैच्छत् तत् व्रीह्यादिलक्षणमन्नं श्रोत्रेण ग्रहीतुं नाशक्नोत्। सः प्रथमजः शरीरी यत् यदिह प्रसिद्धम् एनत् उक्तमन्नं श्रोत्रेण श्रोत्रेन्द्रियेण अग्रहैष्यत् गृहीतवान् स्यात् तर्हि तत्कार्यवर्गोऽपि सर्वजनः ह प्रसिद्धम् अन्नं श्रुत्वैव अन्नवाचकशब्दं श्रुत्वैव अत्रप्स्यत् तृप्तोऽभविष्यत् ॥ ६ ॥

तत्त्वचाऽजिघृक्षत् तन्नाशक्नोत्त्वचा ग्रहीतुम्। स

यद्धैनत् त्वचाऽग्रहैष्यत् स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥ ७ ॥

उक्तमन्नं त्वचा त्वगिन्द्रियेण अजिघृक्षत् ग्रहीतुमैच्छत् तत् उक्तमन्नं त्वचा त्वगिन्द्रियेण ग्रहीतुम् उपादातुं नाशक्नोत् न समर्थोऽभवत्। सः प्रथमजः शरीरी यत् यदि ह प्रसिद्धम् एनत् उक्तमन्नं त्वचा त्वगिन्द्रियेण अग्रहैष्यत् गृहीतवान् स्यात्, तर्हि तत्कार्यवर्गोऽपि सर्वजनः ह प्रसिद्धम् अन्नं स्पृष्ट्वैव अत्रप्स्यत् ॥ ७ ॥

तन्मनसाऽजिघृक्षत् तन्नाशक्नोन्मनसा ग्रहीतुम्।

स यद्धैनन्मनसाऽग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत् ॥ ८ ॥

तत् पूर्वोक्तान्नं मनसा अन्तःकरणेन अजिघृक्षत् ग्रहीतुमैच्छत् तत् उक्तान्नं मनसा ग्रहीतुं नाशक्नोत्। सः प्रथमजः शरीरी यत् यदि ह प्रसिद्धम् एनत् उक्तमन्नं मनसाऽग्रहैष्यत् गृहीतवान् स्यात्, तर्हि तत्कार्यवर्गोऽपि सर्वजनः ह प्रसिद्धम् अन्नं मनसा ध्यात्वैव अत्रप्स्यत् ॥ ८ ॥

तच्छिश्नेनाजिघृक्षात् तन्नाशक्नोच्छिश्नेन ग्रहीतुम्।

स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत् ॥ ९ ॥

तत् व्रीह्यादिलक्षणान्नं शिश्नेन उपस्थेन्द्रियेण अजिघृक्षत् ग्रहीतुमैच्छत् तत् उक्तान्नं शिश्नेन ग्रहीतुं नाशक्नोत् सः प्रथमजः शरीरी

यत् यदि ह प्रसिद्धम् एतत् उक्तान्नं शिश्नेन अग्रहीष्यत् गृहीतवान् स्यात् तर्हि तत्कार्यवर्गोऽपि सर्वजनः ह प्रसिद्धं विसृज्यैव अन्नं वीर्यवत् त्यक्त्वैव अत्रप्स्यत् ॥ ९ ॥

एवं तत्प्राणेन तच्चक्षुषा तच्छ्रोत्रेण तत्त्वचा तन्मनसा तच्छिश्नेन तेन तेन करणव्यापारेण अन्नं ग्रहीतुमशक्नुवन् पश्चात्—

तदपानेनाजिघृक्षत् तदावयत् ।

सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः ॥ १० ॥

तत् उक्तमन्नम् अपानेन मुखद्वारेणान्तर्गच्छता वायुना अजिघृक्षत् ग्रहीतुमैच्छत् तत् अन्नम् आवयत् जग्राह अशितवानिति यावत् । एवं वायोरन्नग्रहणसाधनत्वं निश्चित्य तद्दार्ढ्यार्थं वायुं प्रशंसति—सैष इति । यत् यः वायुः मुखबिलादन्तश्चारी वायुरस्ति सः उक्तरूपः एषः सर्वजनप्रसिद्धोऽपानः अन्नस्य व्रीह्यादिरूपस्य ग्रहः ग्राहकः यद्वायुः योऽपानसंज्ञको वायुः एषः उक्तलक्षणोऽपानः अन्नायुर्वा अन्नद्वारा आयुषो हेतुरेव । यद्वा—अन्नमायुर्जीवनं यस्य सोऽन्नायुरिति । वै प्रसिद्धं तत्र कौषीतकिनः समामनन्ति । यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुरित्यायुष्यहेतुत्वं प्राणस्य सिद्धम् ॥ १० ॥

एवमपानवृत्तिमत्प्राणनिष्ठस्य अन्नपानग्रहणलक्षणस्य भोगस्यात्मनः संसारित्वसिद्ध्यर्थं सृष्टिमभिधाय इदानीं भोगस्वामिनं दर्शयितुं स्रष्टुरीश्वरस्य ईक्षणमाह—

स ईक्षत कथं न्विदं मदृते स्यादिति । स ईक्षत कतरेण प्रपद्या इति । स ईक्षत यदि वाचाऽभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति ॥ ११ ॥

इदं देहेन्द्रियदेवतादिकार्यजातं मदृते मां पुरस्वामिनं विना कथं नु केन प्रकारेण खलु स्यात् स्थितं भवेत् इति एवं सः प्रकृतः परमेश्वरः ईक्षत ईक्षणं कृतवान् । नहि पुरस्वामिनं विना पुरस्य पुरवासिनां वा रचना शोभते । अतो भोगस्वामिना मया जीवरूपेण देहे प्रवेष्टव्यमित्यर्थः । प्रवेशमार्गे ईक्षणस्वरूपमाह—स ईक्षतेति । द्वावत्र

प्रवेशमार्गौ पादाग्रं मूर्ध्नि ब्रह्मरन्ध्रं च, तयोर्मध्ये कतरेण केन मार्गेण प्रपद्ये कार्यकरणसङ्घातलक्षणं पुरमहं प्रविशानि इति एवं सः परमात्मा ईक्षतेति व्याख्यातम्। एवं कथं न्विदमित्यादिवाक्ये जीवरूप-प्रवेशस्य देहेन्द्रियादिव्यवहारपालनप्रयोजनमुक्तम्। इदानीमात्मज्ञानरूप-प्रयोजनान्तरस्येक्षणमाह—स ईक्षतेति। सः प्रकृतः ईश्वरः इति एवं ईक्षत ईक्षणं कृतवान् इति। किमित्यत आह—यदीति। यदि वाचा वागिन्द्रियेणैव अभिव्याहृतम् अभिवदनात्मको व्यापारो भवेत्, यदि प्राणेन घ्राणेन्द्रियेणैव अभिप्राणितम् आघ्रातं भवेत्, यदि चक्षुषा चक्षु-रिन्द्रियेणैव दृष्टं दर्शनं भवेत्, यदि श्रोत्रेण श्रोत्रेन्द्रियेणैव श्रुतं शब्दस्य श्रवणं भवेत्, यदि त्वचा त्वगिन्द्रियेणैव स्पृष्टं स्पर्शनं भवेत्, यदि मनसा अन्तःकरणेनैव ध्यातं ध्यानात्मकव्यापारो भवेत्, यदि अपा-नेन अपानवायुनैव अभ्यपानितम् अन्तर्गतं भक्षितं भवेत्, यदि शिश्नेन उपस्थेन्द्रियेणैव विसृष्टं विसर्जनं भवेत्—यद्यहं कार्यकरण-सङ्घातमनुप्रविश्य वागाद्यभिव्याहृतादिफलमुपलभेयम्, अथ तदा कोऽहं किंस्वरूपः कस्य वा स्वामी भवेयम् ? अतोऽस्ति कश्चिद्देहादि-व्यतिरिक्तश्चिदात्मा। स च परब्रह्मरूप इति न कोऽपि मां जानी-यात्। यदा त्वहमेव सर्वव्यापाराणां कर्ता, वागादयस्तु मया प्रेरिताः सन्तोऽभिवदनादिक्रियाः कुर्युः, तदा तु वागादिकरणो व्यापारः सकर्तृको भवितुमर्हति क्रियात्वात्, लोकप्रसिद्धगमनादिक्रिया-वदिति मत्सद्भावोऽनुमातुं शक्यते। एवमेव अनुमानेन आत्मसद्भाव उपस्तत्राह्मणेऽपि समाम्नात—'यः प्राणेन प्राणिति स त आत्मा सर्वान्तर' इति भावः ॥ ११ ॥

एवं वागादिकरणानां व्यवहारसिद्धये मदवगतये च मयाऽवश्य-मत्र प्रवेष्टव्यमिति ईक्षणं कृत्वा—

**स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत। सैषा विदृति-र्नाम द्वास्तदेतन्नान्दनम्। तस्य त्रय आवसथास्त्रयः स्वप्नाः, अय-मावसथोऽयमावसथोऽयमावसथ इति ॥ १२ ॥**

सः परमेश्वरः पादाग्रमार्गस्य भृत्यसेवितस्य निकृष्टत्वात् परिशेषा-दुत्तममिदं द्वारं ज्ञात्वा स्रष्टा ईश्वर एतमेव मूर्धमध्यभागमेव सीमानं कपालत्रयसन्धिस्थानविशेषं यत्र केशविभागावसानं तत्र देशे विदार्य छिद्रं कृत्वा एतया द्वारा छिद्ररूपमार्गेण इमं कार्यकरणसङ्घातं प्रापद्यत ज्ञानशक्तिसहितः शरीरमध्ये प्राविशत्। यस्माज्ज्ञानोपाधिकस्य

मूर्धमध्ये प्रवेशः तस्मादेव मूर्ध्नि ज्ञानेन्द्रियबाहुल्यमुपलभ्यते। क्रियाशक्त्युपाधिकस्य तु पादाग्रे प्रवेशात् कण्ठादधोभागे कर्मेन्द्रियबाहुल्यमुपलभ्यते। अतो मूर्धगतं प्रवेशद्वारं स्तौति—सैषेति। सा उक्तलक्षणा एषा सर्वजनप्रसिद्धा द्वाः द्वारं विदृतिर्नाम विदारणात् विदृतिसंज्ञिका, इतराणि तु श्रोत्रादिद्वाराणि भृत्यस्थानीयैः श्रोत्रादीन्द्रियैरधिष्ठितत्वात् साधारणद्वारत्वाच्च न समृद्धानि नानन्दहेतूनि। परमेश्वरेणैव स्वप्रवेशार्थमसाधारणमिदं द्वारं विदारितम्, अतोऽस्य द्वारस्य उत्कर्षं प्रकटयितुं 'विदृतिरि'ति संज्ञा प्रसिद्धा इति भावः। तदेतत् उक्तलक्षणं द्वारं नान्दनम्, एतद्द्वारेण निर्गतस्य ब्रह्मलोकप्राप्तिद्वारा मुच्यमानत्वादानन्दहेतुत्वेन नान्दनमित्युच्यते। शरीरप्रविष्टस्य सञ्चारस्थानानि तेष्ववस्थाविशेषांश्च दर्शयति—तस्येति। तस्य शरीरमध्ये प्रविष्टस्यात्मनः त्रय आवसथाः त्रीणि स्थानानि राज्ञ इव क्रीडास्थानानि निर्मितानि। त्रयः स्वप्नाः स्वप्नतुल्याः। उक्तावसथत्रयमेव हस्ताग्रेण दर्शयति—अयमिति। अयं नेत्रप्रदेशः आवसथः जाग्रदवस्था। अयं कण्ठप्रदेशः आवसथः स्वप्नावस्था। अयं हृदयप्रदेशः आवसथः सुषुप्त्यवस्था। तथा चोक्तं ब्रह्मोपनिषदि—'नेत्रस्थं जागरितं विद्यात् कण्ठे स्वप्नं समादिशेत्। सुषुप्तं हृदयस्थानम्...'इति। यद्यपि सुषुप्तौ ब्रह्मण्येव जीवो वर्तते 'सता सोम्य तदा सम्पन्न' इति श्रुतेः; तथापि ब्रह्मणोऽपि हृदयाऽऽकाशेऽवस्थानाद् ब्रह्मसम्पन्नोऽपि हृद्येव वर्तत इति तथोक्तम्। ननु जागरण-सुषुप्तयोः स्वप्नान्यत्वेन त्रयः स्वप्ना इत्युक्तिरयुक्ता इति चेन्न। स्वप्नलक्षणस्य तयोरपि सत्त्वात्। विद्यमानवस्तुतत्त्वं तिरोधाय समुत्पन्नोऽन्यथा प्रतिभास इति स्वप्नलक्षणं तयोरपि वर्तते। तत्रापि विद्यमानस्य ब्रह्मतत्त्वस्य तिरोधानेन अन्यथाभूतजीवभावस्य प्रतिभासात्। यद्वा—अत्र आवसथा इत्यादिना पितृशरीरमातृशरीर-स्वशरीररूपाणि त्रीणि स्थानानि विवक्ष्यन्ते। तथा चोपरितनाध्याये प्रपञ्चयिष्यते। संसारो द्विविधः-दैनन्दिनव्यवहारो जन्मान्तरस्वीकारश्चेति। तत्र दैनन्दिनव्यवहारस्य नेत्रादिस्थानानि, जन्मान्तरस्वीकारस्य पितृ-मातृ-स्वीयशरीराणि स्थानानीति विवेकः। इतिशब्दः संसाररूपाध्यारोपप्रकरणसमाप्त्यर्थः॥ १२॥

अध्यारोपमुक्त्वा अपवादमाह—

स जातो भूतान्यभिव्यैख्यत् किमिहान्यं वावदिषदिति।
स एतमेव पुरुषं ब्रह्म ततममपश्यत् इदमदर्शमिती ३॥ १३॥

सः देहे प्रविष्टः परमात्मा जातः देहप्रवेशेन जन्ममरणजाग्रत्स्वप्न-सुषुप्तिभिः संसारीभूतः सन् कदाचित् गुरुशास्त्रप्रसादेन भूतानि आकाशादीनि प्राणिनश्च अभिव्यैख्यत् सर्वतो विवेकेन ज्ञातवान्। दृश्यमानानि आकाशादिभूतानि प्राणिदेहाश्च कुत उत्पद्यन्ते, केन वा रक्ष्यन्ते, कस्मिंश्च प्रलीयन्ते ? एवं शास्त्रं विचार्य सर्वप्रपञ्चस्य मायया कल्पितत्वान्न ब्रह्मणोऽतिरिक्तं वस्तुतत्त्वमस्तीत्याह—किमिति। इह जगति अन्यं ब्रह्मणो व्यतिरिक्तं वस्तुतत्त्वं किं वावदिषत् किं वदिष्यामि। न किञ्चिदपि ब्रह्मातिरिक्ततया वक्तुं शक्नोमि इति एवं निश्चित्य सः उक्तरूपो जीवः एतमेव देहे प्रविष्टमेव पुरुषं मूर्धद्वारा प्रविश्य पुरीशयानमात्मानं ब्रह्म सत्यज्ञानादिलक्षणम् अपश्यत् ज्ञातवान् ब्रह्मस्वरूपत्वेन निश्चितवानिति यावत्। कीदृशं ब्रह्म ततमं तकारलोपः छान्दसः। ततत्तमम् अतिशयेन ततं व्याप्तम्। दृश्यस्य जगतो द्रष्टुर्जीवस्य च ब्रह्मैव तत्त्वमित्यपवादप्रकरणस्य सर्वस्य तात्पर्यार्थः। उक्तं स्वकीयमपरोक्षानुभवं प्रकटयन् तुष्टिं दर्शयति—इदमिति। इदमस्तु सन्निकृष्टमित्युक्तेरिदंशब्दोऽपरोक्षवाचको दर्शनक्रियाविशेषणम्। इती इति प्लुतिः परिपोषद्योतनार्था। तथा च इदम् अपरोक्षं यथा भवति तथा अदर्शम् उक्तब्रह्मस्वरूपमहं दृष्टवानस्मि इति अहो कृतकृत्योऽस्मीत्यर्थः॥ १३॥

उक्तसाक्षाद्दर्शनमेव हेतुं कृत्वा तस्य नामनिर्वचनमाह—

तस्मादिदन्द्रो नाम। इदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः॥ १४॥

तस्मात् उक्तापरोक्षदर्शनादेव इदन्द्रो नाम इदं दृष्टमितीदन्द्र इति नाम प्राप्तवान्। इदंपदपूर्वकः दृशधातोड्ट्प्रत्ययान्तस्य इदन्द्रनामनिष्पत्तिर्बोध्या। न केवलं यौगिकमेव परमात्मन इदन्द्रं नाम भवति, किन्तु लोके रूढ्याऽपीत्याह—इदन्द्र इति। इदन्द्रो नाम इदन्द्र इति संज्ञा परमेश्वरस्य ह वै लोके प्रसिद्धेत्यर्थः। ननु 'इन्द्रो मायाभिरि'त्यादौ परमेश्वरस्य नाम इन्द्र इति प्रसिद्धं नत्विदन्द्र इत्याशङ्क्याह—तमिति। तं परमेश्वरम् इदन्द्रं सन्तं इदन्द्रपदवाच्यं सन्तमपि परोक्षेण परोक्षार्थमक्षरलोपेन इन्द्र इति एवं परोक्षाभिधानेन आचक्षते कथयन्ति ब्रह्मविद इति शेषः। परोक्षोक्तेः प्रयोजनमाह—परोक्षप्रिया इति। देवाः पूज्याः परोक्षप्रिया इव परोक्षनामग्रहणे प्रीतिमन्त एव भवन्ति। हि यस्मादेव

तस्मात् प्राकृता अपि पूज्याः देवदत्तादिस्वकीयं नाम गूढं कृत्वा आचार्या उपाध्याया इत्यादिकं परोक्षनामोक्तावेव प्रीतिं कुर्वन्तीति लोकप्रसिद्धिर्दर्शिता। अभ्यासोऽध्यायसमाप्त्यर्थः ॥ १४ ॥

इति तृतीयः खण्डः ॥ ३ ॥

॥ इत्यैतरेये द्वितीयारण्यके चतुर्थोऽध्यायः। उपनिषत्सु प्रथमः ॥

—:०:—

॥ अथ द्वितीयोऽध्यायः ॥

एवमध्यारोपापवादाभ्यां निष्प्रपञ्चमात्मतत्त्वं निरूप्य आत्मज्ञानहेतु-वैराग्यसिद्ध्यर्थं जीवावस्था बीभत्सरूपाः पूर्वोक्ता आवसथशब्दिता आह—

पुरुषे ह वा अयमादितो गर्भो भवति। यदेतद्रेतस्तदेतत् सर्वेभ्यो-ऽङ्गेभ्यस्तेजः सम्भूतम्। आत्मन्येवात्मानं बिभर्ति। तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति। तदस्य प्रथमं जन्म ॥ १ ॥

ह वै प्रसिद्धः अयं मूर्धानं विदार्य प्रविश्य स्थितः संसारी पुरुषे पितृशरीरे आदितः प्रथमतः रेतोरूपेण गर्भो भवति। ननु पुरुषशरीरे स्त्रियामिव गर्भो न दृश्यत इत्याशङ्क्य भक्षितस्यान्नस्य रसादिक्रमेण रेतोरूपेण पुरुषस्य शरीरे विद्यमानस्तस्य स गर्भ इत्युच्यते। तथा च अविद्याकामकर्माभिमानवान् यज्ञादिकर्म कृत्वा अस्माल्लोकाद्धूमादि-क्रमेण चन्द्रमसं प्राप्य क्षीणकर्मा वृष्ट्यादिक्रमेणेमं लोकं प्राप्य व्रीह्याद्यन्नसंश्लिष्टः पुरुषोऽग्नौ हुतः सन् पुरुषदेहे रेतोरूपेण स्थितो भवति। छान्दोग्ये—'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते, ते धूम-मभिसम्भवन्ती'त्यादिना पञ्चाग्निविद्यायां विस्तरेणायमर्थः प्रसिद्धः। न चायं स्त्रीगर्भवदुदरवृद्ध्याऽभिव्यज्यत इति भावः। यत् प्रसिद्धम् एतत् पुरुषशरीरे रसादिक्रमेण परिणतसप्तमधातुरूपं रेतः वीर्यमस्ति, सः पुरुषे गर्भो भवतीति पूर्वेणान्वयः। तस्य गर्भस्य जन्मप्रकारमाह—तदे-तदिति। तत् पुरुषे गर्भत्वेनोक्तम् एतत् रेतः सर्वेभ्यो निखिलेभ्यः अङ्गेभ्यः पुरुषावयवेभ्यः तेजः सम्भूतं सारभूतं निर्गतं भवति। आत्मानं स्वस्यैव रूपान्तरभूतं रेतः आत्मन्येव स्वशरीरे एव बिभर्ति पुरुषो धारयति पोषयति वा। तत् पोषितं रेतोऽग्निसंपर्केण घृतमिव कामाग्निना विलीनं हृदि समागत्य स्थितं सत् यदा ऋतुकाले स्त्रियां सिञ्चति स्त्रीयोनौ गर्भाशये स्थापयति। अथ तदा एनत् जीवान्तराविष्टं

रेतोरूपं शरीरं जनयति उत्पादयति तत् पुरुषशरीराद् बहिर्गमनं स्त्रीयोनौ रेतोनिःसरणं भवति अस्य रेतसि स्थितस्य जीवस्य प्रथमं जन्म। तस्य त्रय आवसथा इत्युक्तानां मध्ये प्रथमावस्थाऽभिव्यक्तिर्भवतीति शेषः ॥ १ ॥

ननु स्त्रीदेहे प्रविष्टं परकीयरेतो दुःखप्रदं स्यात्, शरीरे संलग्नबाणवदित्याशङ्क्याह—

ततस्त्रिया आत्मभूयं गच्छति। यथा स्वमङ्गं तथा। तस्मादेनां न हिनस्ति। साऽस्यैतमात्मानमत्रगतं भावयति ॥ २ ॥

तत् स्त्रीयोनौ प्रविष्टं पुरुषरेतः स्त्रियाः स्वजायायाः आत्मभूयं स्वशरीरभावं गच्छति प्राप्नोति। तत्र दृष्टान्तमाह—यथेति। यथा येन प्रकारेण स्वमङ्गं स्वकीयकरचरणादिरूपाङ्गं स्वशरीरात् भिन्नं न भवति तथा तद्वत्। तस्मात् स्वशरीरत्वेनैकीभावात् एनां मातरं स गर्भो न हिनस्ति उदरे संलग्नबाणवत् न हन्ति। तद्गर्भधारणद्वारेण स्त्रीपुरुषयोः परस्परमुपकार्योपकारकभावं दर्शयति—साऽस्येति। सा अन्तर्वत्नी स्त्री अस्य रेतःसेक्तुः पुरुषस्य एतं प्रसिद्धम् आत्मानं पुत्ररूपम् अत्र स्वशरीरे गतं प्रविष्टं भावयति पथ्यान्नाऽदनादिना पालयति ॥ २ ॥

सा भावयित्री भावयितव्या भवति। तं स्त्री गर्भं बिभर्ति। सोऽग्र एव कुमारं जन्मनोऽग्रेऽधि भावयति ॥

सा गर्भधारिणी स्त्री यतः भावयित्री गर्भपालनेन स्वभर्तुरेव पालयित्री तत एव भावयितव्या पत्या अपि अभीष्टान्नपानवस्त्रादिप्रदानेन पालयितव्या भवति। स्त्रीपुरुषयोरुभयोरपि पुत्रं प्रत्युपकारकत्वं दर्शयति—तमिति। तं पूर्वोक्तं गर्भं कुक्षिस्थमर्भकं स्त्री अन्तर्वत्नी बिभर्ति अत्यन्तं प्रयासं सोढ्वा नव वा दश वा मासान् स्वोदरे धारयित्वा पोषयति। एवं मातृुपकारं प्रदर्श्य पितृुपकारं दर्शयति—स इति। अग्रेऽग्रेऽधीति पदत्रयेण जन्मनः पूर्वं जन्मकालं जन्मन उत्तरकालमिति कालत्रयमुच्यते। तथा च सः पिता अग्रे एव जन्मनः प्रागेव सीमन्तादिसंस्कारेण जन्मनोऽग्रे प्रसवकालादव्यवहितपूर्वक्षणे सुखप्रसवार्थं मन्त्रजलप्रोक्षणादिना अधि प्रसवादुत्तरकाले कुमारं जातमर्भकं जातकर्मादिसंस्कारेण भावयति पालयतीत्यर्थः ॥ ३ ॥

पुत्रसंस्कारेण पितुरप्युपयोगमाह—

स यत्कुमारं जन्मनोऽग्रेऽधि भावयत्यात्मानमेव तद्भाव-

यत्येषां लोकानां सन्तत्या। एवं सन्तता हीमे लोकाः। तदस्य द्वितीयं जन्म॥ ३॥

सः पिता यत् येन शास्त्रोक्तसंस्कारेण जन्मनोऽग्रे पूर्वम् अधि जन्मन उत्तरकाले कुमारं जायमानं पुत्रं भावयति। तत् तेन संस्कारेण आत्मानमेव स्वशरीरमेव भावयति पुत्रस्य स्वदेहरूपत्वात्। तथा चोक्तम्—'पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते' इति मोक्षप्रकरणे पुत्रोत्पादनस्य विधानात् पुत्रोत्पादनं मोक्षसाधनमिति भ्रमं वारयति—एषामिति। एषां सर्वजनप्रसिद्धानां लोकानां लोकसाधनीभूतानां पुत्रपौत्रादीनां सन्तत्यै अविच्छेदाय पुत्रोत्पादनादिविधानं न मोक्षायेत्यर्थः। हि यस्मात् एवं पित्रा स्वोत्पादिते पुत्रे संस्कृते सति तथा पुत्रोऽप्यन्यं पुत्रमुत्पाद्य संस्करोति, सोऽप्यन्यं पुत्रमित्यनेन प्रकारेण इमे पुत्रपौत्रादयः लोकाः लोकसाधनीभूताः सन्तताः विच्छेदरहिताः भवन्तीति शेषः। अन्यथा विच्छिद्येरन्। एवं प्रसङ्गाद् गर्भधारणविधिमुक्त्वा प्रकृतं वैराग्यार्थं द्वितीयं जन्म दर्शयति—तदस्येति। तत् पुत्ररूपेण मातृशरीरान्निर्गमरूप अस्य जीवस्य संसारिणः द्वितीयं जन्म पूर्वोक्तरेतोरूपजन्मापेक्षया द्वितीयावस्थाऽभिव्यक्तिर्भवतीत्यर्थः॥ ३॥

पितुरपि पुत्रप्रयुक्तमुपयोगं दर्शयति—

सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते। अथास्याऽयमितर आत्मा कृतकृत्यो वयोगतः प्रैति। स इतः प्रयन्नेव पुनर्जायते। तदस्य तृतीयं जन्म॥ ४॥

द्वौ आत्मानौ भवतः स्वदेहः पुत्रदेहश्चेति। तयोर्मध्ये अस्य पितुः सः पूर्वोक्तः अयं प्रत्यक्षः आत्मा पुत्रदेहः पुण्येभ्यः शास्त्रोक्तेभ्यः कर्मभ्यः अग्निहोत्रादिभ्यः शास्त्रविहितकर्मनिष्पादनार्थं प्रतिधीयते पित्रा यत् कर्तव्यं तत्करणाय प्रतिनिधित्वेन स्वगृहे स्थाप्यते। ननु किमर्थं पुत्रं प्रतिनिदधाति, स्वयमेव तत्कर्म कुतो न करोतीत्याशङ्क्य स्वस्य मरणात् कर्तुमशक्त इत्यभिप्रायेणाह—अथेति। अथ प्रतिनिधिकरणानन्तरं अस्य पितुः अयं नेत्रगोचरः इतरः पुत्रदेहाद् भिन्नः पितृशरीररूप आत्मा स्वकीयः स्थविरो देहः कृतकृत्यः कृतान्येतज्जन्मप्रयुक्तकृत्यानि कर्तव्यानि कुटुम्बपोषणादीनि लौकिकानि अग्निहोत्रादीनि च शास्त्रीयाणि कर्माणि येन सः कृतकृत्यः। यद्वा—कर्तव्याद् ऋणत्रयाद् विमुक्तः।

सः वयोगतः वयसा पूर्वकर्मसम्पादिताऽऽयुषा हीनः सन् प्रैति म्रियते। सः वृद्धः पिता इतः अस्माज्जीर्णदेहात् प्रयन्नेव निर्गच्छन्नेव पुनः भूयः जायते स्वर्गे नरके मनुष्यलोके वा स्वकर्मानुसारेणोत्पद्यते।। प्रयन्नेवेत्यत्र एवकारेण अस्माद्देहान्निर्गतस्य देहान्तरग्रहणे कालव्यवधानाभावो द्योत्यते। अस्मिन्नेव देहे स्थित्वा मानसं देहान्तरं स्वीकृत्यैव पश्चादमुं देहं त्यजति। तत्र दृष्टान्तः—यथा तृणजलूका तृणान्तरमग्रभागेनावष्टभ्य पृष्ठभागमुपसंहरति, तद्वत्। तत् शरीरान्तग्रहणरूपं अस्य मृतस्य पितुः तृतीयं जन्म उक्तजन्मद्वयापेक्षया तृतीयं जन्मेत्युच्यते। यद्यपि पूर्वं पुत्रस्य जन्मद्वयमुक्तं तृतीयं जन्मापि पुत्रस्यैव वक्तुं युक्तम्, न तु पितुः शरीरस्य तृतीयं जन्म; तथापि पितापुत्रयोरैकात्म्यस्य विवक्षया तृतीयं जन्मेत्युक्तम्। यद्वा—पितृमातृभ्यां पुत्रस्य यज्जन्मद्वयमुदाहृतं तेनैव प्रकारेण पितुरपि स्वपितृभ्यां जन्मद्वयमर्थादुक्तं भवति, तदपेक्षया पितुरिदं तृतीयं जन्म। पुत्रस्याप्युक्तजन्मद्वयापेक्षया तस्य मरणादूर्ध्वं तृतीयं जन्म भविष्यतीति न काऽप्यनुपपत्तिः। एवं सर्वस्य जन्मत्रयस्य पुनः पुनरावर्तनोपवर्णनेन संसाराद् विरक्त्युत्पत्तिः सूचिता। न हि पितृशरीरेऽत्यन्ताशुचिरेतोरूपेणावस्थानं ततः शिश्नच्छिद्रान्निर्गमनं ततो मातुरुदरे मलमूत्राक्रान्ते विष्ठाकृमिवदवस्थानं ततो योनिद्वारा निर्गमनं चेत्यत्यन्तकष्टम् उक्तान्निरन्तरमलरूपशरीरधारणादन्यदधिकं जुगुप्सितं किञ्चिद्वैराग्यकारणं वक्तुं शक्यते। तथा चोक्तं विष्णुपुराणे—'स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान्। वैराग्यकारणं तस्य किमन्यदुपदिश्यते' इति ॥ ४ ॥

पूर्वोक्तस्य जुगुप्सितसंसारस्य ज्ञानमन्तरेण विनाशाभावं तत्त्वज्ञानेन तन्निवृत्तिं च दर्शयितुं मन्त्रमुदाहरति—

तदुक्तमृषिणा – गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा। शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति। गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥ ५ ॥

तत् 'पुरुषे ह वा अयमादित' इत्यारभ्य 'तृतीयं जन्मे'त्यन्तेन ग्रन्थेन संसारे यत् कष्टमुक्तं यच्च संसारनिवर्तकं तत्त्वज्ञानमुत्तरत्र विवक्षितं तदुभयमर्थजातम् ऋषिणा मन्त्रेणाप्युक्तं कथितम्। तमेव मन्त्रं पठति—गर्भे न्विति। अहं वामदेवः गर्भे नु मातृगर्भाशय एव सन् वसन् एषाम् अग्निवाग्वादित्यादिनां देवानां वागाद्यधिष्ठातृदेवानां विश्वा विश्वानि सर्वाणि जनिमानि 'मुखाद्वाग्वाचोऽग्निः' इत्यादिपूर्ववाक्येनोक्तानि पर-

मात्मकृतानि जन्मानि अन्ववेदम् अनुक्रमेण ज्ञातवानस्मि। औपनिषद-मात्मज्ञानं मम सम्पन्नमित्यर्थः। अधः आत्मज्ञानोदयात् पूर्वं मा मां वामदेवम् आयसीः लोहनिर्मितशृङ्खलासमानाः शतं पुरः शतसङ्ख्याकानि शरीराणि अरक्षन् कारागृहे स्थापितं तस्करमिव बद्धं चक्रुः। इदानीं तु श्येन इव जालं भित्त्वा जवसा आत्मज्ञानकृतसामर्थ्येन निरदीयं निर्गतोऽस्मीत्यर्थः। इतिशब्दो मन्त्रसमाप्त्यर्थः। मन्त्रद्रष्टुर्नामनिर्देश-पूर्वकमुक्तमन्त्रस्य तात्पर्यम् 'गर्भ एवैतदित्यादि' ब्राह्मण आह—गर्भ इति। गर्भे एव मातृकुक्षावेव शयानः स्थितः सन् एतत् पूर्वोक्तमन्त्रं वामदेव-ऋषिरेवं मन्त्रोक्तप्रकारेण उवाच उक्तवानित्यर्थः। यद्यपि मातृगर्भे श्रवणादिज्ञानसाधनसामग्री नास्ति, तथापि पूर्वजन्मकृतश्रवणादि-सामग्रीवशादेव प्रतिबन्धनिवृत्तौ सत्यां गर्भेऽपि ज्ञानोत्पत्तिः सम्भवतीति भावः॥ ५॥

एवं यथोक्तात्मज्ञानस्य अव्यभिचरितफलत्वज्ञापनाय वामदेवेन ज्ञानफलं प्राप्तं दर्शयति—

स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्याऽमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् ॥ ६ ॥

सः वामदेवः एवं मन्त्रोक्तप्रकारेण विद्वान् आत्मतत्त्वं विजानन् प्रारब्धकर्मक्षये सत्यस्माच्छरीरभेदात् वर्तमानदेहविनाशात् ऊर्ध्वः सर्वस्योपरितनः परब्रह्मस्वरूपः सन् उत्क्रम्य अधोभावात् संसारान्निवृत्तिं प्राप्य अमुष्मिन् इन्द्रियागोचरे स्वर्गे निरतिशयब्रह्मानन्दे लोके स्वप्रकाश-स्वरूपे सर्वान् कामान् तैत्तिरीयोपनिषदुक्तान् सार्वभौमादिहिरण्यगर्भ-पर्यन्तान् आनन्दान् आप्त्वा क्षुद्रानन्दानां पूर्णानन्देऽन्तर्भावात् परमानन्द-स्वरूपब्रह्मात्मत्वेन प्राप्य अमृतः तत्त्वज्ञानिनो वर्तमानदेहपातादूर्ध्वं देहान्तरसम्बन्धाभावेन देहप्राणवियोगलक्षणमरणरहितः समभवत् सम्बभूव। द्विर्वचनं सफलस्य वामदेवात्मज्ञानस्य परिसमाप्तिप्रदर्शनार्थम्॥६॥

इति चतुर्थः खण्डः॥ ४॥

॥ इत्यैतरेये द्वितीयारण्यके पञ्चमोऽध्यायः। उपनिषदि द्वितीयः॥

—:०:—

॥ अथ उपनिषदि तृतीयोऽध्यायः॥

पूर्वं चतुर्थाध्यायेऽध्यारोपप्रकरणे 'तस्य त्रय आवसथा' इत्यादि-वाक्येन पितृमातृस्वशरीररूपं संसरणार्थं स्थानत्रयं यदुक्तम्, 'स जातो

भूतान्यभिव्यैख्यदि'त्यादिना अपबादप्रकरणेन यत्तत्त्वज्ञानं प्रदर्शितम्, पुनः पञ्चमाध्याये 'पुरुषे ह वा' इत्यादिना वैराग्योत्पत्त्यर्थं यत् प्रपञ्चितम्, यच्च वामदेवोदाहरणेन ज्ञानं तत्फलं च सङ्क्षिप्य प्रदर्शितम्, तत्सर्वं विशदीकर्तुं षष्ठाध्याय आरभ्यते। तत्रापि 'पुरुषे ह वा अयमादितो गर्भो भवती'त्यादिवाक्येन जन्मत्रयरूपसंसारदुःखनिरूपणेन वैराग्यं निरूपितं ज्ञानोत्पत्त्यर्थम्। तत्त्वंपदार्थशोधनपूर्वकं वाक्यार्थज्ञानं विना वैराग्यमात्रेण ज्ञानोत्पत्तिर्न सम्भवति। अतः पदार्थशोधनपूर्वकं वाक्यार्थज्ञानं परस्परविचारेण अधिकारिणं च दर्शयन् वाक्यमवतारयति—

कोऽयमात्मेति वयमुपास्महे। कतरः स आत्मा येन वा रूपं पश्यति येन वा शब्दं शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति ॥ १ ॥

अयम् अहंप्रत्ययविषयः आत्मा आत्मशब्दवाच्यः इति एवम् अयमात्मेति साक्षादुपासीनो वामदेवोऽमृतः समभवत् तमेव वयम् आत्मतत्त्वजिज्ञासवः उपास्महे व्यवहरामः। क आत्माऽस्तीति जिज्ञासापूर्वकं परस्परं पृच्छन्ति। एवं सामान्यतो विचारं प्रदर्श्य विशेषतस्तं दर्शयति—कतर इति। 'आत्मा वा इदमेक एवाग्र आसीदि'त्यादिश्रुतौ निरुपाधिकः कश्चिदात्मा श्रूयते। 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यते'ति श्रुतौ च सोपाधिकः कश्चिदात्मा श्रूयते। तयोर्मध्ये सः 'आत्मा वा' इत्यादिना श्रुतः आत्मा प्रत्यक्चैतन्यरूपः कतरः कोऽस्ति? सोपाधिको निरुपाधिको वेत्यर्थः। ननु कतरः स आत्मेत्ययं विचारोऽस्तु, श्रुत्यैकगम्यस्य तस्य विचारं विनाऽनिश्चयात्। कोऽयमात्मेति विचारस्तु न युक्तः, तस्य अहंप्रत्ययगम्यत्वेन सर्वजनप्रसिद्धत्वादित्याशङ्क्य विचारस्य हेतुभूतमनेककोट्यात्मकं संशयमाह—येनेति। यद्यप्यहंप्रत्ययगम्यश्चैतन्यरूप आत्मेति सामान्यरूपेण प्रसिद्धिरस्ति. तथापि तद्विशेषस्वरूपे संशयोऽस्त्येव, जलपात्रेषु प्रत्येकं सूर्यादिप्रतिबिम्बाभिव्यक्तिवत् बाह्यान्तःकरणेषु सर्वेष्वपि पृथक् पृथक् चैतन्याभिव्यक्तेः सत्त्वात्। तथा च येन वा चक्षुरिन्द्रियाभिव्यक्तचैतन्येन देहेन्द्रियादिसङ्घाताभिमानी लौकिकः पुरुषो रूपं पश्यति नीलपीतादिरूपमवलोकयति तच्चैतन्यं किमात्मेत्येका कोटिः। तथा येन वा श्रोत्रेन्द्रियाभिव्यक्तचैतन्येन शब्दं शृणोति शब्दमनुभवति किंवा स आत्मेति द्वितीया कोटिः।

तथा येन वा घ्राणेन्द्रियाभिव्यक्तचैतन्येन गन्धान् सुरभ्यसुरभिरूपान् आजिघ्रति गन्धं गृह्णाति किंवा स आत्मेति तृतीया कोटिः। तथा येन वा वागिन्द्रियाभिव्यक्तचैतन्येन वाचं शब्दात्मिकां वाणीं व्याकरोति गौरश्व इत्येवं साध्वसाध्विति च अभिवदति किंवा स आत्मेति चतुर्थी कोटिः। तथा येन वा रसनेन्द्रियाभिव्यक्तचैतन्येन स्वादु चास्वादु च मधुरकटुकाद्यात्मकं रसं विजानाति साक्षात्करोति किंवा स आत्मेति पञ्चमी कोटिः। चैतन्येनैव रूपरसाद्यभिव्यक्तिः कठवल्लिष्वपि समाम्नायते—'येन रूपं रसं गन्धं शब्दान् स्पर्शाँश्च मैथुनान् एतेनैव विजानाती'ति ॥ १ ॥

एवं बाह्येन्द्रियाभिव्यक्तचैतन्येष्वात्मसंशयं प्रदर्श्य उभयविधान्तःकरणतद्वृत्तिविशेषाभिव्यक्तचैतन्येषु आत्मसंशयाभिप्रायेण 'यदेतद्धृदयमि'त्यादिवाक्यसन्दर्भेण तत्तदुपाधिस्वरूपमुपन्यस्यते—

यदेतद्धृदयं मनश्चैतत्। संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥ २ ॥

यदेतत् प्रसिद्धं हृदयं निश्चयात्मिका बुद्धिः मनश्च सङ्कल्पादिसाधनभूतम्, बुद्धिमनसोरुभयोः अन्तःकरणविशेषयोः समुच्चयार्थो मनश्चेति चकारः। बुद्धिमनोरूपस्य अन्तःकरणस्य वृत्तिविशेषाः। एतत्संज्ञानमित्यादिना प्रपञ्च्यते। एतत् उक्तलक्षणमन्तःकरणं वृत्तिरूपेण परिणतं सत् संज्ञानं सम्यगिदं वस्तु इति ज्ञप्तिः संज्ञानम्। यद्वा—यया वृत्त्या चेतन इत्युच्यते, जन्तुः सा वृत्तिः सर्वदा सर्वशरीरव्यापिनीति संज्ञानम्। आज्ञानम् आज्ञप्तिरीश्वरभावः। विज्ञानम् इदमस्माद् विशिष्टमित्येवमादिविवेकः शिल्पादिकलाज्ञानं वा विज्ञानम्। प्रज्ञानं प्रज्ञप्तिः, तात्कालिकप्रतिभावतीत्यर्थः। मेधा श्रुतग्रन्थार्थधारणाशक्तिः। दृष्टिः चक्षुरादीन्द्रियद्वारा सर्वविषयोपलब्धिहेतुर्मनोवृत्तिः। धृतिः धारणम्, अवसन्नानां शरीरेन्द्रियाणां ययोत्तम्भनं भवति। मतिः मननं राजकार्याद्यालोचनम्। मनीषा तत्र स्वातन्त्र्यम्, मनस ईषा मनीषेति व्युत्पत्तेः। जूतिः रोगादिजन्यदुःखाकारवृत्तिः। स्मृतिः अनुभूतस्य वस्तुनः स्मरणम्। सङ्कल्पः सामान्येन ज्ञातानां रूपादीनां शुक्लत्वादिविशेषरूपेण सम्यक्कल्पनम्। क्रतुः इदमवश्यं करिष्यामीत्यध्यवसायः। असुः प्राणनादिजीवनक्रियानिमित्ता वृत्तिः। कामः असंनिहितविषयाकाङ्क्षा तृष्णा। वशः स्त्रीसम्पर्केच्छा। इति एवमाद्या अन्याश्च अन्तःकरणवृत्तयः सात्त्विकादिविचक्षणैर्द्रष्टव्याः। तथा च 'येन वा रूपं पश्यती'त्यादि 'मनश्चैतदि'त्यन्तेन प्राणस्य कर-

णत्वेन आत्मार्थत्वमुक्तम् । 'संज्ञानमि'त्यादि 'वश' इत्यन्तेन अन्तःकरण-वृत्तिद्वारा तद्व्यतिरिक्त आत्मा उक्त इति भावः । तत्रापि किमेतद्धृदयाद्युपहितचैतन्यमात्मा किंवा एतत्संज्ञानाद्युपहितचैतन्यमात्मेत्येवं सर्ववृत्त्युपहितचैतन्येष्वात्मसंशयो योजनीयः । एवमात्मसंशयमुक्त्वा तन्निवर्तकं त्वंपदार्थस्य निर्णयमाह—सर्वाण्येवैतानीति । एतानि 'येन वा रूपमि'त्यादिना 'वश' इत्यन्तेन ग्रन्थेन सर्वाणि निखिलानि प्रज्ञानस्यैव । अत्र प्रज्ञानशब्देन पूर्ववत्तात्कालिकप्रतिभावृत्तिरूपा नोच्यते, किन्तु शुद्धचैतन्यमेव । तथा च प्रकृष्टं ज्ञानं प्रज्ञानं तस्य प्रज्ञानस्यैव तत्तद्वृत्त्युपाधिद्वारा उपलक्षितस्य शुद्धचेतनस्यैव नामधेयानि नामवाचकानि भवन्ति सम्पद्यन्ते, न तु स्वतः । स्वतस्तु शुद्धचैतन्यमेव अविद्यादिमलरहितत्वादुत्कृष्टं सदुपाधिसम्पर्कादपकृष्टमिव प्रतिभाति । यदा तु उपाधिविशिष्टत्वं परित्यज्य तत्तदुपाधिभिरुपलक्षितं चैतन्यं शाखाचन्द्रन्यायेन विविच्यते, तदानीमुपाधिकृतापकर्षस्याभावात् प्रकृष्टमेव परिशिष्यते । तच्च प्रकृष्टं शुद्धचैतन्यमेवं सर्ववृत्त्युपाधिष्वनुगतमिति कृत्वा तस्य प्रज्ञानस्यैव मुख्यमात्मत्वमिति निर्णयः । तथा च कोऽयमात्मेति वयमुपास्महे एवमात्मतत्त्वं जिज्ञासूनां परस्परं पूर्वोक्तप्रकारेण प्रश्ने सत्येतस्मिन् त्वंपदार्थविचारे तत्तद्वृत्त्युपहितसाक्षिचैतन्यं त्वंपदलक्ष्यस्वरूपः प्रज्ञानशब्दाभिधेयो निरुपाधिक आत्मैव नैरन्तर्येणोपास्य इति परस्परं निर्णये सिद्धो भवतीति भावः ॥ २ ॥

इदानीं तत्पदार्थविचारे आत्मनिर्णयं दर्शयति—

एष ब्रह्मैष इन्द्रः । एष प्रजापतिरेते सर्वे देवा इमानि च पञ्चमहाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञाप्रतिष्ठा ॥

एषः 'हिरण्यगर्भः समवर्तताग्र' इत्यादिशास्त्रप्रसिद्धः प्रथमशरीरी विवक्षितः । ब्रह्मा समष्टिलिङ्गशरीराभिमानी हिरण्यगर्भाख्यः । एषः शास्त्रप्रसिद्धः इन्द्रः देवराजः । एषः शास्त्रप्रसिद्धः समष्टिस्थूलशरीराभिमानी प्रजापतिः विराडात्मा । एते पूर्वोक्तलक्षणा अग्निवाय्वादयः सर्वे निखिला देवाः वागाद्यधिष्ठातृदेवताः । इमानि प्रसिद्धानि पञ्च-

महाभूतानि पञ्चस्थूलभूतानि। पञ्चमहाभूतानीत्यस्यैव विवरणं पृथिवीत्यारभ्य इत्येतानीत्यन्तम्। इत्येतानि एतत्पदप्रतिपाद्यानि इमानि प्रसिद्धानि क्षुद्रमिश्राणि क्षुद्रैरल्पकैर्मशकपिपीलिकादिभिः मिश्राणि युक्तानि मनुष्यादीनि शरीराणि। इवशब्दोऽनर्थकः। बीजानि स्वस्वसजातिदेहानां हेतुभूतानि। तेषामेव नानाजातीयत्वं दर्शयति—इतराणि चेतराणि च परस्परविलक्षणानि च। परस्परविलक्षणत्वमेवाह—अण्डेति। अण्डजानि च अण्डाज्जातानि पक्षिसर्पादीनि। जारुजानि च जरायुजानि मनुष्यगवादीनि। स्वेदजानि च स्वेदाज्जातानि कृमियूकादीनि च। उद्भिज्जानि च वृक्षादीनि च। उक्तानेव अण्डकादीनुदाहृत्य दर्शयति—अश्व इति। अश्वा गावः पुरुषा हस्तिन इति स्पष्टार्थकः। उक्तानामनुक्तानां च सङ्ग्रहार्थमाह—यत्किञ्चेति। यत्किञ्चेदं अन्यदपि यत्किञ्चित् दृष्टिगोचरम्। प्राणिजङ्गमं पद्भ्यां गमनशीलं प्राणिजातम्। पतत्रि च यच्च पतत्रि आकाशेन पतनशीलम्। यच्च प्रसिद्धं स्थावरं स्वतश्चलनशून्यं वृक्षपाषाणादिकम्। उक्तचकाराः परस्परविलक्षणत्वद्योतका भवन्तीत्यर्थः। तत् उक्तरूपं सर्वं हिरण्यगर्भादिस्थावरान्तं प्रज्ञानेत्रम्, प्रज्ञप्तिः प्रज्ञा सजात्यादित्रिविधभेदशून्यस्वप्रकाशस्वरूपं ब्रह्म, नीयते सत्तां प्राप्यते सर्वमनेनेति नेत्रम्, प्रज्ञा नेत्रं यस्य हिरण्यगर्भादिस्थावरान्तसर्वजगतः तदिदं प्रज्ञानेत्रम्। प्रज्ञानेत्रमित्यनेन सङ्क्षेपेणोक्तम्। उत्पत्तिस्थितिलयकारणत्वमेव विवृणोति—प्रज्ञाने प्रतिष्ठितमिति। प्रज्ञाने ब्रह्मणि प्रतिष्ठितं शुक्तौ रजतमिव पूर्वोक्तं सर्वं जगदारोपितम्। एतेन उत्पत्तिहेतुत्वमुक्तम्। लोकः चराचरात्मकः प्रपञ्चः प्रज्ञानेत्रः, प्रज्ञा चैतन्यमेव नेत्रं व्यवहारकारणं यस्य सः प्रज्ञानेत्रः। एतेन स्थितिहेतुत्वमुक्तम्। 'प्रज्ञाप्रतिष्ठा प्रज्ञायां चैतन्ये प्रतितिष्ठति', प्रलयकाले सर्वं जगल्लीयते इति प्रज्ञाप्रतिष्ठा चैतन्यं सर्वस्य जगतो लयस्थानम्। एतेन लयकारणत्वमुक्तम्। एतावता च 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म' इति तैत्तिरीयके प्रसिद्धं जगज्जन्मस्थितिलयकारणाख्यं ब्रह्मणस्तटस्थलक्षणमुक्तं भवति॥

पूर्वं विचारद्वयेन संशोधितयोः तत्त्वंपदार्थयोः स्वरूपमुक्तम्। इदानीं महावाक्यार्थमाह—

प्रज्ञानं ब्रह्म॥ ३॥

प्रज्ञानं 'कोऽयमात्मा' इत्यारभ्य 'सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति' इत्यन्तेन वाक्येन निर्णीतं देहेन्द्रियादिसाक्षि त्वंपदार्थलक्ष्यस्वरूपं

चैतन्यं 'ब्रह्म एष ब्रह्मे'त्यारभ्य 'प्रज्ञाप्रतिष्ठे'त्यन्तेन वाक्येन जगत्कारणत्वेन निर्णीतं परब्रह्मस्वरूपमेव । न ह्यनयोरौपाधिकभेदमन्तरेण वस्तुतो भेदोऽस्ति । उभयोर्निर्विशेषचिद्रूपत्वाविशेषादित्यर्थः । तथा च प्रज्ञानं ब्रह्मेति महावाक्येन जीवब्रह्मणोरैक्यमुक्तं मुमुक्षुणा गुरुद्वारा महावाक्यार्थं श्रुत्वा नैरन्तर्येण चिन्तयितव्यमिति भावः ॥ ३ ॥

इदानीमुक्तब्रह्मात्मैक्यविदः फलमाह—

स एतेन प्रज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्याऽमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् इत्योम् ॥ ४ ॥

॥ इति उपनिषत्क्रमेण ततीयः । आरण्यकक्रमेण षष्ठोऽध्यायः ॥

यः कश्चनान्योऽपि वामदेववत्पुरुषः येनैव प्रज्ञेनात्मना ब्रह्म विद्वांसः पूर्वं अमृता अभूवन्नेतेनैव प्रज्ञेनात्मना प्रज्ञानेनात्मना प्रत्यक्चैतन्यस्वरूपेण यथोक्तं ब्रह्म वेद सः विद्वान् अस्माल्लोकात् वर्तमानात् देहात् उत्क्रम्य उत्क्रमणं कृत्वा न तु पक्षिणो नीडादिवोर्ध्वगमनं कृत्वा किन्तु देहात्मभावत्यागेन प्रज्ञानात्मना उत्क्रम्य स्थित्वा अमुष्मिन् इन्द्रियागोचरे स्वर्गे स्वस्वरूपसुखे लोके स्वप्रकाशात्मके ब्रह्मणि सर्वान् कामान् मनुष्यानन्दादिहिरण्यगर्भानन्दान्तान् सर्वानानन्दान् आप्त्वा परमानन्दस्वरूपब्रह्मात्मत्वेन प्राप्य अमृतः वर्तमानदेहपातादूर्ध्वं देहान्तरसम्बन्धाभावेन देहप्राणवियोगलक्षणमरणरहितः समभवत् सम्बभूव । समभवदिति द्विरुक्तिरध्यायपरिसमाप्त्यर्था । उक्तमात्मतत्त्वमङ्गीकारवाचिना ॐकारेण स्वानुभवप्रकटनेन दृढीकुर्वन्नाह—इत्योमिति । 'ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ' इति स्मृतेरोङ्कारेण ब्रह्मानुसन्धानलक्षणं मङ्गलं कर्तुमोमित्युक्तम् ॥ ४ ॥

इति पञ्चमः खण्डः ॥ ५ ॥

॥ इत्यैतरेये द्वितीयारण्यके षष्ठोऽध्यायः । उपनिषत्सु तृतीयोऽध्यायः ॥ ३ ॥

एवमध्यायत्रयेण तत्त्वविद्यां परिसमाप्य इदानीमुक्तविद्यानिर्विघ्नपरिसमाप्त्यर्थं शान्तिकरो मन्त्रः पठितः—

वाङ् मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि । वेदस्य म आणीस्थः । श्रुतं मे मा प्रहासीः । अनेनाधीतेनाऽहोरात्रान् सन्दधामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु मामवतु वक्तारमवतु वक्तारम् ॥

ॐ शान्तिः शान्तिः शान्तिः ।

मे मम वाक् तथोक्ततत्त्वविद्याप्रतिपादकग्रन्थपाठे प्रवृत्तं वागिन्द्रियं मनसि अन्तःकरणे प्रतिष्ठिता। मनसा यद्यच्छब्दजातं विवक्षितं तदेव पठतु। मे मम मनः अन्तःकरणं वाचि प्रतिष्ठितं यद्यद् विद्याप्रतिपादकत्वेन वक्तव्यं शब्दजातमस्ति तदेव मनसा विवक्ष्यते। एवमन्योऽन्यानुगृहीतं वाङ्मनसी विद्यार्थं ग्रन्थं साकल्येनावधारयितुं शक्नुतः। मनसः सावधानत्वाभावे वागिन्द्रियं सुप्तोन्मत्तप्रलापादिवद् यत्किञ्चिदसङ्गतं ब्रूयात्। तथा वाचः पाटवाभावे गद्गदरूपया वाचा विवक्षितं यथावन्नोच्चार्यते। अतस्तयोः परस्परानुकूल्यमस्तु इत्येव प्रार्थ्यते। आविःशब्देन स्वप्रकाशं ब्रह्मचैतन्यमुच्यते। हे स्वप्रकाश ब्रह्मचैतन्यात्मन्, मे मदर्थम् आविः एधि अविद्याऽऽवरणापनयनार्थं प्रकटीभव। हे वाङ्मनसे, मे मदर्थं वेदस्य उक्ततत्त्वविद्याप्रतिपादकग्रन्थस्य आणीस्थः आनयनसमर्थे भवताम्। मे मया श्रुतं गुरुमुखादधीतं ग्रन्थं तदर्थजातं चा मा प्रहासीः मा परित्यजतु, विस्मृतं मा भूदिति यावत्। अनेन विस्मरणरहितेन अधीतेन गुरुमुखात् श्रुतेन ग्रन्थेन अहोरात्रान् अहनि रात्रौ च सन्दधामि संयोजयामि आलस्यं परित्यज्य अधीतं ग्रन्थं निरन्तरं पठामीत्यर्थः। ऋतम् अस्मिन् पठिते ग्रन्थे परमार्थभूतं वस्तु वदिष्यामि कथयिष्यामि विपरीतार्थवदनं कदाचिदपि मा भूदित्यर्थः। तथैव सत्यं व्यावहारिकं यथाभूतमर्थं वदिष्यामि न तु विपरीतार्थं वदनं कदाचिदपि। यद्वा ऋतं मानसिकं सत्यं वाचिकं मनसा वस्तुतत्त्वां विचार्य वाचा वदिष्यामीत्यर्थः। तत् मया वक्ष्यमाणं ब्रह्मतत्त्वं मां शिष्यम् अवतु सम्यग्बोधेन पालयतु। तथा तत् ब्रह्मतत्त्वं वक्तारम् आचार्यम् अवतु बोधकत्वसामर्थ्यप्रदानेन पालयतु। एवं साधनकाले शिष्याचार्ययोः श्रोतृत्ववक्तृत्वशक्तिप्रदानविषयां प्रार्थनामुक्त्वा फलकाले फलसिद्धिः पुनरपि प्रार्थ्यते—अवतु मामवतु वक्तारम्। तत्र शिष्यस्याऽविद्यातत्कार्यनिवृत्तिः फलम्, आचार्यस्य तु तादृशशिष्यदर्शनेन विद्यासम्प्रदायप्रवृत्तिप्रयुक्तपरितोषः फलम्। अनेन मन्त्रपाठेन विद्योत्पत्तेः पुरा विद्याप्रतिबन्धकाः विघ्नाः परिह्रियन्ते। विद्योत्पत्तेरूर्ध्वं तु असम्भावनाविपरीतभावनारूपा विघ्नाः परिह्रियन्ते। अवतु वक्तारमित्यभ्यास आदरार्थः, द्वितीयारण्यकसमाप्त्यर्थश्च। शान्तिशब्दस्य त्रिरुक्तिस्तु आध्यात्मिकाधिदैविकाधिभौतिकरूपत्रिविधविघ्नप्रशान्त्यर्था॥

इति ऐतरेयोपनिषदि उपनिषन्मणिप्रभाव्याख्या।

॥ समाप्ता चेयम् ऐतरेयोपनिषद्॥



ॐ

ॐ तत्सद्ब्रह्मणे नमः।

# छान्दोग्योपनिषत्

## मिताक्षराटीकासमलङ्कृता

—:०:—

योऽनन्तोऽनन्तशक्तिः सृजति जगदिदं पालयत्यन्तरात्मा
यो विश्वान्ते निपीय स्वकमहिमगतः सत्यचिन्मूर्तिरास्ते ॥
योऽनुग्रः सज्जनानां परमहिततमः पापिनामुग्रमूर्तिः
सोऽस्माकं वाञ्छितानि प्रदिशतु भगवानात्मदः श्रीनृसिंहः ॥१॥

यन्मूलप्रवहत्पवित्रपयसः संसेवनादेव मे
रागद्वेषमदाभिधा ग्रहगणा नेशुः स्म सन्तापिनः ॥
यत्संसारपरिश्रमापहृदयासंशीतलामोदभाग्
वन्दे तत्पुरुषोत्तमाश्रमगुरोः पादारविन्दद्वयम् ॥ २ ॥

कृत्वा छान्दोग्यनाम्न उपनिषदो विज्ञगोचरां टीकाम् ।
भूयोऽल्पबुद्धिगम्यां नित्यानन्दो मिताक्षरां कुर्वे ॥ ३ ॥

### अथ छान्दोग्यब्राह्मणे तृतीयः प्रपाठकः

### छान्दोग्योपनिषदि प्रथमोऽध्यायः

देवतोपास्तिसहितकर्मसाध्यकेवलकर्मसाध्ययोरुभयोरपि मार्गयोः नात्यन्तिकी पुरुषार्थसिद्धिः। काम्यफलस्य क्षयिष्णुत्वात् सातिशयत्वात् पारतन्त्र्यादङ्गवैकल्याद्यनेकविघ्नोपहतत्वाच्च । नित्यनैमित्तिकयोरपि

गर्भवासादिहेतुत्वेनानर्थप्रापकत्वात्। निषिद्धस्य चानर्थरूपतायाः प्रसिद्धत्वात्। ततो विरक्तानां निरवद्यपुरुषार्थजिज्ञासूनामुपनिषदारभ्यत इति काण्डद्वयस्य हेतुहेतुमल्लक्षणः सम्बन्धः। तत्रोपासनानां चित्तशुद्धिद्वारा ज्ञानकारणत्वात् कारणस्य च कार्यान्नियतपूर्वभावित्वप्रसिद्धेः साकारवस्तुविषयत्वेन मन्दमतीनां तत्र स्थैर्यसम्भवाच्च प्रागुपदेशः। तत्र प्राकृते पुरुषे कर्माभ्यासस्याऽनादिवासनया दृढीकृतत्वात् कर्मपरित्यागेन केवलोपासने चेतः समर्पणाशक्तेः अङ्गावबद्धकर्मसमृद्धिफलकं तावत् उपासनमाह—

ओमित्येतदक्षरमुद्गीथमुपासीत ओमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥

ओमित्येतदक्षरं वर्णमुद्गीथभक्त्यवयवं परमात्मप्रतीकत्वेनोपासीत। तल्लक्षणया तस्य तद्विशेषणत्वे हेतुमाह—ओमिति हीति। हि यस्मादुद्गाता ओमित्यारभ्य उद्गायत्युद्गीथाख्यसामभक्तिं निर्वर्तयतीत्यत ओङ्कार उद्गीथः। तस्य गुणादिविवक्षयाऽऽह—तस्येति। तस्याक्षरस्योपव्याख्यानमुपकारकाणां रसतमत्वादिगुणानां विस्पष्टमाख्यानं प्रवर्तत इति शेषः ॥ १ ॥

तदेवानुवर्तयन्ती रसतमत्वगुणं भूमिकापूर्वकमाह—

एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः ॥ २ ॥

एषां चराचराणां भूतानां पृथिवी रसः सारः, तस्यास्तत्कारणत्वात्। पृथिव्या आपो रसः, अपां तत्कारणत्वात्। अपामोषधयो व्रीह्यादयो रसः, ओषधीनामप्कार्यत्वात्, गोरसादौ कार्येऽपि रसशब्दप्रयोगदर्शनात्। ओषधीनां पुरुषो देहो रसः, तस्यान्नपरिणामत्वात्। पुरुषस्य वाग्रसः, तदवयवानां वचसोऽधिष्ठानात्। वाच ऋग्रसः, तस्या वाग्निर्वर्त्यत्वात्। ऋचः साम रसः, तस्य ऋगध्यूढत्वात्। साम्न उद्गीथावयव ओङ्कारो रसः, तस्योङ्कारपूर्वकत्वात् ॥ २ ॥

अतः—

स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः ॥ ३ ॥

स एष भूतानामुत्तरोत्तररसानामतिशयेन रसो रसतमगुणः परम

उत्कृष्टो यतः परार्ध्यः अर्धं स्थानं परं च तदर्धं च परार्धम्, तदर्हतीति परार्ध्यः परमात्मस्थानार्हः। अष्टमः पृथिव्याद्युक्तरससंख्यायां मध्येष्ट-सङ्ख्यापूरकः यदुद्‌गीथः यो वा उद्‌गीथावयव ओङ्कारः ॥ ३ ॥

रसतमत्वगुणं विधाय आप्तिगुणं विधातुमुक्तर्गादिजातिं शिष्यरूपा श्रुतिः पृच्छति--

कतमा कतमर्क् कतमत्कतमत्साम कतमः
कतम उद्‌गीथ इति विमृष्टं भवति ॥ ४ ॥

उक्तानामृक्सामजातीनां मध्ये वाच ऋग्रस इत्यत्र कतमा कतमा ऋक् का वा ऋग्जातिर्विवक्षिता कतमत्कतमत्साम सामजातिः कतमः कतम उद्‌गीथ इति विमृष्टं विचारितं पृष्टं भवति। अत्र वीप्सात्रयं तु तत्तज्जातिज्ञाने श्रद्धातिरेकप्रदर्शनार्थम् ॥ ४ ॥

एवं शिष्यरूपेण चोदिते श्रुतिराचार्यरूपोत्तरमाह---

वागेवर्क् प्राणः सामोमित्येतदक्षरमुद्‌गीथस्तद्वा
एतन्मिथुनं यद्वाक् च प्राणश्चर्क् च साम च ॥ ५ ॥

वागेव ऋग्जातिः वाचः ऋग्योनित्वात्। प्राणः पञ्चवृत्तिकः साम सामजातिः। प्राणबलेन हि गीतिरुत्पद्यते। ओमित्येतदक्षरं प्रकृतमेवो-द्‌गीथः, तस्योद्‌गीथावयवत्वात्। अथ तद्‌गुणान्तरं सर्वकामावाप्तिरूपं विदधाति—तद्वा एतदिति। तदेतद् वै प्रसिद्धं मिथुनं द्वन्द्वं किं तत् यद् वाक् च प्राणश्चेति। एतयोरेव विशेषणं ऋक् च साम चेति ऋक्सामात्मनाभि-व्यक्तयोरेव वाक्प्राणयोर्मिथुनत्वप्रदर्शनार्थम्। ततश्च ऋकसामात्मनाभि-व्यक्तौ वाक्प्राणौ मिथुनं द्वन्द्वमेवेत्यर्थः ॥ ५ ॥

तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते। यदा वै
मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् ॥ ६ ॥

तदेतद् वाक्प्राणात्मकमिथुनम् ओमित्येतस्मिन्नक्षरे संसृज्यते सम्बध्यते अन्तर्भवति, ओङ्कारस्य वाङ्मयत्वात् प्राणनिष्पाद्यत्वाच्च। उक्तमिथुनस्य कामापयितृत्वं दृष्टान्तेनाह—यदेति। यदा वै यदेव मिथुनौ मिथुना-वयवौ स्त्रीपुमांसौ ग्राम्यकर्मणि समागच्छतः संयुज्येयाताम्, तदा तौ स्त्रीपुमांसौ अन्योन्यस्येतरेतरस्य काममभीष्टमापयतो वै प्रापयत एव यथा तथोक्तं मिथुनमित्यर्थः। तथा च स्वात्मानुप्रविष्टेन मिथुनेन सर्व-कामाप्तिगुणवत्त्वमोङ्कारस्य सिद्धमित्यभिप्रायः ॥ ६ ॥

एवमोङ्कारमाप्तिगुणविशिष्टं निरूप्य तदुपासनस्य गुणफलमाह—

आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ७ ॥

आपयिता प्रापयिता ह वै कामानामभिलषितानां यजमानस्य भवति। कः उद्गाता य एतदक्षरमोङ्कारम् उद्गीथमुद्गीथावयवभूतम् एवम् आप्तिगुणवद् विद्वान् जानन्नुपास्ते स इत्यर्थः ॥ ७ ॥

समृद्धिगुणं विधातुमाह—

तद्वा एतदनुज्ञाक्षरं यद्धि किञ्चानुजानात्योमित्योमित्येव तदाहैषा एव समृद्धिर्यदनुज्ञा समर्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ८ ॥

तदेतदोङ्कारमुक्तलक्षणमनुज्ञाक्षरं वै प्रसिद्धम्। कुतः, यद्धि किञ्च यत्किञ्चन धनाद्यनुजानाति इदमन्नादि मया ग्रहीतव्यमित्युक्ते तद्विषयां ह्यनुज्ञां प्रयच्छति तदा मन्तव्यं प्रत्योमित्येवाह वदत्योमित्येवाज्ञां प्रयच्छति, अत एव समृद्धिहेतुत्वादेषा एव समृद्धिरपि। का? यदनुज्ञा याऽनुज्ञा। एतद्गुणोपासनफलमाह—समर्धयितेति। समर्धयिता पूरयिता ह वै कामानां यजमानस्य भवति। कः? य उद्गाता एतदक्षरमेवं समृद्धिगुणकं विद्वानुपास्ते ॥ ८ ॥

यथोक्तं त्रिगुणमक्षरमुपास्यत्वाय स्तौति—

तेनेयं त्रयी विद्या वर्तत ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति। एतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन ॥ ९ ॥

तेन यथोक्तोक्तेनाक्षरेणेयं प्रसिद्धा त्रयी विद्या वेदत्रयीनिर्वर्त्यं कर्म वर्तते त्रयीविद्याशब्देन तद्विहितकर्मलक्षणायां प्रसिद्धिमुपसंहरति—ओमितीति। ओमित्याश्रावयत्यध्वर्युः। ओमिति शंसति होता। ओमित्युद्गायत्युद्गाता। स्तुत्यन्तरमाह—एतस्येति। तच्च कर्मैतस्यैवाक्षरस्यापचित्यै पूजार्थमपीश्वरस्याक्षरप्रतीकत्वात्। किञ्च तच्च कर्मैतस्यैवाक्षरस्य महिम्ना महत्त्वेन ऋत्विग्यजमानादिलक्षणविकारेण रसेन व्रीह्यादिनिर्वृत्तेन पुरोडाशादिना त्रयी विद्या वर्तत इति पूर्वेण सम्बन्धः ॥ ९ ॥

उक्तज्ञानसहितं कर्म फलातिशयहेतुरित्यर्थादुक्तार्थदार्ढ्याय पूर्वपक्षयति—

तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद। नाना तु विद्या चाविद्या च। यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ॥ १० ॥

तेनाक्षरेणोभावपि कर्म कुरुतः। कौ ? यश्चैतदक्षरं यथाव्याख्यातं वेद यश्च तथा न वेद न जानातीत्यतस्तयोः कर्मसामर्थ्यादेव फलसिद्धौ न ज्ञानकृतो विदुषः फलातिशय इत्येतत् परिहरति—नाना त्विति। तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। यतो विद्या चोपासना अविद्या च कर्म नाना नानाफलं पृथक्फलमतो यदेव कर्म विद्ययोद्गीथाद्यङ्गमात्रविषयया श्रद्धया तात्पर्येणोपनिषदा देवतादिविषयोपासनात्मिकया युक्तः सन् करोति तदेव कर्म वीर्यवत्तरमतिशयेन वीर्यवद् भवति। एवमुक्तगुणत्रय-विशिष्टोद्गीथोपासनमुपसंहरति—इति खल्विति। इत्येवं खलूपासनो-पयुक्तरसतमत्वादिगुणविशिष्टस्यैवाक्षरस्य व्याख्यानमित्यर्थः ॥ १० ॥

इति तृतीये प्रथमः खण्डः ॥ १ ॥

अथास्यैवाक्षरस्याध्यात्मादिभेदेन मुख्यप्राणादिदृष्ट्योपास्यत्वार्थं प्राणशुद्धत्वमाख्यायिकया निर्धारयति—

देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति ॥ १ ॥

प्राजापत्याः प्रजापतेर्यजमानावस्थस्य कर्मिणोऽपत्यवत् स्थिताः प्राजा-पत्याः देवाश्चासुराश्च देवासुराः। देवाः द्योतनात्मिकाः सात्त्विकाः करणवृत्तयः असुरा असुष्वेव रमणाद् राजसास्तामसाश्च करणवृत्तयस्ते चोभये ह किल वै यत्र यस्मिन्नन्योन्यविषयापहारलक्षणे निमित्ते संये-तिरे प्रतिदेहमन्योन्यस्य वृत्त्युद्भवाभिभवलक्षणं सङ्ग्रामं कृतवन्तः तत्तत्र सङ्ग्रामनिमित्ते ह देवा उद्गीथकर्मोपलक्षितं सोमयागमाजह्रुराहृतवन्तो-ऽनेन कर्मणा एनानसुरानभिभविष्यामः पराभवं करिष्याम इति ॥ १ ॥

ते ह नासिक्यं प्राणमुद्गीथमुपासांचक्रिरे तँहासुराः पाप्मना विविधुस्तस्मात्तेनोभयं जिघ्रति सुरभि च

दुर्गन्धि च पाप्मना ह्येष विद्धः ॥ २ ॥

एवमभिप्रायास्ते देवाः नासिक्यं नासिकायां भवं प्राणं तदभिमानिनं देवमुद्गीथमुपासांचक्रिरे नासिक्यप्राणदृष्टयोद्गीथावयवमोङ्कारमुपासितवन्त इति यावत्। तद्वैरित्थमुपास्यमानं घ्राणदेवं ह असुराः स्वाभाविकेन्द्रियवृत्तिरूपाः स्वोत्थेन पाप्मना आसङ्गलक्षणेन विविधुर्विद्धवन्तः संयोजितवन्तः । तस्मात् कारणात् तेन घ्राणेन लोकः उभयं सुरभि च दुर्गन्धि चेत्युभयविधं गन्धं गृह्णाति हि यस्मात् पाप्मना एष घ्राणाख्यः प्राणः विद्धः संयोजितः ॥ २ ॥

अथ ह वाचमुद्गीथमुपासांचक्रिरे ताꣳ हासुराः पाप्मना विविधुस्तस्मात्तयोभयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धा ॥ ३ ॥ अथ ह चक्षुरुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद्विद्धम् ॥ ४ ॥ अथ ह श्रोत्रमुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतद्विद्धम् ॥ ५ ॥ अथ ह मन उद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ सङ्कल्पयते सङ्कल्पनीयं चासङ्कल्पनीयं च पाप्मना ह्येतद्विद्धम् ॥ ६ ॥

अथ ह वाचं चक्षुः श्रोत्रं मन इति पर्यायाः समानार्थाः ॥ ३–६ ॥

अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे तꣳ हासुरा ऋत्वा विदध्वंसुर्यथाश्मानमाखणमृत्वा विध्वꣳसेत् ॥ ७ ॥

अथ घ्राणादिषु नैराश्यानन्तरं ह य एवायं प्रसिद्धो मुख्यो मुखे भवो मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे । तमुपास्यमानं मुख्यं प्राणं ह असुराः पूर्वाभ्यासवशेन ऋत्वा प्राप्य विदध्वंसुः स्वयमेव विनष्टाः । कथम् ? यथा लोके अश्मानं पाषाणम् आखणं न शक्यते खनितुं विदारयितुमित्याखणः, स एवाखणस्तमृत्वा प्राप्यार्थाच्छ्लोष्टत्यन्तराच्च पांसुपिण्डो

विध्वंसेत विशीर्येत एवमेव विदध्वंसुरिति सम्बन्धः ॥ ७ ॥

उक्तगुणयोः फले आह—

एवं यथाश्मानमाखणमृत्वा विध्वꣳसत एवꣳ हैव स विध्वꣳसते य एवंविदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणः ॥ ८ ॥

यथाश्मानं पाषाणमृत्वा पांसुपिण्डः विध्वंसते एवं हैव विध्वंसते। स कः? य एवंविदि यथोक्तप्राणगुणविदि पापं तदनर्हं कर्तुं कामयते इच्छति। यश्चैनं प्राणविदं अभिदासति हिनस्ति ताडनादि प्रतिकूलं करोति। तस्मात् स एष प्राणविदश्माखण इवाश्माखणः अप्रधृष्यः ॥ ८ ॥

घ्राणादिदेवताः पाप्मविद्धाः, न तु प्राणदेवतेत्यत्र किं गमकमित्यत आह—

नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन यदश्नाति यत्पिबति तेनेतरान् प्राणानवत्येतमु एवान्तोऽविदित्वोत्क्रामति व्याददात्येवान्तत इति ॥ ९ ॥

हि यस्मान्नैवैतेन मुख्यप्राणेन सुरभि न च दुर्गन्धि वस्तु विजानाति तस्मादेषः प्राणोऽपहतपाप्मा। किञ्च प्राणविषयस्यासाधारणत्वाभावादपि न तस्य पाप्मसम्बन्ध इत्याह—तेनेति। तेन प्राणेन कृत्वा लोको यदश्नाति यत् पिबति तेनाशितेन पीतेन चेतरान् घ्राणादीन् प्राणानवति पालयति। तदुपयुक्तान्नस्य कार्यकरणसङ्घातस्थितिहेतुत्वे मानमाह—एतमु एवेति। अन्ततः अन्तकाले एतम् उ एव एतं मुख्यं प्राणं तद्वृत्तिहेतुभूतमन्नपानमविदित्वा अलब्ध्वोत्क्रामति घ्राणादिप्राणसमुदाय इत्यर्थः। तदा तेषामन्नप्राप्त्यभावादेवोत्क्रान्तिः न त्वशिशिषाऽभावादित्यत्र गमकमाह—व्याददातीति। व्याददात्येव मुखविदारणं करोत्येव अन्ततो अन्तकाले इत्यतोऽशिशिषास्त्येवेति निश्चीयते इत्यर्थः ॥ ९ ॥

एवं शुद्धत्वगुणदृष्टिविशिष्टोद्गीथोपासनमुक्त्वा आङ्गिरसत्वबृहस्पतित्वायास्यत्वगुणकं प्राणदृष्टिविशिष्टोद्गीथोपासनं विदधाति—

तꣳहाङ्गिरा उद्गीथमुपासांचक्र एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः ॥ १० ॥

तं ह प्राणमुद्गीथमङ्गिरा नाम ऋषिरुपासाञ्चक्रे अतोऽन्येऽतमुम एव प्राणमुद्गीथमाङ्गिरसमङ्गिरसगुणविशिष्टं मन्यन्ते उपासते। कुतः?

अङ्गानां हस्तादीनां यद् यस्मादुद्गीथः प्राण एव सन् रसः तेनासावाङ्गिरसः ॥ १० ॥

तेने तँ᳖ह बृहस्पतिरुद्गीथमुपासाञ्चक्रे एतमु एव बृहस्पतिं मन्यन्ते वाग्घि बृहती तस्या एष पतिः ॥ ११ ॥

बृहस्पतिर्देवपुरोहितः। शेषं समानम्। तत्र हेतुः वाग् हि यस्माद् बृहती तस्याः वाचः एषः प्राणः पतिः ॥ ११ ॥

तेन तँ᳖हायास्य उद्गीथमुपासाञ्चक्र एतमु एवायास्यं मन्यन्त आस्याद्यदयते ॥ १२ ॥

तेन अयास्यनाम्ना ऋषिः। शेषं समानम्। यद्यस्मादास्यात् मुखादयते निर्गच्छति तेन प्राणोऽयास्यः ॥ १२ ॥

तेन तँ᳖ह बको दाल्भ्यो विदाञ्चकार। स ह नैमिषीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायति ॥ १३ ॥

किञ्च—तं ह प्राणं बको नामतः दल्भ्यस्यापत्यं दाल्भ्यो विदाचकार ज्ञातवान्। स बको ह विदित्वा नैमिषीयानां निमिषक्षेत्रोद्भवानां सत्रं कुर्वतामुद्गाता बभूव। स उद्गाता एभ्यो नैमिषीयेभ्यः कामानभिलषितानागायति स्म ह ॥ १३ ॥

आगाता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् ॥ १४ ॥

अतोऽन्योऽप्यागाता प्रापयिता ह वै कामानां भवति। यः उद्गाता एवं प्राणात्मकं विद्वानेतदक्षरमोङ्कारमुद्गीथावयवम् उपास्ते सोऽपि। इत्येवमुक्तमध्यात्मं दर्शनमित्यर्थः ॥ १४ ॥

इति तृतीये द्वितीयः खण्ड ॥ २ ॥

अथाधिदैवतम्। य एवासौ तपति तमुद्गीथमुपासीत। उद्यन्वा एष प्रजाभ्य उद्गायति उद्यँ᳖स्तमोभयम्। अपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य एवं वेद ॥ १ ॥

अथाध्यात्मप्राणदृष्ट्योद्गीथोपासनकथनानन्तरम् आधिदैवतं देवतामधिकृत्य प्रवर्तमानं कथं य एवासावादित्यस्तपति तमुद्गीथमुपासीत,

आदित्यदृष्ट्योद्गीथमुपासीतेति यावत् । कस्मात्, उद्यन्नुद्गच्छन् वै एष सविता प्रजाभ्यः प्रजार्थं प्रजानामन्नोत्पत्त्यर्थमुद्गायत्युद्गातृवदुद्गायतीव अतस्तथोपासनं तद्गुणमाह—उद्यन्निति। उद्यन् सविता नैशं तमस्तज्जं च भयं प्राणिनामपहन्ति नाशयति। एतद्गुणोपासनफलमाह—अपहन्तेति। अपहन्ता ह वै भयस्य जन्ममरणादिलक्षणस्य तमसश्च तत्कारणस्याज्ञानस्य भवति। कः य एवम् उक्तगुणमादित्यं वेदोपास्ते सः ॥ १ ॥

अध्यात्माधिदैवतयोरेकोपासनविवक्षया गुणादिसाम्यमाह—

समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिममं चोद्गीथमुपासीत ॥ २ ॥

अपि स्थानतो भिन्नोऽप्ययं प्राणो गुणतो नामतश्च सवित्रा समानस्तुल्य एव। असावादित्यः प्राणेन समानः। कथम्? उष्णोऽयं प्राणः उष्णश्चासौ सविता। तथा स्वरति गच्छतीति स्वर इतीमं प्राणमाचक्षते कथयन्ति। तथा स्वर इति प्रत्यावृत्त्यागच्छतीति प्रत्यास्वर इति चामुं सवितारमाचक्षते अस्तमित्वा पुनरुदयात् । प्राणस्य पुनस्तस्मिन्नेव देहे अनागमनान्न प्रत्यास्वरत्वमपि नामेत्यर्थः। यस्मादेवंगुणनामभ्यां साम्यं तस्माद् वै एव एतमिमं प्राणममुं चादित्यमेकीकृत्य उद्गीथमुपासीत ॥ २ ॥

अथ प्राणवृत्तिविशेषदृष्ट्या उद्गीथोपासनमाह—

अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति । स प्राणो यदपानिति सोऽपानोऽथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः सा वाक् तस्मादप्राणन्ननपानन् वाचमभिव्याहरति ॥ ३ ॥

अथानन्तरं व्यानमेव खलूद्गीथमुपासीत। व्यानस्वरूपमेवेतरभेदेन दर्शयति—यद्वेति। यद्वै पुरुषः प्राणिति मुखनासिकाभ्यां वायुं बहिः निःसारयति सः प्राणः प्राणवायुवृत्तिविशेषः । यदपानिति अपश्वसिति मुखनासिकाभ्यामेव वायुमन्तराकर्षति सोऽपानो वृत्तिविशेषः। अथानन्तरमुक्तलक्षणयोः प्राणापानयोर्यः सन्धिस्तत्स्थो वृत्तिविशेषः स व्यानः। तस्य वीर्यवत् कर्महेतुत्वात् तदुपासनमित्याह—यो व्यान इति। यो

व्यानः सा वाक् यस्मात् सा व्यानमात्रनिर्वर्त्या तस्मादप्राणन्ननपानन् प्राणापानव्यापारमकुर्वन् वाचमभिव्याहरत्युच्चारयति ॥ ३ ॥

तथा वाग्विशेषामृचमृक्स्थं साम सामावयवं चोद्गीथं व्यानमात्रनिर्वर्त्यमित्याह —

या वाक् सर्क् तस्मादप्राणन्ननपानन्नृचमभिव्याहरति। यर्क् तत्साम तस्मादप्राणन्ननपानन्साम गायति । यत्साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायति ॥ ४ ॥

या वाक् सा ऋगित्यादि समानार्थम् ॥ ४ ॥

अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानꣳस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥ ५ ॥

अतोऽस्माद् वागाद्यभिहरणादन्यान्यपि यानि वीर्यवन्ति कर्माणि प्रयत्नाधिक्यनिर्वर्त्यानि यथाग्नेर्मन्थनमाजेर्मर्यादापसरणं धावनं दृढस्य धनुष आयमनमाकर्षणमप्राणन्ननपानँस्तानि करोत्येतस्य हेतोरेतस्मादेवोक्तकारणाद् व्यानमेवोद्गीथमुपासीत नाऽन्यद् वृत्त्यन्तरम् । फलं त्वेतद्गुणानुरूपं द्रष्टव्यमित्यर्थः ॥ ५ ॥

उद्गीथोपासनप्रसङ्गेन तदक्षरोपासनमध्यात्माधिदैवादिभेदेनाह—

अथ खलूद्गीथाक्षराण्युपासीत उद्गीथ इति प्राण एवोत्प्राणेन ह्युत्तिष्ठति वाग्गीर्वाचो ह गिर इत्याचक्षतेऽन्नं थमन्ने हीदꣳ सर्वꣳ स्थितम् ॥ ६ ॥

उद्गीथनामाक्षराण्युपासीतेत्युक्ते भक्त्यक्षरोपासनशङ्कां वारयति— उत् गी-थ इत्येतान्यक्षराणि । तत्र प्राण एव उत् उदक्षरे प्राणदृष्टिः कर्तव्या । कुतः ? प्राणेन हि यस्मात् सर्वो लोकः उत्तिष्ठति । वाक् गीः वाचो ह गिर इत्याचक्षते शिष्टाः । अन्नं थम् अन्ने हि यस्मादिदं सर्वं प्राणिजातं स्थितम् ॥ ६ ॥

द्यौरेवोदन्तरिक्षं गीः पृथिवी थमादित्य एवोद्वायुर्गीरग्निस्थꣳ सामवेद एवोद्यजुर्वेदो गीरृग्वेदस्थं दुग्धेऽस्मै

वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ॥ ७ ॥

तथा द्यौरेवोदित्यादि समानम् । एतदुपासनफलमाह—दुग्ध इति । अस्मै उपासकाय वाग् दोहं दुग्धे दोग्धि । कोऽसौ दोहः यो वाचो दोह ऋग्वेदादीनां स्वाधीनोच्चारणलक्षणः । किञ्च—अन्नवान् प्रभतान्नोऽन्नमत्तीत्यन्नादश्च दीप्ताग्निर्भवति । कः ? य एतानि प्राणादिरूपेणोक्तान्युद्गीथाक्षराण्येवमुत्थानादिधर्मकाणि विद्वानुपास्ते कथमुद्गीथ इत्येवमित्यर्थः ॥ ७

वाक्समृद्ध्यादिफलकमुपासनमुपदिश्य फलसमृद्धिर्यथा भवति तत्प्रकारज्ञानं सर्वकाम्योपासनशेषभूतं प्रासङ्गिकं विदधाति—

अथ खल्वाशीः समृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन्स्यात्तत्सामोपधावेत् ॥ ८ ॥

अथोक्तोपासनानन्तरं खल्वाशीः समृद्धिराशिषः कामफलस्य समृद्धिर्यथा भवेत् तथा विधीयत इति शेषः । उपसरणान्युपसर्तव्यानि ध्येयानि वस्तूनि इत्येवमुपासीत । तान्येव दर्शयति—येनेति । येन साम्ना सामविशेषेण स्तोष्यन् स्तुतिं करिष्यन् स्याद् उपवेदुद्गाता तदुपधावेदुपस्मरेद् उत्पत्त्यादिभिश्चिन्तयेत् ॥ ८ ॥

यस्यामृचि तामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोष्यन्स्यात्तां देवतामुपधावेत् ॥ ९ ॥ येन च्छन्दसा स्तोष्यन्स्यात्तच्छन्द उपधावेद्येन स्तोमेन स्तोष्यमाणः स्यात्तँ स्तोममुपधावेत् ॥ १० ॥ यां दिशमभिष्टोष्यन्स्यात्तां दिशमुपधावेत् ॥ ११ ॥

यस्यामृचि तत् साम वर्तते तां च ऋचमृगृदेवतादिभिरुपधावेदिति प्रत्येकं सम्बध्यते । यदार्षेयं साम तं च ऋषिं यां सामदेवतामभिष्टोष्यन् स्यात् तां च देवतां येन गायत्र्यादिच्छन्दसा स्तोष्यन् स्यात् तच्छन्दः येन त्रिवृदादिस्तोमेन स्तोष्यमाणः स्यात् तं च स्तोमम् । अत्रात्मनेपदप्रयोगात् सोमफलस्य कर्तृगामित्वमवगम्यते । यां दिशमभिव्याप्य देवताविशेषं स्तोष्यन् स्यात् तां च दिशमधिष्ठात्रिन्द्रादिभिरुपधावेत् ॥ ९–११ ॥

आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामः समृद्ध्येत यत्कामः

स्तुवीतेति यत्कामः स्तुवीतेति ॥ १२ ॥

अन्तत एतद्ध्यानावसाने उद्गातात्मानमपि गोत्रादिभिरुपसृत्य सञ्चिन्त्य काममभिलषितमनुसन्दधानोऽप्रमत्तः स्वरादिभ्यः प्रमादमकुर्वन् स्तुवीत स्तोष्यमाणां देवतामित्यर्थः। एतत्फलमाह—अभ्याशो हेति। यत्कामो यः कामो यस्य सोऽयं यत्कामः सन्नुद्गाता यद्यस्मिन् कर्मणि यथोक्तरीत्या स्तुवीत स्तोता भवेत् तत्र कर्मणि अभ्याशो ह क्षिप्रमेवास्मै एवंविदुद्गात्रे स कामः समृद्ध्येत समृद्धिं गच्छेत्। पुनरुक्तिस्तु प्रासङ्गिकोपासनसमाप्त्यर्था ॥ १२ ॥

इति तृतीये तृतीयः खण्डः ॥ ३ ॥

उद्गीथप्रकरणाविच्छेदज्ञापनार्थं प्रासङ्गिकं हित्वा प्रकृतमेवाऽनुसन्दधाति—

ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥

ओमित्येतदक्षरमित्याद्युक्तार्थं तस्याक्षरस्योपयुक्तयोरमृताभयगुणयोर्व्याख्यानं कर्तुं प्रस्तावं करोति ॥

देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशꣳस्ते छन्दोभिराच्छादयन्यदेभिराच्छादयꣳस्तच्छन्दसां छन्दस्त्वम् ॥ २ ॥

देवा वै देवासुरा इत्यत्रोक्ताः। मृत्योर्मारकात् पाप्मनो बिभ्यत भीताः सन्तः त्रयीं विद्यां त्रयीविहितं कर्म प्राविशन् प्रविष्टवन्तो वैदिकं कर्म प्रारब्धवन्तस्तन्मृत्युत्राणं मन्यमानाः। किं च ते देवाः कर्मण्यविनियुक्तैः छन्दोभिर्मन्त्रैर्जपादि कुर्वन्त आत्मानं कर्मान्तरे आच्छादयन् छादितवन्तः। यद् यस्मादेभिः छन्दोभिः देवा आत्मानमाच्छादयँस्तत् तस्मात् छन्दसां छन्दस्त्वम् ॥ २ ॥

एवं कर्म कुर्वतामपि मृत्युवश्यता न व्यावृत्तेत्याह—

तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि। ते नु वित्त्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ॥ ३ ॥

यथा लोके मत्स्यमुदके परिपश्येत् मत्स्यघातको बडिशाद्युपायसाध्यं मन्यमानः। एवमेव मृत्युस्तान् कर्मपरान् उ अपि देवान् तत्र

ऋचि साम्नि यजुषि तत्सम्बद्धे कर्मणि पर्यपश्यत् कर्मक्षयोपायसाध्यान् मन्यमानः। मृत्युपरिहारोपायमुपदिशति—ते नु विश्वेति। नु वितर्के। ते देवाः कर्मणा शुद्धात्मानः सन्तो मृत्योश्चिकीर्षितं वित्त्वा विदित्वा ऋचः साम्नो यजुषः उक्तार्थादूर्ध्वा व्यावृत्ताः सन्तः स्वरमेवोङ्कारमेव प्राविशन् प्रविष्टाः तदुपासनपराः संवृत्ताः ॥ ३ ॥

ओङ्कारे कथं स्वरशब्दप्रवृत्तिरित्यत आह—

यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येव ँ सामैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभय तत्प्रविश्य देवा अमृता अभया अभवन् ॥ ४ ॥

यदा यस्मिन् काले वै ऋचमाप्नोत्यध्ययनेन स्वाधीनं करोति तदोमित्येवातिस्वरत्यतिशयेनादरर्धियोच्चारयति। एवं यदा सामाप्नोति तदोमित्येवातिस्वरति। एवं यजुःप्राप्तिरप्योङ्कारपूर्विकैव। अतः एष उ अपि स्वरः कः यदक्षरमोङ्काराख्यमेतच्चामृतभयं तथाविधब्रह्मप्रतीकत्वात्। तदुपासकानां गुणानुरूपं फलमाह—तदिति। तदुक्तोभयरूपमोङ्कारं प्रविश्य ब्रह्मबुद्ध्या ध्यात्वा अमृता अभयाश्चाभवन् ॥ ४ ॥

तथाप्यन्येषां किमित्यत आह—

स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षर ँ स्वरममृतमभयं प्रविशति। तत्प्रविश्य यदमृता देवास्तदमृतो भवति ॥ ५ ॥

स यः कश्चिदन्योऽपि देववदेतदक्षरमेवमुक्तगुणं विद्वान् प्रणौति प्रकर्षेण स्तौत्युपास्ते सोऽप्यक्षरममृतमभयं ब्रह्म प्रविशति राजगृहं प्रविष्टानामिवाक्षरं प्रविष्टानामपि फले विशेषः स्यादित्यत आह—तत्प्रविश्येति। तदुक्ताक्षरप्रतीकं ब्रह्म प्रविश्य यदमृता येनामृतत्वेन विशिष्टा देवा अभूवंस्तदमृतस्तेनैवामृतत्वेन विशिष्टो भवत्यन्योऽपीत्यर्थः ॥ ५ ॥

इति तृतीये चतुर्थः खण्डः ॥ ४ ॥

प्रणवोद्गीथयोरेकत्वोक्तिपूर्वकमुक्तादित्यदृष्टयोद्गीथोपासनं गुणान्तरविधानाय अनुवदति—

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरन्नेति ॥ १ ॥

अथोभयगुणकोपास्तिकथनानन्तरं खलु प्रसिद्धं य उद्गीथः स

प्रणवः बह्वृचां यः प्रणवः स उद्गीथश्छन्दोगानामिति । असौ वा आदित्य उद्गीथ एष प्रणवः प्रणवशब्दवाच्योऽपि कस्माद्धि यस्मादेषः सवितोमिति स्वरन्नुच्चारयन्नेति गच्छति । यद्वा प्राणिनां प्रवृत्त्यर्थमोमिति स्वरन्ननुज्ञां कुर्वन्निवैति ॥ १ ॥

अत ओङ्कारत्वं सवितुरनुवदितं निन्दित्वा रश्मिभेददृष्टिं सफलां विदधाति—

एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह
कौषीतकिः पुत्रमुवाच रश्मीँ स्त्वं पर्यावर्तयाद् बहवो
वै ते भविष्यन्तीत्यधिदैवतम् ॥ २ ॥

एतमु एवादित्यं रश्मिभेदमकृत्वैवाहमभ्यगासिषमाभिमुख्येन गीतवान् ध्यानं कृतवान् यस्मात् तस्मान्मम त्वमेकः पुत्रोऽसीति ह कुषीतकस्यापत्यं कौषीतकिः पुत्रमुवाच अतस्त्वं रश्मीनादित्यं च भेदेन पर्यावर्तयादिति प्रथमपुरुषः पर्यावर्तयेति मध्यमपुरुषत्वेन व्याख्येयः त्वम्पदयोगात् । एवं बहवो वै ते तव पुत्रा भविष्यन्तीत्येवमुक्तमाधिदैवतं दर्शनमित्यर्थः ॥ २ ॥

तथैवोक्तप्राणोपासनमनूद्य निन्दित्वा मुख्यामुख्यप्राणयोर्भेदेनोपासनाफलमाह—

अथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपा-
सीतोमिति ह्येष स्वरन्नेति ॥ ३ ॥

अथानन्तरमध्यात्ममुच्यते । य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीत, कुतो हि यस्मादेषः प्राणोऽप्योमिति स्वरन् वागादिप्रवृत्त्यर्थमनुज्ञां कुर्वन्निवेति । शेषं समानम् ॥ ३ ॥

एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह
कौषीतकिः पुत्रमुवाच प्राणाँ स्त्वं भूमानमभिगायताद्
बहवो वै मे भविष्यन्तीति ॥ ४ ॥

अतः प्राणान् वागादीन् मुख्यं च प्राणं भेदगुणविशिष्टमुद्गीथं भूमानं बहुत्वोपेतं कृत्वा त्वं मनसाभिगायतादावर्तय । बहवो वै मे मम पुत्रा भविष्यन्तीत्यभिप्रायः सन्नित्यर्थः ॥ ४ ॥

एवं प्रधानविज्ञानफलमुक्त्वा उक्तस्याङ्गभूतस्य प्रणवोद्गीथयोरेकज्ञानस्यानुवादपूर्वकं फलमाह—

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरतीत्यनुसमाहरतीति ॥ ५ ॥

अथ खल्वित्यनुवाद उक्तार्थः। एतदेकत्वविज्ञानसामर्थ्यादुद्गाता होतृषदनाद्धोता यत्स्थः शंसति तद्धोतृषद्नम्, तन्मात्रादेव तु क्षतसन्धानासम्भवाल्लक्षणया हौत्रात् कर्मणः सम्यक्प्रयुक्तात् प्रणवात् तद्धेतुं कृत्वा दुरुद्गीतमपि दुष्टमुद्गीतमुद्गानं स्वकर्मणि प्रामादिकं क्षतं प्राप्तमनुसमाहरत्येवानुसन्दधत्येव। अभ्यास आदरार्थः ॥ ५ ॥

इति तृतीये पञ्चमः खण्डः ॥ ५ ॥

पुत्राद्यैश्वर्यैकदेशविषयमुपासनमुक्त्वा ज्योतिष्टोमाद्यधिकृतस्य समग्रैश्वर्यप्राप्त्यर्थमधिदैवतमध्यात्मं चोद्गीथोपासनं विधातुं तावदाधिदैवमङ्गोपासनं विदधाति इयमेवेत्यारभ्य एषोऽन्तरादित्ये इत्यतः प्राक्तनग्रन्थेन—

इयमेवर्गग्निः सा मतदेतदेतस्यामृच्यध्यूढ ँ साम तस्मादृच्यध्यूढ ँ साम गीयत इयमेव साऽग्निरमस्तत्साम ॥ १ ॥

इयमेव पृथिवी ऋक् ऋचि पृथिवीदृष्टिः कर्तव्या। अग्निः साम साम्न्यग्निदृष्टिं कुर्यात्। कुतः त देतदग्न्याख्यं सामैतस्यां पृथिव्यामृच्यध्यूढमधिगतमुपरिभावेन स्थितं यस्मात् तस्मादिदानीमप्यृच्यध्यूढमृच्याश्रितं साम गीयते। तथा इयमेव पृथिवी सा सामनामार्धसाशब्दवाच्या स्त्रीत्वात्। अग्निरम इत्युत्तरार्धामशब्दवाच्यः पुंस्त्वात्। तदेतत् पृथिव्यग्निद्वयं सामैकशब्दाभिधेयत्वात् साम ॥ १ ॥

अन्तरिक्षमेवर्ग्वायुः साम तदेतदेतस्यामृच्यध्यूढ ँ साम तस्मादृच्यध्यूढ ँ साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत्साम ॥ २ ॥ द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढ ँ साम तस्मादृच्यध्यूढ ँ साम गीयते द्यौरेवसादित्योऽमस्तत्साम ॥ ३ ॥ नक्षत्राण्येवर्क् चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढ ँ साम तस्मादृच्यध्यूढ ँ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत्साम ॥४॥

पूर्ववदेवान्येऽपि पर्याया बोद्धव्याः ॥ २–४

अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढ ँ साम तस्मादृच्यध्यूढ ँ साम गीयते ॥ ५ ॥ अथ यदेवैतदादित्यस्य शुक्लं भाः सैव साथ यन्नीलं परः कृष्णं तदमस्तत्सामाथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः ॥ ६ ॥

शुक्लं भाः शुक्लदीप्तिः परः कृष्णमतिशयेन कार्ष्ण्यं योगिभिर्दृश्यते न सर्वैः । शेषं सुबोधम् । अथाधिदैवप्रधानोपास्यस्वरूपमाह । यद्वा अङ्गोपासनानि समाप्याधिदैविकीं प्रधानोपासनां विवक्षुरुपास्यस्वरूपमुपन्यस्यति—अथेति । य एष आदित्यमण्डले हिरण्मय इव हिरण्मयो ज्योतिर्मयो न तु सुवर्णविकारोऽसम्भवात् । पुरुषः पुरि शयनात् स्वात्मना जगत्पूरणाद् वा दृश्यते समाहितचेतोभिः । तथा हिरण्मयानि श्मश्रुणि यस्येति हिरण्यश्मश्रुः । हिरण्मयाः केशा अस्येति हिरण्यकेशः ज्योतिर्मयश्मश्रुकेश इति यावत् । किं बहुना आप्रणखात् प्रणखो नखाग्रं तेन सह सर्व एव सुवर्ण इव भारूपः ॥ ५, ६ ॥

सर्वविशेषणाददृणोरपि तत्प्रसङ्गं प्रत्याह—

तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ॥ ७ ॥

यथा कप्यासं पुण्डरीकं कपिर्येनास्ते उपविशति तत् कप्यासं कपिपृष्ठान्तं तद्वदत्यन्ततेजस्वि पुण्डरीकमिव तथैवं तस्योपास्यस्यादित्यस्य उदिति गौणं नाम । कुतः ? स एष देवः सर्वेभ्यः पाप्मभ्य उदितः उत् इतः गतः उद्गतः । अथोपासनफलमाह—उदेतीति । उदेति ह वै उद्गच्छत्येव सर्वेभ्यः पाप्मभ्यो य एवं यथोक्तमुन्नामानं परमात्मानं वेदोपास्ते ॥ ७ ॥

परमात्मनोऽप्युद्गीथे सम्पाद्योपासनं कर्तव्यमिति तस्य सर्वात्मत्वं वदन्नाह—

तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेनोद्गा-

तैतस्य हि गाता स एष ये चामुष्मात्पराञ्चो
लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥ ८ ॥

तस्योन्नाम्न ऋक् च साम च द्यावापृथिव्याद्युक्तलक्षणे गेष्णौ पर्वणी यस्मात् तस्मात् परमात्मोद्‌गीथ इति परोक्षेणोच्यते, 'परोक्षप्रिया इव हि देवा' इति श्रुतेः। देवस्योन्नामत्वे उद्‌गातृत्वप्रसिद्धिं प्रमाणयति-तस्मादिति। यस्मादेतस्योन्नाम्नो हि गाता तस्मात्तु एव तस्माद्देवोदं गायतीत्युद्‌गातेत्युद्‌गातृनामप्रसिद्धः। आदित्यान्तर्गतस्य देवस्य परमात्मत्वे हेत्वन्तरमाह—स एष इति। स एष उन्नामदेवः। ये चामुष्मादादित्यात् परागञ्चनात् पराञ्च ऊर्ध्वालोकास्तेषां लोकानां चेष्टे ईशिता देवकामानां च तदधिष्ठातारो ये देवास्तेषां कामानां काम्यमानफलानां चेष्टे इत्यधिदैवतं देवताविषयं देवस्योद्‌गीथस्य स्वरूपमित्यर्थः॥ ८॥

इति तृतीये षष्ठः खण्डः॥ ६॥

अथाध्यात्मिकोपासने अङ्गानुचिन्तनमाह—

अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदेतस्यामृच्यध्यूढँ साम तस्मादृच्यध्यूढँ साम गीयते वागेव सा प्राणोऽमस्तत्साम ॥१॥

वागेव ऋक् प्राणो घ्राणः सामेत्याद्याधिदैविकपर्यायवज्ज्ञेयम्॥ १॥

चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढँ साम तस्मादृच्यध्यूढँ साम गीयते चक्षुरेव सात्माऽमस्तत्साम ॥ २ ॥

श्रोत्रमेवर्ङ् मनः साम तदेतदेतस्यामृच्यध्यूढँ साम तस्मादृच्यध्यूढँ साम गीयते श्रोत्रमेव सा मनोऽमस्तत्साम ॥ ३ ॥

चक्षुरेव ऋगात्मेत्यत्रात्मशब्देन चक्षुःस्थच्छायैवोच्यते॥ २, ३॥

अथाध्यात्मं प्रधानमनुचिन्तनीयमाह—

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढँ साम तस्मादृच्यध्यूढँ साम गीयते। अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्साम ॥ ४ ॥

अथ यदेतदक्ष्णः शुक्लं भा इति समानार्थम्। य एषोऽक्षिणि पुरुषः परमात्माख्यो दृश्यते योगिभिः। सेत्यादितच्छब्दैश्चानुपोक्तिः। लिङ्गव्यत्ययस्तु विधेयलिङ्गापेक्षया॥ ४॥

अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत् साम तदुक्थं तद्यजुस्तद् ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥ ५ ॥

सैव पुरुष ऋक् उक्थादन्यच्छस्त्रजातं तत् साम स्तोत्रं तदुक्थं शस्त्रविशेषः। तद् यजुः स्वाहादिमन्त्रजातम्। तद् ब्रह्म वेदो ब्राह्मणभागः। स्थानभेदेनाक्षिपुरुषस्यादित्यपुरुषाद् भेदशङ्कां वारयति—तस्यैतस्येति। तस्यैतस्य चाक्षुषपुरुषस्य तदेव रूपं यदमुष्यादित्यपुरुषस्य रूपं हिरण्मय इत्याद्युक्तं यावमुष्यादित्यस्य गेष्णौ पर्वणी तावेवास्य चाक्षुषस्य गेष्णौ यदमुष्य नामोदित्युद्गीथ इति च तदेवास्य नाम ॥ ५ ॥

किञ्च आधिदैविकस्येवाध्यात्मिकस्यापि निरङ्कुशैश्वर्यश्रवणात् तयोरैक्यमित्याह—

स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात् ते धनसनयः ॥ ६ ॥

स एष चाक्षुषः पुरुषो ये चैतस्मादाध्यात्मिकाच्चाक्षुषपुरुषात् क्षेत्रज्ञादर्वाञ्चोऽर्वाग्गता लोका मानुषाद्यास्तेषां चेष्टे ईशिता मनुष्यकामानां चेष्टे। पुनस्तयोर्भेदाभावे हेत्वन्तरमाह—तद्य इति। तच्छब्दो यस्मादर्थे। ये इमे गायकाः वीणायां राजादीन् गायन्ति ते यस्मादेतमेव धनसर्वोपाधिप्रविष्टमीश्वरमेव गायन्ति तस्मात् ते गायकाः धनसनयो लाभयुक्ताः ॥ ६ ॥

अथैवं तयोरेकत्वे सिद्धे उपासनमप्येकमेवेति दर्शयति—

अथ य एवं विद्वान् साम गायत्युभौ स गायति सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकास्ताँ्श्चाप्नोति देवकामाँ्श्च ॥ ७ ॥

य एवं यथोक्तं चक्षुरादित्यस्थानस्थं देवं विद्वानुद्गीथे सम्पाद्य। साम गायति स उभौ चाक्षुषादित्यावेकीकृत्य गायति गायेदुपासीत उपासनैक्यं द्रढयन् तत्फलमाह—सोऽमुनेति। स आदित्यदेवोपासकः स एवैषोऽक्षिपुरुषोपासकः अमुनादित्येनादित्यान्तर्गतदेवो भूत्वा ये चामुष्मादादित्यात् पराञ्च उद्ध्वा लोकास्तांश्चाप्नोति। देवकामांश्चाप्नोति ॥ ७ ॥

अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताँ्श्चाप्नोति मनुष्यकामाँ्श्च । तस्मादु हैवंविदु द्गाता ब्रूयात् ॥ ८ ॥

अथापि अनेनैवाक्षिपुरुषेणैवाद्यन्तर्गतदेवो भूत्वा ये चैतस्मादक्षिपुरुषादर्वाञ्चो लोकाः मनुष्याद्यास्तांश्चाप्नोति मनुष्यकामांश्चाप्नोति । अस्य फलस्य यजमानगामित्वं दर्शयति—तस्मादिति । तस्मादु ह किलोद्गाता यजमानं प्रति ब्रूयाद् वदेत् ॥ ८ ॥

कं ते काममागायानीत्येष ह्येव कामागानस्येष्टे य एवं विद्वान् साम गायति साम गायति ॥ ९ ॥

कं ते तव काममिष्टमागायानीति । अत एष एवोद्गाता हि यस्मात् कामागानस्येष्टे कामं सम्पादयितुमीष्टे समर्थः । कः य उद्गाता यथोक्तेन प्रकारेण विद्वान् साम गायति । अभ्यास उक्तोपासनसमाप्त्यर्थः ॥ ९ ॥

इति तृतीये सप्तमः खण्डः ॥ ७ ॥

उक्तस्थानभेदावच्छेदं हित्वा परोवरीयस्त्वगुणकपरमात्मदृष्ट्या उद्गीथोपासनं वक्तुं सुखबोधार्थमाख्यायिकामारचयति—

त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति । ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति ॥१॥

त्रयस्त्रिसङ्ख्याका ह उद्गीथे उद्गीथज्ञानं प्रति कुशलाः निपुणा बभूवुः । के ते ? शिलको नामतः । शलावतोऽपत्यं शालावत्यः । चिकितायनस्यापत्यं चैकितायनः । दल्भ्यगोत्रापत्यं दाल्भ्यः । प्रवाहणो नामतः । जीवलस्यापत्यं जैवलिः । ते त्रयो हान्योन्यमूचुः । किं वा उद्गीथे वै कुशला वयं स्मो भवामोऽतो हन्त यद्यनुमतिर्भवतां भवेत् तर्ह्युद्गीथे कथां वादात्मिकां कुर्म इति परस्परमुक्ते सति ॥ १ ॥

तथेति ह समुपविविशुः स ह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचँ्श्रोष्यामीति ॥ २ ॥

तथेत्यङ्गीकारं कृत्वा ह ते समुपविविशुरुपविष्टाः । स ह प्रवाहणो जैवलिः राजोवाच किं भगवन्तौ पूजावन्तौ अग्रे पूर्वं वदतां युवयोर्ब्राह्मणयोर्वदतोरहं वाचं वाङ्मात्रं श्रोष्यामीति ॥ २ ॥

स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति। पृच्छेति होवाच ॥ ३ ॥

एवमुक्ते ह शिलकः शालावत्यः चैकितायनं दाल्भ्यं प्रत्युवाच। किं हे दाल्भ्य स त्वं हन्त यद्यनुमंस्यते तर्हि त्वा त्वामहं पृच्छानीत्युक्ते दाल्भ्यः पृच्छेति होवाच ॥ ३ ॥

इत्युक्ते इतरः—

का साम्नो गतिरिति स्वर इति होवाच। स्वरस्य का गतिरिति प्राण इति होवाच। प्राणस्य का गतिरित्यन्नमिति होवाच। अन्नस्य का गतिरित्याप इति होवाच ॥ ४ ॥

का साम्न उद्गीथाख्योङ्कारस्य गतिराश्रयः कारणं किमिति शालावत्येन पृष्टो दाल्भ्यः स्वरो ध्वनिविशेषः ओङ्कारस्य कारणं होवाच। स्वरस्य का गतिरिति पृष्टे प्राणो बलं कारणमिति होवाच। प्राणस्य का गतिरित्युक्ते अन्नं कारणमिति होवाच। अन्नस्य का गतिरित्युक्ते आपः कारणमिति होवाच ॥ ४ ॥

अपां का गतिरित्यसौ लोक इति होवाच। अमुष्य लोकस्य का गतिरिति न स्वर्गं लोकमतिनयेदिति होवाच। स्वर्गं वयं लोकँ सामाभिसँस्थापयामः। स्वर्गसँस्तावँ हि सामेति ॥ ५ ॥

अपां का गतिरित्युक्ते असौ स्वर्लोकः कारणम्। अमुष्य स्वर्लोकस्य का गतिरिति पृष्टे दाल्भ्यो न स्वर्लोकमतीत्याश्रयान्तरं प्रति साम कश्चिन्नयेत् प्रापयेदिति होवाच। अतो वयमपि स्वर्गं लोकं प्रति सामाभिसंस्थापयामः स्वर्गलोकप्रतिष्ठितं साम जानीमः। भ्रान्तत्वशङ्कां वारयितुं हेत्वन्तरमाह—स्वर्ग इति। स्वर्गसंस्तावं स्वर्गो वै लोकः सामवेद इति स्वर्गत्वेन संस्तवनं संस्तवो यस्य तत् स्वर्गसंस्तावं हि यस्मात् साम। अतः स्वर्गप्रतिष्ठम् ॥ ५ ॥

तँ ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच। अप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान् मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥ ६ ॥

इत्युक्तवन्तं चैकितायनं दाल्भ्यं प्रति शिलकः शालावत्य उवाच।

किमप्रतिष्ठितम् असंस्थितं वै किल ते तव हे दाल्भ्य साम। स्वर्गप्रतिष्ठितं सामेति विज्ञाने दोषमाह—अस्त्विति। विपरीतविज्ञानं प्रति यस्तु कश्चिन्मिथ्यावचनमसहमानः एतर्ह्येतस्मिन् मिथ्यावचनकाले ब्रूयात् किं ते तव विपरीतवादिनः मूर्धा शिरो विपतिष्यति विस्पष्टं पतिष्यतीति। एवं प्रक्षालनमपराधस्य। ते तव मूर्धा शिरो विपतेदिति ॥ ६ ॥

एवमुक्तो दाल्भ्य आह—

हन्ताहमेतद् भगवत्तो वेदानीति विद्धीति होवाच। अमुष्य लोकस्य का गतिरित्ययं लोक इति होवाच। अस्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच। प्रतिष्ठां वयं लोकँ सामाभिसँस्थापयामः प्रतिष्ठासँस्तावहि सामेति ॥ ७ ॥

हन्ताहमेतत् पृष्टं सामाश्रयं भगवतः सकाशात् वेदानीत्येवमुक्तः शालावत्यो हे दाल्भ्य विद्धीति होवाच। इत्युक्तो दाल्भ्यः पृच्छति—अमुष्येति। अमुष्य स्वर्लोकस्य का गतिः किं कारणमिति पृष्टः शालावत्यः अयं पृथिवीलोकः कारणमिति होवाच, अस्य यागादिना स्वर्गलोकपोषकत्वात्। अस्य लोकस्य का गतिरिति पृष्टे न प्रतिष्ठां लोकं पृथिवीलोकमतिनयेत् साम कश्चिदिति होवाच। अतो वयमपि प्रतिष्ठां प्रतिष्ठाहेतुभूतं पृथिवीलोकं प्रति सामाभिसंस्थापयामः। कुतः? प्रतिष्ठासंस्तावम् इयं वै रथन्तरमिति श्रुत्या पृथिवीत्वेन संस्तुतं हि यस्मात् सामातः पृथिवीप्रतिष्ठम् ॥ ७ ॥

तँ ह प्रवाहणो जैवलिरुवाच। अन्तवद् वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति। हन्ताहमेतद् भगवत्तो वेदानीति विद्धीति होवाच ॥ ८ ॥

इत्येवमुक्तवन्तं प्रति प्रवाहण इत्यादि पूर्ववत् ॥ ८ ॥

इति तृतीयेऽष्टमः खण्डः ॥ ८ ॥

अस्य लोकस्य का गतिरित्याकाश इति होवाच। सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् ॥ १ ॥

अस्य पृथिवीलोकस्य का गतिरिति पृष्टः प्रवाहणः आकाशः विभुत्वादिगुणसाम्यात् परमात्मैवेति होवाच । कुतः ? सर्वाणि वा इमानि स्थावरजङ्गमानि भूतान्याकाशादेवोत्पद्यन्त आकाशं प्रत्यस्तं यन्ति नाशं गच्छन्ति, किञ्च आकाश एव हि यस्मादेभ्यो यथोक्तसर्वभूतेभ्यो ज्यायान् महत्तरोऽतः सर्वेषां भूतानां परमायनं प्रतिष्ठा त्रिषु कालेषु । एतच्च सर्वं परमात्मपरिग्रह एव घटत इत्यर्थः ॥ १ ॥

स एष परोवरीयानुद्गीथः । स एषोऽनन्तः परोवरीयो हास्य भवति । परोवरीयसो ह लोकाञ्जयति । य एतदेवं विद्वान् परोवरीयाँ्समुद्गीथमुपास्ते ॥ २ ॥

ततश्च स एष आकाशः परमात्मा परोवरीयान् परमुत्तरोत्तरं वरीयसोऽपि स्वरप्राणान्नादेः सकाशादतिशयेन परोवरीयानुत्तरोत्तर-श्रेष्ठादपि श्रेष्ठः स उद्गीथः सम्पन्नः । किं च—स एष उद्गीथे सम्पादित परमात्मा आकाशोऽनन्तस्त्रिविधपरिच्छेदशून्यः। एवमुपास्यस्वरूपमुक्त्वा तदुपासनविधिफलमुपदिशति—परोवरीय इति। परोवरीयः परेभ्यो राजादिभ्योऽतिशयेन वरीयस्त्वं श्रैष्ठ्यं हास्योपासकस्य भवतीति दृष्टं फलम् । अदृष्टं तु विद्वान् परोवरीयसो ह उत्तरोत्तरान् ब्रह्माकाशान्तां-ल्लोकान जयति प्राप्नोति । कः ? य एवमुक्तरीत्योद्गीथदर्शनं विद्वान् परोवरीयांसमुद्गीथमुपास्ते ॥ २ ॥

विधिशेषमर्थवादमाह—

तँ्हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिंल्लोके जीवनं भविष्यति ॥ ३ ॥

तमेतमुद्गीथदर्शनं ह अतिधन्वा नामतः शुनकस्यापत्यं शौनक उदरशाण्डिल्यायोक्त्वोवाच । किं यावत्कालं ते तव प्रजायां सन्ततो एन-मुद्गीथं त्वत्सन्ततिजाः वेदिष्यन्ते ज्ञास्यन्ति तावत्पर्यन्तमस्मिल्लोके एभ्यः प्रसिद्धेभ्यो लौकिकजीवनेभ्यः परोवरीयः उत्तरं विशिष्टतरं जीवनं ह भविष्यति ॥ ३ ॥

तथामुष्मिंल्लोके लोक इति । स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिल्लोके जीवनं भवति तथा-मुष्मिल्लोके लोक इति । लोके लोक इति ॥ ४ ॥

तथाविशिष्टतरजीवनवदमुष्मिन्नदृष्टेऽपि लोके परोवरीयांल्लोको भविष्यतीति। भवत्वेतत्फलं पूर्वेषां महाभाग्यानाम्, न चैतद्युगीयाना मित्यत आह—स य इति। स यः कश्चिदेतमुद्गीथमिदानीमप्येवं विद्वानुद्गीथमुपास्ते तस्यापि ह परोवरीय एव ह जीवनमस्मिंल्लोके भवति तथामुष्मिल्लोके परलोके परोवरीयो लोकः। अभ्यास उद्गीथोपास्तिसमाप्त्यर्थः ॥ ४ ॥

इति तृतीये नवमः खण्डः ॥ ६ ॥

उद्गीथोपासनप्रसङ्गेन प्रस्तावप्रतिहारविषयमुपासनं वक्तुं तावदाख्यायिकामारचयति—

मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह
चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥ १ ॥

मटच्यो मर्दनहेतवः पाषाणवृष्ट्यादयस्ताभिः कुरुदेशेषु हतेषु अन्नालाभादाटिक्यः अटनाय प्रवृत्तः। आटिक्या इति पाठान्तरे तु गृहान्तराद्यटनार्हत्वादाटकी तयाटिक्या। जायया सह प्रद्राणकः कुत्सितावस्थां प्राप्तः। चक्रस्यापत्यं चाक्रायणः। उषस्तिर्नामतो ह इभ्यग्रामे इभो हस्ती तमर्हतीतीभ्यो राजा हस्तिपको वा, तस्य ग्राम इभ्यग्रामः, तस्मिन्नुवास उषितवान् ॥ १ ॥

स हेभ्यं कुल्माषान् खादन्त बिभिक्षे तँ होवाच।
नेतोऽन्ये विद्यन्ते यच्चये म इम उपनिहिता इति ॥ २ ॥

स उषस्तिर्ह अन्नार्थमटन् इभ्यं हस्त्यारोहं कुल्माषान् कुत्सितान् माषान् खादन्तं भक्षयन्तं बिभिक्षे याचितवान्। तमुषस्तिं ह इभ्य उवाच। किं यत् ये चये राशौ म इमे मम भाजने भोजनपात्रे उपनिहिता निक्षिप्ताः कुल्माषाः इतोऽस्माद् भाजनस्थादुच्छिष्टकुल्माषादन्ये न विद्यन्ते ॥ २ ॥

एतेषां मे देहीति होवाच। तानस्मै प्रददौ। हन्तानुपान-
मित्युच्छिष्टं वै मे पीतँ स्यादिति होवाच ॥ ३ ॥

इत्युक्त उषस्तिरेतेषामिति कर्मणि षष्ठी। एतान् त्वया भक्ष्यमाणान् कुल्माषान् मे मह्यं देहीत्युवाचेत्युक्त इभ्यस्तान् कुल्माषानस्मै उषस्तये प्रददौ प्रदत्तवान्। हन्तोच्छिष्टाः कुल्माषा भक्षिताश्चेदिदमनुपानमुदकं गृहाणेत्युक्त उषस्तिः यद्युदकमहं पास्यामि तदा त्वदीयमुच्छिष्टं वै मे मया पीतं स्यादिति होवाच ॥ ३ ॥

एवमुक्त इभ्य एव—

न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमान-
खादन्निति होवाच कामो म उदपानमिति ॥ ४ ॥

कुल्माषा अपि किं नोच्छिष्टाः स्विद् वितर्के इत्युवाच। एवमुक्त उषस्तिः इमान् कुल्माषानखादन्नभक्षयन्न वै नैवाजीविष्यं न जीविष्यामीत्युवाच। पानाभावेऽपि तुल्यं जीवनराहित्यमित्यत आह—काम इति। मे मम उदकपानं काम इच्छातः यथेष्टं लभ्यतेऽतस्तत्पाने नरकपातः स्यात् ॥ ४ ॥

स ह खादित्वातिशेषाञ्जायाया आजहार। साग्र एव
सुभिक्षा बभूव। तान् प्रतिगृह्य निदधौ ॥ ५ ॥

स उषस्तिर्ह तांश्च खादित्वाऽतिशेषानतिशिष्टान् कुल्माषान् जायायै आजहार आहृतवान्। सा च जायाग्रे कुल्माषप्राप्तेः पूर्वमेव सुभिक्षा शोभनभिक्षा लब्धान्ना बभूव, तथापि स्त्रीस्वाभाव्यात् तान् कुल्माषान् पत्युर्हस्तात् प्रतिगृह्य निदधौ निक्षिप्तवती ॥ ५ ॥

स ह प्रातः संजिहान उवाच यद्बतान्नस्य लभेमहि धनमात्राँ्
राजासौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥ ६ ॥

स भर्ता ह प्रातःकाले संजिहानः शयानः निद्रां वा परित्यज्यन् बतेति खिद्यमान उवाच। किं ? यद् यदि अन्नस्य स्तोकं लभेमहि तर्हि तद् भुक्त्वा वयं धनमात्रां धनलेशं लभेमहि। कुतः ? राजाऽसौ निकटे यक्ष्यते यागं कुरुते। ततः किम् ? स च मा मां राजा सर्वैरार्त्विज्यैः ऋत्विक्कर्मभिः ऋत्विक्कर्मप्रयोजनाय वृणीतेति ॥ ६ ॥

तं जायोवाच। हन्त पत इम एव कुल्माषा इति
तान् खादित्वाऽमुं यज्ञं विततमेयाय ॥ ७ ॥

तमेवमुक्तवन्तं पतिं प्रति जायोवाच। किं हन्त तर्हि हे पते इमे त्वद्दत्ता एव कुल्माषास्तान् पत्नीदत्तान् पर्युषितान् कल्माषान् खादित्वामुं राजयज्ञं ऋत्विग्भिर्विततं विस्तारितमेयायागात् ॥ ७ ॥

तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश। स ह
प्रस्तोतारमुवाच ॥ ८ ॥

तत्र गत्वा उद्गातॄनास्ताव आगत्य स्तुवन्त्यस्मिन्नित्यास्तावो देश-

विशेषस्तस्मिन्नास्तावे स्तोष्यमाणानामुपसमीपे उपविवेशोपविष्टः स उषस्तिः प्रस्तोतारमुवाच ॥ ८ ॥

प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्
प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति ॥ ९ ॥

हे प्रस्तोतर्या देवता प्रस्तावभक्तिमन्वायत्तानुगता चेत् तां देवतां प्रस्तावभक्तेरविद्वान् सन् प्रस्तोष्यसि मम समीपे तर्हि ते तवाविदुषो मूर्धा शिरो विपतिष्यति विस्पष्टं पतिष्यतीति ॥ ६ ॥

एवमेवोद्गातारमुवाच । उद्गातर्या देवतोद्गीथमन्वायत्ता
तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति ॥ १० ॥
एवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहार-
मन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपति-
ष्यतीति । ते ह समारतास्तूष्णीमासाञ्चक्रिरे ॥ ११ ॥

एवमेवोद्गातारं प्रतिहर्तारमुवाचेत्यादि समानम् । तेषु विनीतत्वं दर्शयति—ते हेति । ते प्रस्तोत्रादयः समारताः कर्मभ्य उपरताः सन्तो मूर्धपातभयात् तूष्णीमासाञ्चक्रिरे ॥ १०, ११ ॥

इति तृतीये दशमः खण्डः ॥ १० ॥

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदि-
षाणीत्युषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥

अथ तेषां तूष्णींभावानन्तरं हैनमुषस्तिं प्रति यजमानो राजोवाच किं भगवन्तं पूजावन्तं वै अहं विविदिषाणि वेदितुमिच्छामीत्युक्त उषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥

स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः
पर्यैषिषं वा अहमवित्यान्यानवृषि ॥ २ ॥

इत्युक्तः स यजमान उवाच । किं भगवन्तं वै श्रुत्वाऽहमेभिः सर्वैरार्त्विज्यैर्ऋत्विक्कर्मभिः ऋत्विक्कर्मार्थे पर्यैषिषं पर्येषणं कृतवानस्मि । अन्विष्य भगवतो वै अहमवित्त्यालब्ध्या अन्यान् ऋत्विजः अवृषि वृतवानस्मि ॥ २ ॥

भगवाँ स्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत
एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्ता-
वन्मम दद्या इति । तथेति ह यजमान उवाच ॥ ३ ॥

अद्यापि भगवान् तु एव मे मम सर्वैरार्त्विज्यैर्ऋत्विक्कर्मार्थमस्त्वि-
त्युषस्तिस्तथास्त्वित्यङ्गीकृतवान् । अथैवमपि तर्हि तथापि एते पूर्व-
वृता एव प्रस्तोत्रादयो मया समतिसृष्टा अनुज्ञाताः सन्तः स्तुवतां
कुर्वताम् । त्वया त्वेतत् कार्यम्, यावत्तु एभ्यः प्रस्तोत्रादिभ्यस्त्वं धनं
दद्याः प्रयच्छसि तावन्ममापि दद्या इत्युक्तस्तथास्त्विति ह यजमान
उवाच ॥ ३ ॥

अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्ताव-
मन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपति-
ष्यतीति । मा भगवानवोचत् कतमा सा देवतेति ॥ ४ ॥

अथोषस्तिवचसः श्रवणानन्तरं ह एनमुषस्तिं प्रस्तोता विनयेन
उपससादोपजगाम । गत्वोक्तानुवादपूर्वकं पृच्छति—प्रस्तोतर्या देवतेति ।
उक्तार्थम् । इत्येवं मा मां भगवानवोचत् कतमा सा देवता ॥ ४ ॥

इति पृष्ट उषस्तिः—

प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवा-
भिसंविशन्ति प्राणमभ्युज्जिहते । सैषा देवता प्रस्तावमन्वायत्ता
तां चेदविद्वान् प्रास्तोष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति ॥५॥

प्राणः परमात्मैवेति होवाच । कुतः ? सर्वाणि ह वै इमानि स्थावर-
जङ्गमानि भूतानि प्राणमेवाभिसंलक्ष्य संविशन्ति प्रविशन्ति प्रलयकाले
तथोत्पत्तिकाले च प्राणमभ्युज्जिहते प्राणादेवोद्गच्छन्तीति परमात्म-
लिङ्गात् । सैषा प्राणशब्दाभिधेया परमात्मदेवता प्रस्तावमन्वायत्ता तां
चेदविद्वान् प्रास्तोष्यः प्रस्तवनं कृतवानसि विद्वत्सन्निधौ सत्यां तर्हि
तथोक्तस्य मूर्धा ते विपतिष्यतीत्यनेन प्रकारेण यथोक्तस्य ते तव
तत्काल एव मूर्धा व्यपतिष्यदिति ॥ ५ ॥

अथ हैन मुद्गातोपससाद उद्गातर्या देवतोद्गीथमन्वायत्ता

तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति। मा भगवानवोचत् कतमा सा देवतेति ॥ ६ ॥

अथ हैनमुद्गातोपससादेत्यादि समानम् ॥ ६ ॥

आदित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्य-मुच्चैः सन्तं गायन्ति। सैषा देवतोद्गीथमन्वायत्ता तां चेद-विद्वानुद्गास्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति ॥ ७ ॥

आदित्यमुच्चैः सन्तम् ऊर्ध्वं सन्तं गायन्ति शब्दयन्ति इमानि भूतानि ॥ ७ ॥

अथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वा यत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति। मा भगवानवोचत्कतमा सा देवतेति ॥ ८ ॥ अन्नमिति होवाच। सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति। सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति तथोक्तस्य मयेति ॥ ९ ॥

अन्नमेवात्मानं प्रतिहरमाणानि जीवन्ति। तथा च प्रस्तावोद्गीथ-प्रतिहारभक्तीः प्राणादित्यान्नदृष्ट्योपासीतेति समुदायार्थः। अस्य फलं तु प्राणाद्यापत्तिः कर्मसमृद्धिर्वेति बोद्धव्यम्। पुनर्वचनं त्वादरार्थम् ॥ ८, ९ ॥

इति तृतीये एकादशः खण्डः ॥ ११ ॥

अन्नालाभादुक्तकष्टागतिर्मा भूदित्यन्नलाभाय उपासनान्तरं प्रति-जानीते—

अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज ॥ १ ॥

अथान्नालाभप्रयासोक्त्यनन्तरं यतोऽन्नमपेक्षितमतोऽन्नलाभहेतुः शौवः श्वभिर्दृष्टः उद्गीथः सामविशेषः प्रस्तूयते इति शेषः। तत्र सुख-प्रतिपत्त्यर्थमाख्यायिकामाह—तद्धेति। तत् तत्र बको ह नामतः दल्भस्या-पत्यं दाल्भ्यो ग्लावो वा नामतः मित्राया अपत्यं मैत्रेयः स्वाध्यायार्थं ग्रामाद् बहिरुद्वव्राजोद्गतवान् ॥ १ ॥

तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुः--
अन्नं नो भगवानागायत्वशनायाम वा इति ॥ २ ॥

तस्मै ऋषयेऽनुग्रहार्थं स्वाध्यायेन तोषितः श्वा श्वेतः शुक्लः श्वा मुख्यप्राणदेवः श्वरूपं गृहीत्वा प्रादुर्बभूव । तं श्वानमन्ये क्षुद्राः श्वानो वागादयः उपसमीपमेत्योचुः । किम् ? अन्नं नोऽस्मभ्यं भगवान् आगायतु आगानेन निष्पादयतु । कुतः ? यतो अशनायाम बुभुक्षिता स्मो वै वयमिति ॥ २ ॥

एवमुक्तः—

तान् होवाच – इहैव मा प्रातरुपसमीयातेति तद्ध बको
दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार ॥ ३ ॥

तान् शुन उवाच—किं यूयमिहास्मिन्नेव प्रदेशे प्रातःकाले मा मामुपसमीयातेति । दैर्ध्यं छान्दसं प्रामादिकं वा । उपर्छत । तत् तत्रैवं श्ववचने श्रुते सति ह बको दाल्भ्यो ग्लावो मैत्रेयः प्रतिपालयाञ्चकार प्रातःकालप्रतीक्षणं कृतवान् । अतोऽवगम्यते तस्य स्वाध्यायपठन-मन्त्रार्थमिति ॥ ३ ॥

स्वाध्यायेन देवतापरितोषं सदृष्टान्तमाह—

ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः सँरब्धाः
सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिंचक्रुः ॥ ४ ॥

यथा ज्योतिष्टोमादौ बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणा अध्वर्यु-प्रमुखा यजमानपञ्चमाः संरब्धाः संलग्नाश्च अन्योन्यस्य गृहीतवसना-श्चात्वालदेशं प्रति इदं सर्पणं यथा स्यात् तथा सर्पन्ति भ्रमणं कुर्वन्ति, एवमेव ते श्वानो ह अन्योन्यस्य मुखे पुच्छं गृहीत्वा आससृपुरासृप्तवन्तः । पश्चात् ते श्वानो ह समुपविश्य हिञ्चक्रुर्हिङ्कारं गानं कृतवन्तः ॥ ४ ॥

कथम् ?

ओ३मदा३मों३पिबा३मों३देवो वरुणः प्रजापतिः
सविता२न्नमिहा२हरदन्नपते२न्नमिहाहरा२हरो३मिति ॥५॥

ॐकारोऽत्र गानार्थः । अदाम अशनं करवाम पिबाम पानं करवाम । द्योतनाद् देवो जगतो वर्षणाद् वरुणः प्रजानां पालनात् प्रजापतिः सर्वस्य जगतः प्रसवितृत्वात् सविता अन्नमिह प्रकृतप्रदेशेऽस्मभ्यमाहरदाहरतु ।

अन्नस्य प्रसवितृत्वात् हे अन्नपते अन्नमिहाहर आहरेत्यभ्यास आदरार्थः। इत्येवं हिङ्ङ्कुरित्यर्थः ॥ ५ ॥

इति तृतीये द्वादशः खण्डः ॥ १२ ॥

भक्त्युपासनमुक्त्वा स्तोभाक्षरोपासनमाह—

अयं वाव लोको हाउकारो वायुर्हाइकारश्चन्द्रमा

अथकार आत्मेहकारोऽग्निरीकारः ॥ १ ॥

अयं पृथिवीलोको वाव एव हाउकारः पृथिवीलोकदृष्ट्या हाउकारः स्तोभ उपास्यः। उक्तत्वादेव न सामान्याकाङ्क्षा। तथात्वे च तेषामस्माभिः छान्दोग्यार्थप्रकाशिकायामुक्तत्वात् नेहोच्यते विस्तृतिभयात्। वायुः हाइकारः स्तोभ इति चिन्तनीयम्। चन्द्रमा अथकारः। स्तोभः आत्मा प्रसिद्धः। इहकारः स्तोभः। अग्निः ईकारः ॥ १ ॥

आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोयिकारः

प्रजापतिर्हिङ्कारः प्राणः स्वरोऽन्नं या वाग्विराट् ॥ २ ॥

आदित्यः ऊकारः निहवः आह्वानम् एकारः स्तोभः विश्वेदेवा औहोयिकारः प्रजापतिः हिङ्कारः प्राणः स्वरः स्तोभः अन्नं यास्तोभः वाक्स्तोभो विराट् ॥ २ ॥

अनिरुक्तस्त्रयोदशस्तोभः सञ्चरो हुङ्कारः ॥ ३ ॥

अनिरुक्तः अव्यक्तः कारणात्मा हुङ्कारस्त्रयोदशसङ्ख्यापूरकः स्तोभः। स च सञ्चरः शाखाभेदेन हुङ्कारो हुम्कारो वेति विकल्पमानस्वरूपः ॥ ३ ॥

स्तोभोपासनफलमाह—

दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति

य एतामेवँ साम्नामुपनिषदं वेदोपनिषदं वेद ॥ ४ ॥

एतदुक्तार्थम्। य एतां यथोक्ताम् एवमुक्तरीत्या साम्नां सामावयवस्तोभाक्षरविषयामुपनिषदं दर्शनं वेदोपास्तेऽस्मै उपासकाय। अभ्यासः पूर्ववदध्यायसमाप्त्यर्थो वा ॥ ४ ॥

इति तृतीये त्रयोदशः खण्ड ॥ १३ ॥

॥ इति छान्दोग्यब्राह्मणे तृतीयः प्रपाठकः ॥

यस्मिन्नुद्गीथगामिन्यमृतरसतमत्वादिभावैरुपेते
प्राणव्यानर्कदृष्टी रविनयननिविष्टे स्वरान्नेक्षणं च ।
कृत्वा विप्राः क्रियायामधिकमपि फलं कर्ममात्राल्लभन्ते
तस्योङ्कारस्य वाच्यं हृदि गतममलं भावयेदात्मतत्त्वम् ॥ १ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्य-
नित्यानन्दाश्रमविरचितायां छान्दोग्योपनिषद्व्याख्यायां
मिताक्षरायां प्रथमोऽध्यायः ॥ १ ॥

॥ अथ ब्राह्मणे चतुर्थः प्रपाठकः । उपनिषदि द्वितीयोऽध्यायः ॥

सामावयवोपासनमुक्त्वा फलार्थिनां समस्तसामोपासनमाह—

ॐ समस्तस्य खलु साम्न उपासनꣳ साधु यत् खलु साधु तत् सामेत्याचक्षते । यदसाधु तदसामेति ॥ १ ॥

समस्तस्य सर्वावयवविशिष्टस्य पाञ्चभक्तिकस्य साप्तभक्तिकस्य च खलु साम्नः उपासनं साधु शोभनं समस्तसाम्नि साधुगुणदृष्टिं कुर्यादिति फलितार्थः । कुतोऽवगम्यते लोके साधु शोभनं तत्राह—यत् खलु लोके साधु शोभनं तत्सामेत्याचक्षते कुशलाः । यदसाधु तदसामेत्याचक्षते ॥ १ ॥

किञ्च—

तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥

तत् तत्रैवं साध्वसाधुविवेककरणे उत उपायविशेषमप्याहुस्तज्ज्ञाः । किम् ? यस्माद् यस्यासाधुत्वप्राप्त्याशङ्का स एनं राजानं सामन्तं वा साम्ना सामनीत्योपागादुपगतवानिति यत् तत्र व्यवहारे शोभनकार्यदर्शने सत्ययं साधुना शोभनमार्गेणैनमुक्तमुपागादित्याहुः । यत्र पुनरसाम्नैनमुपागादिति तत् तत्र व्यवहारे बन्धनाद्यशुभकार्यं पश्यन्तोऽसाधुनैनमुपागादित्येवाहुः ॥ २ ॥

एवं कार्यगम्यं साधुत्वाद्युक्त्वा स्वानुभवगम्यं साधुत्वाद्याह—

अथोताप्याहुः साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेतियदसाधु भवत्यसाधु बतेत्येवतदाहुः ॥ ३ ॥

अथ अनन्तरम् उत स्वात्मनि हर्षहेतौ जाते सति नोऽस्माकं साम

बतेति हृष्टाः सन्तः आहुः। अस्यैव विवरणं यत् साधु भवति साधु बतेत्येव तत् तत्राहुः। विपर्यये जातेऽसाम नो बतेति खिद्यमाना आहुः। अस्यैव विवरणं यदस्यासाधु भवत्यसाधु बतेत्येव तत्तत्राहुः ॥ ३ ॥

साधुदृष्ट्या समस्तसामोपासनफलमाह—

स य एतदेवं विद्वान् साधु सामेत्युपास्तेऽभ्याशो ह यदेनँ साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥ ४ ॥

स यः कश्चिदेवमुक्तप्रकारेण साधुगुणमेतत् समस्तं साम विद्वानुपास्ते एनमुपासकं प्रति साधवो धर्माः श्रुत्याद्यविरुद्धाः आ च गच्छेयुः आगच्छेयुरिति यत् तदभ्याशो ह क्षिप्रमेव। न केवलमागच्छेयुरेव, अपितु उप च नमेयुश्च भोग्यत्वेनोपतिष्ठेयुश्चेत्यर्थः ॥ ४ ॥

इति चतुर्थे प्रथमः खण्डः ॥ १ ॥

लोकेषु पञ्चविधँ सामोपासीत पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥

तत्र लोकेषु पृथिव्यादिषु पञ्चविधं पञ्चभक्तिभेदेन पञ्चप्रकारकं साधुदृष्टिविशिष्टं समस्तं सामोपासीत, लोकदृष्ट्या पञ्चविधं सामोपासीतेत्यर्थः। कथम्? पृथिवी हिङ्कारः हिङ्कारभक्तिः पृथिवीदृष्ट्योपास्या। अग्निः प्रस्तावः प्रस्तावभक्तिरग्निदृष्ट्योपास्या। अन्तरिक्षमुद्गीथभक्तिः। आदित्यः प्रतिहारः। द्यौर्निधनं द्युदृष्ट्या निधनभक्तिरुपास्या। इत्येवमूर्ध्वेषु उदूर्ध्वमुखव्यवस्थितलोकदृष्ट्या सामोपासनमुक्तम् ॥ १ ॥

अथावृत्तेषु द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ॥ २ ॥

अथोक्तोपासनानन्तरं आवृत्तेष्ववाङ्मुखेषु द्युलोकादिषु पञ्चविधसामोपासनमुच्यते। कथं द्यौर्हिंकार इत्यादि पूर्ववत् ॥ २ ॥

एतदुपासनफलमाह—

कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च य एतदेवं विद्वांल्लोकेषु पञ्चविधँ सामोपास्ते ॥ ३ ॥

अस्मै उपासकाय ऊर्ध्वा आवृत्ताश्च प्राणिनां गत्यागतिविशिष्टा

लोका भोग्यत्वेन कल्पन्ते समर्था भवन्ति य एवमुक्तरीत्या विद्वान् लोकेषु पञ्चविधं सामोपास्ते ॥ ३ ॥

इति चतुर्थे द्वितीयः खण्डः ॥ २ ॥

उक्तलोकस्थितेर्वृष्टिनिमित्तत्वात् तदनन्तरं वृष्टिदृष्ट्या पञ्चविधं सामोपासनमाह—

वृष्टौ पञ्चविधँ सामोपासीत पुरोवातो हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥ १ ॥

वृष्टौ पञ्चविधं सामोपासीतेत्यादि समानम् ॥ १ ॥

उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधँ सामोपास्ते ॥ २ ॥

उद्गृह्णाति तन्निधनं यदुद्ग्रहणं वृष्ट्युपसंहरणं तन्निधनम् । अस्य फलमाह—वर्षतीति । अस्मै उपासकाय स्वेच्छातः पर्जन्यो वर्षति वर्षयति च । शेषं सुबोधम् ॥ २ ॥

इति चतुर्थे तृतीयः खण्डः ॥ ३ ॥

वृष्टिहेतुकाब्दृष्ट्या तदुपासनमाह—

सर्वास्वप्सु पञ्चविधँ सामोपासीत मेघो यत् संप्लवते स हिङ्कारो यद् वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ॥ १ ॥

मेघो यत् संप्लवते एकीभावेनेतरेतरं घनीभवति उन्नतो भवति ॥१॥

न हाप्सु प्रैत्यप्सुमान् भवति य एयतदेवं विद्वान् सर्वास्वप्सु पञ्चविधँ सामोपास्ते ॥ २ ॥

स उपासको न ह अप्सु उदके प्रैति म्रियतेऽनिच्छन् । अप्सुमांश्च मरुस्थलीष्वपि यथेष्टोदकवान् भवति । शेषं सुबोधम् ॥ १, २ ॥

इति चतुर्थे चतुर्थः खण्डः ॥ ४ ॥

अम्बुहेतुकऋतुदृष्ट्या तदुपासनमाह—

ऋतुषु पञ्चविधँ सामोपासीत वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनम् ॥ १ ॥

कल्पन्ते हास्मा ऋतव ऋतुमान् भवति य एतदेवं विद्वानृतुषु पञ्चविधँ सामोपास्ते ॥ २ ॥

कल्पन्ते भोग्यत्वेन व्यवतिष्ठन्ते ह अस्मै उपासकाय ऋतवो वसन्तादयः। ऋतुमानार्तवैश्च भोगैः सम्पन्नो भवति। समानमन्यत् ॥ १, २ ॥

इति चतुर्थे पञ्चमः खण्डः ॥ ५ ॥

सम्यग्व्यवस्थितऋतुहेतुकपाशुदृष्ट्या तदुपासनमाह—

पशुषु पञ्चविधँ सामोपासीत अजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनम् ॥ १ ॥ भवन्ति हास्य पशवः पशुमान् भवति य एतदेवं विद्वान् पशुषु पञ्चविधँ सामोपास्ते ॥ ३ ॥

अजाः छागाः अवयो मेषाः पशुमान् भवति पशुफलैश्च भोगादिभिर्युज्यते। शेषं सुबोधम् ॥ १, २ ॥

इति चतुर्थे षष्ठः खण्डः ॥ ६ ॥

पशुप्रसूतपयोघृतादिहेतुकप्राणस्थितिरित्यतस्तदनन्तरं प्राणदृष्ट्या तदुपासनमाह—

प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो हिङ्कारो वाक् प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनम्। परोवरीयाँसि वा एतानि ॥ १ ॥

प्राणेषु घ्राणादीन्द्रियेषु पञ्चविधं परोवरीयः परं परमुत्तरोत्तरं वरीयस्त्वगुणवत् घ्राणादिदृष्टिविशिष्टं सामोपासीत। प्राणानां कथं तद्गुणत्वमित्यत आह—परोवरीयाँसि वा एतानीति। एतानि घ्राणादीन्द्रियाणि परोवरीयांसि उत्तरोत्तरं वरीयस्त्वगुणविशिष्टानि। वै प्रसिद्धम् ॥ १ ॥

परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान् प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य ॥ २ ॥

परोवरीयो हास्येति फलोक्तिः सुबोधा। इत्येवं खलु पञ्चविधस्य साम्न उपासनमुक्तमित्यर्थः ॥ २ ॥

इति चतुर्थे सप्तमः खण्डः ॥ ७ ॥

अथ सप्तविधस्य वाचि सप्तविधँ सामोपासीत यत्किञ्च वाचो हुमिति स हिङ्कारो यत्प्रेति स प्रस्तावो यदेति स आदिः ॥ १ ॥

अथानन्तरं सप्तविधस्य साधुदृष्टिविशिष्टस्योपासनमारभ्यते। वाचि सप्तविधं वाक्पदवाच्यशब्दसामान्यदृष्ट्या सप्तविधं सप्तभक्तिकं सामोपासीत। कथम्? यत्किञ्च शब्दसामान्यस्य हुमिति शब्दविशेषः स हिङ्कारः भक्तिविशेषः। हु मिति शब्ददृष्ट्या हिङ्कारश्चिन्तनीयः। यत्प्र इति शब्दः स प्रस्तावभक्तिः। यत् आ इति शब्दः स आदिः ॥ १ ॥

यदुदिति स उद्‍गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनम् ॥ २ ॥

यत् उत् इति शब्दः स उद्‍गीथः। यत्प्रतीतिशब्दः स प्रतिहारः। यत् उप इति शब्दः स उपद्रवः। यत् नीतिशब्दः तन्निधनं भक्तिः ॥ २ ॥

दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान् वाचि सप्तविधँ सामोपास्ते ॥ ३ ॥

दुग्धेऽस्मै इत्युपासनफलवाक्यमुक्तार्थम् ॥ ३ ॥

इति चतुर्थेऽष्टमः खण्डः ॥ ८ ॥

वाचकशब्ददृष्ट्या सामोपासनमुक्त्वा वाच्यदृष्ट्या तदाह—

अथ खल्वमुमादित्यँ सप्तविधँ सामोपासीत। सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम ॥ १ ॥

कुत आदित्यदृष्ट्या सप्तविधं सामोपास्यमित्यत आह—सर्वदेति। येनादित्यः सर्वदा समो वृद्धिक्षयाभावात् तेन हेतुना साम। किञ्च येन मां प्रति मां प्रतीति सर्वभूताभिमुखतया सर्वेण समः तेन च साम ॥ १ ॥

तस्मात्—

तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात्। तस्य यत्पुरोदयात्स हिङ्कारस्तदस्य पशवोऽन्वायत्ताः। तस्मात्ते हिङ्कुर्वन्ति हिङ्कारभाजिनो ह्येतस्य साम्नः ॥ २ ॥

तस्मिन्नादित्ये इमानि वक्ष्यमाणानि सर्वाणि भूतानि प्राणीनि पुरोदयाद्यवयवविभागेन अन्वायत्तान्यनुगतानि आदित्यमुपजीव्य स्थितानीति विद्यात् जानीयात्। कथमेतत्? तस्य आदित्यस्योदयात्पुरः पूर्वं यद्रूपं स हिङ्कारः। तद्धिङ्कारभक्त्यात्मकं रूपमस्यादित्यसाम्नः पशवो गवादयोऽन्वायत्ता अनुगताः, तद्भक्तिरूपमुपजीवन्तीत्यर्थः। अत्र प्रमाणमाह—तस्मादिति। हि यस्मादेतस्य आदित्याख्यस्य साम्नो हिङ्कारभाजिनो हिङ्कारभक्तिभजनशीलाः पशवस्तस्मात्ते पशवः प्रागुदयात् हिङ्कुर्वन्ति ॥ २ ॥

अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्ताः। तस्मात्ते प्रस्तुतिकामाः प्रशँसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥

अथ यत्प्रथमोदिते सवितरि रूपं स प्रस्तावः तत् प्रस्तावभक्त्यात्मकमस्यादित्यसाम्नो रूपं मनुष्या अन्वायत्ताः। कुतः? हि यस्मादेतस्यादित्यसाम्नः प्रस्तावभाजिनो मनुष्यास्तस्मात्ते मनुष्याः प्रस्तुतिकामाः प्रशंसाकामाः परोक्षस्तुतिकामाः ॥ ३ ॥

अथ यत्सङ्गववेलायाँ स आदिस्तदस्य वयाँस्यन्वायत्तानि। तस्मात्तान्यन्तरिक्षेऽनारम्बणान्यादायात्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नः ॥ ४ ॥

अथ रश्मीनां जगन्मण्डलेन गवां वा वत्सेन सह सङ्गवः सम्बन्धो यस्यां वेलायां भवति सा सङ्गववेला। तस्यां सङ्गववेलायां यदादित्यरूपं स आदिरोङ्काराख्या भक्तिस्तदादिभक्त्यात्मकमस्य आदित्यसाम्नो रूपं वयांसि पक्षिणोऽन्वायत्तानि। कुतः? हि यस्मादेतस्य आदित्यसाम्नो वयांसि पक्षिण आदिभाजीनि आद्याख्यभक्तिभजनशीलानि तस्मात्तानि वयांसि अन्तरिक्षे गगने अनारम्बणानि निरालम्बान्यात्मानं शरीरमादाय परिपतन्ति प्लवन्ते ॥ ४ ॥

अथ यत्संप्रति मध्यन्दिने स उद्गीथः। तदस्य देवा अन्वायत्ताः। तमात्ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ॥ ५ ॥

अथ यत्सम्प्रति ऋजुमध्यन्दिने अन्यूनातिरिक्तमध्याह्ने आदित्यस्य रूपं स उद्गीथः। तदुद्गीथभक्त्यात्मकमस्यादित्यस्य रूपं देवा अन्वायत्ताः। कुतः? हि यस्माद्देवा एतस्यादित्यसाम्न उद्गीथभाजिनस्तस्मात्ते

सत्तमाः प्राजापत्यानां प्रजानां मध्ये विशिष्टतमाः ॥ ५ ॥

अथ यदूर्ध्वं मध्यन्दिनात्प्रागपराह्णात् स प्रतिहारः । तदस्य गर्भा अन्वायत्ताः । तस्मात्ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ॥ ६ ॥

अथ यन्मध्यन्दिनादूर्ध्वमपराह्णात् प्राक्सवितृरूपं स प्रतिहारः । तत्प्रतिहारभक्त्यात्मकमस्यादित्यसाम्नो रूपं गर्भाः जाठरवर्तिनः प्राणिनोऽन्वायत्ताः । कुतः ? हि यस्माद् गर्भा एतस्यादित्यसाम्नः प्रतिहारभक्तिभाजिनस्तस्मात्ते गर्भा योनेरुपरिष्टात् जठरं प्रति प्रतिहृताः सन्तो नावपद्यन्ते नाधः पतन्ति ॥ ६ ॥

अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात् स उपद्रवः । तदस्यारण्या अन्वायत्ताः । तस्मात्ते पुरुषं दृष्ट्वा कक्षँ श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः ॥ ७ ॥

अथ यदपराह्णादूर्ध्वमस्तमयात्प्राक् रवे रूपं स उपद्रवः । तदुपद्रवभक्त्यात्मकमस्यादित्यस्य रूपमरण्ये भवा आरण्या पशवोऽन्वायत्ताः । कुतः ? हि यस्मादेतस्यादित्यसाम्न उपद्रवभक्तिभाजिनः पशवस्तस्मात्ते अरण्यादिषु पुरुषरूपं दृष्ट्वा भीताः सन्तः कक्षं गुल्मवल्ल्यादिश्वभ्रं गर्तं गुहां प्रत्युपद्रवन्ति उपगच्छन्ति ॥ ७ ॥

अथ यत्प्रथमास्तमिते तन्निधनम् । तदस्य पितरोऽन्वायत्ताः । तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यँ सप्तविधँ सामोपास्ते ॥ ८ ॥

अथ यत्प्रथमास्तमिते अदर्शनं जिगमिषति सवितरि यद्रूपं तन्निधनं तन्निधनभक्त्यात्मकमस्य आदित्यसाम्नो रूपं पितरोऽर्यमादयोऽन्वायत्ताः । कुतः ? हि यस्मात्ते पितर एतस्यादित्यसाम्नो निधनभक्तिभाजिनस्तस्मात्तान् पितॄन्निदधति । पितृपितामहादिरूपेण दर्भेषु निक्षिपन्ति तदर्थमत्र पिण्डान् स्थापयन्ति । एवमुक्तरीत्याऽमुमादित्यं सप्तविधमुक्तविधया सप्तधा विभक्तं सामोपास्ते तस्य तदापत्तिः फलमिति वाक्यशेष इत्यर्थः ॥ ८ ॥

इति चतुर्थे नवमः खण्डः ॥ ६ ॥

अथ भक्तिनामाक्षरोपासनमाह—

अथ खल्वात्मसम्मितमतिमृत्यु सप्तविधँ सामोपासीत ।

हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम् ॥ १ ॥

अथ आदित्यादिसामोपासनानन्तरं खलु आत्मसम्मितं मृत्युमोक्षहेतुत्वेन परमात्मना सम्मितं तुल्यमतिमृत्यु मृत्य्वतिक्रमणसाधनं सप्तविधं सामोपासीत। कथम्? हिङ्कार इति त्र्यक्षरं प्रथमभक्तिनाम प्रस्ताव इति च त्र्यक्षरं तत्प्रस्तावभक्तिनाम हिङ्कारनाम्ना समं समसंख्याकम् ॥ १ ॥

आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समम् ॥ २ ॥

आदिरिति द्व्यक्षरं नाम प्रतिहार इति चतुरक्षरं ततः तस्मात् प्रतिहारनामाक्षरादेकमक्षरमपच्छिद्य इहादिभक्तिनामाक्षरयोः प्रक्षिप्ते सति तदादिभक्तिनामप्रतिहारभक्तिनाम्ना समम् ॥ २ ॥

उद्‌गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः
समं भवत्यक्षरमतिशिष्यते त्र्यक्षरं तत्समम् ॥ ३ ॥

उद्‌गीथ इति त्र्यक्षरं नाम उपद्रव इति चतुरक्षरम्। एतद्द्वयं त्रिभिरक्षरैः संख्यया समं भवति। एकं त्वक्षरमतिशिष्यते अवशिष्यते तदवशिष्टमक्षरमेकमपि सत् त्र्यक्षरं चिन्तनीयम्। अतस्तदेकमप्यक्षरं पूर्वेण समम् ॥ ३ ॥

निधनमिति त्र्यक्षरं तत्सममेव भवति। तानि ह वा
एतानि द्वावि॒ँशतिरक्षराणि ॥ ४ ॥

निधनमिति त्र्यक्षरं तन्निधनं नाम पूर्वेण सममेव भवति। तानि ह वै एतानि सप्तभक्तिनामाक्षराणि द्वाविंशतिः संपन्नानि ॥ ४ ॥

एकवि॒ँशत्यादित्यमाप्नोत्येकवि॒ँशो वा इतोऽसावादित्यो
द्वावि॒ँशेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ॥ ५ ॥

तत्र एकविंशत्यक्षरसंख्यया आदित्यं मृत्युमाप्नोति। कुतः? यस्मादितोऽस्माल्लोकात् असावादित्य एकविंशो वै एकविंशतिसंख्यापूरणः 'द्वादश वै मासाः पञ्चर्तवस्त्रयो लोका असावादित्य एकविंशः' इति श्रुत्यन्तरात्। द्वाविंशेनाक्षरेण आदित्यान्मृत्योः परं स्थानं जयति प्राप्नोति। तदादित्यात्परं स्थानं नाकम्। कं सुखं तन्न भवतीत्यकं तन्न विद्यते यत्र तन्नाकं सुखं तत्परं स्थानं विशोकं मानसदुःखरहितम् ॥ ५ ॥

उक्तमेव संक्षिप्य बुद्धिसौकर्यार्थमाह—

आप्नोती हादित्यस्य जयं परो हास्यादित्यजयाज्जयो भवति

य एतदेवं विद्वानात्मसम्मितमतिमृत्यु सप्तविधँ सामोपास्ते सप्तविधँ सामोपास्ते ॥ ६ ॥

इहैकविंशतिसंख्यया आदित्यस्य जयमाप्नोति। आदित्यजया ह्यनन्तरं द्वाविंशतिसंख्यया परो जयोऽस्योपासकस्य भवति। कस्य य एतदेवमित्याद्युक्तार्थम्। अभ्यासः सप्तविधसामोपास्तिसमाप्त्यर्थः ॥ ६ ॥

इति चतुर्थे दशमः खण्डः ॥ १० ॥

विना नामग्रहणं सामोपासनमुक्त्वा गायत्रादिसामोपासनमाह—

मनो हिङ्कारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतम् ॥ १ ॥

तस्योपासनस्य फलमाह—

स य एवमेतद् गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या महामनाः स्यात्तद् व्रतम् ॥ २ ॥

य एतद् गायत्रं सामैवमुक्तरीत्या प्राणेषु प्रोतं वेदोपास्ते स उपासकः प्राणी प्राणैरविकलो भवति। सर्वं शतवर्षपरिमितं आयुरेति प्राप्नोति। ज्योग् उज्ज्वलः स्वपरोपकारसमर्थः सन् जीवति। प्रजया पशुभिश्च महान् भवति। कीर्त्या च महान् भवति। एतदुपासनाङ्गभूतं व्रतमाह—महामना—इति। अक्षुद्रचित्तः स्यात्तदेव व्रतं गायत्रसामोपासकस्येत्यर्थः ॥ २ ॥

इति चतुर्थे एकादशः खण्डः ॥ ११ ॥

समग्रप्राणस्यैव मन्थनकर्तृत्वसंभवात्प्राणदृष्ट्यनन्तरं मन्थनादिदृष्टिं रथन्तरे साम्नि विदधाति—

अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनँ सँशाम्यति तन्निधनमेतद्रथन्तरमग्नौ प्रोतम् ॥ १ ॥

हिङ्कारेऽग्न्यभिमन्थनदृष्टिः कर्तव्या। अग्नेरुपशमः सावशेषनाशः। संशमो निरवशेषनाशः। उभयत्रापि निधनदृष्टिः कर्तव्या ॥ १ ॥

स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति

महान् कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतम् ॥ २ ॥

ब्रह्मवर्चसी वृत्तस्वाध्यायतेजो ब्रह्मवर्चसं तद्वान् ब्रह्मवर्चसी । अन्नादो दीप्ताग्निः न प्रत्यङ्ङग्निं अग्नेरभिमुखो नाचामेत् न भक्षयेत् । न निष्ठीवेत् श्लेष्मनिरसनं च न कुर्यात् । समानमन्यत् ॥ २ ॥

चतुर्थे द्वादशः खण्डः ॥ १२ ॥

उत्तराधरारणिस्थानीययोः स्त्रीपुरुषयोः मन्थनसामान्यात् मन्थनादिदृष्ट्यनन्तरं वामदेव्ये साम्नि मैथुन्यदृष्टिं विदधाति—

उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रति स्त्रिया सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् ॥ १ ॥

उपमन्त्रयते स्त्रिया सह सङ्केतं करोति । पशुकर्मार्थं ज्ञपयते वस्त्रादिना प्रीणयति स्त्रियम् । स्त्रिया सह शेते एकपर्यङ्कमारोहति । प्रति- स्त्रिया सह शेते । कालं गच्छति मिथुनकर्मणा कालातिक्रमणं भवति । पारं गच्छति तत्कर्मणः समाप्तिं गच्छति ॥ १ ॥

स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनात् मिथुनात् प्रजायते सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न काञ्चन परिहरेत् । तद्व्रतम् ॥ २ ॥

मिथुनीभवति अविधुरो भवति । प्रजायते प्रजोत्पद्यते । अमोघरेता भवति । न काञ्चन काञ्चिदपि स्त्रियं समागमार्थिनीं स्वतः अधिगतां परिहरेत् । यावदुपासनं न तु सर्वदेत्यर्थः ॥ २ ॥

इति चतुर्थे त्रयोदशः खण्डः ॥ १३ ॥

आदित्यस्य प्रजाप्रसवहेतुत्वात् तद्धेतुमैथुन्यदृष्ट्यनन्तरमादित्यदृष्टिं बृहत्साम्नि विदधाति—

उद्यन् हिङ्कार उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद् बृहदादित्ये प्रोतम् ॥ १ ॥ स य एवमेतद् बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्व-

मायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या तपन्तं न निन्देत् तद्व्रतम् ॥ २ ॥

उद्यन्सविता, अस्तंयन् अस्तं गच्छन् तेजस्वी स्वगात्रकान्तिमान् ॥ १२॥

इति चतुर्थे चतुर्दशः खण्डः ॥ १४ ॥

आदित्यकार्यपर्जन्यदृष्टिं वैरूप्यसाम्नि विदधाति—

अभ्राणि संप्लवन्ते स हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उदगृह्णाति तन्निधनमेतद्वैरूपं पर्जन्ये प्रोतम् ॥ १ ॥

अभ्राणि अब्भरणावस्थानि मेघजातानि। मेघ उदकसेकत्वावस्थः ॥१॥

स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपाँश्च सुरूपाँश्च पशूनवरुन्धे सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या वर्षन्तं न निन्देत् तद्व्रतम् ॥ २ ॥

सरूपान् समानरूपान् विरूपान् विसदृशरूपान् अजाविप्रभृतीन् पशूनवरुन्धे प्राप्नोति ॥ २ ॥

इति चतुर्थे पञ्चदशः खण्डः ॥ १५ ॥

पर्जन्यदृष्टिकार्यम् ऋतुदृष्टिं वैराजसाम्नि विदधाति—

वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनमेतद् वैराजमृतुषु प्रोतम् ॥ १ ॥ स य एतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुर्भविति महान् कीर्त्यर्तून् न निन्देत् तद्व्रतम् ॥ २ ॥

वसन्तो हिङ्कार इति सुबोधम् ॥ १, २ ॥

चतुर्थे षोडशः खण्डः ॥ १६ ॥

सम्यग्वृत्तऋतुकार्यलोकदृष्टिं शाकरेः साम्नि विदधाति—

पृथिवी हिङ्कारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रोताः ॥ १ ॥

शक्वर्य इति नित्यं बहुवचनान्तम् ॥ १ ॥

स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद लोकी-
भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशु-
भिर्भवति महान् कीर्त्या लोकान्न निन्देत् तद्व्रतम् ॥ २ ॥

लोकीभवति लोकफलेन संयुज्यते ॥ २ ॥

इति चतुर्थे सप्तदशः खण्डः ॥ १७ ॥

लोककार्यपशुदृष्टिं रैवते साम्नि विदधाति—

अजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः
प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः ॥ १ ॥
स य एवमेता रेवत्यः पशुषु प्रोता वेद पशुमान्भवति
सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति
महान् कीर्त्या पशून्न निन्देत् तद्व्रतम् ॥ २ ॥

रेवत्य इति नित्यं बहुवचनान्तम् ॥ १, २ ॥

इति चतुर्थेऽष्टादशः खण्डः ॥ १८ ॥

पशुदृष्ट्यनन्तरं लोमाद्यङ्गदृष्टिं यज्ञायज्ञीये साम्नि विदधाति—

लोम हिङ्कारस्त्वक्प्रस्तावो माँ समुद्गीथोऽस्थि प्रति-
हारो मज्जा निधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥ १ ॥

अङ्गेषु देहावयवेषु ॥ १ ॥

स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेदाङ्गी भवति
नाङ्गेन विहूर्छति सर्वमायुरेति ज्योग्जीवति महान्
प्रजया पशुभिर्भवति महान् कीर्त्या संवत्सरं मज्ज्ञो
नाश्नीयात् तद् व्रतं मज्ज्ञो नाश्नीयादिति वा ॥ २ ॥

अङ्गीभवति सर्वाङ्गो भवति नाङ्गेन हस्तपादादिना विहूर्छति न कुटिलो विकलो भवति । संवत्सरं मज्ज्ञो मांसानि नाश्नीयात् मरिष्यन्नपि यावज्जीवंमज्ज्ञो नाश्नीयादिति वा व्रतमित्यर्थः ॥ २ ॥

इति चतुर्थे एकोनविंशः खण्डः ॥ १९ ॥

अङ्गप्रतिष्ठिताग्न्यादिदृष्टिं राजने साम्नि विदधाति—

अग्निर्हिङ्कारो वायुः प्रस्ताव आदित्य उद्गीथो
नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु
प्रोतम् ॥ १ ॥ स य एवमेतद्राजनं देवतासु प्रोतं

वेदैतासामेव देवतानँ सलोकताँ सार्ष्टिताँ सायुज्यं गच्छति सर्वमायुरेति ज्योग्जीवति महान् स प्रजया पशुभिर्भवति महान् कीर्त्या ब्राह्मणान्न निन्देत् तद्व्रतम् ॥ २ ॥

देवतानामग्न्यादीनां सलोकतां समानलोकत्वं सार्ष्टितां समानर्द्धित्वं सायुज्यं सयुग्भावं एकदेहदेहित्वम्। अत्र वाशब्दो लुप्तो द्रष्टव्यः, समुच्चयासंभवादित्यर्थः ॥ १, २ ॥

इति चतुर्थे विंशः खण्डः ॥ २० ॥

देवताकार्यत्रयीविद्यादृष्टिं सामसामान्ये विदधाति—

त्रयी विद्या हिङ्कारस्त्रय इमे लोकाः स प्रस्तावो-ऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयाँसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधन-मेतत्साम तत्सर्वस्मिन् प्रोतम् ॥ १ ॥ स य एवमेत-त्साम सर्वस्मिन्प्रोतं वेद सर्वँ ह भवति ॥ २ ॥

एतत्सामसामान्यमात्रं नामविशेषानिर्देशात्। सर्वं ह सर्वेश्वरो भवति ॥ १, २ ॥

अत्र मन्त्रं संवादयति—

तदेष श्लोकः। यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति ॥ ३ ॥

तत्तस्मिन्नुक्तेऽर्थे एष श्लोको मन्त्रोऽप्यस्ति। यानि त्रीणि त्रीणि त्रयीविद्यादीनि पञ्चधा पञ्चप्रकारेण हिङ्कारादिविभागैः प्रोक्तानि तेभ्यः पञ्चत्रिकेभ्यो ज्यायो महत्तरं परं व्यतिरिक्तमस्यैव व्याख्या अन्यद्वस्त्वन्तरं नास्ति न विद्यते तत्रैव सर्वस्यान्तर्भावात् ॥ ३ ॥

अतः—

यस्तद्वेद स वेद सर्वँ सर्वा दिशो बलिमस्मै हरन्ति सर्वमस्मीत्युपासीत तद्व्रतं तद्व्रतम् ॥ ४ ॥

यस्तथोक्तं सर्वात्मकं साम वेद सर्वं वेद सर्वज्ञो भवति। किञ्च सर्वा दिशः दिक्स्था पुरुषा अस्मै एवंविदे बलिमुपहरन्ति प्रापयन्ति।

सर्वमस्मि भवामीत्येवमेतत्सामोपासीत तदेवास्य व्रतम् । द्विरुक्तिः सामोपासनसमाप्त्यर्था ॥ ४ ॥

इति चतुर्थे एकविंशः खण्डः ॥ २१ ॥

उक्तसामोपासनप्रसङ्गेन कर्मफलोपयोगि स्वरादिविज्ञानमुपदिशति–

विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान् सर्वानेवोपसेवेत वारुणं त्वेकं वर्जयेत् ॥ १ ॥

साम्नः सम्बन्धि विशेषेण नर्दः स्वरविशेष ऋषभकूजितसमो यस्मिन् गानेऽस्ति तद्विनर्दि उद्गानमाहं वृणे पशव्यं पशुभ्यो हितमिति । अग्नेरग्निदैवत्यमुद्गीथ उद्गानं अनिरुक्त ईदृग्विधोऽयमित्येवं विशेषतो न निरुक्तः स्वरः प्रजापतेः प्रजापतिदैवत्यः । स्पष्टनिरुक्तः स्वरविशेषः सोमस्य । मृदु कोमलं श्लक्ष्णमनवच्छिन्नं वा गानं वायोः । श्लक्ष्णं बलवच्च प्रयत्नाधिक्यनिर्वर्त्यं गानमिन्द्रस्य । क्रौञ्चपक्षिनिनदसमं गानं बृहस्पतेः । अपध्वान्तं भिन्नकांस्यसमं गानं वरुणस्य । तानेतान् सर्वान् स्वरविशेषानुपसेवेत । परं तु वारुणं त्वेवैकं वर्जयेत् ॥ १ ॥

स्वरविशेषविज्ञानपूर्वकोद्गानकाले चिन्तनीयमाह—

अमृतत्वं देवेभ्य आगायानीत्यागायेत् स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ॥ २ ॥

अमृतत्वं देवेभ्योऽहमागायानि साधयामीत्येवं ध्यायन्नागायेत् स्तुवीत । आशा प्रार्थना प्रार्थितम् । शेषं सुबोधम् । उक्तमेव विशदीकुर्वन् उपसंहरति—इत्येवानीति । इत्येवमुक्तान्येतान्यमृतत्वादीनि मनसा ध्यायन्नप्रमत्तः स्वरोष्मादिभ्यः प्रमादमकुर्वन् स्तुवीत ॥ २ ॥

उद्गातुः केनाप्याक्षिप्तस्य प्रतीकारज्ञानाय स्वरादिदेवताज्ञानमुपदिशति—

सर्वे स्वरा इन्द्रस्यात्मनः सर्वे ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रं शरणं प्रपन्नोऽभूवं स त्वा प्रति वक्ष्यतीत्येनं ब्रूयात् ॥ ३ ॥

सर्वे स्वरा अकारादय इन्द्रस्य बलकर्मणः प्राणस्यात्मानो देहावयवस्थानीयाः। सर्वे ऊष्माणः शषसहादयः प्रजापतेर्विराजः कश्यपस्यवाऽऽत्मानः स्वरूपभूताः। सर्वे स्पर्शाः कादयो मावसानाः व्यञ्जनानि मृत्योर्यमस्य आत्मानः स्वरूपभूताः। अथ आक्षेपप्रतीकारोपायमाह—तं यदीति। तमेव स्वरदेवताविदुद्गातारं यदि कश्चित्स्वरेषु उपालभेत स्वरस्त्वया दुष्टः प्रयुक्त इत्युपालम्भं कुर्यात् तदैनम् उपलम्भकर्तारं प्रतिब्रूयात्। किम्? स्वरान् प्रयुञ्जानोऽहमिन्द्रं प्राणं स्वरेश्वरं शरणमाश्रयं प्रपन्नः प्राप्तोऽभूवम्, अतः स इन्द्रो यत् वक्तव्यं तत्त्वा त्वां प्रतिवक्ष्यति उत्तरं दास्यतीति ॥ ३॥

अथ यद्येनमूष्मसूपालभेत प्रजापतिँ शरणं प्रपन्नोऽभूवं स त्वा प्रति पेक्ष्यतीत्येनं ब्रूयात्। अथ यद्येनँ स्पर्शेषूपालभेत मृत्युँ शरणं प्रपन्नोऽभूवं स त्वा प्रति धक्ष्यतीत्येनं ब्रूयात् ॥ ४ ॥

पेक्ष्यतीति। पेक्ष्यति पेषणं चूर्णं करिष्यति। धक्ष्यति भस्मीकरिष्यति। समानमन्यत् ॥ ४॥

देवताज्ञानबलेन उद्गात्रापि न प्रमत्तेन भवितव्यमिति शिक्षयन् चिन्तनीयमाह—

सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति। सर्वे ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानीति। सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥ ५॥

सर्वे स्वरा घोषवन्तो नादवन्तो बलवन्तः प्रयत्नाधिक्योपेताः। किञ्च इन्द्रे प्राणात्मनि बलं ददानि आदधानीत्येवं चिन्तयेदिति शेषः। अग्रस्ता अन्तराऽप्रवेशिताः अनिरस्ताः बहिरप्रक्षिप्ताः विवृताः विवृतप्रयत्नोपेताश्च लेशेनांशेन शनकैरनभिनिहिता अनभिक्षिप्ता अतिद्रुतोच्चरणेन वर्णो वर्णान्तरे यथा निक्षिप्तो न भवति तथा वक्तव्याः। समानमन्यत् ॥ ५ ॥

इति चतुर्थे द्वाविंशः खण्डः ॥ २२ ॥

अधिकृताधिकाराणि अङ्गावबद्धानि उपासनान्युक्त्वा स्वतन्त्राधिकारिगोचरमुपासनं विधातुं तावत्कर्मफलस्य क्षयिष्णुत्वं वक्तुं धर्मान् विभजते—

त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव । द्वितीयो ब्रह्मचार्याचार्यकुलवासी । तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् । सर्वं एते पुण्यलोका भवन्ति । ब्रह्मसँस्थोऽमृतत्वमेति ॥ १ ॥

त्रयस्त्रिसङ्ख्याकाः । धर्मस्य स्कन्धा विभागाः । तत्र यज्ञोऽग्निहोत्रादिः । अध्ययनं नियमपूर्वकं वेदग्रहणादि । दानं बहिर्वेदि द्रव्यदानमित्येष प्रथम एको धर्मस्कन्धो गृहस्थात्मना निर्दिश्यते । तपः कृच्छ्रचान्द्रायणादिरेव द्वितीयो वानप्रस्थात्मना निर्दिश्यते । ब्रह्मचारी आचार्यकुलवासी आचार्यकुले वसनशील उपकुर्वाणोऽपि भवत्यतो विशिनष्टि । अत्यन्तं यावज्जीवं भिक्षाटनादिनियमपूर्वकमात्मानं देहमाचार्यकुले अवसादयन् क्षिपन्नाचार्यकुलवासी नैष्ठिक एव तृतीयो धर्मस्कन्धः । सर्वे एते त्रयोऽप्याश्रमिणः पुण्यो लोको येषां ते पुण्यलोका भवन्ति । संन्यासिनां तु उक्तधर्मफलेभ्यो भिन्नं फलमाह—ब्रह्मसंस्थ इति । ब्रह्मणि परमात्मनि सम्यगव्यभिचारिणी स्थितिर्निष्ठा तस्य परब्रह्मसाक्षात्कारवतः स ब्रह्मसंस्थः परिव्राडेव अमृतत्वं पुण्यफलविलक्षणं मोक्षमेति प्राप्नोति । यद्वा—प्रणवप्रतीकब्रह्मसंस्थः तदुपासनां कुर्वन् परिव्राड्मात्रः क्रमेणामृतत्वमेतीत्यर्थः । प्रणवप्रकरणादवगम्यते ॥ १ ॥

तमुपास्यं प्रणवं सर्वसारत्वकथनेन महीकुर्वन् तदुत्पत्तिमाह—

प्रजापतिर्लोकानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयी-विद्या संप्रास्रवत् । तामभ्यतपत् । तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः स्वरिति ॥ २ ॥

प्रजापतिः लोकानुद्दिश्य तेषु सारजिघृक्षयाभ्यतपदभिध्यानं कृतवान् । तेभ्योऽभितप्तेभ्यो लोकेभ्यः सारभूता त्रयीविद्या संप्रास्रवत् प्रजापतेर्मनसि प्रत्यभात् । तां च त्रयीविद्यां पूर्ववदभ्यतपत् अस्या अभितप्तायास्त्रयीविद्याया एतान्यक्षराणि भूर्भुवः स्वरिति व्याहृत्याख्यानि संप्रास्रवन्त प्रास्फुरन् ॥ २ ॥

तान्यभ्यतपत् । तेभ्योऽभितप्तेभ्य ॐकारः संप्रास्रवत् । तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णा । ओङ्कार

एवेदँ सर्वमोङ्कार एवेदँ सर्वम् ॥ ३ ॥

तानि अक्षराणि। अभ्यतप्तेभ्योऽक्षरेभ्य ओङ्कारः संप्रास्रवत्। तत्स्वरूपं सदृष्टान्तमाह—तद्यथेति। तत्रोङ्कारस्वरूपे दृष्टान्तो यथा—शङ्कुना पर्णनालेन सर्वाणि पर्णानि पत्रावयवजातानि संतृण्णानि विद्धानि एवमोङ्कारेण परमात्मप्रतीकभूतेन सर्वा वाक् शब्दजातं संतृण्णा। अत ओङ्कार एव इदं सर्वम्। अभ्यास आदरार्थः ॥ ३ ॥

इति चतुर्थे त्रयोविंशः खण्डः ॥ २३ ॥

अथ पुनः प्रकृतसामादिविज्ञानविधानार्थं तदज्ञाने दोषमाह—

ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनँ रुद्राणां मध्यन्दिनँ सवनमादित्यानां च विश्वेषां च देवानां तृतीयसवनम् ॥ १ ॥

ब्रह्मवादिनो वेदार्थज्ञाः वदन्ति, किम्? यत्प्रातःसवनं प्रसिद्धं तद्वसूनां तैश्च सवनेशानैरष्टवसुभिरयं लोको वशीकृतः। तथा रुद्रैर्माध्यन्दिन-सवनेशानैरन्तरिक्षलोको वशीकृतः। आदित्यैश्च विश्वैश्च देवैस्तृतीय-सवनेशानैर्द्युलोको वशीकृतः ॥ १ ॥

एवं सति परिशिष्टलोकाभावात्—

क्व तर्हि यजमानस्य लोक इति स यस्तं न विद्यात्। कथं कुर्यात्। अथ विद्वान् कुर्यात् ॥ २ ॥

तर्हि देहपातादूर्ध्वं यजमानस्य क्व लोकः? कुत्र स्थानम्? स यो यो यजमानः तं स्वस्य लोकस्वीकरणोपायं सामहोममन्त्रोत्थानलक्षणं न विद्यान्न जानीयात् सोऽज्ञः कथं कर्म कुर्यादित्याक्षेपे प्राप्ते उत्तरमाह—अथेति। अथशब्दो हेत्वर्थः। यस्मात् सामाद्यज्ञाने यज्ञाद्यकरणं प्राप्तं तस्माद् वक्ष्यमाणसामाद्युपायं विद्वान् कुर्यात् ॥ २ ॥

तदेवाह—

पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्य-स्योदङ्मुख उपविश्य स वासवँ सामाभिगायति ॥ ३ ॥

प्रातरनुवाकस्य शस्त्रस्योपाकरणात् प्रारम्भात् पुरा पूर्वं गार्हपत्यस्य जघने पश्चाद्भागे उदङ्मुख उपविश्य यजमानो वासवं वसुदैवत्यं सामा-भिगायति ॥ ३ ॥

स तदेव दर्शयति—

लो ३ कद्वारमपावा ३ र्णू ३३ पश्येम त्वा वयँ ्रा ३३३-
३३ हु ३ म् आ ३३ ज्या ३ यो ३ आ ३२१११ इति ॥ ४॥

लोकस्य पृथिवीलोकस्य प्राप्तये यद्द्वारं तदपावृणु अपगतावरणं कुरु। हेऽग्ने त्वां वयं पश्येम। राज्याय त्वद्दर्शनेन त्वदनुज्ञया पृथिवीप्रयुक्तभोगाय। अत्र हुमादयो गानार्थाः। इतिशब्दः सामसमाप्तिद्योतकः ॥ ४ ॥

अथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एतास्मि ॥ ५ ॥

अत्र यजमानः परस्तादायुषः स्वाहा। अपजहि परिघमित्युक्त्वोत्तिष्ठति। तस्मै वसवः प्रातःसवनँ ् संप्रयच्छन्ति ॥ ६ ॥

अथैतद्गानानन्तरं जुहोति होमं कुर्यात्। तन्मन्त्रमाह—नम इति। नमः प्रह्वीभूत अग्नये तुभ्यं पृथिव्यां वसतीति पृथिवीक्षित् तस्मै पृथिवीक्षिते तथा लोकक्षिते पृथिवीलोकनिवासायेति यावत्। मे मह्यं यजमानाय त्वं लोकं पृथिवीलोकं विन्द लभस्व। यत एष वै पृथिव्याख्यो यजमानस्य लोकोऽतो यजमानोऽहमायुषः परस्तादूर्ध्वं मरणानन्तरम् अत्रास्मिन् पृथिवीलोके एता गन्तास्मीति मन्त्रेण जुहोति आहुतिप्रक्षेपं करोति। अथोत्थानस्य मन्त्रमाह—अपजहीति। परिघं लोकद्वारार्गलं अपजहि अपनयेति मन्त्रमुक्त्वोत्तिष्ठति। उक्तसामादिभिः सिद्धं फलमाह—तस्मै इति। तस्मै एवंकृतवते यजमानाय वसवः प्रातःसवनं प्रातःसवनसम्बन्धि पृथिवीलोकं संप्रयच्छन्ति ॥ ५, ६ ॥

एवमन्तरिक्षजयोपायं दर्शयति--

पुरा माध्यन्दिनस्य सवनस्योपाकरणात् जघनेनाग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रँ ्सामाभिगायति ॥ ७ ॥ लो३कद्वारमपावा ३ र्णू ३३ पश्येम त्वा वयं वैरा ३३३३३ हु ३ म् आ ३३ ज्या ३ यो ३ आ ३२१११ इति ॥ ८ ॥ अथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एतास्मि ॥ ९ ॥ अत्र यजमानः परस्तादायुषः स्वाहा। अपजहि परिघमित्युक्त्वोत्तिष्ठति। तस्मै रुद्रा माध्यन्दिनँ ् सवनँ ् संप्रयच्छन्ति ॥ १० ॥

आग्नीध्रीयस्य दक्षिणाग्नेः पश्चाद्भागे। समानमन्यत् ॥ ७–१० ॥

तथैव द्युलोकजयोपायं दर्शयति—

पुरा तृतीयसवनस्योपाकरणात् जघनेनाहवनीयस्योदङ्मुख उपविश्य स आदित्यँ स वैश्वदेवँ सामाभिगायति ॥ ११ ॥ लो ३ कद्वारमपावा ३ र्णू ३३ पश्येम त्वा वयँ स्वारा ३३३३३ हु ३ म् आ ३३ ज्या ३ यो ३ आ ३२१११ इति ॥ १२ ॥ आदित्यमथ वैश्वदेवं लो ३ कद्वारमपावा ३ र्णू ३३ पश्येम त्वा वयँ साम्ना ३३३३३ हुं ३ आ ३३ ज्या ३ यो ३ आ ३२१११ इति ॥ १३ ॥ अथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दत ॥ १४ ॥ एष वै यजमानस्य लोक एतास्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपहतपरिघमित्युक्त्वोत्तिष्ठति ॥ १५ ॥ तस्मा आदित्याश्च विश्वे च देवास्तृतीयं सवनँ संप्रयच्छन्ति ॥

आदित्यमादित्यदैवत्यं वैश्वदेवं विश्वदेवदैवत्यं च सामाभिगायति क्रमेण स्वाराज्याय द्युलोके स्वातन्त्र्याय साम्राज्याय स्वातन्त्र्यायैवेत्यर्थः। विन्दतेति बहुवचनमात्रं विशेषः। समानमन्यत् ॥ ११–१५ ॥

एवमुक्तसामादिविज्ञानफलमाह—

एष ह वै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद ॥ १६ ॥

एष ह वै यजमानो यज्ञस्य मात्रां याथात्म्यं वेद य एवमुक्तरीत्या यथोक्तं सामादि वेद। द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ १६ ॥

इति चतुर्थे चतुर्विंशः खण्डः ॥ २४ ॥

सामोपास्तिमनेकधा विदधतां गत्वा वने तप्यता-
माचार्ये मरणावधिस्थितिमतामप्यन्तवत् स्यात् फलम् ।
इत्येवं सहसाकलय्य यतितामाश्रित्य यः संव्रजे-
दोङ्कारात्मनि संस्थितं तमनिशं वन्दे नृसिंहं परम् ॥ १ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्य-
नित्यानन्दाश्रमविरचितायां छान्दोग्योपनिषद्व्याख्यायां
मितात्तरायां द्वितीयोऽध्यायः ॥ २ ॥

---

॥ अथ ब्राह्मणे पञ्चमः प्रपाठकः । उपनिषदि तृतीयोऽध्यायः ॥

एवं कर्माश्रितान्युपासनानि समाप्य तत्फलभूतादित्यादिविषयं स्वतन्त्रोपासनमाह—

ॐ असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवँ शोऽन्तरिक्षमपूपो मरीचयः पुत्राः ॥ १ ॥

असौ वै प्रसिद्धः आदित्यो देवानां वस्वादीनां मोदनहेतुत्वात् मध्विव मधु देवमधुदृष्ट्योपास्य इति यावत् । कुतः ? तस्य देवमधुनो भ्रमरमधुन इव द्यौर्द्युलोक एव तिरश्चीनवंशस्तिर्यग्गतवंश इति चिन्तयेत् । अन्तरित्तमपूपः सवितृमध्वपूपः । मरीचयो मरीचिस्थाः सवित्राकृष्टा भौमा आपः पुत्रा इव पुत्राः मध्वपूपच्छिद्रस्थाः भ्रमरबीजस्थानीयाः ॥ १ ॥

तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः । ऋच एव मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः ॥ २ ॥

तस्य मध्वाश्रयस्य सवितुर्ये प्राञ्चः प्राच्यां दिशि गता रश्मयस्ता एव अस्यादित्यमधुनः प्रागञ्चनात्प्राच्यो मधुनाड्यः प्रसिद्धमधुन इव मध्वाधारच्छिद्राणि । ऋच ऋङ्मन्त्रा एव मधुकृतो भ्रमराः । ऋग्वेद ऋग्ब्राह्मणभागस्तद्विहितं कर्मैव पुष्पस्थानीयम् । ताः प्रसिद्धाः अमृतसाधनीभूताः आपः पयः सोमाद्याहुतिसाधनापूर्वीभूताः । अत्र पुष्पाश्रयस्थानीयाः ता वै एताः पूर्वोक्ता भ्रमरस्थानीया ऋचः ॥ २ ॥

एतमृग्वेदमभ्यतपँ स्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ ३ ॥

एतम् ऋग्वेदविहितं पुष्पस्थानीयमभ्यतपन् अभितस्तापमालोचनं रसनिःस्रावार्थं व्यापारं कृतवत्यः, तत्कर्म निवर्तितवत्य इति यावत्। तस्य ऋग्वेदविहितस्य कर्मणोऽभितप्तस्य ऋङ्मधुकरैर्निर्वर्तितस्य यशो विश्रुतत्वम्। तेजो देहगता दीप्तिः। इन्द्रियं प्रसिद्धम्। वीर्यं देहसामर्थ्यम्। अन्नाद्यमन्नं च तदाद्यं चान्नाद्यम्। रसो मध्वाख्योऽजायत उत्पन्नः ॥ ३ ॥

तद्व्यक्षरत्। तदादित्यमभितोऽश्रयत्। तद्वा एतद्यदेतदादित्यस्य रोहितँ रूपम् ॥ ४ ॥

तदुत्पन्नं यशआदि मधु व्यक्षरद्विशेषेण अक्षरदपगमत्। गत्वा च तन्मध्वादित्यमभितः पार्श्वतः आदित्यस्य पूर्वभागमश्रयदाश्रितवत्। तद्वै एतदेवैतन्मधु प्रत्यक्षं यदेतदुद्यत आदित्यस्य रोहितं रक्तं रूपं दृश्यत इत्यर्थः ॥ ४ ॥

इति पञ्चमे प्रथमः खण्डः ॥ १ ॥

उक्तवंशादित्रयस्य सर्वेष्वपि मधुपर्यायेषु तत्र तत्रैव ध्येयत्वमभिप्रेत्य शुक्लादिमधूनां नाडीभ्रमरपुष्पभेदानाह, 'अथ येऽस्य दक्षिणा रश्मय' इत्यारभ्य 'क्षोभत इव' इत्यन्तेन—

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूँष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः ॥१॥ तानि वा एतानि यजूँष्येतं यजुर्वेदमभ्यतपँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद्यदेतदादित्यस्य शुक्लँ रूपम् ॥ ३ ॥

यजूंष्येव यजुर्मन्त्रा एव भ्रमरा इत्यादि पूर्ववत् ॥ १–३ ॥

इति पञ्चमे द्वितीयः खण्डः ॥ २ ॥

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥१॥ तानि वा एतानि सामान्येतँ सामवेदमभ्यतपँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ २ ॥

तद्वयक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद्यदेतदादित्यस्य परं कृष्ण॒ रूपम् ॥ ३ ॥

सामान्येव गीतिभावमापन्ना मन्त्रा एवेत्याद्यपि समानम् ॥ १–३ ॥

इति पञ्चमे तृतीयः खण्डः ॥ ३ ॥

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः ॥ १ ॥ ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपँ स्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य रसोऽजायत ॥ २ ॥ तद्वयक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतद्यदेतदादित्यस्य परं कृष्णँ रूपम् ॥ ३ ॥

अथर्वणाङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरसः । इतिहासपुराणम् आथर्वणब्राह्मणभागः प्रसिद्धं वा तयोरपि पारिप्लवमाचक्षीतेत्यश्वमेधे विनियोगदर्शनात् । तथा य तदाख्यातमेव पुष्पम् इतिहासं पुराणं मन्त्राश्च भ्रमरा इति बोद्धव्यम् । तथा च पुष्पभ्रमरचिन्तनविकल्पोऽगतिकः ।

आदित्यस्य परम् अतिशयेन कृष्णं रूपमित्यपि शास्त्रप्रत्यक्षम् ॥ १–३ ॥

इति पञ्चमे चतुर्थः खण्डः ॥ ४ ॥

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः ॥ १ ॥ ते वा एते गुह्या आदेशा एतद् ब्रह्माभ्यतपँ स्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ २ ॥ तद्वयक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥

गुह्या रहस्या एवादेशाः लोकद्वारमित्याद्युक्तोपदेशा भ्रमराः । ब्रह्मात्र प्रणव एव । आदित्यस्य मध्ये क्षोभत इव चलतीव समाहितचित्तस्य दृश्यते ॥ १–३ ॥

अथ ध्येयान् रूपभेदान् स्तौति—

ते वा एते रसाना ँ रसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥

ते वै एते यथोक्ता रोहितादिरूपविशेषा रसानां रसाः सारभूताः। कथम् ? वेदा हि रसाः पूर्वमुक्तास्तेषां कर्मभावमापन्नानां वेदानामप्येते रोहितादिविशेषा रसा अत्यन्तसारभूताः। किं च तानि वै एतानि रोहितादिरूपाण्यमृतानामप्यमृतानि। कथम् ? वेदा ह्यमृताः पौरुषेयबुद्धिपूर्वाविरचितत्वेन नित्यत्वात्। तेषां वेदानां कर्मभावमापन्नानामेतानि रोहितादिरूपाण्यमृतानि ॥ ४ ॥

इति पञ्चमे पञ्चमः खण्डः ॥ ५ ॥

अमृतानि ध्येयान्युक्त्वा अमृतोपजीविदेवतागणाननुचिन्तनीयानुपदिशति 'तद्यत्प्रथममि'त्यादिपञ्चभिः खण्डैः—

तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन। न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

तत्तत्रोक्तेषु पञ्चस्वमृतेषु मध्ये यत्प्रथमममृतं रोहितं रूपं तदमृतं वसवः प्रातःसवनेशाना अग्निना मुखेन प्रधानेनाग्निमुख्याः सन्तः उपजीवन्ति उपभुञ्जते। लोकवद्ग्रासं कृत्वा प्राप्तं भक्षणं निषेधति—न वै देवा अश्नन्ति न पिबन्तीति। कथं तर्ह्युपजीवनमित्यत आह—एतदेवेति। एतदेवोक्तममृतं देवा दृष्ट्वा उपलभ्य सर्वैरेव करणैरनुभूय तृप्यन्ति न तु केवलं चक्षुषैव। उक्तयशआद्यात्मकस्यामृतस्य श्रोत्रादिग्राह्यत्वात् ॥ १ ॥

तर्हि किं ते निरुद्यमा एव ? नेत्याह—

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

एतदेव रोहितरूपमभिलक्ष्य स्वभोगानवसरं बुद्ध्वाऽभिसंविशन्ति उदासते। ते भोगावसरे त्वेतस्माद्रूपात् एतदमृतभोगनिमित्तमुद्यन्ति उद्यमं कुर्वन्ति उत्साहवन्तो भवन्ति लोकवत् ॥ २ ॥

उक्तध्येयस्य फलं ध्यानविधिमाह—

स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति। स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

यः कश्चिदेतदमृतं मधु एवं 'ऋच एव मधुकृतः' इत्यादिना यथोक्तं वेदोपासीत स वसूनां मध्ये एकः अन्यतमो भूत्वा वसुभिः सहैक्यं प्राप्य। अग्निमुखेनेत्यादि पूर्ववत् ॥ ३ ॥

कियन्तं कालमुपजीवतीत्यत आह—

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥

सः प्रथमामृतं वसूनां विद्वान् यावत्कालपर्यन्तमादित्योऽस्माद्दृष्टया पुरस्तात्प्राच्यां दिशि प्राचीदिग्गतैरैन्द्रीस्थैर्जनैः यावत्कौबेर्यां मध्याह्नगः सविता उदेता उद्यन् दृश्यते। पश्चास्मद्दृष्टया पश्चिमायां दिशि अस्तमेता गन्ता पूर्वदिग्गतैन्द्रीस्थैरेव जनैर्दृश्यते, तावद्वसूनां सम्बन्ध्याधिपत्यमैश्वर्यं स्वाराज्यं स्वाराजभावं स्वातन्त्र्यं पर्येता गन्ता भवतीत्यर्थः ॥ ४ ॥

इति पञ्चमे षष्ठः खण्डः ॥ ६ ॥

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन। न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति। स न एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेतावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥

द्विस्तावदैन्द्रीवासिभिर्दृश्यमानोदयास्तमयकालाद् द्विगुणितेन कालेन अस्मद्दृष्टया दक्षिणतो दक्षिणादिक्स्थैः संयमिनीवासिभिरैन्द्र्यां मध्याह्नग उदेता उद्यन् दृश्यते ऐन्द्र्यपेक्षया संयमिन्याः द्विगुणकालावस्थायित्वात्। समानमन्यत् ॥ १–४ ॥

इति पञ्चमे सप्तमः खण्डः ॥ ७ ॥

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन। न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद आदित्यानामेवैको भूत्वा वरुणेनैव मुखेनैत-देवामृतं दृष्ट्वा तृप्यति । स एतदेव रूपमभिसंविशत्येतस्मा-द्रूपादुदेति ॥ ३ ॥ स यावदादित्यो दक्षिणत उदेतोत्तरतो ऽस्तमेता द्विस्तावत् पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥

द्विस्तावत्ततो द्विगुणेन कालेन पश्चादस्मद्दृष्ट्या पश्चिमदिक्स्थै-र्वारुणीवासिभिः संयमिन्यां मध्याह्नगः उदेता उद्यन् दृश्यतेऽस्याः संय-मिन्यपेक्षया द्विगुणकालावस्थायित्वात् । समानमन्यत् ॥ १–४ ॥

इति पञ्चमेऽष्टमः खण्डः ॥ ८ ॥

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन । न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवा-मृतं दृष्ट्वा तृप्यति । स एतदेव रूपमभिसंविशत्येतस्माद्रूपा-दुदेति ॥ ३ ॥ स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव ताव-दाधिपत्यँ स्वराज्यं पर्येता ॥ ४ ॥

द्विस्तावदुत्तरतोऽस्मद्दृष्ट्यपेक्षया उत्तारदिक्स्थैः कौबेरीवासिभिः वारुण्यां मध्याह्नग उदेता उद्यन् दृश्यते । अस्या अपि वारुण्यपेक्षया द्विगुणकालावस्थायित्वात् ॥ १–४ ॥

इति पञ्चमे नवमः खण्डः ॥ ९ ॥

अथ यत्पञ्चममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन । न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एत-देवममृतं वेद । साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं

दृष्ट्वा तृप्यति । स एतदेव रूपमभिसंविशत्येतस्माद्रूपा-
दुदेति ॥ ३ ॥ स यावदादित्य उत्तरत उदेता
दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वमुदेताऽर्वागस्तमेता साध्या-
नामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥

ब्रह्मणा प्रजापतिना द्विस्तावदूर्ध्व उदेता अर्वाङधस्तादस्तमेता इलावृतवासिभिर्जनैर्दृश्यते । तेषां मानसोत्तरसुमेरुभ्यां प्राकारभूताभ्यां परित आवृतादित्यप्रकाशत्वात् । तथा च पूर्वपूर्ववस्वादीनां भोगकाला-दुत्तरोत्तराणां रुद्रादीनां द्विगुणो भोगकालस्तत्तदमृतध्यायिनामपि तावान्भोगकाल इति समुदायार्थः ॥ १–४ ॥

इति पञ्चमे दशमः खण्डः ॥ १० ॥

अथोक्तमधुविद्यायाः क्रमेण मुक्तिपर्यवसायितां दर्शयितुमाह—

अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव
मध्ये स्थाता तदेष श्लोकः ॥ १ ॥

अथ उदयास्तमनेन प्राणिनां स्वकर्मभोगनिमित्तमनुग्रहं कृत्वा तत-स्तदनन्तरं सवितृरूपापन्नो विद्वान् ऊर्ध्वो ब्रह्मीभूतः सन्नात्मनि उदेत्य स्वमहिम्नि प्रकाशं लब्ध्वा नैवोदेता, नास्तमेता, किन्त्वेकलोऽद्वितीय एव मध्ये स्वात्मन्येव स्थाता । स्थातेति प्रयोगादुक्तक्रममुक्तौ विद्वदनु-भवप्रकाशकं मन्त्रं प्रमाणयति – तदिति । तत्त्रोक्तेऽर्थे एष श्लोको मन्त्रो भवति ॥ १ ॥

कश्चिदादित्याल्लब्धब्रह्मोपदेशो युक्तावस्थायां ब्रह्मणि स्थितो वियुक्तावस्थायां केनचित्पृष्टः प्रोवाच—

न वै तत्र न निम्लोच नोदियाय कदाचन ।
देवास्तेनाहँ सत्येन मा विराधिषि ब्रह्मणेति ॥ २ ॥

न वे नैव तत्र ब्रह्मलोके त्वत्पृष्टमस्ति । किम् ? न निम्लोच इति । वर्णलोपश्छान्दसः । न निमुम्लोच नास्तमगमत्सवितः । न चोदियाय नोद्गतः कदाचन कस्मिंश्चिदपि काले । एतच्छपथेन द्रढयति—देवा इति । भो देवाः यूयं शृणुध्वम् । यथा मयोक्तं सत्यवचस्तेन सत्येनाहं ब्रह्मणा ब्रह्मस्वरूपेण मा विराधिषि मा विरुध्येयमप्राप्तिर्ब्रह्मणो माभूत् । इतिशब्दो मन्त्रसमाप्तिद्योतकः ॥ २ ॥

उक्तोपासनं सफलमुपसंहरति—

न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा
हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद ॥ ३ ॥

न ह वै अस्मै आदित्यात्मभूताय विदुषे किञ्चिदुदेति न निम्लोचति नास्तं गच्छति। किन्तु सकृत्सदा दिवा हैव दिवस एव स्वयं ज्योतिष्ट्वरूपो भवति। कस्मै य एतां यथोक्तामेवं वंशाद्युपेतां ब्रह्मणो वेदस्योपनिषदं गुह्यमुपासनं वेद तस्मै इत्यर्थः ॥ ३ ॥

उक्तां विद्यां गुरुशिष्यादिकथनेन स्तौति—

तद्धैतद् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनु. प्रजाभ्यस्तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥ ४ ॥

तदेतन्मधुविज्ञानं ह ब्रह्मा हिरण्यगर्भः प्रजापतये विराजे उवाच। प्रजापतिर्मनवे मनुः प्र जाभ्य इक्ष्वाकादिभ्य उवाच। किञ्च तद्धैतत्तदेतत् मधुब्रह्मविज्ञानं ह उद्दालकनाम्ने आरुणये ज्येष्ठाय पुत्राय पिता अरुणः प्रोवाच उक्तवान् ॥ ४ ॥

अत इदानीन्तनेऽपि—

इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्
प्रणाय्याय वान्तेवासिने ॥ ५ ॥

इदं वाव इदमेव तद् ब्रह्मविज्ञानं ज्येष्ठाय पुत्राय पिता प्रब्रूयात्। अथवा प्रणाय्याय योग्याय अन्तेवासिने शिष्याय प्रब्रूयात् ॥ ५ ॥

नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य
पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥ ६ ॥

एताभ्यां नान्यस्मै कस्मैचन प्रब्रूयादिति सम्बन्धः। कुतः ? यद्यपि कश्चिदपि आचार्याय इमां पृथिवीमद्भिः परिगृहीतां समुद्रपरिवेष्टितां समस्तामपि धनस्य धनेन भोगोपकरणैः पूर्णां संपन्नामपि दद्यात् तथाप्येतदेव मधुविद्यादानमेव ततो यथोक्तपृथिवीदानात् भूयोऽधिकतरफलमिति। अभ्यास आदरार्थः ॥ ६ ॥

इति पञ्चमे एकादशः खण्डः ॥ ११ ॥

सवितृद्वारकब्रह्मविद्यामुक्त्वा सवितृदैवत्यगायत्रीद्वारा तामुपदिशति—

गायत्री वा इदँ सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री

वाग्वा इद ँ सर्वं भूतं गायति च त्रायते च ॥ १ ॥

गायत्री वै इदं सर्वं भूतं प्राणिजातं यदिदं किञ्च यत्किञ्चित् स्थावरं जङ्गमं वा तदपि गायत्र्येव । कुतः ? वाग्वै शब्दसामान्यं वै गायत्री अतः सा सर्वात्मिका । वाचकशब्दसामान्यस्य सर्ववाच्यसम्बन्धात् कथं वाचोऽपि गायत्रीत्वमित्यत आह—वाग्वा इति । यतो वाग्वे इदं सर्वं भूतं प्राणिजातं गायति असौ गौरित्येवं शब्दयति त्रायति च मा भैषीरित्यादि-रूपेण रक्षति चेत्येतस्मात् गायत्री ॥ १ ॥

अथास्याः पृथिवीशरीरहृदयप्राणात्मकत्वमाह—

या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्या ँ हीद ँ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते ॥ २ ॥

या वै सा सर्वभूतरूपा गायत्री सा इयं वाव एव । का ? येयं पृथिवी । कुतः ? अस्यां पृथिव्यां हि अस्मादिदं सर्वं भूतं स्थावरजङ्गमं प्रतिष्ठितम् । एतदेव साधयति—एतामिति । एतामेव पृथिवीं नाति-शीयते नातिवर्तते सर्वं भूतम् ॥ २ ॥

या वै सा पृथिवीयं वाव सा यदिदमस्मिन्पुरुषे शरीर-मस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ३ ॥

या वै सा पृथिवी इयमेव सा इदमेव तत् । किम् ? यदिदमस्मिन्पुरुषे जीवति [ शरीरम् ] । कुतः ? अस्मिञ्छरीरे हि यस्मादिमे प्रसिद्धाः प्राणाः प्रतिष्ठिताः । यत एतदेव शरीरं प्राणाः नातिशीयते नातिवर्तन्ते ॥३॥

यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे हृदय-मस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ४ ॥

यद्वै तत्पुरुषे शरीरं गायत्र्यात्मकम् इदं वाव तत् । किम् ? यदिद-मस्मिन्पुरुषे जीवच्छरीरेऽन्तर्मध्ये हृदयपुण्डरीकाख्यम् । कुतः ? अस्मिन् हृदये हि यस्मादिमे प्राणाः प्रतिष्ठिताः । एत एतदेव हृदयं प्राणा नातिशीयन्ते ॥ ४ ॥

अस्याः ध्यानार्थमाह—

सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तम् ॥ ५ ॥

सैषा गायत्री छन्दोरूपा सती चतुष्पदा षडक्षरपादा षड्विधा वाग्भूत-पृथिवीशरीरहृदयप्राणभेदैः षट्प्रकारा । सर्वभूतसम्बन्धसिद्ध्यर्थमुप-

दिष्टयोर्वाक्प्राणयोरपि गायत्रीभेदत्वं 'षड्विधा गायत्री'ति वचनात्। वागादिभेदैः षड्विधां गायत्रीं पाठक्रमेणानुचिन्त्य अजहल्लक्षणया गायत्र्यवच्छिन्नं लक्षितं ब्रह्म चिन्तयेदिति प्रकरणार्थः। मन्त्रं संवादयति—तदेतदिति। तत्तत्रोक्ते प्रकरणार्थे स्थिते सति एतत् गायत्रीमुखेनोक्तं ब्रह्म ऋचा मन्त्रेणाभ्यनूक्तं प्रकाशितम्॥ ५॥

तावानस्य महिमा ततो ज्यायाँश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति॥ ६॥

यावांश्चतुष्पात् षड्विधश्च विकार उक्तस्तावानस्य गायत्रीब्रह्मणो महिमा विभूतिर्विस्तार ऐश्वर्यमात्रमेव केवलं ततस्तस्माद्विकारलक्षणात् ज्यायान्महत्तरो निर्विकारः पुरुषः। पुरुषः सर्वपूरणात् पुरिशयनाच्च। एतदेवोक्तं स्पष्टयति—पाद इति। अस्य गायत्रीब्रह्मणः एकः पादः सर्वाणि गायत्र्यात्मनोक्तानि भूतानि अस्य गायत्रीब्रह्मणस्त्रिपादमृतं पुरुषाख्यं दिवि द्योतनवति स्वात्मन्यवस्थितमिति॥ ६॥

उक्तमुपास्यं गायत्र्यवच्छिन्नं ब्रह्म हृदयाकाशे उपास्यमिति दर्शयितुं बाह्याकाशाद्यभेदेन हृदयाकाशमाह—

यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः॥ ७॥

त्रिपादमृतमित्येवं यद्गायत्रीमुखेनोक्तं तद्ब्रह्मेदं वाव जाठरादिस्थानप्रतीकत्वेनोच्यमानमेव। कथं योऽयं प्रसिद्धः पुरुषाच्छरीराद्बहिर्द्धा बहिराकाशो भौतिकः॥ ७॥

अयं वाव स योऽयमन्तः पुरुष आकाशो यो वै सोऽन्तः पुरुष आकाशः॥ ८॥

यो वै स बहिर्धा पुरुषादाकाशोऽयमेव सः। कः? योऽयमन्तः-पुरुषे शरीरमध्ये आकाश आध्यात्मिकः॥ ८॥

अयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ति पूर्णमप्रवर्तिनीँ श्रियं लभते य एवं वेद॥ ९॥

योऽयमन्तःपुरुषे आकाशोऽयमेव सः। कः? योऽयमन्तर्हृदये

पुण्डरीके आकाशः । नन्वत्र ध्येयस्य ब्रह्मणः परिच्छिन्नोत्पत्तिमत्त्वादि स्यादित्यत आह—तदेतदिति । यदेतत्तत् हार्दाकाशं ब्रह्म पूर्णं सर्वगतमेव । अत एवाप्रवर्ति न कुतश्चित् कचित्प्रवर्तितुं शीलमस्येत्यप्रवर्ति । उभयगुणकोपासनफलमाह—पूर्णामिति । पूर्णामप्रवर्तिनीं चानुच्छित्तिधर्मकां श्रियं विभूतिं लभते । य एवं यथोक्तं पूर्णमप्रवर्तिगुणं ब्रह्म वेद । मुख्यफलं तु ब्रह्मभावापत्तिरिति द्रष्टव्यम् ॥ ६ ॥

इति पञ्चमे द्वादशः खण्डः ॥ १२ ॥

अस्य ब्रह्मण उपास्त्यङ्गभूतं द्वारपालोपासनमाह—

तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ् सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद ॥ १ ॥

तस्य ह वै प्रकृतस्य एतस्य अनन्तरनिर्दिष्टस्य हृदयस्य पञ्च पञ्चसंख्याकाः देवसुषयः देवैः प्राणादित्यादिभी रक्ष्यमाणाः सुषयः छिद्राणि हार्दब्रह्मप्राप्तिद्वाराणि । तत्रास्य परमात्मभवनस्य हृदयस्य स यः प्राङ् सुषिः पूर्वाभिमुखः सुषिः सः प्राणस्तद्द्वारा प्राणितीति प्राणः । तच्चक्षुः स आदित्यः तदेतत्त्रयं तेजोऽन्नं च तदाद्यं चान्नाद्यमित्युपासीत । एतद्गुणोपासनफलमाह—तेजस्वीति । तेजस्वी त्वतिकान्तिमान् । अन्नादश्च आमयादिदुःखरहितो भवति य एवं यथोक्तगुणकं वेद ॥ १ ॥

अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रँ स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान् यशस्वी भवति य एवं वेद ॥ २ ॥

'अथ योऽस्य दक्षिणः सुषिः' इत्यारभ्य 'ते वा एते' इत्यतः प्राक्तनो ग्रन्थः समानार्थः । यशः ख्यातिः ॥ २ ॥

अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद् ब्रह्मवर्चसमन्नाद्यमित्युपासीत । ब्रह्मवर्चस्व्यन्नादो भवति य एवं वेद ॥ ३ ॥

ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः ॥ ३ ॥

अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स

पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्ति-
मान् व्युष्टिमान् भवति य एवं वेद ॥ ४ ॥

कीर्तिः परोक्षा ख्यातिः । व्युष्टिरपरोक्षा ख्यातिः ॥ ४ ॥

अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स
आकाशस्तदेतदोजश्च महश्चेत्युपासीत । ओजस्वी
महस्वान् भवति य एवं वेद ॥ ५ ॥

ओजो वलम् । महः महत् ॥ ५ ॥

तस्य वा एतस्येत्याद्युक्तमुपसंहरति—

ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य
एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान्
वेदास्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य
एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद॥६॥

ते वैते यथोक्ताः पञ्चसुषिसम्बध्दाः पञ्च ब्रह्मणो हार्दस्य पुरुषाः स्वर्गस्य मोक्षात्मकस्य हार्दब्रह्मणो लोकस्य स्वप्रकाशस्य द्वारपाः द्वारपालाः । उपसंहृतमेतदुपासनम् । गौणं मुख्यं फलं च विदधाति—स य एतानिति । अस्योपासकस्य कुले वीरः पुत्रो जायते वीरपुरुषो-पासनात् । तस्य चर्णापाकरणेन ब्रह्मोपासनप्रवृत्तिहेतुत्वम् । ततश्च स्वर्गलोकप्रतिपत्तये पारम्पर्येण भवतीति स्वर्गलोकप्रतिपत्तिरेवैकं फलं मुख्यमित्यर्थः । य एतानित्युक्तानुवादः । शेषं समानम् ॥ ६ ॥

गायत्र्युपाधिकं ह्युपास्यत्वेनोक्तं तस्यैव कौक्षेयज्योतिःप्रतीक-त्वेनोपासनं विधातुमाह—

अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु
सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिद-
मस्मिन्नन्तःपुरुषे ज्योतिः । तस्यैषा दृष्टिः ॥ ७ ॥

अथशब्दो विद्यान्तरोपक्रमार्थः । अतोऽमुष्माद्दिवो द्युलोकात् यत्परं ज्योतिः परं ब्रह्मैव दीप्यते प्रकाशते । क ? विश्वतः पृष्ठेषु । एतस्यैव व्याख्या सर्वतः संसारात्पृष्ठेषु उपरितमेषु अनुत्तमेषु न विद्यते उत्तमं येभ्य इति बहुव्रीहिरेव, न तत्पुरुषशङ्केति । तदेव व्याचष्टे—

उत्तमेषु हैरण्यगर्भादिषु कार्यभूतेषु लोकेषु । अस्य कौक्षेयज्योतिषि संपत्तिमाह—इदं वावेति । यदुक्तं ब्रह्मेदं वाव इदमेव तत् । किम् ? यदिदं वक्ष्यमाणप्रमाणकम् अस्मिन्नन्तःपुरुषे शरीरमध्ये ज्योतिर्भौतिकम् । अस्य दृष्टत्वश्रुतत्वगुणाभ्यां ध्यानविधानार्थं दृष्टिश्रुतिलिङ्गगम्यत्वमाह—तस्येति । कौक्षेयब्रह्मण एषा दृष्टिर्दर्शनम् ॥ ७ ॥

यत्रैतदस्मिञ्छरीरे सँस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद् दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥ ८ ॥

यत्र यस्मिन् काले अस्मिन् शरीरे हस्तसंस्पर्शेन उष्णिमानमुष्णस्पर्शमेतद्विज्ञानं यथा स्यात्तथा विजानाति तस्य ब्रह्मण एषा श्रुतिः श्रवणोपायः । कः ? यत्र यस्मिन्काले कर्णावपिगृह्य अङ्गुलिभ्यां पिधाय । निनदमिव रथघोषमिव । नदथुरिव ऋषभकूजितमिव । ज्वलतः अग्नेरिव उप समीपे स्वान्तर्गतमेव शब्दमेतच्छ्रवणं यथा स्यात्तथा शृणोति । एतद्गुणकं ध्यानं विदधाति—तदेतदिति । तदेतद्दिवः परस्ताद् दीप्यमानकौक्षेयज्योतिष्यध्यस्तं ब्रह्म दृष्टं च श्रुतं चेत्युपासीत दृष्टत्वश्रुतत्वगुणाभ्यामुपासितव्यम् । उपासनफलमाह—चक्षुष्य इति । चक्षुष्यश्चक्षुषा दर्शनीयः श्रुतो विख्यातश्च भवति य एवमुभयगुणकं ब्रह्म वेद । अभ्यासस्तु फलवद्विद्यादरार्थः ॥ ८ ॥

इति पञ्चमे त्रयोदशः खण्डः ॥ १३ ॥

प्रतीकद्वारेण ब्रह्मोपासनमुक्त्वा इदानीं प्रतीकं हित्वा सगुणब्रह्मोपासनमाह—

सर्वं खल्विदं ब्रह्म । तज्जलानिति शान्त उपासीत । अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ॥ १ ॥

तज्जलान् तस्माद् ब्रह्मणो जगज्जायत इति तज्जं तस्मिँल्लीयत इति तल्लं तस्मिन्ननिति चेष्टते स्थितिकाल इति तदनम् । तज्जं च तल्लं च तदनं चैतेषां समाहारस्तज्जलानम् । अवयवलोपश्छान्दसः । तज्जलान् तज्जत्वात् तल्लत्वात् तदनत्वाच्चेत्येतस्माद्धेतोस्त्रिषु कालेषु ब्रह्मव्यतिरेकेण जगतोऽनिरूपणात् तदात्मत्वेनावशिष्टं सर्वं खल्विदं जगद् ब्रह्मैवेत्येवं

निश्चयपूर्वकं शान्तो रागद्वेषादिरहितः सन्नुपासीत। शान्तो भवेदिति शमगुणविधिपरमिदं वाक्यमित्यर्थः। शमं विधाय तद्वतः प्रयोजनोक्तिरूपहेतूक्तिपूर्वकं कर्तव्यमिति (?) युनक्ति—अथेति। अथशब्दो हेत्वर्थः। यस्मात् खलु क्रतुमयः क्रतुप्रायोऽध्यवसायात्मकः पुरुषो यथाऽस्मिँल्लोके वर्तमानदेहे भवति तथा तादृगेव क्रतुफलात्मक इतोऽस्माद् देहात्प्रेत्य मृत्वा भवति। तस्मात्सः शान्तः क्रतुमविचलप्रत्ययं कुर्वीत॥ १॥

मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः॥ २॥

मनुतेऽनेनेति मनोऽन्तःकरणं तन्मयस्तत्प्रायो मनोमयः। अत एव प्राणशरीरः प्राणो लिङ्गात्मा ज्ञानक्रियाशक्तिमान् स शरीरं यस्येति प्राणशरीरः। एतदुभयविशेषणं ब्रह्मणि जीवाभेदविवक्षया। भा दीप्तिः चैतन्यलक्षणं रूपं यस्य स भारूपः। सत्याः अवितथाः सङ्कल्पा यस्येति सत्यसङ्कल्पः। आकाशः आत्मा स्वरूपं यस्येत्याकाशात्मा। सर्वं जगल्लक्षणं कर्मास्येति सर्वकर्मा। सर्वे कामाः दोषरहिता यस्येति सर्वकामः। सर्वे पुण्या गन्धा अस्येति सर्वगन्धः। सर्वे सुखकरा रसा अस्येति सर्वरसः। अतः सर्वमिदं जगदभ्यात्तो व्याप्त इति कर्तरि निष्ठा। तेनेदं सर्वं व्याप्तमिति यावत्। एवं गन्धादिग्रहणोक्तेरस्य घ्राणादिप्रसङ्गं निराकरोति—अवाकीति। वाक् शब्दः उच्यते यया सा वाग् वागेव वाकः, स विद्यते यस्य स वाकी, न वाकी अवाकी। अयं वाक्प्रतिषेध इतरेन्द्रियादेरुपलक्षणपरः। न विद्यते आदरो यस्येत्यनादरः। अनादर इत्यस्यैव विवरणमसंभ्रम इति। असंभ्रमः अप्राप्तप्राप्तौ हि संभ्रमः स च नेश्वरे तस्य नित्यतृप्तत्वात्॥ २॥

अस्मात्प्रत्यगात्मनोऽभिन्नत्वमाह—

एष म आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष म आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः॥ ३॥

एष यथोक्तगुणकः परमात्मा मे ममात्मान्तर्हृदये हृदयपुण्डरीकमध्ये

व्रीह्यादेरत्यन्तसूक्ष्मादणीयानणुतरः। अस्य परिमाणस्य वास्तवत्वशङ्कां वारयति—एष इति। एभ्य उक्तपृथिव्यादित्रिलोकेभ्यः ज्यायान्महत्परिमाणः ॥ ३ ॥

सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ॥ ४ ॥

उक्तगुणलक्षित एवेश्वरो ध्येयो न तु तद्गुणविशिष्ट इति शङ्कां वारयितुं सर्वकर्मेत्यादि एतद्ब्रह्मेत्यन्तं पुनर्वचनम्। उक्तोपासनमादेहपातादावर्तितं फलहेतुरित्यभिप्रेत्याह—एतमित इति। एतमुक्तोपास्यमितोऽस्माच्छरीरात् प्रेत्य मृत्वा अभिसंभविता प्रतिपत्तवास्मीत्येवं यस्य विदुषो अद्धा निश्चयः स्यान्न विचिकित्सा संशयोऽस्ति स उपास्यभावमाप्नोति नेतर इत्यर्थः। उक्तोपासनस्य सांप्रदायिकत्वमाह—इति ह स्माहेति। इत्येतत् शाण्डिल्यो नामतः ऋषिराह स्म उक्तवान्। अभ्यासः क्रतुफलसम्बन्धादरार्थः ॥ ४ ॥

इति पञ्चमे चतुर्दशः खण्डः ॥ १४ ॥

अथास्य कुले वीरो जायत इत्युक्तम्। पुत्रस्य दीर्घायुष्ट्वसिद्धये कोशविज्ञानमाह—

अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति
दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरँ बिलँ स
एष कोशो वसुधानस्तस्मिन् विश्वमिदँ श्रितम् ॥ १ ॥

अन्तरिक्षमुदरं सुषिरं यस्यासावन्तरिक्षोदरः। अन्तरिक्षे उदरदृष्टिः कर्तव्या। तथा भूमिर्बुध्नो मूलं यस्य स भूमिबुध्नो न जीर्यति इत्येवंभूतः। कोश इव कोशो हिरण्यादिनिक्षेपस्थानम्। दिशो हि प्रसिद्धाः। अस्य कोशस्य स्रक्तयः कोणाः। द्यौरेवास्य कोशस्य उत्तरमूर्ध्वं बिलं मुखम्। स एषः त्रैलोक्यात्मकः कोशो वसुधानः प्राणिनां कर्मफलाख्यं वसु धीयतेऽस्मिन्निति वसुधानः। कुतः? तस्मिन् कोशमध्ये इदं समस्तं प्राणिनां कर्मफलं श्रितं स्थितम् ॥ १ ॥

कोशकोणत्वेनोक्तासु दिक्ष्ववान्तरविभागमाह—

तस्य प्राची दिग्जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी

नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं न पुत्र रोदँ रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदँ रुदम् ॥२॥

कोशस्य प्राचीदिक्प्राग्गतो विभागो जुहूर्नाम जुह्वत्यस्यां दिशि कर्मिण इति जुहूरिति चिन्तयेत्। तथा दक्षिणादिक् सहमाना नाम सहतेऽस्यां पापकर्मफलानि यमपुर्यां प्राणिन इति सहमाना। प्रतीची पश्चिमादिक् राज्ञी नाम राज्ञा वरुणेनाधिष्ठितत्वात्। उदीची दिक् सुभूता नाम भूतिमद्भिः कुबेरादिभिरधिष्ठितत्वात्। तासां दिशां वायुरमृतभूतो वत्स इति चिन्तयेत्। तत्फलमाह—स य इति। यः कश्चित्पुत्रदीर्घायुष्ट्काम एवं यथोक्तममृतगुणं वायुं दिशां वत्सं वेद स उपासकः पुत्ररोदं पुत्रनिमित्तं रोदं रोदनं न रोदिति करोति। उपदिष्टं सफलमुपसंहरति—सोऽहमिति। यतः सोऽहं पुत्रजीवितार्थी एवमेतं वायुं दिशां वत्सं वेद अतोऽहं पुत्ररोदं रोदनं मा रुदम् ॥ २ ॥

यथोक्तोपासनाङ्गं मन्त्रपञ्चकमाह—

अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना। प्राणं प्रपद्येऽमुनाऽमुनाऽमुना। भूः प्रपद्येऽमुनाऽमुनाऽमुना। भुवः प्रपद्येऽमुनाऽमुनाऽमुना। स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥ ३ ॥

अरिष्टमविनाशितं कोशं यथोक्तमहं प्रपद्ये प्रपन्नोऽस्मि। अमुनानेन अमुकशर्मणा पुत्रनाम्ना निमित्तभूतेन तद्दीर्घायुष्ट्वं निमित्तीकृत्येति यावत्। अमुनामुनामुनेत्यभ्यासो जपार्थः। प्राणं प्रपद्य इत्यादिमन्त्रचतुष्टयं समानम् ॥ ३ ॥

अथैषां द्वितीयादिमन्त्राणां प्रतीकग्रहणपूर्वकमभिप्रेतार्थमाह—

स यदवोचं प्राणं प्रपद्य इति प्राणो वा इदँ सर्वं भूतं यदिदं किञ्च तमेव तत्प्रापत्सि ॥ ४ ॥ अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम् ॥ ५ ॥ अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥ ६ ॥ अथ यदवोचँ स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं

प्रपद्य इत्येव तदवोचं तदवोचम् ॥ ७ ॥

सोऽहं मन्त्रात्मना यदवोचं प्राणं प्रपद्य इत्यत्र प्राणो वै प्राण एवेदं सर्वं भूतं प्राणिजातं यदिदं किञ्च। तमेव सर्वात्मकं प्राणं तत्त्वेन प्राणप्रतिपादनेन प्रापत्स्यहं प्रतिपन्नोऽभूवम्। एवमेव तृतीयमन्त्रादिन्नाह्यगम्। द्विर्वचनं यथोक्तविज्ञानादरार्थम् ॥ ४—७ ॥

इति पञ्चमे पञ्चदशः खण्डः ॥ १५ ॥

पुत्रफलेन सह पितुः सम्बन्धश्च दीर्घायुष्ट्वत एवेति स्वस्यापि तत्सिद्धये उपसनान्तरमाह—

पुरुषो वाव यज्ञस्तस्य यानि चतुर्विँ शतिवर्षाणि तत्प्रातःसवनं चतुर्विँ शत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदँ सर्वं वासयन्ति ॥१॥

पुरुषो वै जीवनविशिष्टकार्यकरणं सङ्घात एव यज्ञः पुरुषे स्वात्मनि यज्ञदृष्टिः कर्तव्या। तत्र तत्सादृश्यमाह—तस्येति। तस्य पुरुषस्य यान्यायुषः प्राथमिकचतुर्विंशतिवर्षाणि तत्प्रसिद्धं प्रातःसवनम्। अत्रापि साधर्म्यमाह—चतुर्विंशत्यक्षरा गायत्री गायत्रं च प्रातःसवनमिति संख्यासामान्यात्। किञ्च तत्प्रातःसवनमस्य पुरुषस्य यज्ञस्य वसवो देवा अन्वायत्ता अनुगताः। प्राणा वाव वागादय एव वसव इति। कुतः? एते प्राणा हि यस्मादिदं सर्वं प्राणिजातं वासयन्ति ॥ १ ॥

उपासनाङ्गं कर्तव्यमुपदिश्यते —

तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात् प्राणा वसव इदं मे प्रातःसवनं माध्यन्दिनँ सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ २ ॥ अथ यानि चतुश्चत्वारिँ शद्वर्षाणि तन्माध्यन्दिनँ सवनं चतुश्चत्वारिँ शदक्षरा त्रिष्टुभं माध्यन्दिनँ सवनं तदस्य रुद्रा अन्वायत्ताः। प्राणा वाव रुद्रा एते हीदँ सर्वँ रोदयन्ति ॥ ३ ॥ तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात् प्राणा रुद्रा इदं मे माध्यन्दिनँ सवनं तृतीयसवनमनुसन्तनुतेति माहं प्राणानाँ रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ ४ ॥

तमुपासकं चेद्यदि एतस्मिन्प्रातःसवने वयसि किञ्चिन्मरणशङ्काकारणं व्याध्यादि उपतपेत् दुःखमुत्पादयेत्तदा स यज्ञसंपादी ब्रूयाज्जपेत् मन्त्रमिमम्। कोऽसौ ? प्राणा वसव इदं उक्तरूपं मे मम यज्ञरूपस्य प्रातःसवनं माध्यन्दिनं संतनुत माध्यन्दिनसवनेनाऽऽयुषा सहितमेकीभूतं सन्ततं कुरुत। इतिशब्दः प्रार्थनामन्त्रभागसमाप्त्यर्थः। अहं यज्ञो यज्ञात्मकः युष्माकं प्राणानां वसूनां प्रातःसवनेशानां मध्ये मा विलोप्सीय मा विलुप्येयं मा विच्छिद्येयम्। इतिशब्द आशीर्वादमन्त्रभागसमाप्त्यर्थः। अस्य सफलत्वमाह—उद्धैवेति। सोऽनेन मन्त्रजपेन ध्यानेन च ततस्तस्मादुपतापाद् उदेत्य उद्गम्य विमुक्तः सन्नगदो ह नीरोगो भवत्येव। एवमथ यानीत्यादि बोद्धव्यम्॥ २-४॥

अथ यान्यष्टाचत्वारिँ शद्वर्षाणि तृतीयसवनमष्टाचत्वारिँ-शदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वावादित्या एते हीदँ सर्वमाददते॥ ५॥ तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात् प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति माहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यागदो हैव भवति॥६॥

एते प्राणा हि यस्मादिदं सर्वं प्राणिजातं रोदयन्ति मरणादिकाले। एते हीदं सर्वं शब्दादिकमाददते गृह्णन्ति। समानमन्यत्॥ ५, ६॥

सम्मतिमाह—

एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत्प्र ह षोडशं वर्षशतं जीवति य एवं वेद॥ ७॥

ह वै इत्यैतिह्यार्थौ। महिदासो नामतः इतरायाः अपत्यमैतरेयस्तद्यज्ञदर्शनं विद्वान् रोगेण स्पृश्यमान आह स्म। किम्? हे रोग स त्वं मे इति मम कर्मणि षष्ठी। मां किं कस्मादेतदुपतपनं यथा स्यात्तथा उपतपसि। यतोऽयं यज्ञः सोऽहम् अनेन त्वत्कृतेनोपतापेन न प्रेष्यामि न मरिष्यामि, अतस्तव श्रमो वृथैवेति। एवं निश्चयः स महिदासः षोडशोत्तरं च वर्षशतमजीवत्। महिदासस्यैतत्फलत्वेऽप्यन्यस्य किमित्यत

आह—प्र ह षोडशमिति। अन्योऽपि प्रजीवति ह षोडशोत्तरं वर्षशतं य एवं यथोक्तं यज्ञसंपादनं वेद जानातीत्यर्थः॥ ७॥

इति पञ्चमे षोडशः खण्डः॥ १६॥

अपरमपि यज्ञाङ्गसादृश्यात् सम्पाद्यत इत्याह—

स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः॥ १॥

स यज्ञसंपादी पुरुषो यदशिशिषति अशितुमिच्छति यत्पिपासति पातुमिच्छति यन्न रमते इष्टाद्यप्राप्तिनिमित्तमरमणं ता अस्य पुरुषस्य दीक्षाः। दुःखानुभवे दीक्षादृष्टिः कर्तव्य॥ १॥

अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति॥ २॥

अथ यदश्नाति अशनं करोति यत्पिबति यद्रमते रतिमनुभवति तदुपसदैः पयोभक्षणवद्भिः समानतामेति॥ २॥

अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति॥ ३॥

अथ यद्धसति यज्जक्षति भक्षयति यच्च मैथुनं चरति तत् स्तुतशस्त्रैरेव समानतामेति शब्दवत्त्वसामान्यात्॥ ३॥

अथ यत्तपो दानमार्जवमहिँसा सा
सत्यवचनमिति ता अस्य दक्षिणाः॥ ४॥

अथ यत्तपोदानमार्जवं नम्रताऽहिंसा सत्यवचनं ता अस्य पुरुषस्य दक्षिणाः धर्मवृद्धिहेतुत्वात्॥ ४॥

तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेव
वास्य तन्मरणमेवास्यावभृथः॥ ५॥

यस्माच्चैवं पुरुषो यज्ञस्तस्मात्तं माता जनयिष्यति तदा तां लोकाः सोष्यतीत्याहुः। यदा च सा प्रसूता भवति तदा तामसोष्ट प्रसूतेत्याहुः। तदेतत् सोष्यत्यसोष्टेति शब्दसम्बन्धित्वमेवास्य पुरुषस्य विधियज्ञस्यैव पुनरुत्पादनम्। पुरुषस्य मरणमेवावभृथो मरणे तद्दृष्टिः कार्या॥ ५॥

विशिष्टपुरुषसम्बन्धकीर्तनेन विद्यां स्तोतुं तदङ्गभूतं मन्त्रत्रयं च विधातुमुपक्रमते—

तद्धैतद्धोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच अपिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युत-

मसि प्राणसँ्शितमसीति तत्रैते द्वे ऋचौ भवतः ॥ ६ ॥

तदेतद्यज्ञदर्शनं घोरो नामत आङ्गिरसो गोत्रतः कृष्णाय देवकीपुत्राय उक्त्वोवाच। वक्ष्यमाणं कृष्णस्य विद्याफलमाह—अपिपास इति। स कृष्ण एतद्दर्शनं श्रुत्वा अपिपास एवान्याभ्यो विद्याभ्यो वितृष्णो बभूव, अतः श्रेष्ठा विद्या। किमुवाचेत्यपेक्षायां तदाह—स इति। स कृष्णोऽन्तवेलायां मरणकाले एतन्मन्त्रत्रयं प्रतिपद्येत जपेत्। किं तत्? अक्षितम् अक्षीणमक्षतं वादित्यात्मकं तत्त्वमसि। अच्युतं स्वरूपादप्रच्युतं तत्त्वमसि। प्राणः श्वासः संशितं सम्यक् तनूकृतं प्राणश्च संशितं सूक्ष्मं तत्त्वमिति यावत्। इतिशब्दो यजुर्मन्त्रत्रयस्य समाप्तिद्योतकः। मन्त्रत्रयप्रतिपाद्ये सावित्रे तत्त्वे प्रतीतिदार्ढ्यायाह—तत्रेति। तस्मिन् मन्त्रोक्तेऽर्थे एते द्वे ऋचो मन्त्रौ विद्यास्तुतिपरौ भवतो न जपार्थौ ॥ ६ ॥

आदित्प्रत्नस्य रेतसः। उद्वयं तमसस्परि ज्योतिः
पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्म
ज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥ ७ ॥

तत्र आदित्प्रत्नस्य रेतस इति प्रतीकत्वेन गृहीतप्रथमर्चो 'ज्योतिः पश्यन्ति वासरं परो यदिध्यते दिवि' इति शेषभागः। आत् इत् इत्यत्र तकारेच्छब्दावनर्थकौ, आकारश्च व्यवहितेन सम्बद्ध्यते। प्रत्नस्य पुराणस्य अत एव रेतसो बीजभूतस्य जगतः कारणस्य वासरमहरहरिव स्वप्रकाश ज्योतिः परः परमुत्कृष्टं दिवि द्योतनवति परब्रह्मणि यत् इध्यते दीप्यते तदा पश्यन्ति आसमन्ताद्भावेनानुभवन्ति साधनसंपन्नाः। उत् वयं इति छेदः। तमसोऽज्ञानस्य निवर्तकं ज्योतिरुत्तरमपरज्योतिरपेक्षया उत्कृष्टतरमूर्ध्वतरं वादित्यस्थं परिपश्यन्तो वयम्। स्वः आत्मीयं हृदिस्थं च ज्योतिरिति पश्यन्त उभयोरेकीकृत्य अवलोकयन्तो वयं देवत्रा देवेषु देवं द्योतनात्मकं जगतो रश्मीनां प्राणिनां च सुष्ठु ईक्षणात् सूर्यमुत्तमं ज्योतिरितरापेक्षया उत्कृष्टतमम् उदगन्म उद्गतवन्तः। अभ्यासो यज्ञपरिकल्पनासमाप्त्यर्थः ॥ ७ ॥

इति पञ्चमे सप्तदशः खण्डः ॥ १७ ॥

ब्रह्मणो गुणस्यैकदेशत्वेन मन आकाशश्चोक्तः, तद्ग्रहणाशक्ताय मनआकाशयोः संपूर्णब्रह्मदृष्टिमाह—

मनो ब्रह्मेत्युपासीतेत्यध्यात्मम्। अथाधिदैवतमाकाशो
ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥ १ ॥

मनःप्रतीकं ब्रह्मेत्युपासीत । तत्रोपलभ्यमानत्वादिति दर्शनमध्यात्ममात्मानमधिकृत्य प्रवर्तमानम् । अथानन्तरमधिदैवतं देवताविषयमिदमुपासनमाकाशो ब्रह्मेति सूक्ष्मत्वादिसाधर्म्यादित्युभयम् आदिष्टमुपदिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥ १ ॥

तदेतच्चतुष्पाद् ब्रह्म । वाक् पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्मम् । अथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवादिष्टं भवत्यध्यात्मं चैवाधिदैवतं च ॥ २ ॥

तदेतदुभयविधं ब्रह्म चतुष्पात् । तत्र मनोब्रह्मणो वाक् पादः । वक्तव्यस्य मनसि प्रतिष्ठानात्पाद इव पादः । तथा प्राणो घ्राणः पादश्चक्षुष्पादः श्रोत्रं पाद इत्यध्यात्मम् । अथाधिदैवतम् अग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद आकाशब्रह्मणः । आकाशेऽग्न्यादीनां लग्नत्वेन उपलभ्यमानत्वादित्येवम् अध्यात्ममधिदैवतं चेत्युभयविधं चतुष्पाद् ब्रह्म आदिष्टमुपदिष्टं भवति ॥ २ ॥

आध्यात्मिकपादानामाधिदैविकैः पादैरधिष्ठेयतया सम्बन्धोऽनुचिन्तनीय इत्याह—

वागेव ब्रह्मणश्चतुर्थः पादः । सोऽग्निना ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ३ ॥

मनोब्रह्मण इतरपादापेक्षया वागेव चतुर्थः पादः । सोऽग्निना आधिदैवतेन ज्योतिषा भाति च दीप्यते तपति चौष्ण्यं करोति । यद्वा घृताद्याग्नेयान्नेनेद्धा वाग् भाति च तपति च वदनोत्साहवती स्यात् । एतदुपासनफलमाह—भाति चेत्यादि सुबोधम् ॥ ३ ॥

प्राण एव ब्रह्मणश्चतुर्थः पादः । स वायुना ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥ चक्षुरेव ब्रह्मणश्चतुर्थः पादः । स आदित्येन ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ५ ॥ श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः । स दिग्भिर्ज्योतिषा भाति च तपति च । भाति च तपति

च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ६ ॥

प्राणो घ्राणो गन्धग्रहणाय वायुना भाति। स इत्यादि सर्वं समानम्। अदृष्टफलं त्वत्र ब्रह्मसम्पत्तिरिति बोध्दव्यम्। अभ्यास उक्तदर्शनसमाप्त्यर्थः ॥ ४-६ ॥

इति पञ्चमे अष्टादशः खण्डः ॥ १८ ॥

ब्रह्मणश्चतुर्थपादत्वेनोक्ते आदित्ये सकलदृष्टिविधानार्थमाह—

आदित्यो ब्रह्मेत्यादेशः। तस्योपव्याख्यानम् असदेवेदमग्र आसीत्। तत्सदासीत्तत्समभवत्तदाण्डं निरवर्तत। तत्-संवत्सरस्य मात्रामशयत। तन्निरभिद्यत। ते आण्ड-कपाले रजतं च सुवर्णं चाभवताम् ॥ १ ॥

आदित्यो ब्रह्मेत्यादेशः। तस्यादित्यस्योपव्याख्यानं क्रियते तदाह—असदिति। इदं दृश्यमानं व्याकृतं जगदग्रे व्याकरणात्प्रागवस्थायाम् असदिवासीत् अनभिव्यक्तरूपनामैवासीत् न तु सर्वथाऽसदेव। तदेव सदासीद् बीजस्योच्छूनतावत् कार्योन्मुखीभूतमासीत्। ततश्च तदेव समभवत् प्राप्तपरिणामं सद्धूतसूक्ष्माकारेण बभूव। ततश्च तदेव पञ्चीकरणद्वारा। आण्डमिति दैर्घ्यं छान्दसम्। अण्डं जगद्गर्भं निरवर्तत। निर्वृत्त्य तदण्डं संवत्सरस्य प्रसिद्धस्य मात्रां परिमाणमभिन्नस्वरूपमेव अशयत स्थितम्। ततस्तदण्डं निरभिद्यत। निर्भिन्नस्य तस्याण्डस्य ते द्वे कपाले द्विदले रजतं च सुवर्णं चाभवतां संवृत्ते ॥ १ ॥

तद्यद्रजतँ् सेयं पृथिवी यत्सुवर्णँ् सा द्यौर्यज्जरायु ते पर्वता यदुल्बँ् समेघो नीहारो या धमनयस्ता नद्यो यद् बास्तेयमुदकँ् स समुद्रः ॥ २ ॥

तत् तयोः कपालयोर्मध्ये यद्रजतकपालं सेयं पृथिवी पृथिव्युपलक्षितमधोऽण्डकपालमिति यावत्। यत्सुवर्णकपालं सा द्यौर्द्युलोकोपलक्षितमूर्ध्वकपालम्। यज्जरायु गर्भवेष्टनं स्थूलमासीत्ते पर्वताः। यदुल्वं सूक्ष्मं गर्भवेष्टनं तत्समेघो नीहारो मेघेन सह वर्तमानो नीहारो हिमम्। जातस्य गर्भस्य देहे या धमनयः शिरास्ता नद्यो बभूवुः। यत्तस्य बस्तौ संभवं बास्तेयमुदकं स समुद्रः ॥ २ ॥

अथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा ऊलूलवो-

ऽनूदतिष्ठन् त्सर्वाणि च भूतानि सर्वे च कामास्तस्मा-
त्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनू-
त्तिष्ठन्ति सर्वाणि च भूतानि सर्वे चैव कामाः ॥ ३ ॥

अथ यत्तस्मिन्नण्डे यत्तद्गर्भरूपमजायत सोऽसौ प्रसिद्धः आदित्य-स्तमादित्यं जायमानम् अनु घोषाः शब्दाः । किंलक्षणा ? उलूलवः रलयोः सावर्ण्यात् उरूरवो विस्तीर्णरवाः उदतिष्ठन्नुत्थितवन्तः, सर्वाणि च स्थावरजङ्गमानि भूतान्युदतिष्ठन् । तेषां च सर्वे कामा विषयास्त्र्यादय उदतिष्ठत् । अत्र मानमाह—तस्मादिति । यस्मादादित्यभूतजन्मनिमित्ता भूतकामोत्पत्तिस्तस्मादद्यत्वेऽपि तस्यादित्यस्योदयं प्रति प्रत्यायनं प्रत्यस्त-गमनं च प्रति घोषा इत्याद्युक्तार्थम् ॥ ३ ॥

एतदुपासनफलमाह—

स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेनँ
साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् ॥ ४ ॥

स यः कश्चिदेतमादित्यमेवं यथोक्तमहिमानं विद्वान् जानन्नादित्यं ब्रह्मेत्युपास्ते एवमुपासकं साधवः शोभना अनिषिद्धा शब्दा आ च गच्छेयु-रागच्छेयुश्चेति यत्तदभ्यासो ह क्षिप्रमेव । किञ्च ते घोषाः उप च निम्रेडेरन् उपसुखयेयुश्च सुखं च कुर्युः । एतद्दृष्टं फलमदृष्टं तूक्तोपास्य-प्राप्तिः । अभ्यास आदित्यब्रह्मदृष्ट्याद्यादरार्थः ॥ ४ ॥

इति पञ्चमे एकोनविंशः खण्डः ॥ १९ ॥

॥ इति छान्दोग्यब्राह्मणे पञ्चमः प्रपाठकः ॥

यत्साक्षाद्रविमध्वपूपनिलयं गायत्र्यवस्थं त्रिपाद्
ब्रह्म स्वोदरजातवेदसि गतं सर्वं जगद्यन्मयम् ।
यत्प्राप्त्यै स्वसुतायुरर्थमपि यद्रूपान्तरं मारुतं
यज्ञादीन्समुपासते श्रुतिविदस्तं नौमि सिंहाननम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्य-नित्यानन्दाश्रमविरचितायां छान्दोग्योपनिषद्व्याख्यायां मिताक्षरायां तृतीयोऽध्यायः ॥ ३ ॥

॥ अथ ब्राह्मणे षष्ठः प्रपाठकः। उपनिषदि चतुर्थोऽध्यायः॥

आदित्यस्य सूत्रावच्छेदत्वात्तदुपासनानन्तरं सूत्रात्मोपासनं विधातुं तादृदावनादीनां विद्याप्राप्तिसाधनत्वप्रदर्शनार्थमाख्यायिकां रचयति—

ॐ जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस । स ह सर्वत आवसथान् मापयाञ्चक्रे सर्वत एव मेऽत्स्यन्तीति ॥ १ ॥

जनश्रुतस्यापत्यं जानश्रुतिर्ह पुत्रस्य पौत्र इति पौत्रायणः। श्रद्धापुरःसरं देयमस्येति श्रद्धादेयः। बहु प्रभूतं दातुं शीलमस्येति बहुदायी। बहु पक्तव्यं भोजनार्थिभ्यो यस्येति बहुपाक्य आस कस्मिंश्चिद् देशे। स जानश्रुतिर्ह सर्वतः सर्वासु दिक्षु एत्य वसन्ति येष्विति आवसथास्तानावसथान् वसतिस्थानानि मापयाञ्चक्रे कारितवान्। सर्वतः सर्वेष्वेवावसथेषु मे ममान्नं लोका अत्स्यन्ति इत्यभिप्रायवान् ॥ १ ॥

विशिष्टान्नदानफलं दर्शयितुमाह—

अथ ह हꣳसा निशायामतिपेतुः। तद्धैवꣳ हꣳसो हꣳसमभ्युवाद हो होऽयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ॥ २ ॥

अथैवं सति कस्मिंश्चिद्धर्मकाले निशायां रात्रौ हर्म्यतलस्थे राजनि सति हंसरूपाः ऋषयो देवता वा राज्ञोऽन्नदानगुणैस्तोषिताः सन्तो हंसरूपा भूत्वा राज्ञो दर्शनगोचरे निपेतुः पतितवन्तः। तस्मिन्काले तेषां मध्ये पृष्ठपाता हंस एनमग्रपातिनं हंसं हो हो भो भो अयीति कोमलं सम्बोध्य भल्लाक्ष भल्लाक्ष भद्राक्ष भद्राक्षेत्यादरं पश्यपश्येतिवद् दर्शयन् अभ्युवाद अभ्युक्तवान्। किम्? जानश्रुतेः पौत्रायणस्य दिवा अह्ना द्युलोकेन वा समं ज्योतिराततं व्याप्तं मा प्रसाङ्क्षीः प्रसञ्जनं मा कार्षीस्तेन ज्योतिषा सह सम्बन्धं मा कार्षीः। तज्ज्योतिस्त्वा त्वां मा प्रधाक्षीरिति पुरुषव्यत्ययेन मा प्रधाक्षीत् मा दहतु ॥ २ ॥

तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तꣳ सयुग्वानमिव रैक्कमात्थेति यो नु कथꣳ सयुग्वा रैक्क इति ॥ ३ ॥

तमेवमुक्तवन्तं पृष्ठगामिनं हंसं तु ह परोऽग्रगामी हंसः प्रत्युवाच। कम्वर इति। कम् उ अरे इति छेदः। अरे हंस एनं प्राणिमात्रं सन्तं राजानमधिकृत्य कं किमु पूर्वोक्तवचनमात्थ कथयसि रैक्वमिव। कथ-

म्भूतं रैक्वम्? सयुग्वानं युगं वहतीति युग्यो वलीवर्दः सोऽस्यास्तीति युग्वा शकटी तया सह वर्तते [ इति सयुग्वा तमिव । अयुक्तमस्मिन् ईदृशं वक्तुं रैक इवेत्यभिप्रायः । इत्युक्तेन पृष्ठगामिना यः सयुग्वा रैक-स्त्वयोच्यते स कथं नु स्यात् ] ॥ ३ ॥

इति पृष्टः पुरोगामी हंसः सदृष्टान्तं सयुग्वानं तमाह—

यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ४ ॥

यथा लोके द्यूतक्रीडासाधनीभूताक्षशब्दितस्मै[1] कृताय गगश्चतुरङ्कः संज्ञया कृताय एव सन्नत्र कृतमित्युच्यते । क्रमेण त्रेताद्वापरविजिताय विजयार्थमधरेयाः न्यूनास्त्र्यङ्कद्व्यङ्कैकाङ्काः न्यूनसंख्याया अ कलि-नामानः संयन्ति संगच्छन्ति । तत्रान्तर्भवन्ति, नरैकं कृतायस्थाधिक-संख्यायामन्तर्भूतत्वात् । यथायं दृष्टान्त एवमेवेनं अन्तर्भवति नीय-मभिव्याप्य सर्वं त्रेताद्वापरकलिस्थानीयं समेति धर्मजातं कु । किं तत्सर्वम्? यत्किञ्च लोके सर्वाः प्रजाः साधु शोभनं यतन्माहात्म्र्वन्ति तत्सर्वं रैकधर्मे तत्फले चान्तर्भवतीत्यर्थः । न केवलं रैकानुग्रहार्थम्यम्, किन्तु सर्वस्यापि तादृग्ज्ञानवतस्तदस्तीति जानश्रुते घोष आह— यस्तद्वेदेति । यद्वेद्यं स रैको वेद तद्वेद्यं योऽन्योऽपि वद स विद्वान् मया एतदेवं रैकवत् कृतायस्थानीय उक्त इति यावत् । इतिशब्दो हंसवाक्यसमाप्त्यर्थः ॥ ४ ॥

तदु ह जानुश्रुतिः पौत्रायण उपशुश्राव । स ह संजिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैकमात्थेति यो नु कथꣳ सयुग्वा रैक इति ॥ ५ ॥ यथा कृताय विजिताया-धरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ६ ॥

तदेतदीदृशं हंसवाक्यमात्मनः कुत्सारूपमन्यस्य च प्रशंसारूपं उ ह ज्ञानश्रुतिः पौत्रायणः शुश्राव श्रुतवान् । स राजा संजिहान एव

---

१. त्रुटितमिदं मूलपुस्तके तन्मया भगवत्पादीयभाष्यमानन्दगिरिकृतटीकां चावेक्ष्य संधितम् ।

शयनं परित्यजन्नेव क्षत्तारं सारथिनं स्तुतिं कुर्वाणमुवाच। किम्? अङ्ग हे वत्स त्वं कथं सयुग्वाणं रैक्वमिव मामात्थ स्तौषि। स एव स्तुत्यर्हो नाहमिति भावः। यो नु कथमित्यादि क्षत्तृराज्ञोः प्रश्नप्रतिवचने उक्तार्थे॥ ५, ६॥

स ह क्षत्तान्विष्य नाविदमिति प्रत्येयाय। तँ होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति॥ ७॥

स राज्ञोऽभिप्रायज्ञः क्षत्ता ह ग्रामादौ रैक्वमन्विष्यान्वेषणं कृत्वा नाविदं न विज्ञासिषमिति ब्रुवन् प्रत्येयाय प्रत्यागतवान्। तं क्षत्तारं ह राजोवाच। किम्? अरे क्षत्तः यत्र यस्मिन्नेकान्तादौ ब्राह्मणस्य ब्रह्मविदोऽन्वेषणानुमार्गणं भवति तत्रैनं रैक्वं ऋच्छ गच्छ अन्वेषणं कुरु॥७॥

एवमुक्तः—

सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश। तँ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहँ ह्यरा ३ इति ह प्रतिजज्ञे। स ह क्षत्ताऽविदमिति प्रत्येयाय॥ ८॥

स क्षत्ताऽन्विष्य तं विजने देशे शकटस्य गन्त्र्याः अधस्तात् पामानं खर्जूं कषमाणं कण्डूयमानं दृष्ट्वा उपविवेश उप समीपे उपविष्टवान्। उपविश्य तं रैक्वं हाभ्युवादोक्तवान्। किम्? नु वितर्के। हे भगवो भगवन् त्वं सयुग्वा रैक्व इत्युक्त अहं हि एव अरा इति प्लुतिरनादरार्था। अरे अहमेवेति ह प्रतिजज्ञे प्रतिज्ञां कृतवान् रैक्वः। स क्षत्ता ह अविदं विज्ञातवान् रैक्वं गार्हस्थ्यार्थिनमिति ब्रुवन् प्रत्येयाय प्रत्यागत इत्यर्थः॥८॥

इति षष्ठे प्रथमः खण्डः॥ १॥

तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे। तँ हाभ्युवाद॥ १॥

तत्तस्मिन् क्षत्तृवचने श्रुते सति उ एव ह जानश्रुतिः पौत्रायणो गवां षट् शतानि निष्कं कण्ठ्यं हारम् अश्वतरीरथं अश्वतरीभ्यां युक्तं रथं तदेतद्धनमादाय गृहीत्वा प्रतिचक्रमे रैक्वं प्रति गतवान्। गत्वा च तं रैक्वं च ह अभ्युवाद अभ्युक्तवान्॥ १॥

किम् ?—

रैक्वेमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथोऽनु म एतां भगवो देवताँ शाधि यां देवतामुपास्स इति ॥ २ ॥

हे रैक्व इमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथः आदत्स्व। मे इति कर्मणि षष्ठी। मामेतां देवतामनुशाधि यां देवतां त्वमुपास्से तद्देवतोपासनेन मां शिक्षयेति यावत् ॥ २ ॥

तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति। तदुह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥ ३ ॥

तमेवमुक्तवन्तं राजानम् उ ह परो रैक्वः प्रत्युवाच। किम् ? अहेति निपातोऽनर्थकः। गोभिः सह हारेत्वा हारेण युक्त इत्वा गन्त्री हे शूद्र तवैवास्तु शुचन दुद्राव जानश्रुतिः। शुचा वा कन्यां दुद्रवे। शुचा करणभूतया वा रैक्वं प्रति दुद्राव प्राप्तवानिति। सर्वं समानमन्यत् ॥ ३ ॥

तँ हाभ्युवाद रैक्वेदँ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥ ४ ॥

तस्या ह मुखमुपोद्गृह्णन्नुवाच आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा इति। ते हैते रैक्वपर्णानाम महावृषेषु यत्रास्मा उवास तस्मै होवाच ॥ ५ ॥

इयं जाया जायार्थं मम दुहिता आनीता। अयं च ग्रामस्त्वदर्थं मया कल्पितो यस्मिन् ग्रामे त्वमास्से तिष्ठसि। एतत्सर्वं गृहीत्वा भगवः मा मामनु शाधीति। एवमुक्तो मुनिस्तस्याः जायार्थमानीतायाः दुहितुर्विद्याप्रदाने मुखं द्वारतामुपोद्गृह्णन् जानन्नुवाच। किम् ? आजहाराहृतवानसि यदीमाः हे शूद्र तर्ह्यनेनैव गवादिधनेन मुखेन विद्याग्रहणद्वारेण शास्त्रोक्तोपायेन आलापयिष्यथा आलापयसि विद्यां देहीति भणसीत्यर्थः। रैक्वेण ग्रामादिकमादाय विद्योपदिष्टेत्यस्मान् श्रुतिर्ज्ञापयति—ते हैत इति। यत्र येषु ग्रामेषु उवास उषितवान् रैक्वः तानस्मै रैक्वाय ददौ इति शेषः। ते हैते राजदत्ताः ग्रामाः महावृषेषु महापुण्यदेशेषु रैक्वपर्णा नाम विख्यातास्तत्र स्थित्वा तस्मै राज्ञे ह विद्यामुवाच ॥ ४, ५ ॥

इति षष्ठे द्वितीयः खण्डः ॥ २ ॥

कथम् ?—

वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवा-
प्येति । यदा सूर्योऽस्तमेति वायुमेवाप्येति । यदा
चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥

वायुर्वाव बाह्यो वायुरेव संवर्गः । कथम् ? यदा यस्मिन्काले वै अग्निरुद्वायति उद्वसनं प्राप्नोति शाम्यति तदाऽसौ वायुमेवाप्येति वायुस्वाभाव्यं गच्छति । यदा सूर्य इत्यादि समानम् ॥ १ ॥

यदाप उच्छुष्यन्ति वायुमेवापियन्ति । वायुर्ह्येवैतान्
सर्वान् संवृङ्क्त इत्यधिदैवतम् ॥ २ ॥

आप उच्छुष्यन्ति उच्छोषमाप्नुवन्ति । अत्र हेतुमाह—वायुर्हीति । हि यस्माद्वायुरेवैतानग्न्यादीन् संवृङ्क्ते ग्रसत्यतो वायुः संवर्गगुण उपास्य इत्यधिदैवतं देवतासु संवर्गदर्शनम् ॥ २ ॥

अथाध्यात्मम् । प्राणो वाव संवर्गः । स यदा स्वपिति
प्राणमेव वागप्येति । प्राणं चक्षुः प्राणँ श्रोत्रं प्राणं
मनः । प्राणो ह्येवैतान् सर्वान्संवृङ्क्त इति ॥ ३ ॥

अथानन्तरम् अध्यात्ममात्मानमधिकृत्य प्रवर्तमानं संवर्गदर्शनमिदमुच्यते । प्राणो वाव मुख्यः प्राण एव संवर्गः । कथम् ? स पुरुषो यदा यस्मिन्काले स्वपिति स्वापं प्राप्नोति तदा मुख्यप्राणमेव वागप्येति । समानमन्यत् । कुतः ? प्राण एव हि यस्मादेतान् सर्वान्वागादीन् संग्रसति ॥ ३ ॥

उक्तगुणौ वायुप्राणौ उपसंहरति—

तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥ ४ ॥

तावेतौ वै द्वौ सवर्गौ संवर्गगुणकौ । देवेष्वग्न्यादिषु वायुः संवर्गः । प्राणेषु वागादिषु मुख्यः प्राणः संवर्गः ॥ ४ ॥

एतयोः स्तुत्यर्थमाख्यायिकामारचयति—

अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परि-
विष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ॥ ५ ॥

अथ संवर्गगुणकोक्त्यनन्तरं ह शुनकस्यापत्यं शौनकं च पुरो-

हितं कपेर्गोत्रापत्यं कापेयम्, अभिप्रतारिणं च नामतः कक्षसेनस्यापत्यं काक्षसेनिं क्षत्रियम् एतौ भोजनायोपविष्टौ परिविष्यमाणौ पाचकैर्भोजने दीयमानान्नौ ब्रह्मचारी ब्रह्मविदभिमानी बिभिक्षे भिक्षितवान्। अस्य ब्रह्मविन्मानित्वं बुद्ध्वा किमयं वक्ष्यतीति जिज्ञासमानौ तस्मै ब्रह्मचारिणे उ ह अपि भिक्षां न ददतुः न दत्तवन्तौ ॥ ५ ॥

ततः—

स होवाच महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापेय नाभिपश्यति मर्त्या अभिप्रतारिन् बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥ ६ ॥

स ब्रह्मचारी ह उवाच। किम्? य एको देवः भुवनस्य भवन्त्यस्मिन् भूतानीति भुवनं भूरादिः सर्वो लोकस्तस्य गोपा रक्षिता चतुरोऽग्न्यादीन् वागादींश्च महात्मनो महावीर्यवतः य एको देवो जगार ग्रसितवान् स क इति प्रश्नार्थः। यद्वा सः कः प्रजापतिर्वायुः प्राणात्मा वा कापेय हे अभिप्रतारिन् तं देवं बहुधा अध्यात्माधिदैवाधिभूतरूपबहुप्रकारैः वसन्तं मर्त्याः मरणधर्माणोऽविवेकिनो वा नाभिपश्यन्ति न जानन्ति। एतदज्ञानं भवतोरेवेत्याह—यस्मा इति। यस्मै यदन्नं संस्क्रियते तस्मै प्रजापतये एवैतदन्नं न दत्तं युवाभ्यां यन्मह्यं न दत्तमिति ॥ ६ ॥

तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायात्मा देवानां जनिता प्रजानाँ हिरण्यदँष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो यदन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे दत्तास्मै भिक्षामिति ॥ ७ ॥

तद्ब्रह्मचारिवचनं शौनकः कापेयः प्रतिमन्वानो मनसालोचयन् तं प्रत्येयाय जगामोवाच। हे ब्रह्मचारिन् मर्त्या न पश्यन्तीति यं त्वमवोचः तं वयं पश्याम इत्याह—आत्मेति। देवानामग्न्यादीनामात्मा प्रजानां च स्थावरजङ्गमानां जनिता। यद्वा प्रलयसुषुप्तिकाले क्रमेण वायुप्राणरूपेण च स्वात्मनि ग्रसित्वा देवादीनामग्न्यादीनां वागादीनां पुनः सर्गप्रबोधकाले वायुप्राणरूपेणैव जनितोत्पादयिता बभसो भक्षणशीलः संहर्तृशीलोऽपि हिरण्यदंष्ट्रोऽमृतदंष्ट्रोऽभग्नदंष्ट्रः अनसूरिः सूरिर्मेधावी न सूरिरसूरिस्तत्प्रतिषेधोऽनसूरिरस्य प्रजापतेर्महिमानं विभूतिं महान्तमप्रमेयमाहुर्ब्रह्मविदः। कुतः? यस्मात् स्वयमन्यैरनद्यमानोऽभक्ष्यमाणः

सन् अनन्नमग्निवागादिदेवतारूपमत्ति भक्षयतीति। अस्त्वेवं प्रजापतिरूपं तव किमित्यत आह—वै वयमिति। वैशब्दोऽनर्थकः। ब्रह्मचारिन् आ इदमिति पदच्छेदः। हे ब्रह्मचारिन् इदमुक्तरूपं ब्रह्म वयसा समन्तादुपास्महे। यद्वा ब्रह्मचारिन् न इदमिति च्छेदः। इदं यथोक्तं नोपास्महे, किन्तु परमेव ब्रह्मोपास्महे इत्यर्थः। ततोऽस्य पक्वान्नस्वामित्वं स्मरन् दत्तास्मै ब्रह्मचारिणे भिक्षामित्यवोचत भृत्यान् ॥ ७ ॥

तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात्सर्वासु दिक्ष्वन्नमेव दशकृत ँ् सैषा विराडन्नादी तयेद ँ् सर्वं दृष्ट ँ् सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥ ८ ॥

ते तस्मै ब्रह्मचारिणे भिक्षां ददुः। एवमात्मा देवानामित्यादिना संवर्गविद्यायां गुणजातमुपदिश्य गुणान्तरमुपदेष्टुमाह—ते वा एत इति। ते वै उक्तान्नस्य ग्रासकाः एते सवायवोऽग्न्यादयः पञ्चान्ये सप्राणवागादिभ्यः। एभ्यश्चान्ये सप्राणा वागादयः पञ्च ते सर्वे मिश्रिताः दश सन्तस्तत्प्रसिद्धं कृतं कृतायोपलक्षितं द्यूतं दशसंख्यावत्त्वसामान्यात्। तस्मादेव सामान्यात् दशाक्षरा विराडिति श्रुतेस्तेषां वाय्वादीनां विराट्त्वसंपत्तौ 'अन्नं वै विराडि'ति तस्याश्च अन्नत्वश्रुतेः सर्वा दशस्वपि दिक्ष्वन्नमेव दशकृतं दशसंख्यया कृतं संपादितम्। अतः सैषा वाय्वाद्या देवता दशसंख्यावत्त्वेन विराडन्नं उक्तकृतत्वेन चान्नादी अन्नादिनी। अथ गुणान्तरमाह—तयाऽन्नान्नादिन्या च विराजेदं सर्वं जगद् दृष्टं कृतसंख्ययोपलब्धम्। विदुषः फलमाह—सर्वमिति। अस्योपासकस्य सर्वं दशदिक्सम्बद्धं दृष्टं भवति अन्नादो दीप्ताग्निर्भवति। य एवं यथोक्तप्रकारेणोपास्यतत्त्वं वेदोपास्ते। अभ्यास एतदुपासनासमाप्त्यर्थः ॥ ८ ॥

इति षष्ठे तृतीयः खण्डः ॥ ३ ॥

अन्नान्नादत्वेन वागाद्यग्न्याद्यात्मत्वयुक्तं सर्वं जगत्प्राणात्मना एकीकृत्य षोडशधा प्रविभज्य तस्मिन्ब्रह्मदृष्टिं विधातुं श्रद्धादेरुपासनाङ्गत्वप्रदर्शनार्थामाख्यायिकामारचयति—

सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रो न्वहमस्मीति ॥ १ ॥

सत्यकामो नामतो जबालाया अपत्यं जाबालो जबालां स्वमातरमामन्त्र-

याज्ञवल्क्ये सम्बोधनं कृतवान्। हे भवति स्वाध्यायग्रहणाय गुरुकुलेऽहं ब्रह्मचर्यं विवसितुमिच्छामि। किं गोत्रं ममेति। किं गोत्रो नु वितर्के। अहमस्मीति॥ १॥

एवं पृष्टा—

सा हैनमुवाच नाहमेतद्वेद। तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे। साहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि। सत्यकामो नाम त्वमसि। स सत्यकाम एव जाबालो ब्रुवीथा इति॥ २॥

सा माता एनं पुत्रमुवाच। किम्? नाहमेतद्वेद जानामि यद्गोत्रोऽसि। कुतः? परिचर्याजातं बहु चरन्तीति परिचारिणी परिचरणचित्ता यौवने यौवनकाले लज्जाधिके त्वामलभे लब्धवत्यस्मि। अतः परिचरणचित्तत्वाल्लज्जादिवशाच्च गोत्रमपृष्टवती साहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि, सत्यकामो नाम त्वमसीत्येतावन्मात्रमहं जाने। यद्याचार्यः पृच्छति तर्हि स त्वं सत्यकाम एव जाबालोऽस्मीत्याचार्यं ब्रुवीथाः॥ २॥

ततः—

स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति॥ ३॥

स सत्यकामो हरिद्रुमतोऽपत्यं हारिद्रुमतं गौतमं गोत्रत एत्य गत्वोवाच। किम्? ब्रह्मचर्यं भगवति पूजावति त्वयि समीपे वत्स्यामि वसितुमिच्छामि। अतस्तत्सिद्ध्यर्थं भगवन्तमहमुपेयामुपगच्छेयम्॥ ३॥

तँ होवाच किंगोत्रो नु सोम्यासीति। स होवाच नाहमेतद्वेद। भो यद्गोत्रोऽहमस्म्यपृच्छं मातरँ सा मा प्रत्यब्रवीद् बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे। साहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि। सत्यकामो नाम त्वमसीति। सोऽहँ सत्यकामो जाबालोऽस्मि भो इति॥ ४॥

एतमुक्तवन्तं सत्यकामं ह आचार्य उवाच—किं गोत्रो नु सोम्यासीति। एवं पृष्टः सत्यकामो ह उवाच। नाहमेतद्वेद भो भगवन्

यद्गोत्रोऽहमस्मि। मातरमप्यहं मद्गोत्रमपृच्छं पृष्टवानस्मि। सा तु माता मा मां प्रत्यब्रवीदित्युक्तार्थम्॥ ४॥

त ँ होवाच नैतदब्राह्मणो विवक्तुमर्हति समिध ँ सोम्याहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाच इमाः सोम्यानु संव्रजेति। ता अभिप्रस्थापयन्नुवाच नासहस्रेणावर्तयेति। स ह वर्षगणं प्रोवास ता यदा सहस्र ँ संपेदुः॥ ५॥

तमेवमुक्तवन्तं जाबालं गौतम उवाच। किम्? नैतत्त्वदुक्तं वचोऽब्राह्मणो विशेषेण वक्तुमर्हति। एवं सत्यवदनेन ब्राह्मणत्वनिर्धारणप्रयोजनमाह—समिधमिति। समिधं सोम्य आहरानय संस्कारार्थं त्वामुपनेष्ये यतस्त्वं सत्याद् ब्राह्मणजातिधर्मान्नागाः नापेतवानसीति तं सत्यकाममुपनीय अध्याप्य च कृशानां क्षीणानामबलानां बलहीनानां गवां समूहाच्चतुःशताः चत्वारि शतानि गाः निराकृत्य पृथक् कृत्वाचार्य उवाच। किम्? हे सोम्य त्वमिमा गा अनु पश्चात् संव्रज अनुगच्छ। आचार्यनियोगः शिष्येण सफलीकर्तव्यः इत्याशयेन शिष्य आह—ता अभीति। ता गा अरण्यं प्रत्यभिप्रस्थापयन् शिष्य उवाच। किम्? असहस्रेणापूर्णसहस्रेणाहं नावर्तेय न प्रत्यागच्छेयमित्युक्तवान्। स सत्यकामो ह अरण्ये वर्षगणं दीर्घकालं प्रोवास प्रोषितवान्। ता गावो यदा यस्मिन्काले सहस्रं संपेदुः संपन्ना बभूवुः॥ ५॥

इति षष्ठे चतुर्थः खण्डः॥ ४॥

अथ हैनमृषभोऽभ्युवाद सत्यकाम ३ इति। भगव इति ह प्रतिशुश्राव। प्राप्ताः सोम्य सहस्र ँ स्मः प्रापय न आचार्यकुलम्॥ १॥

अथ तदैनं गाश्चारयन्तं सत्यकामं ह ऋषभप्रविष्टा दिक्सम्बन्धिनी वायुदेवता तुष्टा सती सत्यकामा ३ इति प्लुत्या सम्बोध्य अभ्युवाद अभ्युक्तवान्। तमसौ सत्यकामो भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ। प्राप्ता इति हे सोम्य वयं सहस्रं प्राप्ताः स्मः। अतस्त्वत्प्रतिज्ञायाः पूर्णत्वान्नोऽस्मानाचार्यकुलं गृहं प्रापय॥ १॥

किं चाहं—

ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै

होवाच प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलो-
दीची दिक्कलैव वै सोम्य चतुष्कलः पादो ब्रह्मणः
प्रकाशवान्नाम ॥ २ ॥

ते तुभ्यं ब्राह्मणः परस्य पादं चरणं ब्रवाणि कथयानि। एवमुक्तः शिष्य आह— ब्रवीतु मे मह्यं भगवन्नित्युक्त ऋषभः तस्मै सत्यकामाय ह उवाच। प्राचीदिक्कलेत्यादि । एष वै हे सोम्य चतुष्कलश्चत्वारः कला अवयवाः प्राच्यादिरूपा यस्य स चतुष्कलः पादश्चतुर्थो भागो ब्राह्मणः प्रकाशवान्नामाभिधानं यस्येति प्रकाशवान्नाम ॥ २ ॥

एतदुपासकस्य क्रमेण दृष्टादृष्टफले आह—

स य एतमेवं विद्वाँ ्श्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्यु-
पास्ते प्रकाशवानस्मिंल्लोके भवति प्रकाशवतो ह लोकाञ्जयति
य एतमेवं विद्वाँ ्श्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्यु-
पास्ते ॥ ३ ॥

यः कश्चिदेतं यथोक्तमेवमुक्तरीत्या विद्वान् जानन्ब्रह्मणश्चतुष्कलं पादं प्रकाशवानित्येतद्गुणविशिष्टमुपास्ते अस्मिंल्लोके प्रकाशवान् प्रख्यातो भवति। तथा प्रकाशवतो देवतासम्बन्धिनो लोकान्मृतः सन् स जयति प्राप्नोति। एतमिति पुनरुपासनानुवादः पूर्ववत् ॥ ३ ॥

इति षष्ठे पञ्चमः खण्डः ॥ ५ ॥

अवशिष्टं पादत्रयं बुभुत्समानस्य—

अग्निष्टे पादं वक्तेति । स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार । ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिध-माधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥ तमग्निरभ्युवाद सत्य-काम ३ इति । भगव इति ह प्रतिशुश्राव ॥ २ ॥ ब्रह्मणः सोम्य ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच पृथिवी कलान्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥ स य एतमेवं विद्वाँ ्-श्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिंल्लोके

भवति । अनन्तवतो ह लोकाञ्जयति । य एतमेवं विद्वाँ श्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ४ ॥

ते तव सत्यकामस्य द्वितीयपादमग्निष्टे वक्तेत्युक्त्वा ऋषभ उपरराम । ततः सत्यकामो ह श्वोभूते परेद्युर्नित्यं कर्म कृत्वा आचार्यकुलं प्रति गा अभिप्रस्थापयाञ्चकार । ताः प्रस्थिताः गाः यत्र यस्मिन् देशे अभिसायं बभूवुः निशायामभिसम्बभूवुः एकत्राभिमुख्यसंभूताः । तत्र तस्मिन् देशे गा उपरुध्यावरोधं कृत्वा अग्निमुपसमाधाय समिद्धोमं कृत्वा अग्निः स्वगोचरां विद्यामुपदेष्टुमभ्युवाद । सत्यकामेत्यादि समान सुबोधम् ॥ १–४ ॥

इति षष्ठे षष्ठः खण्डः ॥ ६ ॥

हँ सस्ते पादं वक्तेति । स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार । ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥ तँ हँ स उपनिपत्याभ्युवाद । सत्यकाम ३ इति । भगव इति ह प्रतिशुश्राव ॥ २ ॥ ब्रह्मणः सोम्य ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत् कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥ स य एतमेवं विद्वाँ श्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति । ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वाँ श्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ४ ॥

हंसो आदित्य उच्यते शुक्लत्वादिसामान्यात् । समानमन्यत् ॥ १–४ ॥

इति षष्ठे सप्तमः खण्डः ॥ ७ ॥

मद्गुष्टे पादं वक्तेति । स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार । ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥ तं मद्गुरुपनिपत्याभ्यु-

वाद । सत्यकामा ३ इति । भगव इति तं प्रतिशुश्राव ॥ २ ॥ ब्रह्मणः सोम्य ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नाम ॥ ३ ॥ स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोके भवति । आयतनवतो ह लोकाञ्जयति य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ४ ॥

मद्गुः जलौकस्तेनात्र प्राणाख्या प्राणदेवतोच्यते । अप्सम्बन्धसामान्यात्तद्विद्योपदेशाच्च आयतनवान्नाम मनसः करणोपहृतविषयाश्रयत्वात् । आयतनवतः सावकाशान् । शेषं सुबोधम् ॥ १—४ ॥

इति षष्ठेऽष्टमः खण्डः ॥ ८ ॥

प्राप हाचार्यकुलं तमाचार्योऽभ्युवाद । सत्यकामा ३ इति । भगव इति ह प्रतिशुश्राव ॥ १ ॥

एवं ब्रह्मवित्सन् सत्यकाम आचार्यकुलं प्राप ह प्राप्तवान् । सत्यकाममाचार्योऽभ्युवादेत्यादि समानम् ॥ १ ॥

ब्रह्मविदिव वै सोम्य भासि । को नु त्वानुशशासेति । अन्ये मनुष्येभ्य इति ह प्रतिजज्ञे । भगवाँस्त्वेव मे कामे ब्रूयात् ॥ २ ॥

हे सोम्य त्वं ब्रह्मविदिव वै भासि प्रसन्नवदनादिलिङ्गात् । को नु वितर्के । त्वां मच्छिष्यमनुशशास अनुशासनं कृतवानिति साक्षेपं पृष्टः शिष्यो मनुष्येभ्योऽन्ये देवताः मामनुशिष्टवन्त्य इति ह प्रतिज्ञां कृतवान् । मया तर्हि इदानीं न किञ्चिदस्ति तव कर्तव्यमित्याशङ्कां वारयति— भगवान् भगवानेव तु मे कामे मम कामनिमित्ते कामं निमित्तीकृत्य अभिलषितसिद्ध्यर्थं ब्रूयाद्विद्यां कथयेत् ॥ २ ॥

अत्र गमकमाह—

श्रुतँ ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापदिति । तस्मै हैतदेवोवाच । अत्र ह न किञ्चन वीयायेति वीयायेति ॥ ३ ॥

हि यस्मान्मे मम भगवद्दृशेभ्यो भगवत्समेभ्य ऋषिभ्यः श्रुतं विद्यते। किम्? आचार्याद्धैव विद्या विदिता प्राप्ता साधिष्ठं साधुत्वं प्रापदिति प्राप्नोतीति। एवमुक्तवते तस्मै सत्यकामाय ह एतदेव ऋषभादिभिः पृथक्पृथगुक्तषोडशकलचतुष्पाद्ब्रह्मविज्ञानमेव एकफलत्वेनैकोपासनत्वेन च सङ्कल्प्य समस्तफलसिद्धये समस्तब्रह्मोपास्यमित्याचार्य उवाच। एवं वृत्तं श्रुतिरस्मानाह—अत्रेति। अत्र ऋषभाद्याचार्योपदिष्टविद्यायां न ह किञ्चन वीयाय विगतम्, किन्तु सम्पूर्णैव। अभ्यासो विद्यासमाप्त्यर्थः ॥ ३ ॥

इति षष्ठे नवमः खण्डः ॥ ९ ॥

एतस्सतपो ब्रह्मोपासनमुक्त्वा कार्यब्रह्मोपासनसमुच्चितं कारणब्रह्मोपासनं विधातुं पूर्ववत्तपआदेरुपासनाङ्गत्वप्रदर्शनार्थमाख्यायिकामारचयति—

उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास। तस्य ह द्वादशवर्षाण्यग्नीन् परिचचार। स ह स्मान्यानन्तेवासिनः समावर्तयँ स्तँ ह स्मैव न समावर्तयति ॥ १ ॥

उपकोशलो नामतः कमलस्यापत्यं कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास उषितवान्। तस्य सत्यकामस्य ह द्वादशवर्षाणि अग्नीन् परिचचार अग्नीनां परिचरणं कृतवान्। स सत्यकामो ह अन्यानन्तेवासिनः ब्रह्मचारिणः स्वाध्यायं ग्राहयित्वा समावर्तयन् तमेवो उपकोशलं न समावर्तयति स्म ह ॥ १ ॥

तं जायोवाच तप्तो ब्रह्मचारो कुशलमग्नीन् परिचचारीन्। मा त्वाग्नयः परिप्रवोचन्। प्र ब्रूह्यस्मा इति। तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे ॥ २ ॥

तमाचार्यं जाया पत्नी उवाच। किम्? तप्तः कायक्लेशं प्राप्तः शुश्रूषां विदधानो ब्रह्मचारी यतः कुशलं सम्यगग्नीन् परिचचारीत् परिचारितवान्। त्वया किमित्येवमुच्यत इत्यत आह—मा त्वेति। त्वा त्वामग्निभक्तमसमावर्तयन्तमग्नयो मा परिप्रवोचन् गर्हां मा कुर्युः एतदर्थं मयोच्यते। अस्मै उपकोशलाय ह अप्रवोच्यैव किञ्चिदनुक्त्वैव प्रवासाञ्चक्रे प्रवसितवान् ॥ २ ॥

स ह व्याधिनानशितुं दध्रे। तमाचार्यजायोवाच ब्रह्मचारिन्नशान किं नु नाश्नासीति। स होवाच बहव इमेऽस्मिन् पुरुषे कामा नानात्यया। व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीति ॥ ३ ॥

आचार्याभिप्रायानभिज्ञः उपकोशलो ह व्याधिना मानसेन दुःखेन अनशितुमनशनं कर्तुं दध्रे धृतवान् मनः। तं तूष्णीमग्न्यगारे स्थितमुपकोशलम् आचार्यजायोवाच। किम्? हे ब्रह्मचारिन्! त्वमशान भुङ्क्ष्व, किं नु कस्मान्न अश्नासीति। एवमुक्तः स उपकोशलो ह उवाच। किम्? अस्मिन्नकृतार्थे बहवोऽनेके इमे प्रसिद्धाः कामा नानात्ययास्त एव व्याधयस्तैर्व्याधिभिः कर्तव्याप्राप्तिनिमित्तचित्तदुःखैरहं प्रतिपूर्णः परिपूर्णोऽस्म्यतो नाशिष्यामीति ॥ ३ ॥

अथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्यचारीत। हन्तास्मै प्र ब्रवामेति तस्मै होचुः। प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥ ४ ॥

अथानशनाध्यवसायानन्तरं ह अग्नयः शुश्रूषयाऽऽवर्जितास्त्रयोऽपि समूदिरे। सम्भूयोक्तवन्तः। तप्तो ब्रह्मचारी कुशलं नोऽस्मान् पर्यचारीत्। हन्त इदानीं योऽयमाचार्येणोपेक्षितस्तस्मै श्रद्धालवे वयं विद्यां प्रब्रवामेत्येवं निश्चित्यास्मै तपस्विने ऊचुरुक्तवन्तः। किम्? प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥ ४ ॥

स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति। ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति। प्राणं च हास्मै तदाकाशं चोचुः ॥ ५ ॥

एवमुपदिष्टः स ब्रह्मचारी ह उवाच। किम्? विजानाम्यहं प्राणो ब्रह्म देहेन्द्रियादिबृंहणहेतुत्वेन प्रसिद्धत्वात्। कं च तु खं च न विजानामीति। एवमुक्तवन्तं प्रति ते अग्नयो ह ऊचुः। किम्? यद्वाव यदेव कं सुखं तदेव खमाकाशमित्येवं खेन विशेष्यमाणं कं क्षणिकाद्वैषयिकसुखान्निवर्तितमिति यदेव खमित्याकाशमवोचाम, तदेव च कं सुखमिति जानीहि। एवं च सुखेन विशेष्यमाणं खं भौतिकादचेतनात् खान्निवर्तितं

स्यान्नीलोत्पलवदिति । एवमग्न्युक्तं श्रुतिरस्मभ्यं बोधयति—प्राणं चेति । अस्मै ब्रह्मचारिणे प्राणं च सूत्रात्मकाख्यं कार्यभूतं तदाकाशं च तस्य प्राणस्याश्रयत्वेन सम्बन्ध्याकाशं हार्दमव्याकृताख्यमेव सुखगुणविशिष्टं ब्रह्म ऊचुरग्नयः । कार्यकारणरूपे ब्रह्मणी उक्तवन्त इत्यर्थः ॥ ५ ॥

इति षष्ठे दशमः खण्डः ॥ १० ॥

एवं प्रधानविद्यामुपदिश्य अङ्गविद्यामुपदेष्टुमारभते—

अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति । य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

अथ प्रथमं ह एनं ब्रह्मचारिणं गार्हपत्योऽग्निः स्वविद्यामनुशशास । कथम् ? पृथिव्यग्निरन्नमादित्य इत्येताश्चतस्रो मे तनवः । एषु य एष आदित्ये पुरुषो दृश्यते सोऽहं गार्हपत्योऽग्निरस्मि । यश्चाहमस्मि स एवादित्ये पुरुषः । एतत्पुनर्वचनं त्वग्न्यादित्ययोस्तादात्म्यमेव सम्बन्धं न पृथिव्यन्नयोरिव भोग्यत्वेनेति दर्शयितुम् ॥ १ ॥

एतद्विद्यायाः दृष्टादृष्टफलमाह—

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च य एतमेव विद्वानुपास्ते ॥ २ ॥

यः कश्चिदेतं गार्हपत्यमेवमन्नान्नादत्वेन चतुर्धा प्रविभक्तं विद्वानुपास्ते स उपासकः पापकृत्यां पापकर्म अपहते विनाशयति । लोकी आग्नेयलोकेन लोकवांश्च भवति । इहलोके च सर्वं शतवर्षप्रमितमायुरेति प्राप्नोति । ज्योग्जीवति प्रख्यातो जीवति । न अस्योपासकस्य अवराश्च ते पुरुषाश्चावरपुरुषाः सन्ततिजाः क्षीयन्ते सन्तत्युच्छेदो न भवति । किञ्च तमुपासकं जीवन्तमस्मिँल्लोके अमुष्मिंश्च परलोके वयमग्नय उपभुञ्जामः पालयामः । य एतमित्युक्तानुवादः ॥ २ ॥

इति षष्ठे एकादशः खण्डः ॥ ११ ॥

अथ हैनमन्वाहार्यपचनोऽनुशशास आपो दिशो नक्षत्राणि चन्द्रमा इति । य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥ स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति

सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

अथानन्तरमेनं ब्रह्मचारिणमन्वाहार्यपचनो दक्षिणाग्निरनुशशासेत्यादि समानं सुबोधम् ॥ १, २ ॥

इति षष्ठे द्वादशः खण्डः ॥ १२ ॥

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति । य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥ स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

अथ हैनमाहवनीय इत्यादि समानम् ॥ १, २ ॥

इति षष्ठे त्रयोदशः खण्डः ॥ १३ ॥

ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्यात्मविद्या चाचार्यस्तु ते गतिं वक्तेत्याजगाम । हास्याचार्यस्तमाचार्योऽभ्युवादोपकोसला ३ इति ॥ १ ॥

तेऽग्नयः पुनः संभूय ऊचुः । किम् ? हे उपकोशल ते तव एषाऽव्युवहितोक्तास्माकमग्नीनां विद्यास्मद्विद्या हे सोम्य प्राणो ब्रह्मेत्यादिपूर्वोक्ता आत्मसम्बन्धिनी विद्यात्मविद्या । तथापीयं विनाऽऽचार्योपदेशं न फलवतीत्युक्तत्वादित्यत आह—आचार्य इति । आचार्यस्तु ते तवात्मनो गतिं स्थानादिकं वक्तोपदेष्टेत्युक्त्वा अग्नय उपरताः । ततः कालेनाजगाम आगत आचार्यस्तं शिष्यम् उपकोशला ३ इति प्लुत्याऽभ्युवाद अभ्युक्तवान् ॥ १ ॥

स च शिष्यः—

भगव इति ह प्रतिशुश्राव । ब्रह्मविद इव सोम्य ते मुखं भाति । को नु त्वानुशशासेति । को नु मानुशिष्याद्भो इतीहापेव निह्नुत

इमे नूनमीदृशा अन्यादृशा इतीहासीनभ्यूदे । किं नु सोम्य किल तेऽवोचन्निति ॥ २ ॥

भगव इवि ह प्रतिशुश्राव प्रतिवचनं ददौ । तेनाचार्येण हे सोम्य ते तव ब्रह्मविद इव प्रसन्नं मुखं भाति । को 'नु वितर्के' अनुशशासेत्युक्तः शिष्यः को नु मा मामनुशिष्यात् अनुशासनं कुर्याद्भो भगवन् त्वदृते इत्येवमिहेदानीम् अपेव निह्नुते अपनिह्नुत इव । इवशब्दाभिप्रायं स्पष्टयति– इम इति । इमे नूनमग्नयः पूर्वमन्यादृशाः सन्तः इहेदानीं त्वां दृष्ट्वा ईदृशा वेपमाना इव दृश्यन्ते इत्येवमग्नीन् उपकोशलो भीतः सन् काक्वा अभ्यूदेऽभ्युक्तवान् उपदेष्टृत्वेनेत्यर्थः । किं नु हे सोम्य किल ते तुभ्यमग्नयोऽवोचन् ॥ २ ॥

इत्युक्तः शिष्यः--

इदमिति ह प्रतिजज्ञे लोकान्वाव किल सोम्य तेऽवोचन्नहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति । ब्रवीतु मे भगवानिति । तस्मै होवाच ॥ ३ ॥

इदमग्निभिरुक्तमित्येवं ह प्रतिजज्ञे प्रतीकद्वारा निवेदितवान् । एवं लब्धावसरः आचार्य आह लोकान्पृथिव्यादीन्वाव एव किल हे सोम्य ते तवाग्नयोऽवोचन् । अहं तु पुनस्ते तुभ्यं तदुक्तमेव ब्रह्म स्थानगुणवैशिष्ट्येन वक्ष्यामीति । तेन किं स्यादित्यपेक्षायामाह–यथेति । यथा लोके पुष्करपलाशे पद्मपत्रे आपो न श्लिष्यते न सम्बध्यन्ते एवमेवंविदि वक्ष्यमाणब्रह्मविदि पापं कर्म न श्लिष्यते । तर्हि ब्रवीतु मे मह्यं भगवानित्युक्त आचार्यस्तस्मै उपकोशलाय ह विद्यामुवाच ॥ ३ ॥

इति षष्ठे चतुर्दशः खण्डः ॥ १४ ॥

कथम् ?

य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच एतदमृतमभयमेतद् ब्रह्मेति । तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चन्ति वर्त्मनी एव गच्छति ॥ १ ॥

यः सुखाकाशत्वेनोक्तोऽग्निभिः स एवैषोऽक्षिणि पुरुष ईश्वर एवं निवृत्तचक्षुर्भिर्दृश्यते । एष एव सर्वप्राणिनामात्मेति ह आचार्य उवाच ।

अस्य छायाद्यात्मत्वं व्यावर्तयति—एतदिति । एतदुक्तमात्मतत्त्वममृतमविनाशि । अत एव अभयम्, अत एवैतद् ब्रह्म बृहत्तमम् । एतेषां च गुणानां छायात्मन्यसंभवात् । किञ्च—तत्तत्र लोके यद्यपि यदापि अस्मिन्नक्षिणि सर्पिर्घृतं वोदकं वा सिञ्चति क्षिपति तत्सर्वं वर्त्मनी एव पक्ष्मावेवागच्छति न चक्षुषा सम्बध्यते । पद्मपत्र इवोदकम् ॥ १ ॥

पुनरस्य च्छायाद्यात्मत्वव्यावर्तकानि गुणान्तराण्युपास्यत्वाय सफलान्युपदिशति—

एतँ संयद्वाम इत्याचक्षत एतँ हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥ २ ॥

एतं यथोक्तं पुरुषं संयद्वाम इत्याचक्षते ब्रह्मविदः । कुतः ? एतं पुरुषं हि यस्मादाश्रित्य सर्वाणि वामानि वननीयानि संभजनीयानि शोभनानि कर्मफलानि अभिसंयन्त्युत्पद्यन्ते । एतद्गुणफलमाह—सर्वाणीति । स्पष्टार्थम् ॥ २ ॥

एष उ एव वामनीरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ॥ ३ ॥

तथा एष उ एव वामनीः । कुतः ? एषः पुरुषो हि यस्मात्सर्वाणि वामानि पुण्यकर्मफलानि प्राणिभ्यो नयति प्रापयति । सर्वाणीति गुणफलोक्तिः स्पष्टार्था ॥ ३ ॥

एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥

तथा एष उ एव पुरुषः भामनी भामानि प्रकाशमानानि लोकानि नयतीति भामनी । कुतः ? पुरुषो हि यस्मात् सर्वेषु लोकेषु आदित्यादिरूपैर्भाति दीप्यते सर्वेषु लोकेष्वित्यपि फलोक्तिः स्पष्टार्था ॥ ४ ॥

अथोक्तविद्यां स्तुवन् गतिमाह—

अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासाँस्तान्मासेभ्यः संवत्सरँ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो

विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येव देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ॥ ५ ॥

अथशब्दो निरूपणीयोपक्रमार्थः। यत् यदि उ अपि इति पदार्थः। अस्मिन् सुखाकाशात्मकमक्षिस्थमुक्तगुणकं ब्रह्माहमेवेत्युपासके शव्यं शवसम्बन्धि कर्म कुर्वन्ति, यदि च यदि वा न कुर्वन्ति, तथापि ते अर्चिषमेवार्चिरभिमानिनो देवतामेव अभिसम्भवन्ति प्रतिपद्यन्ते। उक्तार्चिषः सकाशादहः अहर्देवताम् अह्नः आपूर्यमाणपक्षं शुक्लपक्षदेवतां आपूर्यमाणपक्षाद्यान् षण्मासान् सविता उदङ् उत्तरां दिशमेति गच्छति तान् तद्देवताः मासेभ्यः संवत्सरं तद्देवतानां संवत्सरादादित्यं प्रसिद्धम् आदित्याचन्द्रं चन्द्रमसो विद्युतमभि संभवन्तीति प्रत्येकं सम्बध्यते। तत्तत्रस्थाने स्थितानेतानुपासकान, स अमानवो मानव्यां सृष्टौ भवो मानवः न मानवोऽमानवः, पुरुषो ब्रह्म सत्यलोकस्थमेव गमयति प्रापयति, न तु निरुपाधिकम् । एतां गतिं सफलां निगमयति—एष इति। एष उक्तो देवपथो देवैरर्चिरादिभिर्गमयितृत्वेन उपलक्षितः पन्थाः देवपथो ब्रह्मणो गन्तव्यत्वेनोपलक्षितः पन्थाः ब्रह्मपथः। एतेन यथोक्तं ब्रह्म प्रतिपद्यमाना उपासका इमं वर्तमानं मनुसम्बन्धिनं मनोसृष्टिलक्षणमावर्तमावर्तन्तेऽस्मिन् जन्ममरणादिना घटीयन्त्रवदनवरतमित्यावर्तं नावर्तन्ते न प्रतिपद्यन्ते। कल्पान्तरेषु आवर्तन्त एवेममिति विशेषणात्। द्विरुक्तिस्तु सफलकार्यब्रह्मोपासनसमुचितकारणब्रह्मोपासनसमाप्त्यर्था। एतच्च गतिकथनमुपासनमात्रस्य नैतस्यैवेति बोध्यम् ॥ ५ ॥

इति षष्ठे पञ्चदशः खण्डः ॥ १५ ॥

एवमुपासकानां फलप्राप्तये मार्ग उक्तस्तत्प्रसङ्गेन यज्ञस्य देवतोद्देशेन द्रव्यत्यागात्मकत्वात् क्रियायाश्च क्षणभङ्गिन्यः गतिमत्त्वासम्भवात् कथं मार्गोपदेश इत्यपेक्षायां गतिमत्त्वस्य सम्पादनायाह—

एष ह वै यज्ञो योऽयं पवत एष ह यन्निदँ सर्वं पुनाति। यदेष यन्निदँ सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी ॥ १ ॥

एष ह वै श्रुतिप्रसिद्धो यज्ञः। कः? योऽयं पवते वाति वायुः 'स्वाहा वातेधा' इत्यादिश्रुतिप्रसिद्धेः, क्रियात्वसामान्याच्च। किंवा एष ह वायुः किल यन् गच्छन्निदम् सर्वं जगत्पुनाति विहितादिक्रियावदिति पावन-

वदिति पावनत्वसामान्यादपि वायुयज्ञयोरैकेत्वम् । तस्यैवंविशिष्टस्य यज्ञस्य मन्त्रोच्चारणे व्यापृता वाक्च मनश्च यथा भूतार्थज्ञाने व्यापृतं वर्तनी मार्गौं । ताभ्यां हि यज्ञस्तायमानः प्रवर्तते ॥ १ ॥

तयोरन्यतरां मनसा सँ स्कोति ब्रह्मा वाचा होताध्वर्युरुद्गाता-न्यतराँ स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यववदति ॥ २ ॥

तयोर्वर्तन्योर्मध्येऽन्यतरां मनोलक्षणां वर्तनीं ब्रह्मा ऋत्विक मनसा विवेकज्ञानवता संस्करोति । होताध्वर्युरुद्गातेति त्रयोऽपि वाचा सम्यक्प्रयुक्तया अन्यतरां वाग्लक्षणां वर्तनीं संस्कुर्वन्ति । स ब्रह्मा यत्र यस्मिन्यज्ञे प्रातरनुवाके शस्त्रे उपाकृते प्रारब्धे सति तदा-रभ्य परिधानीयायाः शस्त्रान्तिमाया ऋचः पुरा पूर्वं यदि व्यववदति मौनं परित्यजति ॥ २ ॥

तदा—

अन्यतरामेव वर्तनीँ सँ स्करोति हीयतेऽन्यतरा स यथैक-पाद् व्रजन् रथो वैकेन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञँ रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापी-यान् भवति ॥ ३ ॥

अन्यतरामेव वागाख्यां वर्तनीं संस्करोति होत्रादिः । अन्यतरा मनोवर्तनी ब्रह्मणाऽसंस्क्रियमाणा हीयते विनश्यति छिद्रीभवति । तर्हि को दोष इत्यत आह—स यथेति । यथा लोके एकः पादो यस्यासौ एकपात् पुरुषो व्रजन् गच्छन् रिष्यति यथा रथो वैकेन चक्रेण वर्तमानः प्रवर्तमानो रिष्यति विनश्यति । एवमस्य यजमानस्य चक्रज्ञत्विग्वतः स उक्तया एकया वाग्वर्तिन्या वर्तितुमशक्नुवन् रिष्यति । तथापि यजमानस्य का हानिरित्यत आह—यज्ञमिति । तं यज्ञं रिष्यन्तं विनश्यन्तमनु पश्चाद्यजमानो रिष्यति । स यजमानस्तादृशं यज्ञमिष्ट्वा पापीयान् पापतरश्च भवति ॥ ३ ॥

अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यववदत्युभे । एव वर्तनी सँ स्कुर्वन्ति न हीयतेऽन्यतरा ॥ ४ ॥

स यथोभयपाद् व्रजन् रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रति-तिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनु

प्रतितिष्ठति स इष्ट्वा श्रेयान्भवति ॥ ५ ॥

अथ तत्संस्कारे गुणमाह–'अथ यत्रोपाकृते' इत्यारभ्य खण्ड-समाप्तेन ग्रन्थेनोक्तार्थेन ॥ ४, ५ ॥

इति षष्ठे षोडशः खण्डः ॥ १६ ॥

एवं नित्यानुष्ठानमुक्त्वा नैमित्तिकप्रायश्चित्तविधानायोपक्रमते—

प्रजापतिर्लोकानभ्यतपत्। तेषां तप्यमानानाँ रसान् प्रावृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः ॥ १ ॥

प्रजापतिर्विराडात्मा लोकान् वक्ष्यमाणपृथिव्यादीन् अभ्यतपल्लोकानुद्दिश्य ततः सारजिघृक्षया ध्यानलक्षणं तपश्चचार । तेषां तप्यमानानां लोकानां रसान् सारान् प्रावृहदुद्धृतवान् । कान् रसान् कुतो जग्राह इत्यत आह–अग्निं पृथिव्या इत्यादिना । पृथिव्यादिभ्यः सकाशात् क्रमेण अग्न्यादीन् रसानुद्धृतवान् ॥ १ ॥

स एतास्तिस्रो देवता अभ्यतपत् । तासां तप्यमानानाँ रसान् प्रावृहदग्नेर्ऋचो वायोर्यजूँषि सामान्यादित्यात् ॥ २ ॥

स प्रजापतिः पुनरपि एता अग्न्याद्यास्तिस्रो देवताः अभ्यतपत् । तासां तप्यमानानां रसान् प्रावृहत् । कान् रसान् कुत इत्यत आह–अग्नेर्ऋच इत्यादिना । अग्न्यादिभ्य ऋगादिलक्षणान् रसानुद्धृतवान् ॥ २ ॥

स एतां त्रयीं विद्यामभ्यतपत् । तस्यास्तप्यमानाया रसान् प्रावृहद् भूरित्यृग्भ्यो भुवरिति यजुर्भ्यः स्वरिति सामभ्यः ॥ ३ ॥

स प्रजापतिः पुनरेतां त्रयीं विद्याम् अभ्यतपदित्यादि समानम् । भूर्भुवः स्वरिति व्याहृतित्रयं क्रमेण ऋग्यजुःसामभ्यो जग्राहेत्यर्थः ॥ ३ ॥

यदर्थमेवं व्याहृतयः सृष्टास्तदाह—

तद्यद्यृक्तो रिष्येद् भूः स्वाहेति गार्हपत्ये जुहुयादृचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टँ सन्दधाति ॥ ४ ॥

तत्तत्र यज्ञे यदि ऋक्तः ऋक्सम्बन्धादृग्निमित्तः यज्ञः रिष्येत् क्षतं प्राप्नुयात्तदा ब्रह्मा भूःस्वाहेति गार्हपत्ये जुहुयात् । ऋचां ऋक्सम्बन्धिनो यज्ञस्य विरिष्टं विच्छिन्नं क्षतमुत्पन्नं सन्दधातीति यत्तदृचामेव

रसेन सन्दधातीति यत्तदृचामेव च वीर्येणौजसा सन्दधाति प्रतिसन्धत्ते ॥ ४ ॥

अथ यदि यजुष्टो रिष्येद् भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद्यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टँ सन्दधाति ॥ ५ ॥ अथ यदि सामतो रिष्येत् स्वः स्वाहेत्याहवनीये जुहुयात्साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टँ संदधाति ॥ ६ ॥

अथ यदि यजुष्टो रिष्येदित्यादि समानम् । यदि ब्रह्मनिमित्तं रिष्येत् त्रिषु अग्निषु तिसृभिर्व्याहृतिभिर्जुहुयात् ॥ ५, ६ ॥

उक्तं क्षतसन्धानं सदृष्टान्तमाह—

तद्यथा लवणेन सुवर्णँ संदध्यात्सुवर्णेन रजतँ रजतेन त्रपु त्रपुणा सीसँ सीसेन लोहं लोहेन दारु दारुचर्मणा ॥ ७ ॥

तत्तत्र दृष्टान्तः । यथा लोके लवणेन टंकेन क्षारेण द्रवीभूतं सुवर्णं संदध्यादवयवसन्धानं भवेत् । सुवर्णेन रजतं स्वरसतोऽशक्यसंधानमपि संदध्यात्तथा रजतेन त्रपु इत्यादि सुबोधम् । लोहेन चर्मणा च बन्धेन दारु काष्ठं संदध्यात् ॥ ७ ॥

एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टँ सन्दधाति । भेषजकृतो ह वा एष यज्ञो यत्रैवंविद् ब्रह्मा भवति ॥ ८ ॥

एवमेषामुक्तानां लोकानामासां देवतानामस्यास्त्रय्या विद्यायाश्च वीर्येण रसाख्येनौजसा यज्ञस्य रिष्टं क्षतं ब्रह्मा संदधाति । अतो रोगार्त इव भेषजकृतो भेषजेन संस्कृतो ह वा एष यज्ञः । कः ? यत्र यस्मिन् यज्ञे एवंविद्यथोक्तव्याहृतिहोमप्रायश्चित्तविद् ब्रह्मा भवति ॥ ८ ॥

किञ्च—

एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद् ब्रह्मा भवत्येवंविदँ ह वा एषा ब्रह्माणमनु गाथा यतो यत आवर्तत तत्तद्गच्छति ॥ ९ ॥ मानवो ब्रह्मैवैक ऋत्विक् कुरूनश्वाभिरक्षत्येवंविद्ध वै ब्रह्मा

यज्ञं यजमानँ सर्वाँ श्चर्त्विजोऽभिरक्षति । तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ॥ १० ॥

एष ह वा उदक्प्रवण उदङ्निम्नो यज्ञो भवति । उत्तरमार्गप्रतिपत्तिहेतुरित्यर्थः । यत्रैवंविद्ब्रह्मा भवति । किञ्च—एवंविदं ह वै ब्रह्माणमृत्विजं प्रत्येषा अनुगाथा ब्रह्मणः स्तुतिपरा गायत्रीच्छन्दोव्यतिरिक्तच्छन्दोरूपा । किञ्च—यतो यतो यत्र यत्र प्रदेशे यज्ञस्यावर्तते आवर्तनमृत्विक्कृतं क्षतं भवति तत्तत् तत्र तत्र प्रदेशे यज्ञस्य क्षतरूपं मानवो मननान्मौनाद्वा ब्रह्मैवैक ऋत्विग्ज्ञानमहात्म्यात् प्रायश्चित्तेन गच्छन् प्रतिसन्दधानः कुरून् कर्तृनध्वर्युप्रभृतीन् रक्षति । एतदेव दृष्टान्तेन स्पष्टयति—अश्वेति । यथा अश्वा वडवा स्वस्मिन्नारूढान् योद्धॄन् रक्षति तथैवंवित् ह वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति तत्कृतदोषापनयेन । तस्मादेवंविदमेव यथोक्तव्याहृत्यादिविदमेव ब्रह्माणं कुर्वीत । नानेवंविदं कदाचन कुर्यात् । अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ९, १० ॥

इति षष्ठे सप्तदशः खण्डः ॥ १७ ॥

॥ इति छान्दोग्यब्राह्मणे षष्ठः प्रपाठकः ॥

श्रद्धातपोगुरुहिताचिरणादियुक्तैः<br>
संवर्गतादिगुणसूत्रदृशा यदीयम् ।<br>
तत्त्वं चतुश्चरणयुग्दशिसाक्षिभिर्वा-<br>
ऽभीचा ( ? ) दिभिर्हृदि कृतं नृहरिं तमीडे ॥

इति छान्दोग्योपनिषद्व्याख्यायां मिताक्षरायां चतुर्थोऽध्यायः ।

॥ अथ ब्राह्मणे सप्तमः प्रपाठकः । उपनिषदि पञ्चमोऽध्यायः ॥



सगुणब्रह्मविद्याया उत्तरा गतिरुक्ता । तामेव गतिं पञ्चाग्निविदो गृहस्थस्य ऊर्ध्वरेतसां चानूद्य केवलकर्मिणां धूमादिगतिरेतद्गतिद्वयसाधनरहितानां कष्टा तृतीया गतिश्च वक्ष्यमाणब्रह्मविद्यानुगुणवैराग्यसिद्धये वक्तव्येति पञ्चमोऽध्याय प्रवर्तते । तत्र कर्मिणां कर्मसमृद्धिर्धनसम्पत्तौ सत्यां तत्सम्पत्तिश्च श्रैष्ठ्ये सति भवतीति श्रैष्ठ्यसिद्धये तावत्

प्राणोपासनां पूर्वत्रानुक्तामाह—

ॐ यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति। प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥

ह वै कश्चित् ज्येष्ठं च प्रथमवयसं श्रेष्ठं गुणैरभ्यधिकं वेदोपास्ते सः ज्येष्ठश्च श्रेष्ठश्च ह वै भवति। उक्तगुणः क इत्यत आह—प्राण इति। प्राणो वाव एव ज्येष्ठो वागादिभ्यः प्रथमं लब्धवृत्तित्वात्। गर्भस्थे [ हि पुरुषे प्राणस्य वृत्तिः पूर्वं लब्धात्मिका। यथा गर्भो विवर्धते। चक्षुरादिस्थानावयवनिष्पत्तौ सत्यां पश्चाद्वागादीनां वृत्तिलाभः ] श्रेष्ठत्वं तु 'तद्यथा सुहय' इत्यादिना वक्ष्यमाणं बोद्धव्यम् ॥ १ ॥

तथैवोपास्यत्वाय फलेन प्रलोभयन् गुणान्तरमुपदिशति—

यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति। वाग्वाव वसिष्ठः ॥ २ ॥

यो ह वै वसिष्ठं वसितृतममाच्छादयितृतमं वा वेद स उपासकः स्वानां ज्ञातीनां मध्ये वसिष्ठो भवति। को वसिष्ठ इत्यत आह—वाग्वाव वसिष्ठ इति। वाग्मिनो हि पुरुषा वसन्ति वासयन्ति चेत्यर्थः ॥ २ ॥

यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिँश्च लोकेऽमुष्मिँश्च। चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥

तथा यो ह वै प्रतिष्ठां वेद सः प्रति ह तिष्ठत्यस्मिँल्लोकेऽमुष्मिंश्च परलोके। का प्रतिष्ठा इत्यत आह—चक्षुर्वाव प्रतिष्ठेति। चक्षुषा हि पश्यन् विषमदेशादौ प्रतितिष्ठतीत्यर्थः ॥ ३ ॥

यो ह वै सम्पदं वेद सँ हास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च। श्रोत्रं वाव सम्पत् ॥ ४ ॥

तथा यो ह वै सम्पदं वेदास्मै सम्पद्गुणकोपासकाय दैवाः कामाः स्वर्गादयो मानुषाश्च कामाः पश्वादयः सम्पद्यन्ते सम्पन्ना भवन्ति। का सम्पदित्यत आह—श्रोत्रं वै सम्पदिति। श्रोत्रस्य वेदादिग्रहणद्वारा कामसम्पत्तिहेतुत्वात् ॥ ४ ॥

यो ह वा आयतनं वेदायतनँ ह स्वानां भवति मनो ह वा आयतनम् ॥ ५ ॥

तथा यो ह वा आयतनमाश्रयं वेद स स्वानां बन्धवादीनामायतनमाश्रयो भवति। किं तदायतनमित्यत आह—मनो ह वा आयतनमिति।

मनो ह वै इन्द्रियोपहृतानां विषयाणां प्रत्ययरूपाणामायतनं प्रसिद्धम् ॥५॥

यथोक्ता गुणा मुख्यप्राणगामिन एवेति वक्तुमाख्यायिकां प्रणयति—

अथ ह प्राणा अहँ् श्रेयसि व्यूदिरेऽहँ् श्रेयान-
स्म्यहँ् श्रेयानस्मीति ॥ ६ ॥

अथानन्तरं प्राणा यथोक्ता वागादयोऽहंश्रेयसि स्वश्रेष्ठयनिमित्तं व्यूदिरे विरुद्धमुक्तवन्तः । कथम्? अहंश्रेयान् प्रशस्यतरोऽस्म्यहं श्रेयानस्मीति ॥ ६ ॥

एवं विप्रतिपत्तेः स्वतोऽनिरासात् तदर्थं प्रजापतिं प्रति गतवन्त इत्याह---

ते ह प्राणाः प्रजापतिं पितरमेत्योचुः भगवन् को नः श्रेष्ठ इति । तान् होवाच यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥ ७ ॥

ते ह विवदमानाः प्राणाः पितरं प्रजापतिं विराजं कश्यपाद्यन्यतमं प्रत्यूचुः उक्तवन्तः । किम् ? हे भगवन् को नोऽस्माकं मध्ये श्रेष्ठो गुणैरभ्यधिक इति । पिता तानेवमुक्तवतः प्राणान् प्रत्युवाच । किम् ? वो युष्माकं मध्ये यस्मिन्नुत्क्रान्ते निर्गते सतीदं शरीरं पापिष्ठमिवातिशयेन पापतरमेव दृश्येत मन्येत स वो युष्माकं मध्ये श्रेष्ठ इति ॥ ७ ॥

एवं पित्रोक्तेषु प्राणेषु मध्ये—

सा ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्येत्योवाच
कथमशकतर्ते मज्जीवितुमिति । यथाऽकला अवदन्तः
प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण
ध्यायन्तो मनैसवमिति प्रविवेश ह वाक् ॥ ८ ॥

सा ह वागुच्चक्रामो उत्क्रान्तवती । सा चोत्क्रम्य संवत्सरं वर्षमात्रं प्रोष्य प्रवासं कृत्वा स्वव्यापारान्निवृत्ता सती पुनः पर्येत्य आगत्य इतरान् प्राणानुवाच । किम् ? कथं मदृते मां विना यूयं जीवितुं कार्यकरणसङ्घातं धारयितुमशकत शक्तवन्तः । इत्युक्ताः प्राणाः वाचं प्रत्यूचुः— यथाऽकला मूकाः वाचाऽवदन्तो जीवन्ति । कथम्? प्राणेन प्राणन्तः प्राणनक्रियां कुर्वन्तः चक्षुषा पश्यन्तः श्रोत्रेण शृण्वन्तः मनसा ध्यायन्त इत्येवं सर्वचेष्टां कुर्वतो वयं जीवितवन्त इत्युक्ता वाक् ह

स्वात्मनः प्राणेष्वश्रेष्ठतां बुद्ध्वा प्रविवेश स्वव्यापारप्रवृत्ता बभूवे-त्यर्थः ॥ ८ ॥

चक्षुर्होच्चक्राम । तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति । यथान्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः ॥ ९ ॥ श्रोत्रँ होच्चक्राम । तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति । यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्त-श्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम् ॥ १० ॥ मनो होच्चक्राम । तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमश-कतर्ते मज्जीवितुमिति । यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥ ११ ॥

चक्षुः श्रोत्रं मनो होच्चक्रामेत्यादि समानम् । यथा बालाः अमनसः अप्ररूढमनस इत्यर्थः ॥ ९–११ ॥

एवं परीक्षया वागादिषु श्रेष्ठत्वाभावे निर्धारिते—

अथ ह प्राण उच्चिक्रमिषन्स यथा सुहयः पड्वीशशङ्कून् संखिदे-देवमितरान् प्राणान् समखिदत्तँ हाभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति ॥ १२ ॥

अथानन्तरं ह मुख्यप्राणः उच्चिक्रमिष्यन् उत्क्रमितुमिच्छन् स प्रसिद्ध-स्तत्र दृष्टान्तो यथा लोके सुहयः शोभनलक्षणोपेतोऽश्वः पड्वीश-शङ्कून् पदनशीलाः पदवः पादास्तेषां संहतिः पड्वी तस्याः ईशाः नियामकाः पड्वीशः । पड्वीश इति वर्णविकारः छान्दसः । ते च ते शङ्कवश्च तान् पड्वीशशङ्कून् पादबन्धनकीलकान् अश्वारूढेन कशया हयः सन् संखिदेत् समुत्खनेद् युगपत्समुत्पाटयेत् । एवं यथादृष्टान्त-मितरान्वागादीन् प्राणान्समखिदत् समुत्पाटयेत् । एवं यथादृष्टान्त-मितरान्वागादीन् प्राणान्समखिदत् समुत्पाटितवान् । ते च प्राणाः स्वस्थाने स्थातुमसहमानास्तं ह मुख्यप्राणमभिसमेत्योचुः । किम् ? हे

भगवन्नेधि भव अस्माकं स्वामी । यस्मात्त्वं नोऽस्माकं श्रेष्ठोऽसि अतोऽस्मात् देहात्त्वं मा उत्क्रमीरुत्क्रमणं मा कुर्या इति ॥ १२ ॥

अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसि । अथ हैनं चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठासीति ॥ १३ ॥ अथ हैनं श्रोत्रमुवाच यदहँ सम्पदस्मि त्वं तत्सम्पदसीति । अथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति ॥ १४ ॥

अथ मुख्यप्राणस्य श्रेष्ठत्वनिर्धारणानन्तरमेनं मुख्यं प्राणं वाक् तावदुवाच । किम् ? यदहं वसिष्ठोऽहं वसिष्ठत्वगुणाऽस्मीति यत्तत्त्वमेव वसिष्ठगुणोऽसीति । एवं चक्षुःश्रोत्रमनस्स्वपि योज्यम् ॥ १३, १४ ॥

अथ श्रुतिः स्वमुखेनैव वागादेः प्राणाधीनतां कथयति—

न वै वाचो न चक्षूँषि न श्रोत्राणि न मनाँसीत्याचक्षते प्राणा इत्येवाचक्षते । प्राणो ह्येवैतानि सर्वाणि भवति ॥ १५ ॥

न वै न एव वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्येवं वागादीनि करणानि नैव लोके आचक्षते पण्डिताः, किन्तु प्राणा इत्येवाचक्षते कथयन्ति । हि यस्मादतः प्राण एवैतानि सर्वाणि वागादीनि करणानि भवत्यतस्तेषां प्राणपारतन्त्र्यं सिद्धमित्यर्थः ॥ १५ ॥

इति सप्तमे प्रथमः खण्डः ॥ १ ॥

वागादीनां स्वामी श्रैष्ठ्यादिगुणः प्राणोऽस्मीति विद्यादिति प्रधानविद्यामुपदिश्य तदङ्गरूपाऽन्नवासोदृष्टिविधानाय उपक्रमते—

स होवाच किं मेऽन्नं भविष्यतीति । यत्किञ्चिददमा श्वभ्य आ शकुनिभ्य इति होचुः । तद्वा एतदनस्यान्नम् । अनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किञ्चनानन्नं भवतीति ॥ १ ॥

स मुख्यप्राणो ह उवाच । किम् ? मे अन्नं भविष्यतीत्युक्ताः प्राणाः आहुः—यदिति । आश्वभ्यः श्वभिः सह आशकुनिभ्यः पक्षिभिः सह यत्किञ्चित् प्राणिनामन्नजातं तत्तच तवान्नमिति वागादयः ऊचुः । सर्वान्ने प्राणान्नदृष्टिः कार्येति भावः । एतदेव श्रुतिः स्वमुखेनैवाह—तद्वा इति ।

तद्धै प्रसिद्धमेतदद्यमानमन्नम् अनस्य प्राणस्यैव तेनैवाद्यम् आनत्वात्। अन-शब्दप्रयोगाभिप्रायमाह—अनो हेति। सर्वान्नानामत्तुः प्राणस्यानो ह वै प्रत्यक्षं साक्षात्। अन चेष्टायामिति धातुप्रसिद्धं नामाभिधानं सर्वप्रकार-चेष्टासु व्याप्तिप्रदानार्थमुक्तमित्यर्थः। एवंविदः फलमाह—न हेति। एवं-विदि यथोक्तः प्राणोऽहं सर्वभूतस्थः सर्वान्नात्तेत्येवंविदि किञ्चन किञ्चि-दपि अनन्नं न ह वै नैव भवति। किं त्वस्य सर्वमन्नमेव भवति आधि-दैविकरूपेण प्राणभूतत्वादित्यर्थः॥ १॥

अथाख्यायिकामाश्रित्य अप्सु वासोदृष्टिं विदधाति—

स होवाच किं मे वासो भविष्यतीति। आप इति होचुः। तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति। लम्भुको ह वासो भवत्यनग्नो ह भवति॥ २॥

सः प्राणः उवाच। किम्? मे मम वासो भविष्यतीत्युक्ता वागादयः आप इति होचुरुक्तवन्तः। शुद्ध्यर्थं स्मार्ताचमनीयास्वप्सु प्राणवासो-दृष्टिः कार्येत्यर्थः। अत्र गमकमाह—तस्मादिति। यस्मात् प्राणस्यापो वासस्तस्माद्वै अशिष्यन्तो भोक्ष्यमाणा भुक्तवन्तश्च ब्राह्मणा एतत्कुर्वन्ति। एतत् किम्? पुरस्ताद्भोजनात् पूर्वं उपरिष्टाच्च भोजनादूर्ध्वं चाद्भि-र्वासःस्थानीयाभिः परिदधति मुख्यप्राणपरिधानं कुर्वन्ति। वासोदृष्टि-फलमाह—लम्भुक इति। लम्भुको लम्भनशीलो वासोऽस्योपासकस्य भवति, वाससो लब्धा भवति। अनग्नो ह उत्तरीयवान् भवति॥ २॥

उक्तोपासनस्तुतिमाह—

तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच यद्यप्येनच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति॥ ३॥

तद्धैतत् प्राणदर्शनं ह सत्यकामो नामतो जाबालो जबालाया अपत्यं वैयाघ्रपद्याय व्याघ्रपदाऽपत्याय गोश्रुतये तन्नाम्ने प्राणविद्यामुक्त्वा अन्य-दप्युवाच। किम्? यद्यप्येतत्प्राणदर्शनं शुष्काय निर्जीवाय स्थाणवे ब्रूयात् प्राणवित्तदाऽप्यस्मिन् स्थाणौ शाखा जायेरन्नुत्पद्येरन्। पलाशानि पत्राणि च प्ररोहेयुरित्यर्थः॥ ३॥

यथोक्तप्राणविदो महत्त्वार्थं मन्थकर्माह—

अथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्यां

रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥ ४ ॥

अथ प्राणविद्यानिष्पत्त्यनन्तरं यदि महत्त्वं जिगमिषेद् गन्तुमिच्छेत् महत्त्वप्राप्तिं कामयेत तस्येदं कार्यं विधीयते—अमावास्यायामिति। अमावास्यायां दीक्षित्वा दीक्षित इव ब्रह्मचर्यपयोव्रतादिधर्मवान् भूत्वा पौर्णमास्यायां रात्रौ कर्मारभमाणः सर्वौषधस्य व्रीह्यादिदशग्राम्यस्यानिषिद्धयावच्छक्यारण्यधान्यस्य च वितुषीकृतस्य मन्थसामपिष्टमौदुम्बरे पात्रे कंसे चमसे वा दधिमधुनोः सम्बन्धेन औदुम्बर्योपमन्थिन्या उपमथ्यालोड्य अग्रतः स्थाप्य स्थालीपाकोक्तविधिना आवापस्थानेऽग्नौ संस्कृताज्येन ज्येष्ठाय श्रेष्ठाय स्वाहेत्याहुतिद्वयं हुत्वा तस्मिन् मन्थे सम्पातं स्रुवावलिप्तमाज्यमवनयेत् पातयेत् ॥ ४ ॥

वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत्। प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत्। संपदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥ ५ ॥

वशिष्ठाय प्रतिष्ठायै सम्पदे आयतनाय स्वाहेति प्रत्याहुतिं मन्थे सम्पातमवनयेत् तथैव श्रुतत्वात् ॥ ५ ॥

अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपति अमो नामासि। अमा हि ते सर्वमिदँ स हि ज्येष्ठः श्रेष्ठो राजाधिपतिः स मा ज्यैष्ठ्यँ श्रैष्ठ्यँ राज्यमाधिपत्यं गमयत्वहमेवेदँ सर्वमसानीति ॥ ६ ॥

अथ होमान्तरं प्रतिसृप्य अग्नेरीषदपसृत्य अञ्जलौ मन्थमाधाय स्थापयित्वा जपति। तन्मन्त्रमाह—अमो नामासीति। हे मन्थ त्वममो नामासि अमःशब्दवाच्यप्राणनामवानसि। कुतः? हि यस्मादिदं सर्वं जगदमा सह प्राणेन सहितं ते तव त्वदधीनम्। स एवंभूतो मन्थो हि यस्माज्ज्येष्ठो वयसा, श्रेष्ठः कर्मणा, राजा दीप्तिमान्, अधिपतिः सर्वस्याधिष्ठाय पालयिता तस्मात्स मन्थः प्राणात्मा मामपि ज्यैष्ठ्यादिकमात्मनो गुणं गमयतु प्रापयतु। अहमेवेदं सर्वं जगत्प्राणवदसानि भवानि। इतिशब्दो मन्त्रसमाप्तिद्योतकः ॥ ६ ॥

अथ खल्वेतयर्चा पच्छ आचामति। तत्सवितुर्वृणीमह इत्याचा

मति। वयं देवस्य भोजनमित्याचामति श्रेष्ठँ सर्वधातममित्याचामति। तुरं भगस्य धीमहीति। सर्वं पिबति। निर्णिज्य कँसं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः। स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात् ॥७॥

अथ जपकर्मानन्तरमेतया वक्ष्यमाणया ऋचा पच्छः पादश इमं मन्थमाचामति भक्षयति। भक्षणसाधनं सविनियोगं मन्त्रं दर्शयति—तत्सवितुरिति। सवितुः सर्वस्य प्रसवयितुर्देवस्य द्योतनात्मकस्य तन्मन्थरूपं भोजनं किंलक्षणं श्रेष्ठं प्रशस्यतमम्। पुनः किंलक्षणं सर्वधातमं सर्वस्य जगतो धारयितृतममेवंभूतं प्राणात्मकादित्यस्य भोजनं वयं वृणीमहे प्रार्थयेमहि। श्रियः कारणं महत्त्वं प्राप्तुं कर्मवन्तो वयं भगस्य भाग्यहेतोरादित्यस्य स्वरूपं तुरं तूर्णं शीघ्रं धीमहि चिन्तयेमहीत्यत्र आचामतीति सम्बध्यते। एवं पादचतुष्टयेन ग्रासचतुष्टयं भक्षयित्वा कंसं कंसाकारं चमसं चमसाकारं वौदुम्बरं पात्रं निर्णिज्य प्रक्षाल्य तूष्णीं पिबति। पीत्वाऽऽचम्य च पश्चादग्नेरग्नेः पश्चिमभागे चर्मणि कृष्णाजिनव्यवहितायां भूमौ स्थण्डिले केवलायां भूमौ वा वाचंयमो मौनी अप्रसाहो न प्रसह्यते नाभिभूयते स्त्र्याद्यनिष्टस्वप्नदर्शनेन यथा स्यात्तथा संयतचित्तः सन् प्राक्शिराः संविशेत शयीत। स एवं सुप्तो यदि स्वप्ने स्त्रियं पश्येत्तदा समृद्धं समृद्धिहेतुरिदं कर्मेति विद्यात् जानीयात् ॥ ७ ॥

तदेष श्लोकः। यदा कर्मसु काम्येषु स्त्रियँ
स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात्तस्मिन्
स्वप्ननिदर्शने तस्मिन् स्वप्ननिदर्शने ॥ ८ ॥

तस्मिन्नुक्तेऽर्थे एष श्लोको मन्त्रोऽपि भवति। यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु स्वप्नदर्शनेषु पश्यति कर्ता तदा तत्र कर्मणि समृद्धिं फलनिष्पत्तिं जानीयात्। तस्मिन् स्त्र्यादिस्वप्नानिदर्शने सति। द्विरभ्यासो मन्थकर्मसमाप्तिद्योतक इत्यर्थः ॥ ८ ॥

इति सप्तमे द्वितीयः खण्डः ॥ २ ॥

एवं प्राणविद्यां तदङ्गं कर्म चोक्त्वा पञ्चाग्निविद्यां वक्तुं तस्याः साधिष्ठत्वं द्योतयितुमाख्यायिकामारचयति—

श्वेतकेतुर्हारुणेयः पञ्चालानाँ समितिमेयाय। तँ ह प्रवाहणो

जैवलिरुवाच कुमारानु त्वाशिषत् पितेत्यनु हि भगव इति ॥ १ ॥

श्वेतकेतुर्नामतो ह अरुणस्यापत्यमारुणिः, तस्यापत्यमारुणेयः पञ्चालानां जनपदानां समितिं सभामेयाय जगाम। तमागतं श्वेतकेतुं ह प्रवाहणो नामतो जीवलस्यापत्यं जैवलिरुवाच। किम्? हे कुमार त्वा त्वां पिता अन्वशिषत् अनुशिष्टवानित्येवमुक्तः कुमार आह—अनु हीति। अनुशिष्टोऽस्मि हे भगव इति ॥ १ ॥

वेत्थ यदितोऽधि प्रजाः प्रयन्तीति। न भगव इति। वेत्थ यथा पुनरावर्तन्त ३ इति। न भगव इति। वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना ३ इति। न भगव इति ॥ २ ॥

वेत्थ यदितोऽधि प्रजा प्रयन्तीति। यद्यस्मात् म्रियमाणप्राणिनः अधि उपरिलोकं गच्छन्ति तज्जानासि। एवमुक्तः इतर आह—न भगव इति। यद् भगवस्त्वं पृच्छसि तदहं न जाने इत्यर्थः। द्वितीयं पृच्छति—वेत्थेति। परलोकं गताः प्रजा यथा येन प्रकारेण पुनरावर्तन्ते तत्किं वेत्थ? प्लुतिरुपहासार्था सर्वत्र। इतर आह—न भगव इत्युक्तार्थम्। तृतीयं पृच्छति—वेत्थेति। देवयानस्य पितृयाणस्य च पथोर्मार्गयोर्यत्र व्यावर्तना मिथोवियोगस्तत्किं वेत्थेत्येवमुक्त इतर आह—न भगव इतीति ॥ २ ॥

चतुर्थं पृच्छति—

वेत्थ यथासौ लोको न संपूर्यत ३ इति। न भगव इति। वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति। नैव भगव इति ॥ ३ ॥

असौ पितृलोको बहुभिर्गच्छद्भिरपि यथा येन प्रकारेण न संपूर्यते तत्कारणं किं वेत्थेत्येवमुक्त इतर आह—न भगव इति। पञ्चमं पृच्छति—वेत्थेति। यथा येन प्रकारेणाऽऽपो भूतान्तरसहिताः पयोघृताद्या अग्निहोत्रसाधनभूताः अनन्तरमपूर्वीभूताः श्रद्धादिक्रमेण पञ्चम्यां वक्ष्यमाणरेतोरूपायाम् आहुतौ हुतायां सत्यां पुरुष इति वचो अभिधानं यासां ता पुरुषवचसः पुरुषशब्दवाच्या भवन्ति। पुरुषाख्यां लभन्ते, तत्किं वेत्थ? एवमुक्त इतर आह—नैव भगव इतीति ॥ ३ ॥

राजाऽऽह—

अथानु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात् कथँ सोऽनु-

शिष्टो ब्रुवीतेति । स हायस्तः पितुरर्धमेयाय । तँ होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाशिषमिति ॥ ४ ॥

अथैवमज्ञः सन् किं कस्मात् त्वमनुशिष्टोऽस्मीत्यवोचथा उक्तवानसि । यो हीमानि मत्पृष्टान्यर्थजातानि न विद्यात् न जानीयात् स कथमनुशिष्टोऽस्मीति ब्रुवीत ? इत्येवं राज्ञा आयस्त आयासितः प्रयासं प्रापितः श्वेतकेतुः पितुरर्धं स्थानमेयाय आगतवान् । तं च पितरं ह उवाच । किम् ? भगवन् त्वं मा मामननुशिष्य वाव अनुशासनमकृत्वैव किल अनु त्वाशिषं त्वा त्वामन्वशिषमित्यब्रवीत् उक्तवान् ॥ ४ ॥

कथमेतत्—

पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् । तेषां नैकञ्चनाशकं विवक्तुमिति । स होवाच यथा मा त्वं तदैतानवदो यथाहमेषां नैकञ्चन वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥ ५ ॥

यतो राजन्यबन्धुः राजन्याः बन्धवो यस्येति राजन्यबन्धुः राजाभासो मा मां पञ्च पञ्चसंख्याकान् प्रश्नान् अप्राक्षीत्पृष्टवान् । तेषां प्रश्नानां मध्ये एकं च एकमपि प्रश्नमहं विवक्तुं विशेषेणार्थतो निर्णेतुं नाशकं न शक्तवानित्युक्तः स पिता ह उवाच । किम् ? यथा मा मां वत्स त्वं तदाऽऽगतमात्र एवैतान् प्रश्नानवद उक्तवानसि । यथाशब्दस्तथार्थः । तथैवाहमेषां प्रश्नानां मध्ये नैकं च नैकमपि प्रश्नं वेदेत्येव जानीहि । एतदेव व्यतिरेकमुखेन द्रढयति—यद्यहमिमान् । यद्यहमिमान् प्रश्नानवेदिष्यं विदितवानस्मि तर्हि कथं ते तुभ्यं नावक्ष्यं नोक्तवानस्मि ॥ ५ ॥

इत्युक्त्वा—

स ह गौतमो राज्ञोऽर्धमेयाय । तस्मै ह प्राप्तायार्हां चकार । स ह प्रातः सभाग उदेयाय । तँ होवाच मानुष्यस्य भगवन् गौतम वित्तस्य वरं वृणीथा इति । स होवाच तवैव राजन् मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति ॥ ६ ॥

स गौतमो गोत्रतो ह राज्ञा जैबलेरर्धं स्थानमेयाय गतवान् । तस्मै गौतमाय अर्हाम् अर्हणां पूजां चकार कृतवान् जैबलिः । स गौतमो ह परेद्युः प्रातःकाले सभागे सभागते राज्ञि उदेयाय । यद्वा भजनं भागः पूजा, तया सह वर्तमानः सभागो गौतमो राजानमुदेयाय उद्गतवान् ।

तमागतं गौतमं राजा ह उवाच। किञ्च—हे गौतम भगवन् पूजावंस्त्वं मानुषस्य मनुष्यसम्बन्धिनो वित्तस्य वरं वरणीयं कामं वृणीथाः प्रार्थयेथाः। स एवमुक्तो गौतम उवाच। किम्? राजन् मानुषं वित्तं तवैव तिष्ठतु, किन्तु यामेव वाचं प्रश्नलक्षणां मम कुमारस्य त्वमभाषथाः तामेव वाचं मे मह्यं ब्रूहि उपदिश ॥ ६ ॥

स ह कृच्छ्री बभूव। तँ ह चिरं वसेत्याज्ञापयाञ्चकार। तँ होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ ७ ॥

इत्युक्तः स राजा कृच्छ्री दुःखीबभूव विद्याया अतिरहस्यत्वात्। तं गौतमं ह चिरं दीर्घकालं वस इत्येवम् आज्ञापयाञ्चकार आज्ञप्तवान्। राजा स्वापराधं मत्वा हेतुवचनेन क्षमापयतीत्याह—तं हेति। तं गौतमं ह राजोवाच। किम्? हे गौतम त्वं सर्वविद्याविदपि सन् यथा मामवदस्तामेव वाचं मे ब्रूहीत्यज्ञानादुक्तवानसि। तेन त्वदीयाज्ञानेनैव जानीहि। किम्? यथेयं विद्या त्वत्तः पुरा पूर्वं ब्राह्मणान्नानुगतवतीति। यस्मादेवं तस्मात् उ एव सर्वेषु लोकेषु क्षत्रस्यैव क्षत्रियजातेरेवानया विद्यया शिष्यान्प्रति प्रशासनं प्रशासितृत्वमभूदित्येवं क्षमाप्य राजा तस्मै गौतमाय ह विद्यामुवाच उक्तवानित्यर्थः ॥ ७ ॥

इति सप्तमे तृतीयः खण्डः ॥ ३ ॥

अर्थक्रममाश्रित्य तत्र पञ्चमप्रश्नस्योत्तरमाह—

असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः ॥ १ ॥

हे गौतम असौ वाव द्युलोके एवाऽऽहवनीयोऽग्निरिति चिन्तयेत्। तस्य द्युलोकाग्नेरादित्य एव समिन्धनात् समिदिति दृष्टिः कर्तव्या। सामान्यानां छान्दोग्यार्थप्रकाशिकायामस्माभिरुक्तत्वादूहितुं शक्यत्वाद्विस्तरभयाच्च नेहोच्यन्ते। रश्मयः किरणाः धूम इति चिन्तयेत्। अहः दिवसोऽर्चिरित्युपासीत। चन्द्रमा अप्रकाशभूतो मण्डलात्मा अङ्गारा इति दृष्टिः कर्तव्या। नक्षत्राणि विस्फुलिङ्गा अग्निकणा इति चिन्तयेत् ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति ॥ २ ॥

तस्मिन्नेतस्मिन् यथोक्तलक्षणे द्युलोकाग्नौ देवा यजमानप्राणा आधिदैविकस्वरूपमापन्ना अग्न्यादयः श्रद्धां श्रद्धया भावितामप्शब्देन उक्तां सूक्ष्मभावमापन्नामग्निहोत्राहुतिं जुह्वति । तस्याः श्रद्धाहुतेः सोमो राजा चन्द्रमण्डलवर्तिवृद्धिक्षयवान् प्रकाशरूपः संभवति । तत्रायं यजमानः शरीरी जायत इत्यर्थः ॥ २ ॥

इति सप्तमे चतुर्थः खण्डः ॥ ४ ॥

स सोमः पर्जन्याग्नौ हुतः सन् वृष्टिरूपेण परिणमत इत्याह—

पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्रादनयो विस्फुलिङ्गाः ॥ १ ॥

पर्जन्यो वृष्ट्युपकरणाभिमानिनी देवताऽग्निर्वायुना समिध्यमानत्वाद्वायुः समित् । अशनिरिन्द्रखड्गः । ह्रादनयो गर्जितशब्दः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजनं जुह्वति तस्या आहुतेर्वर्षꣳ संभवति ॥ २ ॥

देवाः पूर्वोक्ताः सोममुक्तार्थं वर्षं वर्षणं संभवति वृष्टिरूपेण परिणमत इत्यर्थः । समानमन्यत् ॥ २ ॥

इति सप्तमे पञ्चमः खण्डः ॥ ५ ॥

एवमुत्पन्ना वृष्टिरस्मिंल्लोके हुतान्नरूपेण परिणमत इत्याह—

पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नꣳ संभवति ॥ २ ॥

पृथिव्यादौ अग्न्यादिदृष्टिः कर्तव्येत्यादि । सर्वं पूर्ववत् । शेषं प्रसिद्धार्थम् ॥ १, २ ॥

इति सप्तमे षष्ठः खण्डः ॥ ६ ॥

तदन्नं पुरुषाग्नौ हुतं सद्रेतआकारेण परिणमत इत्याह—

पुरुषो वाव गौतमाग्निस्तस्य वागेव समित्प्राणो धूमो जिह्वार्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः संभवति ॥ २ ॥

देवा आध्यात्मिका इति वागादयः। समानमन्यत् ॥ १, २ ॥

इति सप्तमे सप्तमः खण्डः ॥ ७ ॥

तत्पुना रेतो योषाग्नौ हुतं सत्पुरुषाकारेण परिणमत इत्याह—

योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः संभवति ॥ २ ॥

यदुपमन्त्रयते स्त्रिया सहावाच्यकर्मार्थं सङ्केतं करोति यदन्तः करोति यद्योनावन्तर्मध्येऽवाच्यं कर्म करोति। अभिनन्दा अभिनन्दनास्तत्कर्मण उत्पन्नाः सुखलवाः। देवा उक्ता आध्यात्मिकाः। समानमन्यत् ॥ १, २ ॥

इति सप्तमेऽष्टमः खण्डः ॥ ८ ॥

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति। स उल्बावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाथ जायते ॥ १ ॥

एवं पञ्चाग्निविद्योपदेशेन निर्णीतं पञ्चमप्रश्नमुपसंहरति—इति त्विति। इत्येवं तु पञ्चम्यामाहुतौ रेतोरूपायां हुतायां प्रकृता आपः पुरुषवचसः पुरुषशब्दवाच्या भवन्तीति पञ्चमः प्रश्नो व्याख्यातः। अथ प्रथमतृतीयप्रश्ननिर्णयस्य उत्पत्तिपूर्वकत्वेन तदर्थमुत्पत्तिमाह—स उल्बेति। स गर्भोऽपां पूर्वोक्तानां पञ्चमपरिणामोपलब्धपुरुषाख्य उल्वेन जरायुना आवृतो वेष्टितो दश वा नव वा मासानन्तः मातुः कुक्षौ शयित्वा यावद्वा यावता कालेन जन्तुः समग्राङ्गो भवति तावत्कालं वाऽन्तः शयित्वा अथ निर्गमनकर्माभिव्यक्त्यनन्तरं जायते बहिर्निर्गच्छति ॥ १ ॥

स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः संभूतो भवति ॥ २ ॥

स एवं जातो यावदायुषं यावत्कर्मार्जितायुःपर्यन्तं जीवति पश्चात् तं क्षीणायुषं प्रेतं परलोकं प्रति कर्मणा दिष्टं निर्दिष्टमितोऽस्माद् ग्रामाद् बहिः पुत्रादयोऽन्त्यकर्मनिमित्तम् अग्नय एव अग्न्यर्थमेव हरन्ति

नयन्ति। कुतः ? यत एवाग्नेः सकाशादितः आगतः श्राद्धादिक्रमेण यतश्च पञ्चभ्योऽग्निभ्यः संभूतः उत्पन्नो भवत्यतः स्वयोन्यग्न्यापादनं युक्तमित्यर्थः ॥ २ ॥

इति सप्तमे नवमः खण्डः ॥ ६ ॥

अथ तौ प्रथमतृतीयप्रश्नौ निरूपयति—

तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषेऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासाँ स्तान् ॥ १ ॥ मासेभ्यः संवत्सरँ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयत्येष देवयानः पन्था इति ॥ २ ॥

तत्तत्र परलोकगामिनां मध्ये ये गृहस्था इत्थं यथोक्तक्रमेण पञ्चाग्निदर्शनं विदुर्ये चेमे अगृहस्था वानप्रस्था अमुख्यसंन्यासिनश्चारण्ये श्रद्धापुरस्सरं तप उपासते तपसि स्वधर्मे तात्पर्ययुक्ता भवन्ति ते सर्वे अर्चिषमर्चिरभिमानिनों देवतामेवाभिसंभवन्ति प्राप्नुवन्ति इत्याद्युपकोशलविद्यायामुक्तार्थम्। एष देवयानः पन्थाः मार्गो ब्रह्माण्डान्तरगतः सत्यलोकान्तो निरूपितः ॥ १, २ ॥

एवं केवलोपासनस्य तत्सहितकर्मणश्च देवयानमुक्त्वा केवलकर्मिणं प्रति पितृयाणमाह—

अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति। धूमाद्रात्रिँ रात्रेरपरपक्षमपरपक्षाद्यान् षड् दक्षिणैति मासाँ स्तान्नैते संवत्सरमभिप्राप्नुवन्ति ॥ ३ ॥

अथानन्तरं ग्रामे ये इमे प्रसिद्धा गृहस्थाः इष्टापूर्ते श्रौतस्मार्ते अग्निहोत्रमिष्टं पूर्तं वाप्यादि कर्मणी दत्तं वहिर्वेद्यर्थिभ्यो द्रव्यदानम्। इतिशब्दादेवंविधमन्यदपि गुरुशुश्रूषाशरणागतरक्षणाद्युपासते तत्परा भवन्ति ते दर्शनवर्जितत्वात् धूमं धूमाभिमानिनो देवतामभिसंभवन्ति प्रतिपद्यन्ते। धूमाद्रात्रिं तया धूमदेवतयाऽतिवाहिताः सन्तः आतिवाहिका रात्रिदेवतां प्रतिपद्यन्ते। तथा रात्रेरपरपक्षं कृष्णपक्षदेवतां प्रतिपद्यन्ते । अपरपक्षाद्यान् षण्मासान् दक्षिणां दिशं सविता एति गच्छति तान् मासांस्तन्मासदेवताः प्रतिपद्यन्ते । नैते दक्षिण-

मार्गगाः संवत्सरावयवषण्माससम्बद्धा अपि संवत्सरदेवतामुत्तरमार्गगा इव प्राप्नुवन्ति ॥ ३ ॥

मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्त ॥ ४ ॥

मासेभ्यः षण्मासदेवताभ्यः। पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसं प्रतिपद्यन्ते। कोऽसावित्यत आह—एष इति। एष प्रत्यक्षः सोमो ब्राह्मणानां राजा तद्देवानामन्नम् अन्नभूतं सोमं देवा इन्द्रादयो भक्षयन्ति, सोमभूताः कर्मिणो देवैरुपभुज्यन्ते इति यावत्। तथा च म्रियमाणानां दक्षिणोत्तरमार्गकथनेन संवत्सर एव षण्मासप्राप्तिद्वारा मिथो मिलितानां (?) नैते संवत्सरमभिप्राप्नुवन्तीति व्यावृत्तिकथनेन च क्रमेण प्रथमतृतीयप्रश्नौ उत्तरितौ ॥ ४ ॥

इदानी द्वितीयप्रश्नस्योत्तरमाह—

तस्मिन् यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति ॥ ५ ॥

संपतत्यनेन अस्माल्लोकादमुं लोकमिति संपातः कर्मसमूहः। यावत्संपातं यावत्कर्मसमूहं तस्मिश्चन्द्रमण्डले उषित्वा स्थित्वा अथ तत्क्षयानन्तरमन्येन कर्मणा एतमेव वक्ष्यमाणमध्वानं मार्गं पुनर्निवर्तन्ते। कथम्? यथा येन प्रकारेण इतं गतं तथेति। अत्र गमनवदागमनस्यापि आवश्यकत्वमित्येव विवक्षितं न तु मार्गैक्यमिति भावः। तमेवाध्वानमाह—आकाशमिति। चन्द्रमण्डले देहारम्भकीभूताभिः कर्मक्षये विलीनाभिरद्भिः परिवेष्टितः कर्मी आकाशं प्रतिपद्यते। आकाशाद्वायुं वायुर्भूत्वा धूमो धूमस्वभावो न तु धूम एव। धूमो भूत्वाऽभ्रं भवति ॥ ५ ॥

अभ्रं भूत्वा मेघो भवति। मेघो भूत्वा प्रवर्षति। त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते। अतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ॥ ६ ॥

अभ्रं भूत्वा मेघः सेचनसमर्थो भवति। मेघो भूत्वा कर्मी प्रवर्षति धारारूपेण पततीति यावत्। क्षीणकर्माणोऽनुशायिन इह पृथिव्यां व्रीहियवा औषधिवनस्पतयस्तिलमाषा इत्येवं करा जायन्ते। आका-

शादिवर्षणान्तेष्विव पूर्वसिद्धजातिस्थावरैः संश्लिष्यन्ते न तु स्वयमेव व्रीह्यादिस्थावरत्वं लभन्ते इति यावत् । अतोऽस्माद् व्रीह्यादिसंश्लेषभावाद्वै खल्विति खेदे । दुर्निष्प्रपतरम् अत्रैकस्तकारो लुप्तो ज्ञेयः । अतिशयेन दुःखेन निष्प्रपतम् इति दुर्निष्प्रपततरं दुर्निष्क्रमणतरम् । कथम् ? यो यो हि यः कश्चिद्धि कदाचित् अनुशायिभिः संश्लिष्टमन्नमत्ति यः कश्चिदृतुकाले स्त्रीयोनौ रेतः सिञ्चति तदा तद्रूय एव तद्भाव एव रेतःसिगाकृतिरेव भवति ॥ ६ ॥

तथा चन्द्रमण्डलादवरोहतां व्रीह्यादिसंश्लिष्टानां तत्राध्यासिकसम्बन्धाभावेन देहाद्यभावाद्विशेषज्ञानाभावेन वेदनाहीनानां द्राघीयसा कालेन देहान्तरारम्भोक्तेराकाशादिसंश्लिष्टानुशायिनां मध्ये—

तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा ॥ ७ ॥

ये इहलोके पूर्वं रमणीयचरणाः शोभनाचरणः पुण्यकर्माणस्ते रेतःसिग्योगे सति रमणीयामेव पुण्यकर्मणामेव योनिं प्रतिपद्येरन्निति । यत्तदभ्याशो ह क्षिप्रमेव तामेव योनिं दर्शयति—ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वेति । अथ पुनर्ये इहलोके पूर्वं कपूयचरणाः कुत्सिताचरणाः पापकर्माणस्ते कपूयामेव योनिं कुत्सितामेव पापयोनिमेव रेतःसिक्योगानन्तरं प्रापद्येरन्निति । यत्तदभ्याशो ह क्षिप्रमेव तामेव पापतारतम्यकृतां दर्शयति—श्वयोनिं वेत्यादिना ॥ ७ ॥

एवं द्वितीयप्रश्नप्रतिवचनोक्त्या चतुर्थस्याप्यर्थात् प्रतिवचनमुक्तमपि पुनस्तस्यैव साक्षात्तदाह—

अथैतयोः पथोर्न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्येत् तृतीयँ स्थानं तेनासौ लोको न संपूर्यते । तस्माज्जुगुप्सेत । तदेष श्लोकः ॥ ८ ॥

अथशब्दः स्थानान्तरोपक्रमार्थः । एतयोर्यथोक्तयोः पथोर्मध्ये कतरेण चनापि न यन्तीति शेषः । यथोक्तपथि साधनं ज्ञानं वा कर्म वा नानुतिष्ठन्त इति यावत् । तानीमानि क्षुद्राणि दंशमकादीनि भूतानि असकृद्वारंवारम् आवर्तीनि आवर्तनशीलानि भवन्ति । जायस्व म्रियस्व

पुनःपुनरत्रैव जायन्ते उत्पद्यन्ते म्रियन्ते च। अथवा ईश्वरः प्रेरयति त्वं पापी जायस्व म्रियस्वेति। एतज्जन्तुलक्षणं पूर्वोक्तपन्थानावपेक्ष्य संसरतां तृतीयं स्थानम्। तेन क्षुद्राणां परलोकं प्रत्यगमनेन गतानामपि कर्मिणां पुनरावर्तनेन हेतुनाऽसौ स्वर्गलोको न संपूर्यते प्राणिभिर्न संपूर्णो भवतीत्यर्थः। एवमुक्तसंसारगतिप्रयोजनमाह—तस्मादिति। यस्मादेवमनवरतं जन्ममरणवेदनानुभवरूपा दुस्तरा संसारगतिस्तस्मात्तां जुगुप्सेत बीभत्सेतेत्यर्थः। उक्तपञ्चाग्निविद्यां स्तौति—तदिति। तत्तस्मिन् पञ्चाग्निविद्यामाहात्म्यलक्षणेऽथ एष श्लोको मन्त्रः॥ ८॥

स्तेनो हिरण्यस्य सुरां पिबँश्च गुरोस्तल्पमावसन् ब्रह्महा
चैते पतन्ति चत्वारः पञ्चमश्चाचरँस्तैरिति ॥ ९ ॥

हिरण्यस्य ब्राह्मणसुवर्णस्य स्तेनो हर्ता ब्राह्मणः सन् सुरां पिबंश्च, गुरोस्तल्पं गुरुदारान् आवसन् गच्छन् ब्रह्महः ब्राह्मणस्य हन्ता चैते चत्वारः पतन्ति। तैश्चतुर्भिः सहाचरन् चतुर्णामन्यतमेनापि सङ्गं कुर्वन् पतति। इतिशब्दो मन्त्रसमाप्तिद्योतकः॥ ६॥

अथ ह ए एतानेवं पञ्चाग्नीन् वेद न स ह तैरप्याचरन्
पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति
य एवं वेद य एवं वेद॥ १०॥

अथ पुनर्यः कश्चित् ह वै एवम् उक्तानेतान् पञ्चाग्नीन् वेदोपास्ते स एतैर्महापातकिभिः सहाचरन् सङ्गं कुर्वन्नपि न पाप्मना लिप्यते। अतः शुद्ध एव यस्मात्पूतः पञ्चाग्निदर्शनेन पावितोऽतः पुण्यः शुभफलप्राजापत्यादिर्लोको यस्य सोऽयं पुण्यलोको भवति। कोऽसावित्यत आह—य एवमिति। य एवं पञ्चभिः प्रश्नैः पृष्टमर्थजातं वेद। द्विरुक्तिः समस्तप्रश्ननिर्णयप्रदर्शनार्था॥ १०॥

इति सप्तमे दशमः खण्डः॥ १०॥

दक्षिणेन पथा गच्छतां 'यं देवा भक्षयन्ती'त्युक्तान्नभावरूपदोषस्य उक्तक्षुद्रजन्तुलक्षणसंसारगतिरूपदोषस्य च परिजिहीर्षया अत्तृभावसाधनां वैश्वानरोपासनां सुखबोधाद्यर्थमाख्यायिकापूर्वकं विधत्ते—

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमाँसां चक्रुः को न आत्मा किं ब्रह्मेति॥ १॥

प्राचीनशालो नामतः । उपमन्योरपत्यम् औपमन्यवः । सत्ययज्ञो नामतः । पुलुषस्यापत्यं पौलुषिः । इन्द्रद्युम्नो नामतः । भल्लवस्यापत्यं भाल्लविस्तस्यापत्यं भाल्लवेयः । जन इति नामतः । शर्कराक्षस्यापत्यं शार्कराक्ष्यः । बुडिलो नामतः । अश्वतराश्वस्यापत्यमाश्वतराश्विः । ते हैते पञ्चापि महाशालाः महत्यः शालाः गृहा येषामिति तथा । महागृहस्थाः महाश्रोत्रियाः महान्तः सन्तः श्रोत्रियाः श्रुताध्ययनसंपन्नाः समेत्य संभूय मीमांसां विचारणं चक्रुः कृतवन्तः । कथम् ? को नोऽस्माकमात्मा किं ब्रह्मेति ब्रह्माभिन्नः प्रत्यगात्मा कः ॥ १ ॥

इत्येवं मीमांसतः—

ते ह संपादयाञ्चक्रुरुद्दालको वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति । तँ हन्ताभ्यां गच्छामेति । तँ हाभ्याजग्मुः ॥ २ ॥

ते निश्चयमलभमानाः ह आत्मन उपदेष्टारं संपादयाञ्चक्रुः । कथम् ? उद्दालकोऽयमारुणिः सम्प्रति इममस्मदभिप्रेतमात्मानं वैश्वानरमध्येति स्मरतीत्यतो हे भगवन्तो वयं तमुद्दालकं हन्तेदानीमभिगच्छाम अभि समन्ताद्भावेन गच्छामेत्येवं निश्चित्य तमुद्दालकमभ्याजग्मुर्गतवन्तः ॥ २ ॥

तदागमनं बुद्ध्वा—

स ह संपादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥

स आरुणिः संपादयाञ्चकार । कथम् ? इमे प्राचीनशालप्रभृतयो महाशाला महाश्रोत्रियाः मां वैश्वानरात्मानं प्रक्ष्यन्ति प्रश्नं करिष्यन्ति । तत्पृष्टं चाहं न तेभ्यः सर्वमिव सर्वमेव प्रतिपत्स्ये प्रतिवचनं वक्तुं नोत्सहे । अतो हन्त इदानीमहमेषामन्यमुपदेष्टारम् अभ्यनुशासानि वक्ष्यामि ॥ ३ ॥

इत्येवं संपाद्य—

तान् होवाच अश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रतीममात्मानं वैश्वानरमध्येति । तँ हन्ताभ्यागच्छामेति । तँ हाभ्याजग्मुः ॥ ४ ॥

तान् प्रति ह उद्दालक उवाच । किम् ? हे भगवन्तो अयमश्वपतिर्नामतः केकयस्यापत्यं कैकेयः संप्रतीममात्मानं वैश्वानरम् अध्येति

स्मरति । अतो वयं तं प्रति हन्तेदानीमभ्यागच्छाम अभ्युपगच्छामेत्येवमुक्त्वा तमश्वपतिं प्रति तेऽभ्याजग्मुरुपजग्मुः ॥ ४ ॥

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार । स ह प्रातः संजिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपः । नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतः । यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि । वसन्तु भगवन्त इति ॥ ५ ॥

तेभ्यो ह प्राप्तेभ्योऽश्वपतिः पृथक्पृथगर्हाणि अर्हणानि पुरोहितादिभिः कारयाञ्चकार कारितवान् । स राजा परेद्युः सञ्जिहानः शयनं त्यजन् प्रातःकाले इदं धनं मत्तो गृह्णीतेत्युवाच । तैः प्रत्याख्यातस्तदभिप्रायानभिज्ञ आत्मनः सद्वृत्तितां प्रतिपादयिषन्नाह—न म इति । न मे मम जनपदे देशे स्तेनः परस्वहर्ता । न कदर्योऽदाता सति विभवे । न मद्यपो द्विजोत्तमः सन् । नानाहिताग्निः शतगुः सन् । नाविद्वान् अधिकारानुरूपविद्यावर्जितः । न स्वैरी परदारेषु गन्ता । अतः स्वैरिणी दुष्टचारिणी कुतः ? धनाल्पत्वनिमित्तं वा प्रत्याख्यानं भविष्यतीति मत्वाऽऽह—यक्ष्यमाण इति । हे भगवन्तोऽहं यक्ष्यमाणो यागं करिष्यमाणोऽस्मि । यावच्छास्त्रोक्तं धनमेकैकस्मै ऋत्विजे दास्यामि तावद्धनं प्रत्येकं भवतो दास्यामि वसन्तु भगवन्त इति ॥ ५ ॥

ते होचुर्येन हैवार्थेन पुरुषश्चरेत् तँ᳐ हैव वदेदात्मानमेवेमं वैश्वानरँ᳐ संप्रत्यध्येषि तमेव नो ब्रूहीति ॥ ६ ॥

एवमुक्तास्ते ह राजानं प्रति स्वाभिप्रायमूचुः । किम् ? येन हैवार्थेन प्रयोजनेन पुरुषोऽयं प्रतिचरेद् गच्छेत्तं हैवार्थं प्रयोजनं वदेत् । तं चात्मानं वैश्वानरं संप्रत्यध्येषि स्मरसि अतस्तमेवात्मानं वैश्वानरं नोऽस्मभ्यं ब्रूहि कथय । तदर्थिनो वयं न धनार्थिनः ॥ ६ ॥

इत्येवमुक्तोऽनुपसन्नाय न वक्तव्यमित्यभिप्रायः—

तान् होवाच प्रातर्वः प्रतिवक्तास्मीति । ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे । तान् हानुपनीयैवैतदुवाच ॥ ७ ॥

तानुद्दालकप्रभृतीन् ह उवाच । किम् ? प्रातःकाले वो युष्मभ्यमहं

प्रतिवक्ता प्रत्युत्तरं दाताऽस्मीत्युक्ताः । ते ह राज्ञोऽभिप्रायज्ञाः समित्पाणयः समिद्भारहस्ताः परेद्युः पूर्वाह्णे राजानं प्रतिचक्रमिरे गतवन्तः । राजा च तानुपागतान् ब्राह्मणान् जातिश्रेष्ठत्वादनुपनीयैव उपनयनं पादयोर्निपतनमकारयित्वैव एतद्वक्ष्यमाणं वैश्वानरात्मज्ञानमुवाचेत्यर्थः ॥ ७ ॥

इति सप्तमे एकादशः खण्डः ॥ ११ ॥

विद्योपदेष्टुकामो राजा तान् प्रत्येकं पृच्छति—

औपमन्यव कं त्वमात्मानमुपास्स इति । दिवमेव भगवो राजन्निति होवाच । एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥१॥

हे औपमन्यव त्वं कमात्मानं वैश्वानरमुपास्से इत्येवं पृष्टो दिवमेव द्युलोकमेव वैश्वानरमहमुपास्से । भगवः पूजावन् राजन्निति औपमन्यवो होवाचेति । एवं शिष्योपन्यस्तविद्यायाः विषयं फलं चाह—एष इति । एष वै सुतेजाः शोभनतेजा वैश्वानरः आत्मात्मनोऽवयवभूतत्वात् । यं त्वं द्युलोकात्मकमुपास्से, तस्मात् सुतेजोवैश्वानरोपासनात्तव कुले एकाहादावग्निष्टोमे सुतं कण्डितं लताद्रव्यम् अहीने च प्रसुतं सत्रे त्वासुतं दृश्यते ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते । मूर्धा त्वेष आत्मन इति होवाच । मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति ॥२॥

अत्सि भक्षयस्यन्नं दीप्ताग्निः सन् प्रियं पुत्रादि च पश्यसि । न केवलं प्राचीनशालस्यैवैतत्फलं किं त्वन्यस्याप्युपासकस्येत्याह—अत्त्यन्नम् इत्यादि उक्तार्थं स्पष्टार्थं च । यथोक्तज्ञानादेव कृतकृत्यत्वशङ्कां वारयति—मूर्धा त्विति । एष तु द्युलोकाख्य आत्मनो वैश्वानरस्य मूर्धा न समस्तोऽतः समस्तबुद्ध्योपासनात् मूर्धा ते तव विपरीतग्राहिणो व्यपतिष्यद्विपतितम् अभविष्यद्यदि मां प्रति नागतोऽभविष्य इत्यर्थः॥२॥

इति सप्तमे द्वादशः खण्डः ॥ १२ ॥

अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इति । आदित्यमेव भगवो राजन्निति होवाच । एष वै विश्वरूप

आत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥

अथानन्तरं सत्ययज्ञस्यैव प्राचीनयोग्येति नामान्तरेण सम्बोधनम् । आदित्यस्य विश्वरूपत्वं सर्वरूपत्वात् । तस्मादादित्योपासनात्तव कुले बहु विश्वरूपं नानारूपं भोगोपकरणं दृश्यते ॥ १ ॥

किञ्च त्वामनु—

प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रिय मत्त्यन्नं पश्यति । प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यद्यन्मां नागमिष्य इति ॥ २ ॥

प्रवृत्तोऽश्वतरीभ्यां युक्तो रथोऽश्वतरीरथः दासीनिष्को दासीभिर्युक्तो निष्को हारो दासीनिष्कः । चक्षुस्तु एतदात्मनो वैश्वानरस्य य आदित्यः । तस्य समस्तब्रह्मदृष्ट्या उपासनादन्धोऽभविष्यदित्यादि । अन्यत् समानम् ॥ २ ॥

इति सप्तमे त्रयोदशः खण्डः ॥ १३ ॥

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति । वायुमेव भगवो राजन्निति होवाच । एष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥ १ ॥

इन्द्रद्युम्नस्यैव व्याघ्रपदो गोत्रापत्यत्वाद्वैयाघ्रपद्येति सम्बोधनम् । पृथक् नानाविधानि वर्त्मानि यस्य स एवात्मा स्वभावो यस्य वायोः स पृथग्वर्त्मात्मा तदुपासनात्त्वां प्रति पृथक् नानादिक्काः बलयो वस्त्रान्नादिलक्षणा आयन्ति आगच्छन्ति । पृथक् नानारथश्रेणयो रथपङ्क्तयोऽप्यनुयन्ति अनुगच्छन्ति ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति । प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते । प्राणस्त्वेष आत्मन इति होवाच । प्राणस्त उदक्रमिष्यद्यन्मां नागमिष्य इति ॥ २ ॥

प्राणस्त्वेष वायुरात्मनो वैश्वानरस्य न संपूर्णः। प्राण उदक्रमिष्यत् उत्क्रान्तोऽभविष्यत्। समानमन्यत् ॥ २ ॥

इति सप्तमे चतुर्दशः खण्डः ॥ १४ ॥

अथ होवाच जनँ शार्कराक्ष्य कं त्वमात्मानमुपास्स इति। आकाशमेव भगवो राजन्निति होवाच। एष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से। तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति। प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते। सन्देहस्त्वेष आत्मन इति होवाच। सन्देहस्ते व्यशीर्यद्यन्मां नागमिष्य इति ॥ २ ॥

बहुलः आकाशस्य सर्वगतत्वात्। फलोक्तिः स्पष्टार्था। एष त्वाकाशो वैश्वानरात्मनः सन्देहो देहमध्यभागः। सन्देहः सन्दिह्यते उपचीयते इति सन्देहः शरीरं ते तव व्यशार्यत् विशीर्णमभविष्यत् ॥ १, २ ॥

इति सप्तमे पञ्चदशः खण्डः ॥ १५ ॥

अथ होवाच बुडिलमाश्वतराश्वि वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति। अप एव भगवो राजन्निति होवाच। एष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से। तस्मात्त्वँ रयिमान्पुष्टिमानसि ॥ १ ॥

एष वै आपो वैश्वानरात्मा रयि धनम् अद्भ्योऽन्नं ततो धनमित्यपामन्नद्वारा तद्धेतुत्वात् ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति। प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते। बस्तिस्त्वेष आत्मन इति होवाच। बस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति ॥ २ ॥

एष त्वब्लक्षणो वैश्वानरात्मनो बस्तिः नाभेरधस्तात् अलाबुसदृशमधोनालमनेकच्छिद्रं मूत्रभाजनं बस्तिरुच्यते। बस्तिस्ते तव व्यभेत्स्यद्भिन्नोऽभविष्यत् ॥ २ ॥

इति सप्तमे षोडशः खण्डः ॥ १६ ॥

अथ होवाच उद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति।

पृथिवीमेव भगवो राजन्निति होवाच। एष वै प्रतिष्ठात्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति। प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते। पादौ त्वेतावात्मन इति होवाच। पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥ २ ॥

पादौ त्वेतौ पृथिवीलक्षणौ वैश्वानरात्मनो न संपूर्णः। ते तव पादौ व्यम्लास्येतां विम्लानौ शिथिलीभूतौ अभविष्येतामित्यर्थः ॥ १, २ ॥

इति सप्तमे सप्तदशः खण्डः ॥ १७ ॥

तेषां सामस्त्येन वैश्वानरविद्यां वक्तुकामस्तदीयमिथ्याज्ञानमनुवदति—

तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाँसोऽन्नमत्थ । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥

तान्ब्राह्मणान् प्रति राजोवाच। किम्? वै खल्विति तेषां मिथ्याज्ञानत्वप्रसिद्धिस्मरणार्थौ। एते यूयमपृथक्सन्तमिमं वैश्वानरं पृथगिव पृथगेव विद्वांसो ज्ञानवन्तोऽन्नमत्थ भक्षयथेत्यर्थः। अथ प्रधानविद्यामुपदिशति—यस्त्वेतमिति । यस्त्वेतं सर्वात्मकमेवं यथोक्तद्युमूर्धादिविशिष्टं प्रादेशमात्रं प्रादेशैर्द्युमूर्धादिभिः प्रत्यगात्मतया मीयते ज्ञायते इति प्रादेशमात्रस्तं प्रादेशमात्रम्। अभिविमानं प्रत्यगात्मतया सर्वैः प्राणिभिर्मीयत इत्यभिविमानं वैश्वानरं सर्वात्मकत्वाद् विश्वश्चासौ नरश्च सर्वकारणत्वेन विश्वेषां वाऽयं नरः सर्वेश्वरत्वाद्विश्वे वा नरा नियम्या यस्यासौ विश्वानरो विश्वानर एव वैश्वानरः। अत्र प्रत्यग्ब्रह्मैव को न आत्मा किं ब्रह्मेत्युपक्रमानुरोधात् तं वैश्वानरं प्रत्यग्ब्रह्मोपास्ते । स उपासकः सर्वेषु द्युलोकादिषु सर्वेषु भूतेषु चराचरेषु सर्वेष्वात्मसु आत्मतया व्यपदिश्यमानेषु देहेन्द्रियादिष्वन्नमत्ति सर्वात्मैव सन् ॥ १ ॥

कुत इत्यतो हेत्वर्थमुपासनाप्रकारविध्यर्थं चोक्तमनुवदति—

तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः

पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥

तस्य ह वै प्रकृतस्यैव एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा इत्याद्युक्तार्थम्। प्रधानविद्यामुक्त्वा तदङ्गविद्यां भूमिकापूर्वकमाह—उर इति। तस्य वैश्वनरस्य भोक्तुरुर एव वेदिः समानाकारत्वात्। वेदिः स्थण्डिलमात्रमग्निहोत्रानङ्गत्वात्, दर्शपूर्णमासाङ्गा हि सा। लोमानि बर्हिर्वेद्यामिवात्र आस्तीर्णत्वात्। हृदयं गार्हपत्योऽग्निः। मनःप्रणयन-हेतुत्वसामान्यात् मनोऽन्वाहार्यपचनो दक्षिणाग्निः पचनहेतुत्व-सामान्यात्। आस्यं मुखमाहवनीयोऽग्निरिति चिन्तयेत अन्नस्य हूय-मानत्वसामान्यादित्यर्थः॥ २ ॥

इति सप्तमेऽष्टादशः खण्डः॥ १८॥

तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयँ स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति ॥ १ ॥ प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठत-स्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

तत्तात्रोक्तन्यायेन अग्निहोत्रे सम्पादिते सति भोजनकाले प्रथमं यद्भोक्त-मोदनादि भोज्यमागच्छेत् तद्धोमीयं होतव्यद्रव्यमिति चिन्तयेत् आहुतिसाधनत्वसामान्यात्। स भोक्ता यां प्रथमामाहुतिं जुहुयात्ता-माहुतिं प्राणाय स्वाहेति मन्त्रेण मुखे जुहुयात्। होमफलमाह—प्राण इति। तेनाहुतिप्रक्षेपेण प्राणस्तृप्यतीत्यादि सुबोधम्। दिवि तृप्यन्त्यां सत्यां यत्किञ्च प्राणिजातं द्यौश्च आदित्यश्च अधितिष्ठतः अधिष्ठाय वशीकृत्य स्थितौ तदपि सर्वं तृप्यति। उपासकस्य फलमाह—तस्येति। तस्य सर्वस्य तृप्तिमनुभुञ्जानस्तृप्यतीति नु प्रत्यक्षम्। किञ्च प्रजापशुभि-रन्नं च तदाद्यं चान्नाद्यं तेन तेजसा त्वगादीप्त्या ब्रह्मवर्चसेन स्वाध्यायोत्थेन तेजसा उपासकस्तृप्यतीत्यर्थः॥ १, २॥

इति सप्तमे एकोनविंशः खण्डः॥ १९॥

अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यान-स्तृप्यति ॥ १ ॥ व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति

चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

अथ यां द्वितीयाम् ॥ १, २ ॥

इति सप्तमे विंशः खण्डः ॥ २० ॥

अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥ १ अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

तृतीयाम् ॥ १, २ ॥

इति सप्तमे एकविंशः खण्डः ॥ २१ ॥

अथ यां चतुर्थीं जुहुयात्तां जुहुयात् समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥ समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

चतुर्थी ॥ १, २ ॥

इति सप्तमे द्वाविंशः खण्डः ॥ २२ ॥

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥ उदाने तृप्यति त्वक् तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

पञ्चमीमित्यादि समानम् ॥ १, २ ॥

इति सप्तमे त्रयोविंशः खण्डः ॥ २३ ॥

प्रसिद्धाग्निहोत्रनिन्दाद्वारा वैश्वानरविदो यथोक्तमग्निहोत्रं स्तौति—

**स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत्स्यात् ॥ १ ॥**

स यः कश्चिदिदं वैश्वानरदर्शनमविद्वान् सन्नैयमिकमग्निहोत्रं जुहोति यथाङ्गारान् आहुतिप्रक्षेपे योग्यानपोह्य त्यक्त्वा भस्मनि जुहुयात् तादृक् तत्तुल्यं तदग्निहोत्रं स्यात् ॥ १ ॥

किञ्च—

**अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥**

अथ य एतद्वैश्वानरदर्शनमेवमुक्तरीत्या विद्वान् साम्पादिकमग्निहोत्रं जुहोति तस्य वैश्वानरात्मविज्ञानवतः । सर्वेषु लोकेष्वित्याद्युक्तार्थम् ॥ २ ॥

किञ्च—

**तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवँ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जहोति ॥ ३ ॥**

तत्तत्र वैश्वानरविद्यामाहात्म्ये दृष्टान्तो यथा लोके इषीकायाः मुञ्जमध्यवर्तिबालस्य तूलमग्रमग्नौ प्रोतं प्रक्षिप्तं प्रदूयेत दह्येत एवमेव हास्य विदुषः सर्वपाप्मानः धर्माधर्माख्याः प्रदूयन्ते दह्येरन् । किञ्च य एवमुक्तरीत्या अन्नादिकमग्निहोत्रं जुहोति भुङ्क्ते ॥ ३ ॥

**तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतँ स्यादिति । तदेष श्लोकः ॥ ४ ॥**

तस्मादेवाग्निहोत्राद्भोजनादुर्वरितं उ ह स एवंवित् यद्यपि चण्डालायोच्छिष्टं प्रयच्छेद्दद्यात् तदस्योपासकस्यात्मनि हैव चाण्डालदेहस्थे वैश्वानरे तदन्नं हुतं स्यात् । एवमेव विद्यास्तुत्यर्थं साम्पादिकमग्निहोत्रं स्तौति—तदिति । तत्तस्मिन्नग्निहोत्रस्तुतिलक्षणेऽर्थे एष श्लोको मन्त्रोऽपि भवति ॥ ४ ॥

**यथेह क्षुधिता बाला मातरं पर्युपासते । एवँ सर्वाणि भूता-**

न्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥ ५ ॥

यथेह लोके क्षुधिता बुभुक्षिता बाला मातरं पर्युपासते कदा नोऽन्नं प्रयच्छतीत्येवं सर्वाणि भूतान्यन्नादीनि एवंविदोऽग्निहोत्रं भोजनमुपासते कदा त्वसौ भोक्ष्यत इति, सर्वविद्भोजनस्य सर्वजगत्तृप्तिहेतुत्वात्। द्विरुक्तिरध्यायसमाप्त्यर्था ॥ ५ ॥

इति सप्तमे चतुर्विंशः खण्डः ॥ २४ ॥

॥ इति छान्दोग्यब्राह्मणे सप्तमः प्रपाठकः ॥

मुख्यं प्राणं यथाग्नीनपि गृहपतयः पञ्च वित्त्वा गृहस्थाः
स्वाचार्यैर्ये च वैश्वानरमखिलजगन्मूर्तिमात्मेत्युपास्य ।
कायं ब्रह्मार्चिषाप्ता पतिमुखनिरता ( ? ) धूमतश्चन्द्रमाप्य
भ्रश्यन्ते यत्पदाज्ञा जनिमरणभजस्तं भजेऽहं नृसिंहम् ॥ १ ॥

इति श्री परमहंस-परिव्राजकाचार्य-श्रीपुरुषोत्तमाश्रम पूज्यपादशिष्य-
न न्दाश्रमविरचितायां छान्दोग्योपनिषद्व्याख्यायां
मिताक्षरायां पञ्चमोऽध्यायः ॥ ५ ॥

---

## ॥ अथ षष्ठोऽध्यायः ॥

तृतीयेऽध्याये 'सर्वं खल्विदं ब्रह्म तज्जलानि'ति जगतो ब्रह्मजनिलय-स्थितित्वमुक्तम्। तत्साधयितुमव्यवहिते च 'एकस्मिन्ब्रह्मविदि भुक्ते सर्वं जगत्तृप्यती'त्युक्तम्। तच्चात्मन एकत्वे सत्येवोपपद्यते इति, इदमपि च साधयितुं षष्ठोऽध्यायः प्रवर्तते । तत्र पित्रुपदेशत्वेन विद्यायाः सारिष्ठत्व-द्योतनार्थमाख्यायिकां रचयति—

ॐ श्वेतकेतुर्हारुणेय आस । तँ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यम् । न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥ १ ॥

श्वेतकेतुर्नामतः अरुणस्यापत्यमारुणिस्तस्यापत्यमारुणेय आस बभूव। तं पुत्रं ह पिता आरुणिरुवाच। किम्? हे श्वेतकेतो गुरुं प्रति गत्वा ब्रह्मचर्यं वस अध्ययनार्थमित्यर्थः। एतदुभयं मा भूदित्यत आह—न वै इति। हे सोम्य अस्मत्कुलीनोऽननूच्य अनधीत्य ब्रह्मबन्धुरिव ब्राह्मणान् बन्धून् व्यपदिशति न स्वयं ब्राह्मणवृत्तस्तद्द्वयं न वै नैव युक्तम् ॥ १ ॥

इत्येवं पित्रोक्तः—

स ह द्वादशवर्ष उपेत्य चतुर्वि ँ्शतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय । त ँ्ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः ॥ २ ॥

स पुत्रो द्वादशवर्षः सन्नाचार्यमुपेत्य गत्वा यावच्चतुर्विंशतिवर्षो बभूव तावत् सर्वान्वेदान् सार्थानधीत्य महामना महद्गम्भीरं मनो यस्येति महामनाः सर्वज्येष्ठोऽहमिति मन्यमानः । अनूचानम् अनुवचनसमर्थम् आत्मानं मन्यत इत्यनूचानमानी । स्तब्धोऽप्रणतस्वभाव एयाय स्वगृहान् प्रत्यागत इत्यर्थः । तमेवंभूतं पुत्रं दृष्ट्वा ह पिता उवाच । किम् ? हे श्वेतकेतो नु इति वितर्के । कस्ते उपाध्यायादतिशयः प्राप्तो यद् येनातिशयेन हे सोम्य त्वमनूचानमानी इतीदं कुलाननुरूपं यथा स्यात्तथा स्तब्धोऽसि । उत अपि तमादेशमुपदेशं ब्रह्मलक्षणं अप्राक्ष्यः पृष्टवानसीति ॥ २ ॥

येनाश्रुत ँ्श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति ।
कथं नु भगवः स आदेशो भवतीति ॥ ३ ॥

येनाऽऽदेशेन श्रुतेन अन्यदश्रुतमपि श्रुतं भवति अमतं मतं भवति अविज्ञातमनिश्चितं विज्ञातं भवतीति । एतदद्भुतं श्रुत्वा पुत्रः पृच्छति—कथमिति । कथं नु केन प्रकारेण हे भगवः स आदेशो भवति ॥ ३ ॥

इत्युक्तः पिताऽनेकदृष्टान्तपुरस्सरं तमुपदिशति —

यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञात ँ्स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ ४ ॥

यथेति । यथा लोके हे सोम्यैकेन मृत्पिण्डेन कारणभूतेन विज्ञातेन सर्वं मृन्मयं मृद्विकारजातं घटादि विज्ञातं स्यात् कार्यस्य कारणानन्यत्वादित्यर्थः । कथं तर्हि कार्यकारणभेदप्रसिद्धिरित्यत आह—वाचेति । वाचाऽरभ्यत इति वाचारम्भणं वागालम्बनं विकार उच्यते, परन्तु न परमार्थतो वस्त्वस्ति । यतो नामधेयं नामैव नामधेयं नाममात्रं नार्थोऽस्तीत्यर्थः । तर्हि किमस्तीत्यत आह—मृत्तिकेति । मृत्तिकेत्येव मृत्तिकैव तु सत्यम् , वस्तुषु व्यावर्तमानेष्वनुस्यूतत्वात् ॥ ४ ॥

तथा—

यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातँ स्याद् वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ॥ ५ ॥

तथा सोम्यकेन लोहमणिना सुवर्णपिण्डेन सर्वं लोहमयं कटाहादि विज्ञातं स्यात्। समानमन्यत् ॥ ५ ॥

तथा—

यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातँ स्याद्वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यमेवँ सोम्य स आदेशो भवतीति ॥ ६ ॥

यथा सोम्यैकेन नखनिकृन्तनेन उपलक्षितेन कृष्णायसपिण्डेन सर्वं कार्ष्णायसं कृष्णायसो विकारजातं विज्ञातं स्यात्। समानमन्यत्। एवं यथादृष्टान्तमेव हे सोम्य स मयोक्त आदेशो भवति ॥ ६ ॥

इत्युक्तः पुत्र आह—

न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन्निति। भगवाँस्त्वेव मे तद्ब्रवीत्विति तथा सोम्येति होवाच ॥ ७ ॥

नूनं भगवन्तो मम गुरव एतद्भवदुक्तं वस्तु न वै अवेदिषुः नैव विज्ञातवन्तः। कुतः ? हि यस्माद्यदि एतद्भवदुक्तं मद्गुरवः अवेदिष्यन् विदितवन्तस्तद्धि कथं मे गुणवते नावक्ष्यन्नोक्तवन्तः। अतो भगवांस्त्वेव भगवानेव मे मह्यं तद्वस्तु ब्रवीतु कथयत्वित्युक्तः पिता तथाऽस्तु हे सोम्येति होवाच उक्तवानित्यर्थः ॥ ७॥

इति अष्टमे प्रथम खण्डः ॥ १ ॥

एवं प्रतिज्ञातमेकविज्ञानेन सर्वविज्ञानं वक्तुमाह—

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम्। तस्मादसतः सज्जायत ॥ १ ॥

हे सोम्यदं नामरूपात्मकं जगदग्रे सृष्टेः प्राक् सदेव सच्छब्दवाच्याव्याकृतात्मकमीश्वरभूतमेव आसीदित्यर्थः। तस्य लक्षणमाह—

एकमेवाद्वितीयमिति । एतैः पदैः क्रमेण सजातीयस्वगतविजातीयभेद-रहितम् आत्मतत्त्वमुक्तमित्यर्थः । उक्तजगत्कारणप्रतीतिदार्ढ्यार्थं तद्विपरीतार्थकं महावैनाशिकमतं दूषयितुमुपन्यस्यति—तदिति । तत्तत्र प्रागुत्पत्तेर्वस्तुनिरूपणविषये ह एके वैनाशिका आहुः । किम् ? इदं जगदग्रे प्रागुत्पत्तेरसदेव शून्यमेवासीत् । एकमेवेत्यादि पूर्ववत् । तस्मादसतः शून्यात् सत्कार्यं जायत अजायत । अडभावश्छान्दस इत्यर्थः ॥ १ ॥

इदं मतं दूषयति—

कुतस्तु खलु सोम्यैवँ स्यादिति होवाच कथमसतः सज्जायेतेति । सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥

हे सोम्य एवमसतः सज्जायत इत्येवं कुतस्तु खलु प्रमाणात् स्यादिति होवाच पिता । न कुतश्चित्प्रमाणादतः कथं केन प्रकारेणासतः सज्जायेत उत्पद्येत, तत्र दृष्टान्ताभावादित्यर्थः । स्वपक्षसिद्धिमुपसंहरति—सत्त्वेव सोम्येत्यादि । उक्तार्थम् ॥ २ ॥

सतः अद्वितीयत्वं ततो जगदुत्पत्त्यादिप्रदर्शनेन समर्थयते—

तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत । तत्तेज ऐक्षत बहु स्यां प्रजायेयेति । तदपोऽसृजत । तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ॥ ३ ॥

तत्सदाख्यं ब्रह्म सोम्य ऐक्षत ईक्षां दर्शनं कृतवान् । कथम् ? बहु प्रभूतं स्यां भवेयम् । प्रजायेय प्रकर्षेण च जायेयमिति । ईक्षित्वा तत्स्रष्टृ ब्रह्म सृष्टिपरिपूर्तये ब्रह्मणोऽद्वितीयत्वसिद्ध्यर्थं चाकाशवायुसर्जनपूर्वकं तेजोऽपञ्चीकृतमसृजत । तत्पुनस्तेजोरूपापन्नं स्रष्टृ ब्रह्मैक्षत—बहु स्यां प्रजायेयेति । तद्ब्रह्म आपः अपञ्चीकृता असृजत । एवमपां तेजःकार्यत्वे लोकानुभवमनुकूलयति—तस्मादिति । यस्मात्तेजःकार्यभूता आपः, तस्माद्यत्र क्व च यस्मिन्कस्मिंश्चिद्देशे काले वा पुरुषः शोचति वा सन्तप्यते स्वेदते प्रस्विद्यते तेजस एव तत्तदापोऽधिजायन्त उत्पद्यन्ते ॥ ३ ॥

ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति । ता अन्नमसृजन्त । तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते ॥ ४ ॥

ता आपः पूर्ववदब्बाकारमापन्नं ब्रह्मैक्षत बह्व्यः प्रभूताः स्याम भवाम प्रजायेमहि उत्पद्येमहीति । एवमीक्षित्वा ता आपस्तदवच्छिन्नं ब्रह्म अन्नं पृथिवीलक्षणमसृजत । अत्रापि लोकप्रसिद्धिं प्रमाणयति—तस्मादिति । यस्मादप्कार्यमन्नं तस्माद्यत्र क्व च देशे वर्षति तत्तत्रैव भूयिष्ठं प्रभूतमन्नं भवत्यतोऽद्भ्य एव तदन्नाद्यम् अन्नं च तदाद्यं चान्नाद्यं व्रीह्याद्यपि जायते । एवं पार्थिवान्नस्य अद्भ्य उत्पत्तिकथनेन पृथिव्या एवाद्भ्यः प्रभवत्वं साध्यते इत्यर्थः ॥ ४ ॥

इति अष्टमे द्वितीयः खण्डः ॥ २ ॥

अथ जीवाविष्टानां भौतिकानामपि परम्परया ब्रह्मकार्यत्व वक्तुं तान्यनुवदति—

तेषां खल्वेषां भूतानां त्रीण्येव बीजानि
भवन्त्याण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥

येषां पूर्वाध्याये गत्यागत्यादितृतीयस्थानं चोक्तं तेषां खल्वेषां मनुष्यपक्ष्यादिभूतानां त्रीण्येव बीजानि कारणानि भवन्ति । कानि ? आण्डजम् अण्डाज्जातमण्डजम् अण्डजमेवाण्डजं पक्ष्यादि पक्ष्यादीनां बीजम् । तथा जीवाज्जातं जीवजं जरायुजं पुरुषपश्वादि पुरुषपश्वादीनां बीजम् । उद्भिनत्तीत्युद्भिज्जं स्थावरं स्थावराणां बीजम् । स्वेदजादीनां चाण्डजादिष्वेव अन्तर्भावाद् युक्तमवधारणमित्यर्थः ॥ १ ॥

एषां शरीराणां परम्परया उक्तभूतकार्यत्वं वक्तुम ह—

सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन
जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ॥ २ ॥

सा प्रकृतेयमव्यवहितोक्ता स्रष्टृदेवता अलौकिकत्वादव्याकृताख्या पूर्ववदैक्षत । कथम् ? हन्त इदानीमहं चिन्मात्ररूपानेन बुद्धिस्थपूर्वसृष्ट्यनुभूतेन जीवेन प्राणधृतिहेतुनाऽऽत्मना सद्रूपेण इमाः सृष्टास्तिस्रस्तेजोबन्नात्मिकाः सूत्रात्मशरीरभूताः प्रत्यक्त्वाद् देवताः सूर्यप्रतिबिम्बवदनुप्रविश्य संसृज्य तद्देहाभिमानवती भूत्वा नामरूपे नाम्ना रूपेण च तत्सूक्ष्मपिण्डे व्याकरवाणि असौ नामायमिदंरूप इति व्याकुर्याम् ॥ २ ॥

किञ्च—

तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति । सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् ॥ ३ ॥

तासां तिसृणां देवतानां मध्ये एकैकां देवतां त्रिवृतं त्रिवृतं

गुणप्रधानभावेन त्रिरूपां करवाणि एतस्मिंस्त्रिवृत्कृतेऽपि विराट्-शरीरेऽनुप्रविश्य नामरूपे व्याकरवाणीत्यैक्षतेति सम्बन्ध इत्यर्थः। सा देवता यथासङ्कल्पं कार्यं कृतवतीत्याह—सेयमिति। सेयं प्रकृता देवता-ऽनेन जीवेनात्मना इमास्तेज आद्यस्तिस्रो देवताः प्रविश्य यथासङ्कल्पमेव नामरूपे व्याकरोत् ॥ ३ ॥

तासां त्रिवृतं त्रिवृतमेकैकामकरोत् । यथा नु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ४ ॥

तासां च देवतानां मध्ये एकैकां देवतां त्रिवृतं त्रिवृतमकरोदि-त्युक्तार्थम्। उक्तं त्रिवृत्करणमुदाहरणतः स्फुटीकर्तुमुपक्रमते—यथेति। यथा नु खलु हे सोम्य इमा उक्तास्तिस्रो देवता एकैका प्रत्येकं त्रिवृत्-त्रिवृद्गुणप्रधानभावेन भवति तत्त्रिवृत्करणात्तथा मे मम वचना-द्विजानीहि विस्पष्टमुदाहरणतोऽवधारयेत्यर्थः ॥ ४ ॥

इति अष्टमे तृतीयः खण्डः ॥ ३ ॥

तद्दर्शयति—

यदग्ने रोहितँ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ १ ॥

यदग्नेस्त्रिवृत्कृतस्य रोहितं लोहितं रूपं तदत्रिवृत्कृतस्य तेजसो रूप मिति विद्धि। तस्यैवाग्नेर्यच्छुक्लं रूपं तदपामत्रिवृत्कृतानां रूपम्। तस्यैव यत्कृष्णं रूपं तदन्नस्य पृथिव्या अत्रिवृत्कृताया रूपम्। एवं विवेकात्पूर्वं यत्तावाग्नौ अग्नित्वबुद्धिविषयभूतमासीत् तदिदानीमग्नित्व-मग्नेः सकाशात् अपागादपगतम्। कुतः? तस्य बुद्धिमात्रपरिकल्पित-त्वादित्याह—वाचेति। विकारस्य अग्न्यादेर्नामधेयं वाचारम्भणं वाङ्मात्र-मेव मृषैवेत्यर्थः। किं तर्हि सत्यमित्यत आह—त्रीणीति। रोहितादि-त्रीण्येव रूपाणि सत्यमित्यर्थः ॥ १ ॥

यदादित्यस्य रोहितँ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचारम्भणं विकारो नाम-धेयं त्रीणि रूपाणीत्येव सत्यम् ॥ २ ॥ यच्चन्द्रमसो रोहितँ रूपं

तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागात् चन्द्रा-च्चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ३ ॥ यद्विद्युतो रोहित\ँ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद् विद्युतो विद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ४ ॥

तथा यदादित्यस्य यच्चन्द्रमसो यद्विद्युतो रोहितं रूपमित्यादि समानम् ॥ २–४ ॥

एतद्ध स्म वै तद्विद्वा\ँ स आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदाञ्चक्रुः ॥ ५ ॥

पुनस्त्रिवृत्करणमुदाहरणान्तरेण दर्शयितुमाह—एतदिति । एतत् त्रिवृत्करणं ह वै विद्वांसो विदितवन्तः पूर्वेऽतिक्रान्तकालिका महाशाला महागृहस्था महाश्रोत्रिया आहुः स्म उक्तवन्तः । किम् ? अद्येदानीं नोऽस्माकं यथोक्तज्ञानवतां कुले कश्चन कश्चिदप्यश्रुतममतमविज्ञातमित्येवं नोदाहरिष्यति न वदिष्यति सर्वस्य ज्ञातत्वादित्यर्थः । कुत इत्यत आह—ह्येभ्य इति । हि यस्मादेभ्यो रोहितादित्रिरूपेभ्य एवान्यदवशिष्टमपि सर्वं विदाञ्चक्रुः विदितवन्तः ॥ ५ ॥

कथम्—

यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति । तद्विदाञ्चक्रुः यदु शुक्लमिवाभूदित्यपा\ँ रूपमिति तद्विदाञ्चक्रुः । यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदाञ्चक्रुः ॥ ६ ॥

यदु यदप्यनेकरूपतया सन्दिह्यमाने कपोतादिरूपे रोहितमिवाभूद् गृह्यमाणमासादिति तेजसस्तद्रूपमित्येवं विदाञ्चक्रुः । तथा यत् शुक्लमिव गृह्यमाणमभूत्तदपां रूपम् । यत्कृष्णमिव गृह्यमाणमभूत्तदन्नस्य रूपमित्येवं विदाञ्चक्रुरित्यर्थः ॥ ६ ॥

किं बहुना यत्रापि रूपादिविशेषोऽवगन्तुं न शक्यते, तत्रापि त्र्यात्मकत्वमवधारितवन्त एवेत्याह—

यद्विज्ञातमिवाभूदित्येतासामेव देवताना\ँ समास इति तद्विदा-

श्चक्रुः । यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ७ ॥

यदु अविज्ञातमिति च्छेदः । यदपि द्वीपान्तरादागतं पद्यादि नामरूपाभ्यामविज्ञातमिव विशेषतोऽगृह्यमाणमभूत् तदप्येतासामेव तिसृणां देवताना समासः समुदाय इति विदाञ्चक्रुरित्यर्थः । एवमाधिदैविकमाधिभौतिकं च त्रिवृत्कृतमुदाहरणेन दर्शयित्वा आध्यात्मिकमपि तत्तथा दर्शयितुमाह—यथेति । यथा येन प्रकारेण नु खलु हे सोम्येमास्तेजोबन्नात्मिकास्तिस्रो देवताः पुरुषेणोपयुज्यमानाः पुरुषं शिरःपाण्यादिलक्षणं प्राप्य एकैका देवता त्रिवृत्त्रिवृद्भवति तथेदानीं तदाध्यात्मिकं त्रिवृत्करणं मे मम वचनाद्विजानीहीत्यर्थः ॥ ७ ॥

इति अष्टमे चतुर्थः खण्डः ॥ ४ ॥

तद्दर्शयति—

अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति । यो मध्यमस्तन्माँसं योऽणिष्ठस्तन्मनः ॥ १ ॥

अन्नं प्रसिद्धमशितं भुक्तं जाठराग्निना पच्यमानं त्रेधा विधीयते विभज्यते । कथम् ? तस्यान्नस्य त्रिधाविधीयमानस्य यः स्थविष्ठः स्थूलतमो धातुः स्थूलोंऽशस्तत्पुरीषं भवति । यो मध्यमोंऽशस्तद्रसादिक्रमेण परिणम्य मांसं भवति । योऽणिष्ठोऽणुतमो धातुः हृदयं नाडीषु प्रविश्य सङ्घातस्य स्थितिमुत्पादयन्मनो भवति । मनसः पूर्वमेव सिद्धत्वान्मनस उपचयं करोतीति यावत् ॥ १ ॥

आपः पीतास्त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति । यो मध्यमस्तल्लोहितम् । योऽणिष्ठः स प्राणः ॥ २ ॥

तथाऽऽपः पीतास्त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति । यो मध्यमस्तल्लोहितं भवति । योऽणिष्ठः स प्राणो भवति । वक्ष्यति ह्यापोमयः प्राणो न पिबतो विच्छेत्स्यत इति ॥ २ ॥

तथा—

तेजोऽशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तदस्थि भवति । यो मध्यमः स मज्जा । योऽणिष्ठः सा वाक् ॥ ३ ॥

तेजो घृततैलादि । अस्थि स्पष्टम् । मज्जा अस्थ्यन्तर्गतः स्नेहः । अणिष्ठः

सा वाक् तैलादिभक्षणे हि वाग्भाषणसमर्था । समानमन्यत ॥ ३ ॥

उक्तमुपसंहरति—

अन्नमयँ हि सोम्य मन आपोमयः प्राण-
स्तेजोमयी वागिति भूय एव मा भगवान्
विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ४ ॥

हि यस्मादेवम् अन्नाद्यणिष्ठभागो मनआदिहेतुरतोऽन्नमयं सोम्य मनः । आपोमयः प्राणस्तेजोमयी वागिति युक्तमित्यर्थः । एवं प्रत्यायितः श्वेतकेतुराह–भूय इति । एकस्मिन्देशे मिश्रीभूतानामन्नादीनां कथं पृथक् पृथक् मनआदिरूपकार्यकरत्वमिति सन्देहादतो भूय एव पुनरेव भगवान् त्वं मामन्नमयमित्यादि विज्ञापयतु दृष्टान्तेनावगमयतु इत्युक्तः पिताऽऽह—तथेति । हे सोम्य मनआदेरन्नादिमयत्वं यथोपपद्यते तथा दृष्टान्तेनोच्यमानं शृण्विति पितोवाचेत्यर्थः ॥ ४ ॥

इति अष्टमे पञ्चमः खण्डः ॥ ५ ॥

एवं प्रतिज्ञातमाह—

दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः
समुदीषति तत्सर्पिर्भवति ॥ १ ॥

हे सोम्य मथ्यमानस्य दध्नो योऽणिमा अणुभावः स ऊर्ध्वः समुदीषति संभूयोर्ध्वं नवनीतभावेन गच्छति तत्सर्पिर्घृतं भवति ॥ १ ॥

एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥ अपाँ सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति ॥ ३ ॥ तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवति ॥ ४ ॥ अन्नमयँ हि सोम्य मन आपोमयः प्राण-स्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ५ ॥

एवं यथादृष्टान्तमेव ह खलु हे सोम्य अन्नस्याश्यमानस्य भुज्यमानस्य स वायुनाऽग्निना मथ्यमानस्य योऽणिमा स ऊर्ध्वम् ऊर्ध्वहृदये समुदीषति आगच्छति तन्मनो भवति । अपां सोम्येत्यादि भूय एवेत्यतः

प्राक्तनं समानम् । कथं हृदयप्रदेशे प्राणादीनां सन्निधानाविशेषेऽपि मनस एवान्नरसेनोपचय इति सन्देहाद्भय एव भगवान्विज्ञापयत्वित्यादि समानम् ॥ २-५ ॥

इति अष्टमे षष्ठः खण्डः ॥ ६ ॥

अन्वयव्यतिरेकाभ्यां मनसोऽन्नरसोपचितत्वं दर्शयितुमाह--

षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माशीः काममपः पिब । आपोमयः प्राणो न पिबतो विच्छेत्स्यत इति ॥ १ ॥

हे सोम्य पुरुषः षोडशकलः षोडश कला उपयुक्तान्नजनिता मनःशक्त्यंशा यस्यासौ षोडशकलः तस्याः शक्तेः षोडशदिनावच्छेदेन षोडशधा प्रविभज्य कलावदुपचयापचयधर्मित्वेन कलात्वेन निर्दिदिक्षितत्वात् । यद्येतदत्रकृतं मानसं वीर्यं प्रत्यक्षीकर्तुमिच्छसि तर्हि पञ्चदशाहानि दिनानि माशीरशनं मा कार्षीः । अपस्तु कामं यथेच्छं पिब, यतो न पिबत उदकपानमकुर्वतस्तव प्राणो विच्छेत्स्यते विच्छेदमापत्स्यते । कुतः ? यस्मादापोमयोऽब्विकारः प्राणः ॥ १ ॥

इत्येवं पित्रोक्तः--

स ह पञ्चदशाहा न नाश । अथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूँषि सामानीति । स होवाच न वै मा प्रतिभान्ति भो इति ॥ २ ॥

स श्वेतकेतुर्ह पञ्चदशाहानि नाश अशनं न कृतवान् । अथानन्तरं षोडशेऽहनि ह एनं पितरमुपससाद उपगम्य चोवाच । किम् ? भो भगवन्नहं ब्रवीमीत्युक्तः पिताऽऽह । ऋचो यजूंषि सामान्यधीष्वेत्युक्तः पुत्र आह--न वै मा मां भो भगवन्नृगादीनि प्रतिभान्ति स्फुरन्तीति ॥ २ ॥

तँ होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन ततोऽपि न बहु दहेदेवँ सोम्य ते षोडशानां कलानामेका कलातिशिष्टा स्यात् तयैतर्हि वेदान्नानुभवसि । अशानाऽथ मे विज्ञास्यसीति ॥ ३ ॥

एवमुक्तवन्तं तं पुत्रं प्रति ह पिता तत्र सदृष्टान्तं कारणं वक्तुमुवाच । किम् ? यथा लोके हे सोम्य महतो महत्परिमाणस्य आहितस्योपचितस्याग्नेः यथैकोऽङ्गारः खद्योतपरिमाणः परिशिष्ट उर्वरितः स्यात्तदा तेनाङ्गारेण ततोऽपि खद्योतपरिमाणादपि न बहु दहेत् । एवं

यथादृष्टान्तमेव हे सोम्य ते तवान्नोपचितानां षोडशानां कलानां मध्ये एका कला अतिशिष्टाऽवशिष्टा स्याद्वर्तते, तयैकया कलया एतर्हि इदानीं त्वं वेदान्नानुभवसि । श्रुत्वा अपि न प्रतिपद्यसे । अशान भुङ्क्ष्व । अथ अनन्तरं मे मम ऋगादिलक्षणं वचनं विज्ञास्यसि ॥ ३ ॥

इत्युक्तः—

स हाश । अथ हैनमुपससाद । तँ ह यत्किञ्च पप्रच्छ सर्वँ ह प्रतिपेदे ॥ ४ ॥

स पुत्रो हाश भुक्तवान् । अथानन्तरं ह एनं पितरमुपससाद । तमुपगतं पुत्रं ह पिता यत्किञ्च ऋगादिजातं पप्रच्छ तत्सर्वं ह पुत्रः प्रतिपेदे प्रतिपन्नवान् ॥ ४ ॥

तँ होवाच यथा सोम्यमहतो ऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वालयेत् तेन ततोऽपि बहु दहेत् ॥ ५ ॥

तं पुत्रं ह पिता तत्कारणमुवाच सदृष्टान्तम् । यथा सोम्य महतो ऽभ्याहितस्य अग्नेरेकमङ्गारं खद्योतमात्रं परिशिष्टं स्यात्तमङ्गारं तृणैरुपसमाधाय उपचित्य प्राज्वालयेद्वर्धयेत् । तेन वर्धितेनाङ्गारेण ततोऽपि पूर्वपरिमाणादपि बहु दहेत् ॥ ५ ॥

एवँ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाऽभूत् साऽन्नेनोपसमाहिता प्राज्वालीत् तयैतर्हि वेदाननुभवसि । अन्नमयँ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति । तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ६ ॥

एवं यथादृष्टान्तमेव हे सोम्य ते तव षोडशानां मध्ये एका कला अतिशिष्टाऽभूत् । सातिशिष्टा कलाऽन्नेन उपसमाहिता उपचिता प्राज्वालीत् प्रज्वलिता संवर्धिता । तया वर्धितया एतर्हीदानीं वेदाननुभवसि उपलभसे । अतोऽन्नमयं हि सोम्य मन इत्याद्युक्तार्थम् । श्वेतकेतोरुपदिष्टसंपत्तिं श्रुतिर्दर्शयति—तद्धेति । तन्मनआदीनामन्नादिमयत्वं हाऽस्य पितुरुक्तं श्वेतकेतुर्विजज्ञौ विज्ञातवान् । द्विरभ्यासः त्रिवृत्करणप्रकरणसमाप्त्यर्थः ॥ ६ ॥

इति अष्टमे सप्तमः खण्डः ॥ ७ ॥

त्रिवृत्करणविषयमवान्तरप्रकरणं परिसमाप्य सद्विषयमेव अनुवर्तयन् मनसो लये सुषुप्तौ जीवस्य सत्संपत्तिं वक्तुमुक्तवानित्याह—

उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति । यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति । तस्मादेनँ स्वपितीत्याचक्षते स्वँ ह्यपीतो भवति ॥ १ ॥

उद्दालको नामतोऽरुणस्यापत्यमारुणिः श्वेतकेतुं पुत्रमुवाच । किम् ? हे सोम्य स्वप्नान्तं स्वप्नस्यान्तोऽवसानं यस्मिन्निति स्वप्नान्तस्तं स्वप्नान्तं सुषुप्तिस्थानं सत्संपत्त्याख्यं मे मम वचनाद्विजानीहीति । कथम् ? यत्र यस्मिन्काले पुरुषस्य एतत् स्वपिति नाम भवति तदा तस्मिन् काले हे सोम्य पुरुषः सता सच्छब्दवाच्यया प्रकृतया देवतया सम्पन्नः एकीभूतो भवति भेदहेतूपाधेर्विलयादित्यर्थः । कथमेतन्नाम ? इत्यपेक्षायां गुणयोगादित्याह—स्वमिति । मनआदेर्विलीनत्वेन तत्संसर्गकृतजावत्वं परित्यज्य स्वं स्वकीयं सद्रूपं परमार्थसत्यमपीतो गतो भवति । तस्मादेनं सुप्तं स्वपितीत्येवं नामाऽऽचक्षते लौकिकाः । स्वं स्वात्मानं हि यस्मादपीतो भवतीत्येवं तद्गुणनामप्रसिद्धितोऽपि स्वात्मप्राप्तिरवगम्यते इत्यभिप्रायः ॥ १ ॥

एवमुक्तामेव सत्सम्पत्तिं दृष्टान्तेन बोधयति—

स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा प्राणमेवोपश्रयते । प्राणबन्धनँ हि सोम्य मन इति ॥ २ ॥

स दृष्टान्तो यथा—लोके शकुनिः पक्षी शकुनिघातकस्य हस्तगतेन सूत्रेण प्रबद्धः पाशितो बन्धनमोक्षार्थी सन् दिशं दिशं प्रतिदिशं पतित्वा बन्धनादन्यत्र आयतनमाश्रयं विश्रामस्थानमलब्ध्वा अप्राप्य बन्धनमेवो उपश्रयते आश्रयते । एवं यथादृष्टान्तमेव खलु हे सोम्य तत्प्रत्यक्षमन्नोपचितं मनो मनउपलक्षितो जीवो दिशं दिशं कर्मोपदिष्टसुखदुःखादिलक्षणां जाग्रत्स्वप्नयोः पतित्वाऽनुभूय अन्यत्र सदाख्यात् स्वात्मन आयतनं विश्रमणस्थानमलब्ध्वा प्राणमेव सदाख्यां देवतामेवाऽऽश्रयते ।

न प्रसिद्धं प्राणं सत्प्रकरणात् 'प्राणस्य प्राणमि'त्यादिश्रुत्यन्तराच्चेत्यर्थः। जीवस्य परमात्माश्रितत्वे हेतुमाह—प्राणबन्धनमिति। हे सोम्य हि यस्मात् प्राणो बन्धनं यस्य मनसस्तन्मनः प्राणबन्धनं प्राणोपलक्षितपरमात्माश्रयं मनस्तदुपलक्षितो जीव इत्यर्थः ॥ २ ॥

स्वपितिनामप्रसिद्धिद्वारेण जगतो मूलं दर्शयित्वा अन्नादादिलक्षण-कार्यकारणपरम्परयापि तद्दिदर्शयिषुराह—

अशनापिपासे मे सोम्य विजानीहीति। यत्रैतत् पुरुषोऽशिशिषति नामाऽऽप एव तदशितं नयन्ते। तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवम्। तदप आचक्षतेऽशनायेति। तत्रैतच्छुङ्गमुत्पतितँ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ३ ॥

अशितुमिच्छा अशना। यालोपश्छान्दसः। पातुमिच्छा पिपासा। ते अशनापिपासे तयोः तत्त्वं हे सोम्य मे मम वचनाद्विजानीहीति। उक्ता तावदशना। तत्त्वं दर्शयति—यत्रेति। यत्र यस्मिन्काले पुरुषः अशितुमिच्छति अशिशिषतीत्येतन्नाम भवति। तदा पीता आप एव तदशितमन्नं नयन्ते द्रवीकृत्य रसादिभावेन परिणमयन्ते इत्यर्थः। एतत् दृष्टान्तेन प्रतिपादयति—तदिति। तत्तस्मिन्नपाम् अशितनेतृत्वे दृष्टान्तो यथा—लोके गां नयतीति गोनायो गोपाल उच्यते। तथा अश्वनायः, पुरुषनाय इत्येवं यथादृष्टान्तं तत्तदा यदा पुरुषः अशिशिषतिनामा तदाऽशितं नयतीति। अशनायेत्येकवचनं छान्दसम्। एवमप आचक्षते कथयन्ति लौकिकाः। तत्रैवमपामशितनेतृत्वे सति एतच्छरीराख्यं शुङ्गमिव शुङ्गं कार्यं वटकणिकानामिव अङ्कुररूपमुत्पतितमुत्पन्नं हे सोम्य त्वं विजानीहि। किम्? नेदं शरीररूपं शुङ्गं कार्यममूलं मूलरहितं भवति ॥ ३ ॥

इत्युक्तः श्वेतकेतुराह—

तस्य क्व मूलँ स्यादन्यत्रान्नात्। एवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छ। अद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ। तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ। सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ ४ ॥

तस्य शरीरस्य क्व मूलं स्यादित्येवं पृष्टः पिताऽऽह—अन्यत्रान्नादिति। अन्नादन्यत्र तस्य क्व मूलं स्यादित्यनुषङ्गः। किन्तु अन्नमेव रसादिक्रमेण

मूलमिति भावः। यथा देहशुङ्गोऽन्नमूल एवमेव खलु हे सोम्य अन्नेनान्नरूपेण शुङ्गेन कार्येण आपो मूलमेवंलक्षणं कारणमन्नस्य शुङ्गस्यान्विच्छ प्रतिपद्यस्व। तथाऽपामपि उत्पत्त्यादिमत्त्वादद्भिः सोम्य शुङ्गेन कार्येण तत्कारणरूपं तेजो मूलमन्विच्छ। तथा त्वं तेजसा सोम्य शुङ्गेन सद्रूपं मूलमीश्वराख्यमन्विच्छ। अतो हे सोम्य इमाः स्थावरजङ्गमलक्षणाः सर्वाः प्रजाः सन्मूलाः सत्कारणकाः सदायतनाः सदाश्रयाः स्थितिकाले। सत्प्रतिष्ठाः सदेव प्रतिष्ठा लयः परिसमाप्तिर्यासां ताः सत्प्रतिष्ठाश्च प्रलयकाले इत्यर्थः ॥ ४ ॥

अथाप्शुङ्गद्वाराऽपि सदधिगममाह—

अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते। तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवम्। तत्तेज आचष्ट उदन्येति। तत्रैतदेव शुङ्गमुत्पतितँ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ५ ॥

यत्र यस्मिन्काले पुरुषः पातुमिच्छति पिपासतीत्येतन्नामा भवति। तत्तदा तेज एव पीतमबादि शोषयन्नयते लोहितादिभावेन परिणमयति। तत्तत्र दृष्टान्तो यथा गोनायोऽश्वनायः पुरुषनाय इत्येवम्। तत्तदा तेज उदन्येत्येवमाचष्टे। उदकं नयतीत्युदन्यं उदन्येति च्छान्दसम्। तत्रैवं तेजसाऽपा लोहितादिभावेन परिणम्यमानत्वे सति एतदेव शरीराख्यमेव शुङ्गमुत्पतितमित्यादि समानम् ॥ ५ ॥

तस्य क्व मूलँ स्यादन्यत्राद्भ्यः। अद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ। तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ। सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः। यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव। भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ॥ ६ ॥

एवं तेजोऽबादिना उपयुज्यमानेन उपचितसङ्घाते कस्य भूतस्य किं कार्यमित्यत आह—यथेति। यथा येन प्रकारेण हे सोम्य इमास्तेजोऽबन्नाख्यास्तिस्रो देवताः पुरुषं प्राप्य एकैका देवता त्रिवृत्त्रिवृद्भवति। तत्

त्रिवृत्करणं पुरस्तादेव प्रागेवान्नमशितं त्रेधा विधीयत इत्याद्युक्तं भवतीत्यर्थः। अथ मरणद्वाराऽपि सदात्मत्वं निरूपयति —अस्येति हे सोम्याऽस्य प्रयतो म्रियमाणस्य पुरुषस्य वाक् प्रथमं मनसि संपद्यते उपसंह्रियते। मनः प्राणे प्रसिद्धे संपद्यते। प्राणश्च तेजसि भौतिके आध्यात्मिके। यद्वा तदुपलक्षिते तदध्यक्षजीवे संपद्यते। तेजः परस्यां सदाख्यायां देवतायां संपद्यते। एवमस्यां देवतायां निमित्तस्य मनस उपसंहारात् तत्स्थजीवोपसंहारस्य सुषुप्तकालवदर्थात् प्राप्तत्वादित्यर्थः। एवं सिद्धं सदद्वयत्वमुपसंहरति—स य इति। एवं यन्मूलप्राप्तोऽज्ञानमात्रव्यवहितत्वात् पुनस्ततः सुषुप्तवदुत्थाय देहजालमाविशति जीवः॥ ६॥

स य एषोऽणिमा। ऐतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो इति। भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्येति होवाच॥ ७॥

स य एष उक्तः सदाख्योऽणिमा अणुभावो अणुरिव सूक्ष्मः। ऐतदात्म्यमेतदेव सत् आत्मा यस्य सर्वस्य तदेतदात्मं तस्य भाव ऐतदात्म्यम् एतदात्मकमिदं सर्वं जगद्येन चात्मना आत्मवत् तदेव सदाख्यं कारणं सत्यं परमार्थसदतः स एवात्मा सर्पवत्कल्पितस्य जगतः स्वरूपं रज्जुवदित्यर्थः। एवं सर्वस्य सदात्मत्वेऽपि मम किं स्यादित्यत आह—तत्त्वमसीति। अतः हे श्वेतकेतो त्वमपि तत्सत् सदाख्यं ब्रह्मासीत्येव प्रत्यायितः पुत्र आह—भूय इति। यदि अहन्यहनि सर्वाः प्रजाः सुषुप्तौ सदात्मस्वरूपं प्राप्नुवन्ति तर्हि वयं सत्संपन्ना इति ताः कुतो न विदुरिति सन्देहोऽस्ति। अतस्तत्कारणं दृष्टान्तेन मा मां भगवान् भूय एव पुनरपि ज्ञापयतु प्रत्याययत्विति पृष्टः पिता तत्कारणं वक्तुं प्रतिज्ञातवानित्याह—तथेति। हे सोम्य तथास्तु त्वत्पृष्टं दृष्टान्तेन बोधयिष्यामीत्युवाच पिता॥ ७॥

इति अष्टमे अष्टमः खण्डः॥ ८॥

तथा बोधयितुमाह—

यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाँ रसान् समवहारमेकताँ रसं गमयन्ति॥ १॥

यथा लोके सोम्य मधुकृतो मधु कुर्वन्तीति मधुकृतो मधुकरमक्षिकाः मधु निस्तिष्ठन्ति निष्पादयन्ति। कथम्? नानात्ययानां नानागतीनां नानादिक्कानां वृक्षाणां रसान्समवहार समाहृत्य समाहृत्य एकतामेकभावं मधुत्वेन रसमिति वचनव्यत्ययेन रसान् गमयन्ति मधुत्वं संपादयन्तीति यावत्॥ १॥

ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति ॥ २ ॥

ते रसाः यथा तत्र मधुनि न विवेकं लभन्ते। कथम् ? अमुष्याम्रस्य वृक्षस्य रसोऽस्म्यहम् अमुष्यपनसस्य वृक्षस्य वा रसोऽस्म्यहमित्येवं यथादृष्टान्तमेव खलु हे सोम्येमाः सर्वाः प्रजाः सुषुप्तौ मरणप्रलययोश्चापि सति सदाख्ये ब्रह्मणि संपद्य प्राप्य वयं सति संपद्यामहे संपन्ना भवामः संपन्ना इति वा न विदुर्न जानीयुः एकीभूतत्वदित्यर्थः ॥ २ ॥

तर्हि यथाशरीरमुत्थानं न स्यादित्यत आह—

त इह व्याघ्रो वा सिँ्हो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दँ्शो वा मशको वा यद्यद्भवन्ति तदा भवन्ति ॥ ३ ॥

ते जीवा इह लोके सुषुप्तौ सत्संपत्तेः प्राक् यत्कर्मवशाद् व्याघ्रो वा सिंहो वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वेत्येवमादि यद्यत्पूर्वरूपा भवन्ति प्रतिपन्ना बभूवुस्ते पुनस्तत्कर्मज्ञानवासनाङ्किताः सन्त उत्थानसमये तद्व्याघ्रादिरूपमेव भवन्ति आगत्य व्याघ्रो वा सिंहो वेत्येवं प्रतिपद्यन्ते । आत्मनः सदात्मत्वमज्ञात्वैव तत्संपन्नत्वादित्यर्थः ॥ ३ ॥

स य एषोऽणिमा । ऐतदात्म्यमिदँ् सर्वं तत्सत्यँ् स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ४ ॥

स य एषोऽणिमेत्यादि पूर्ववत् । ननु तथापि सत आगमनानन्तरमहं सत आगतोऽस्मीति ज्ञानं कस्मात्कारणान्न भवति तत्कारणं भूय एव मा भगवान् दृष्टान्तेन विज्ञापयत्वित्यादि समानम् ॥ ४ ॥

इति अष्टमे नवमः खण्डः ॥ ९ ॥

तत् सदृष्टान्तमाह—

इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति समुद्र एव भवन्ति । ता यथा तत्र न विदुरियमहमस्मि इयमहमस्मीति ॥ १ ॥

हे सोम्य इमाः प्राच्यः प्रागञ्चना गङ्गाद्या नद्यः पुरस्तात्पूर्वां दिशं प्रति स्यन्दन्ते स्रवन्ति। तथा प्रतीच्यः प्रतीचीमञ्चन्तीति प्रतीच्यः सिन्ध्वाद्या नद्यः। पश्चात्प्रतीचीं दिशं स्यन्दन्ते ता नद्यः समुद्रादम्भोनिधेर्जलधरैराक्षिप्ताः पुनर्वृष्टिरूपेण पतिता गङ्गादिनदीरूपिण्यः सत्यः पुनः समुद्रमेवापियन्ति समुद्रकतां गच्छन्ति। अतः स प्रसिद्धः समुद्र एव भवति। ता नद्यो यथा तत्र समुद्रे समुद्रात्मनैकतां गता न विदुरियं गङ्गाऽहमस्मि, इयं सिन्ध्वहमस्मीत्येवं तथा गता अपि न विजानन्ति ॥ १ ॥

एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति। त इह व्याघ्रो वा सिँ्हो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दँ्शो वा मशको वा यद्यद्भवन्ति तदा भवन्ति ॥ २ ॥

एवं यथादृष्टान्तमेव खलु हे सोम्य इमाः सर्वाः प्रजाः सतः आगम्य सतो वयमागच्छामहे आगता इति वा न विदुः एकीभूतत्वादेवेत्यर्थः। त इह व्याघ्रो वेत्यादि समानम् ॥ २ ॥

स य एषोऽणिमा। ऐतदात्म्यमिदँ् सर्वं तत्सत्यँ् स आत्मा तत्त्वमसि श्वेतकेतो इति। भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्येति होवाच ॥ ३ ॥

जलबुदबुदफेनादीनां कारणभूतजलभावं गतानां विनाशवत्कारणसम्पन्नानां जीवानां तु कथं न विनाश इत्येतद् दृष्टान्तेन भूय एव मा भगवान् विज्ञापयत्वित्यादि समानम् ॥ ३ ॥

इति अष्टमे दशमः खण्डः ॥ १० ॥

जीवनाशाभावं दृष्टान्तेन बोधयति—

अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद्यो मध्येऽभ्याहन्याज्जीवन् स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत्। स एष जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥ १ ॥

हे सोम्य अस्य महतोऽनेकशाखादिसंयुक्तस्य वृक्षस्य यः कश्चिन्मूले परश्वादिनाऽभ्याहन्यात् घातयेत् स कृतघातमात्रेण शोषादर्शनाज्जीवन्नेव सन् रसं स्रवेत्तथा यो मध्येऽभ्याहन्यात् जीवन् स्रवेद्योऽग्रे अभ्या-

हन्यात् जीवन् स्रवेदनः स एष वृक्ष इदानीं जीवेनात्मना अनुप्रभूतो व्याप्तः सन् पेपीयमानो मूलैरुदकादिकं पिबन् मोदमानो हर्षं प्राप्नुवंस्तिष्ठति ॥ १ ॥

अस्य यदेकाँ शाखां जीवो जहाति । अथ सा शुष्यति । द्वितीयां जहात्यथ सा शुष्यति । तृतीया जहात्यथ सा शुष्यति । सर्वं जहाति सर्वः शुष्यति । एवमेव खलु सोम्य विद्धीति होवाच ॥ २ ॥

अस्य वृक्षस्य यत् यदा एकां शाखां जीवो जहाति त्यजति शाखायां प्रसृतमात्मांशमुपसंहरत्यथ तदा सा शाखा शुष्यति । जीवकर्मक्षयात् द्वितीयां जहातीत्यादि समानम् । एवं यथादृष्टान्तमेव खलु सोम्य विद्धीति पिता होवाच ॥ २ ॥

किञ्च--

जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स य एषोऽणिमा । ऐतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ३ ॥

जीवापेतं जीववियुक्तं वाव किलेदं शरीरं म्रियते । कृतहान्यकृताभ्यागमप्रसङ्गादित्यर्थः । अम्रियमाणो जीवो यदात्मना स्थितः । स य एषोऽणिमेत्यादि समानम । कथं पुनरिदं स्थूलं नामरूपात्मकं जगत्तद्विपरीतात् सत उत्पद्यत इत्येतद् दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्वित्यादि समानम ॥ ३ ॥

इति अष्टमे एकादशः खण्डः ॥ ११ ॥

सूक्ष्मस्य स्थूलकारणत्वं दृष्टान्तेन प्रतिपादयति--

न्यग्रोधफलमत आहरेतीदं भगव इति । भिन्धीति भिन्नं भगव इति । किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इति । आसामङ्गैकां भिन्धीति । भिन्ना भगव इति । किमत्र पश्यसीति । न किञ्चन भगव इति ॥ १ ॥

न्यग्रोधस्य वटस्य फलमतोऽस्मात् प्रकृतान्न्यग्रोधादाहर इत्युक्तः श्वेतकेतुस्तथा चकार । स इदं फलमाहृतं हे भगव इति दर्शितवन्तं प्रत्याह भिन्धि फलमित्युक्त इतर आह भिन्नं भगव इत्युक्ते तं पिताह किमत्र भिन्ने फले पश्यसीत्युक्त आह–अण्व्यः अणुतरा इवमा धानाः बीजानि

हे भगव इत्युक्ते पिताऽऽह। हे अङ्ग आसां धानानां मध्ये एकां धानां भिन्धि इत्युक्ते आह–भिन्ना भगव इति। एवमुक्ते पिताऽऽह–किमत्रास्यां भिन्नायां धानायां पश्यसि ? पुत्र आह न किञ्चन पश्यामि भगव इति ॥१॥

इत्युक्तवन्तं–

तँ होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान् न्यग्रोधस्तिष्ठति ॥ २ ॥

तं पुत्रं पितोवाच। किम् ? हे सोम्य यं वै एतं वटबीजाणिमानम् अणुभावं न निभालयसे न पश्यसि। एतस्यैव वटबीजाणिम्नः कार्यभूतो हे सोम्य एषः प्रत्यक्षतो दृश्यमानो महान्स्थूलः शाखादिमान् न्यग्रोधो वट उत्पन्नः सन् तिष्ठति। एवं एतद् दृष्टान्तानुरूपमेव सतोऽणिम्नः स्थूलं जगदुत्तिष्ठतीति ॥ २ ॥

श्रद्धत्स्व सोम्येति। स य एषोऽणिमा। ऐतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो इति। भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्येति होवाच ॥ ३ ॥

श्रद्धत्स्व विश्वसिहि हे सोम्येत्यर्थः। एवं महानित्यत्रस्थ एवंशब्दो व्यवहितेन सम्बद्ध्य व्याकृतः। स य इत्यादि समानम्। एतज्जगन्मूलं कस्मात्प्रत्यक्षेण नोपलभ्यते तद् दृष्टान्तेन भूय एव मा भगवान्विज्ञापयतु इत्यादि समानम् ॥ ३ ॥

इति अष्टमे द्वादशः खण्डः ॥ १२ ॥

तथा बोधयितुमाह–

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति। स ह तथा चकार। तँ होवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति। तद्धावमृश्य न विवेद ॥ १ ॥

लवणमेतत् घटाद्युदकेऽवधाय प्रक्षिप्य अथ रात्रेरत्ययानन्तरं प्रातःकाले मा मामुपसीदथा उपगच्छेथा इत्युक्तः स ह श्वेतुकेतुस्तथा चकार यथा पित्रोपदिष्टं तथा कृतवान्। तं श्वेतकेतुं परेद्युः प्रातर्ह पितोवाच। किम् ? यद्दोषा रात्रौ लवणमुदकेऽवाधाः निक्षिप्तवानसि हे अङ्ग यल्लवणमाहरेत्युक्तः पुत्रस्तल्लवणं ह किल दर्शनस्पर्शनाभ्यामवमृश्य

अन्विष्य यथापूर्वं पिण्डरूपभूत्तथा न विवेद न विज्ञातवान् ॥ १ ॥

कुतः—

यथा विलीनमेवाङ्गास्यान्तादाचामेति । कथमिति लवण-मिति । मध्यादाचामेति । कथमिति लवणमित्यन्तादाचा-मेति । कथमिति लवणमित्यभिप्रास्यैनदथ मोपसीदथा इति । तद्ध तथा चकार तच्छश्वत्संवर्तते तँ होवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति ॥ २ ॥ स य एषोऽणिमा । ऐतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञाप-यत्विति । तथा सोम्येति होवाच ॥ ३ ॥

यतस्तल्लवणं विलीनमेव अप्सु संश्लिष्टमेवेत्यर्थः । तदुपलब्ध्युपाय-माह—अङ्गेति । अङ्ग हे वत्स अस्योदकस्यान्तादुपरिभागाद् गृहीत्वा च आचमनं कुर्वित्युक्ते तथाकृतवन्तं पुत्रं पितोवाच । कथमित्युक्तः पुत्र आह—लवणं स्वादत इति । अथोदकस्य मध्यादन्तादधोभागाच्च गृहीत्वा आचामेत्यादि समानम् । अभिप्राय परित्यज्यैतल्लवणोदकम् । अथानन्तरं मा मां प्रत्युपसीदथा आगच्छ इत्युक्तः पुत्रस्तल्लवणं परित्यज्य ह किल तथा चकार पितृसमीपमाजगाम । किं ब्रुवन् ? तल्लवणं तस्मिन्नेवोदके शश्वन्नित्यं संवर्तते इति ब्रुवन् तथागतं पुत्रं ह पितोवाच । किम् ? अत्रा-स्मिन्देहे वाव किल वर्तमानं सत्सदाख्यं कारणं हे सोम्य त्वं न निभाल-यसे नोपलभसे दर्शनस्पर्शनाभ्यां लवणमिव । अत्रैव देहे एव किल पुनः सदुपलक्ष्यस इति शेषः, तत्रैव जिह्वयोपलब्धलवणवदित्यर्थः । समानमन्यत् । तर्हि तदुपायान्तरं दृष्टान्तेन भूय एव मा भगवान् विज्ञापयत्वित्यादि समानम् ॥ २, ३ ॥

इति अष्टमे त्रयोदशः खण्डः ॥ १३ ॥

तदुपायं दृष्टान्तेन बोधयति—

यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततो-ऽतिजने विसृजेत् । स यथा तत्र प्राङ् वोदङ् वाऽधराङ् वाऽप्रत्यङ् वाप्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥ १ ॥

यथा लोके सोम्य गन्धारेभ्यो देशविशेषेभ्यः कश्चित्पुरुषमभिनद्धाक्षं

बद्धचक्षुषमरण्ये तस्करैरानीय तमभिनद्धाक्षमेव ततोऽप्यतिजने अति-क्रान्तजने जनशून्यप्रदेशे विसृजेत् । स विसृष्टः पुरुषो यथा तत्रारण्य एव दिग्भ्रमोपेतः प्राङ् वा प्राङ्मुखो वोदङ्वा उदङ्मुखो वा अधराङ् वा प्रत्यङ्मुखो वा प्रध्मायीत शब्दं कुर्याद्विक्रोशेत् । कथम् ? अभिनद्धाक्षोऽहं गन्धारेभ्यस्तस्करैरानीतोऽभिनद्धाक्ष एव विसृष्ट इति ॥ १ ॥

एवं विक्रोशतः—

तस्य यथाभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति । स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसंपद्येत एवमेवेह आचार्यवान् पुरुषो वेद । तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति ॥ २ ॥

तस्य यथाभिनहनं बन्धनं प्रमुच्य मुक्त्वा कारुणिकः कश्चित्प्रब्रूयात् । किम् ? एतां दिशं गन्धारा एतां दिशं व्रजेति । एवमुक्तः स मुक्तबन्धनो ग्रामाद् ग्रामान्तरं पृच्छन् पण्डित उपदिष्टार्थग्रहणसमर्थः मेधावी स्वयमूहापोहसमर्थो गन्धारानेव उपसंपद्येत प्राप्नो भवति । एवमेव गन्धारपुरुषवन् आचार्य उपदेष्टा यस्य मोहपटाभिनद्धाक्षस्य पुण्यापुण्यादितस्करैरनेकानर्थसङ्कुलदेहारण्ये प्रवेशितस्य स आचार्यवान्पुरुषः सूक्ष्मं तत्त्वं वेद जानाति नान्य इत्याचार्योपदेशः सत्स्वरूपावगमे उपाय इत्युक्तं भवति । तस्याचार्यवतः पण्डितस्य मेधाविनोऽविद्याबन्धनर्विनिर्मुक्तस्य तावदेव तावानेव कालश्चिरं विलम्बः सत्संपत्तेरिति शेषः । किम् ? यावत् यावत्कालपर्यन्तं न वमोक्ष्ये पुरुषव्यत्ययेन न विमोक्ष्यते प्रारब्धकर्मणो भोगाद्विनाशेन यावद्देहपातो न भवतीति यावत् । अथ तदा देहपातसमकालमेव संपत्स्ये संपत्स्यते विदेहमुक्तो भवतीत्यर्थः । समानमन्यत् ॥ २ ॥

स य एषोऽणिमा । ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान्विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ३ ॥

तर्ह्याचार्यवान् येन क्रमेण सत्सम्पद्यते तं क्रमं दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्वित्यादि समानम् ॥ ३ ॥

इति अष्टमे चतुर्दशः खण्डः ॥ १४ ॥

तत्क्रमं दर्शयति—

पुरुषँ सोम्योपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति । तस्य यावन्न वाङ् मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥ १ ॥

हे सोम्य पुरुषमुपतापिनं ज्वराद्युपतापवन्तं मुमूर्षुं ज्ञातयो बान्धवा परिवेष्ट्योपासते । कथम् ? जानासि मां पितरं जानासि मां भ्रातरमित्येवं पृच्छन्तस्तस्य मुमूर्षोः यावत्पर्यन्तं न वाक् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् । न संपद्यते इति प्रत्येकं सम्बध्यते तावत्पर्यन्तं जानाति ॥ १ ॥

अथ यदास्य वाङ् मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥ २ ॥

अथ यदास्य मुमूर्षोः वाक् मनसि सम्पद्यते । मन आध्यात्मिके प्राणे । प्राणो भौतिके तेजसि । तेजः परस्यां सदाख्यायां देवतायां संपद्यते । अथ तदा न जानातीति ॥ २ ॥

स य एषोऽणिमा । ऐतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ३ ॥

एवं विदुषः सत्संपत्तिक्रमः पूर्वोक्तमुमूर्ष्वविद्वत् सत्संपत्तिक्रमतुल्य एव । एतावांस्तु विशेषो यदविद्वान् सत्संपन्नोऽपि पुनरत्रावर्तते । विद्वांस्तु नावर्तत इति चेत्तर्ह्यत्र यत्कारणं तद्भूय एव मा भगवान् दृष्टान्तेन विज्ञापयत्वित्यादि समानम् ॥ ३ ॥

इति अष्टमे पञ्चदशः खण्डः ॥ १५ ॥

तद्बोधयितुं दृष्टान्तमाह—

पुरुषँ सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत्परशुमस्मै तपतेति । स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति । स दह्यतेऽथ हन्यते ॥ १ ॥

हे सोम्य उत अपि पुरुषं हस्तगृहीतं बद्धहस्तं राजपुरुषा आनयन्ति । किं कृतवानयमितीतरे पृष्टाश्च ते आहुरपहार्षीद्धनमस्यायमिति ।

इतरे च चौर्यकर्मणि सन्दिह्यमान प्रत्याहुः—त्वं किं स्तेयमकार्षी ? इति पृष्टे तस्मिंश्चापह्नवति सति आहुः—परशुमस्मै एतदर्थं सन्तपत परशुतापं कुरुत शोधयत्वयमात्मानमिति। स यदि तस्य स्तैन्यस्य कर्ता भवति बहिश्चापह्नुते तर्हि तत एवानृताभिसन्धत्वादेव अनृतमन्यथाभूतं सन्तमन्यथात्मानं कुरुते स अनृताभिसन्धो मिथ्याभिनिवेशवाननृतेनात्मानम् अन्तर्धा व्यवहितं कृत्वाऽथ तप्तपरशुं प्रतिगृह्णाति स तथा दह्यते। अथ हन्यते राजपुरुषादिभिः ॥ १ ॥

अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते। स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति। स न दह्यतेऽथ मुच्यते ॥ २ ॥

अथ यदि तस्य अकर्ता भवति तत एव स्तैन्यकर्माकरणादेव सत्यमात्मानं कुरुते। सत्याभिसन्धः सत्येनात्मानमन्तर्धाय व्यवहितं कृत्वा तप्तं परशुं प्रतिगृह्णाति। स सत्याभिसन्धो न दह्यते। अथ मुच्यते च मिथ्याभिप्रयोक्तृभ्य इत्यर्थः ॥ २ ॥

एवमेव दार्ष्टान्तिकेऽपि योज्यमित्यभिप्रायेणोक्तं दृष्टान्तमनुवदति—

स यथा तत्र नादाह्येत। ऐतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो इति। तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ३ ॥

उभयोस्तप्तपरशुहस्ततलसंयोगस्य तुल्यत्वेऽप्यनृताभिसन्धवत्स सत्याभिसन्धो यथा तत्र तप्तपरशुग्रहणकर्मणि नादाह्येत न दह्यते सत्यव्यवहितहस्ततलत्वात् एव सद्ब्रह्माभिसन्धीतरयोः शरीरपातकाले तुल्यायामपि सत्संपत्तौ विद्वान्संपद्य न पुनर्व्याघ्रादिदेहग्रहणाय आवर्तते। अविद्वांस्तु पुनस्तद्ग्रहणायावर्तते विकारानृताभिसन्धत्वादित्यर्थः। समानमन्यत्। एवं पित्रोपदिष्टा विद्यासंपत्तिः श्वेतकेतोर्वृत्तेति श्रुतिराह—तद्धेति। अस्य पितुर्ह किल तत्त्वमसीति दृष्टान्तैर्हेतुभिश्चोक्तं कार्यकरणेभ्यः प्रविविक्तसात्मतत्त्वं श्वेतकेतुः सदेवाहमस्मीति विजज्ञौ विज्ञातवान्। द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ ३ ॥

इति अष्टमे षोडशः खण्डः ॥ १६ ॥

॥ इति छान्दोग्यब्राह्मणे अष्टमः प्रपाठकः ॥

जन्माद्यस्य यतो यदेतदखिलं संविश्य जीवात्मना
नामादिप्रविवेककृद्यदनिशं प्राप्यापि नो जन्तवः ।
जानन्त्येव न यत्प्रकारशतकैः प्राप्यं गुरोर्वाक्यतो-
ऽवाप्योन्मुच्यत एव तद्यदनिशं ध्यायेन्नृसिंहाभिधम् ॥ १ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्य-
नित्यानन्दाश्रमविरचितायां छान्दोग्योपनिषद्व्याख्यायां
मिताक्षरायां षष्ठोऽध्यायः ॥ ६ ॥

---

॥ अथ सप्तमोऽध्यायः ॥

उत्तमाधिकारिणं प्रत्येवं साक्षाद् ब्रह्मात्मत्वमुपदिश्य इदानीं शाखा-चन्द्रन्यायेन मध्यमाधिकारिणो ब्रह्मबुद्धिस्थिरीकरणार्थम् अधमस्याधि-कारिणो वा सोपानारोहणन्यायेन ध्यानार्थं नामादिप्राणान्तसङ्कीर्तनद्वारा ब्रह्मोपदेष्टुं सप्तमोऽध्यायः प्रवर्तते । तत्र ब्रह्मविद्यायाः स्तुत्यर्थं निरतिशय-श्रेयःप्राप्तिसाधनत्वख्यापनार्थं वा आख्यायिकामारचयति—

ॐ । अधीहि भगव इति होपससाद सनत्कुमारं नारदः । तँ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति ॥ १ ॥

हे भगवः भगवान् त्वमधीहि अधीष्व मां विज्ञापयेति मन्त्रमुच्चार-यन्नारदो ह किल सनत्कुमारमुपससाद उपसन्नवान् । तं यथाशास्त्रमुप-सन्नं नारदं सनत्कुमार उवाच । किम् ? यदात्मविषयं किञ्चित्त्वं वेत्थ तेन तत्प्रख्यापनेन इदमहं जाने इत्येवं मा मामुपसीद उपसर्प । ततस्तव विज्ञानादूर्ध्वं ते तुभ्यमहं वक्ष्यामि ॥ १ ॥

इति गुरुणोक्तः—

स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेदँ सामवेदमाथर्वणं चतुर्थ-मितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यँ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याँ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥ २ ॥

स नारद उवाच । किम् ? ऋग्वेदमहध्येमि स्मरामि । यद्वेत्थेति विज्ञानस्यैव पृष्टत्वात् । तथा यजुर्वेदं सामवेदमाथर्वणं चतुर्थवेदमिति-हासपुराणात्मकं पञ्चमवेदं वेदानां भारतं पञ्चमं वेदं व्याकरणं

वेदार्थवेदनहेतुत्वात। पित्र्यं श्राद्धकल्पं राशिं गणितं दैवमुत्पातविज्ञानं निधिं महाकालादिनिधिशास्त्रं वाकोवाक्यं तर्कशास्त्रम् एकायनं नीति-शास्त्रं देवविद्यां निरुक्तं ब्रह्मणो वेदत्रयस्य विद्यां शिक्षादिरूपां ब्रह्मविद्यां भूतविद्यां भूततन्त्रं क्षत्रविद्यां धनुर्वेदं नक्षत्रविद्यां ज्योतिषं सर्पदेवजन-विद्यां सर्पविद्यां गारुडं देवजनविद्यां गन्धर्वयुक्तिगीतनृत्यादिज्ञानानि एतत्सर्वं हे भगवोऽहमध्येमि स्मरामीत्यर्थः ॥ २ ॥

तर्हि सर्वज्ञस्त्वं कृतकृत्योऽसीत्यत आह—

सोऽहं भगवो मन्त्रविदेवास्मि नाऽत्मवित्। श्रुतँ ह्येव मे भगवद्-दृशेभ्यस्तरति शोकमात्मविदिति। सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति। तँ होवाच यद्वै किञ्चैत-दध्यगीष्ठा नामैवैतत् ॥ ३ ॥

हे भगवः सोऽहमेतत्सर्वं जानन्नपि मन्त्रविदेव कर्मविदेवास्मि। मन्त्रेषु कर्माणीति वक्ष्यमाणत्वात्। नात्मवित् नात्मानं वेद्मीत्यर्थः। मा भवतु तद्वेदनं तस्य को वा उपयोग इत्यत आह—श्रुतमिति। हि यस्मा-दात्मानं वेत्तीत्यात्मवित् शोकं मनस्तापमकृतार्थबुद्धितां तरति अतिक्रामती-त्येवं मे मम भगवद्दृशेभ्यो युष्मत्सदृशेभ्यः श्रुतमागमज्ञानमस्त्येव। स चाहमनात्मवित्त्वाद्धि भगवः शोचामि अकृतार्थबुद्ध्या सन्तप्ये। अतस्तं शोकाविष्टं मा मां शोकस्य शोकसागरस्य पारं भगवांस्तारयतु आत्म-ज्ञानोडुपेन कृतार्थबुद्धितामापादयतु अभयं गमयत्विति यावत्। तमेव-मुक्तवन्तं प्रत्याचार्य उवाच। किम्? यद्वै किञ्चैतदृग्वेदादि त्वमध्यगीष्ठा अधीतवानसि तत्सर्वं नामैव विकार एव वाचारम्भणश्रुतेः ॥ ३ ॥

नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहास-पुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्य-मेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्स्वेति ॥ ४ ॥

उक्तमेव उपपादयति—नाम वा ऋग्वेद इत्युक्तार्थेन। तदुपसंहरति—नामैवैतदिति। फलितमाह—नामेति। नाम ब्रह्मेत्येवमुपास्स्वेत्यर्थः ॥ ४ ॥

तत्फलमाह—

स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो

भवति यो नाम ब्रह्मेत्युपास्ते । अस्ति भगवो नाम्नो भूय इति । नाम्नो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ ५ ॥

स यः कश्चिन्नाम ब्रह्मेत्युपास्ते अस्योपासकस्य यावन्नाम्नो गतं गोचरं तत्र तस्मिन्विषये यथाकामचारो यथेच्छाचरणं भवतीत्यर्थः। उपसंहरति—यो नाम ब्रह्मेत्युपास्त इति । उक्तान्नाम्नोऽन्यद् ब्रह्मदृष्ट्यर्हं पृच्छति—अस्तीति । हे भगवन् नाम्नः सकाशाद्भूयोऽधिकतरं किं ब्रह्मदृष्ट्यर्हमस्तीत्येवं पृष्टो गुरुराह—नाम्नो वाव भूयोऽस्तीति । एवमुक्ते नारद आह—तदिति। यद्यस्ति किञ्चिन्नाम्नो भूयस्तर्हि तन्मे मम भगवान् ब्रवीतु कथयत्वित्यर्थः ॥ ५ ॥

इति नवमे प्रथमः खण्डः ॥ १ ॥

एवमुक्ते गुरुराह--

वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यँ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याँ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाँश्च मनुष्याँश्च पशूँश्च वयाँसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ्नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति ॥ १ ॥ स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्ते । अस्ति भगवो वाचो भूय इति । वाचो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

वाग्वाव वागिन्द्रियमेव नाम्नो भूयस्तस्यैव जिह्वामूलाद्यष्टस्थानेषु

स्थितत्वात् नामात्मकवर्णहेतुत्वात्। भूयस्त्वमन्वयेन साधयति—'वागि'त्यारभ्य 'हृदयज्ञञ्चे'त्यन्तेन। हृदयं हृदयप्रियं तद्विपरीतमहृदयज्ञं प्रसिद्धार्थत्वात्। अथ व्यतिरेकेण भूयस्त्वं साधयति—'यदि'त्यारभ्य 'नाहृदयज्ञ' इत्यन्तेन। यदि वै वाङ् नाभविष्यत्तदभावे अध्ययनाभावात् तदर्थज्ञानाभावेन धर्मादि न व्यज्ञापयिष्यत् न विज्ञातमभविष्यत्। समानमन्यत्॥ १, २॥

इति नवमे द्वितीयः खण्डः॥ २॥

मनो वाव वाचो भूयो यथा वै द्वे वामलके द्वे वा कोले द्वौ वाक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति। स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीतेत्यथ कुरुते पुत्राँश्च पशूँश्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते। मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्स्वेति॥ १॥ स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्ते। अस्ति भगवो मनसो भूय इति। मनसो वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति॥ २॥

मनो विवक्षाबुद्धिलक्षणा अन्तःकरणवृत्तिः वाचो भूयस्तस्य वाचो वक्तव्ये प्रेरकत्वात्। मनसो वागादिव्यापकत्वं दृष्टान्तपूर्वकमाह—यथेति। यथा वै लोके द्वे वा आमलके फले द्वे वा कोले बदरफले द्वौ वाऽक्षौ विभीतकफले मुष्टिरनुभवति व्याप्नोति मुष्टावन्तर्भवन्तीति यावत्। एवं यथादृष्टान्तं वाचं नाम च मनोऽनुभवति मनसाऽनुभवति मनसि अन्तर्भवतीति यावत्। इतोऽपि भूयस्त्वमित्याह—स यदेति। स पुरुषो यदा यस्मिन्काले मनसाऽन्तःकरणेन मनस्यति मनस्यनं विवक्षाबुद्धिं करोति। कथम्? मन्त्रान् अधीयीय उच्चारयेयमित्येवं विवक्षां कृत्वा अथानन्तरमधीते। तथा कर्माणि कुर्वीयेति चिकीर्षाबुद्धिं कृत्वाऽथ कुरुते। तथा पुत्रांश्च पशूंश्च इच्छेयेति प्राप्तीच्छां कृत्वाऽथ तत्प्राप्त्युपायानुष्ठानेन इच्छते पुत्रादीन् प्राप्नोतीति यावत्। तथा इमं च लोकममुं च परलोकमिच्छेय इच्छेयमिति तत्प्राप्त्युपायानुष्ठानेन अथेच्छते प्राप्नोति

अतो मनो ह्यात्मा। सत्येव मनस्यात्मनः कर्तृत्वादिसिद्धेः। मनो हि लोकास्तस्मिन् सत्येव लोकप्राप्त्युपायानुष्ठानसम्भवात्। तस्मान्मनो हि ब्रह्म यत एवं तस्मान्मन उपास्स्वेत्यादि समानम्॥ १, २॥

इति नवमे तृतीयः खण्डः॥ ३॥

सङ्कल्पो वाव मनसो भूयान्। यदा वै सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति। तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि॥ १॥

सङ्कल्पो विषयाणां कर्तव्याकर्तव्यविभागसमर्थनरूपान्तःकरणवृत्तिर्वात्र मनसो भूयान्। अत्र कार्यकारणभावहेतुमाह—यदेति। यदा वै सङ्कल्पयते इदं कर्तव्यमिदं नेत्येवं विषयान् विभजते। अथानन्तरं मनस्यति मन्त्रानधीयेत्याद्याकाङ्क्षाबुद्धिं करोति। अथ वाचमीरयते प्रेरयते। कुत्र? तां वाचम् उ उपमन्त्र नाम्नि नामसामान्यमात्रोच्चारणे निमित्तं तस्मिंश्च नाम्नि मन्त्रा ऋगादिलक्षणाः शब्दविशेषा एकं भवन्ति अन्तर्भवन्ति। विशेषाणां सामान्यान्तर्भावस्य प्रसिद्धत्वात्। मन्त्रेषु च कर्माण्येकं भवन्ति मन्त्रप्रकाशितानामेव तेषामुत्पत्तेः॥ १॥

अतः—

तानि ह वा एतानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पे प्रतिष्ठितानि। समक्लृपतां द्यावापृथिवी। समकल्पेतां वायुश्चाकाशं च। समकल्पन्तामापश्च तेजश्च। तेषाँ सङ्क्लृप्त्यै वर्षँ सङ्कल्पते। वर्षस्य सङ्क्लृप्त्या अन्नँ सङ्कल्पते। अन्नस्य सङ्क्लृप्त्यै प्राणाः सङ्कल्पन्ते। प्राणानाँ सङ्क्लृप्त्यै मन्त्राः सङ्कल्पन्ते। मन्त्राणाँ सङ्क्लृप्त्यै कर्माणि सङ्कल्पन्ते। कर्मणाँ सङ्क्लृप्त्यै लोकः सङ्कल्पते। लोकस्य सङ्क्लृप्त्यै सर्वँ सङ्कल्पते। स एष सङ्कल्पः सङ्कल्पमुपास्स्वेति॥ २॥

तानि ह वै एतानि मनआदीनि सङ्कल्पैकायनानि सङ्कल्प एवैकोऽयनं गमनं प्रलयो येषां तानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पस्वरूपाणि उत्पत्तौ सङ्कल्पे प्रतिष्ठितानि स्थितिकाले इत्यर्थः। इतोऽपि सङ्कल्पस्य भूयस्त्वमित्याह—समक्लृपतामिति। द्यौश्च पृथिवी च द्यावापृथिवी समक्लृपतां सङ्कल्पं कृतवत्याविव निश्चले

लक्ष्येते। तथा वायुश्चाकाशं चैतावपि समकल्पेतां सङ्कल्पं कृतवन्ताविव स्वेन रूपेण दृश्येते। तथा आपश्च तेजश्चैतान्यपि समकल्पेताम्। इतश्च तस्य महत्त्वमित्याह—तेषामिति। तेषां द्यावापृथिव्यादीनां सङ्क्लृप्त्यै सङ्क्लृप्तेः सङ्कल्पनिमित्तं वर्षं वृष्टिः सङ्कल्पते समर्थीभवति। तथा वर्षस्य सङ्क्लृप्त्यै सङ्कल्पनिमित्तमन्नं कल्पते समर्थीभवतीत्येतत् प्रसिद्धम्। अन्नस्य सङ्क्लृप्त्यै प्राणाः सङ्कल्पन्ते 'अन्नं दामे'ति श्रुतेः। प्राणानां सङ्क्लृप्त्यै तत्फलमन्त्राः सङ्कल्पन्ते प्राणवतामेव मन्त्राध्ययनदर्शनात्। मन्त्राणां सङ्क्लृप्त्यै तत्प्रकाशितानि कर्माणि फलदानाय सङ्कल्पन्ते। कर्मणां सङ्क्लृप्त्यै तत्फलभूतो लोकः कर्तृगामितया सङ्कल्पते। लोकसङ्क्लृप्त्यै सर्वं जगत् स्वरूपावैकल्याय सङ्कल्पते। यदिदं फलावसानं सर्वं जगत्, स एष सङ्कल्पः सङ्कल्पमूलत्वात्। अतः सङ्कल्पस्य महत्त्वात् सङ्कल्पमुपास्स्वेति ॥ २ ॥

तत्फलमाह—

स यः सङ्कल्पं ब्रह्मेत्युपास्ते क्लृप्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति। यावत् सङ्कल्पस्य गतं तत्रास्य यथाकामचारो भवति यः सङ्कल्पं ब्रह्मेत्युपास्ते। अस्ति भगवः सङ्कल्पाद्भूय इति। सङ्कल्पाद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥

स यः कश्चित्सङ्कल्पं ब्रह्मेत्युपास्ते स उपासकः क्लृप्तान् वै अस्येमे लोकाः फलमिति धात्रा सङ्कल्पितान् लोकान् ध्रुवान् अत्यन्ताध्रुवापेक्षया नित्यान् स्वयमपि सन् प्रतिष्ठितान् उपकरणसम्पन्नान् स्वयं प्रतिष्ठितः सन्। अव्यथमानान् अमित्रादिरहितान् स्वयमव्यथमानः सन्नभिसिद्ध्यति अभिप्राप्नोति। समानमन्यत् ॥ ३ ॥

इति नवमे चतुर्थः खण्डः ॥ ४ ॥

चित्तं वाव सङ्कल्पाद् भूयः। यदा वै चेतयतेऽथ सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति। नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥ तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि। तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद

यद्वा अयं विद्वान् वेत्थमचित्तः स्यादिति । अथ यद्यल्पविच्चित्त-वान् भवति तस्मा एवोत शुश्रूषन्ते । चित्तँ ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति ॥ २ ॥

चित्तं चेतयितृत्वं प्राप्ते वस्तुनीदं वस्त्वेवमिति तदनुरूपा तज्जातीया आगामिन्यपि तत्प्रयोजनत्वावधारणरूपा च चेतनाख्यवृत्तिमदन्तः-करणं वाव सङ्कल्पाद्भूयः । तत्साधयति—यदेति । यदा वै प्राप्तं वस्त्विद-मेवमिति चेतयते अथ तदा आदानायापि हानाय वा सङ्कल्पयते, अथ मनस्यतीत्यादि पूर्ववत् । इतः अपि तस्य वैशिष्ट्यमित्याह—तस्मादिति । यस्माच्चित्तं सङ्कल्पादिमूलं तस्माद्यद्यपि बहुविद् बहु-शास्त्रादिपरिज्ञानवानपि अचित्तो भवति उक्तचेतयितृत्वसामर्थ्यविहीनो भवति । तदाऽप्येनं नायमस्ति विद्यमानोऽप्यसत्सम एवेत्याहुर्निपुणाः । यदयं यच्चायं किञ्चिच्छास्त्रादि वेद श्रुतवांस्तदस्य वृथैव । कस्मात् ? यद्वै यद्ययं विद्वान् स्यादित्थमेवमचित्तो न स्यात् । अथ यदल्पविदपि चित्तवान् भवति तस्मै एव तदुक्तार्थग्रहणायैव उत अपि शुश्रूषन्ते श्रोतु-मिच्छन्ति । कस्माच्चित्तमेव हि यस्मादेषां सङ्कल्पादीनामेकमयन-मित्यादि पूर्ववत् ॥ १, २ ॥

स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति । यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्ते । अस्ति भगवश्चित्ताद् भूय इति । चित्ताद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥

स उपासकः चित्तवान् बुद्धिमद्गुणैः सचित्तान् लोकान् । समानमन्यत् ॥ ३ ॥

इति नवमे पञ्चमः खण्डः ॥ ५ ॥

ध्यानं वाव चित्ताद् भूयः । ध्यायतीव पृथिवी ध्यायतीवान्त-रिक्षं ध्यायतीव द्यौर्ध्यायन्तीवापो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्याः । तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादाँशा इवैव ते भवन्ति । अथ येऽल्पाः कलहिनः पिशुना उपवादिनस्ते । अथ ये प्रभवो ध्याना-

पादाँ्शा इवैव ते भवन्ति ध्यानमुपास्वेति ॥ १ ॥ स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्ते । अस्ति भगवो ध्यानाद् भूय इति । ध्यानाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

ध्यानं वाव शास्त्रोक्तदेवताद्यालम्बनः प्रत्ययसन्तानश्चित्ताद्भूयः चित्तस्य अनैकाग्रतादोषापहतस्य अतीतादिफलनिरूपणासामर्थ्यात् एकाग्रतारूपस्य ध्यानस्य चेतयितृत्वं प्रति कारणत्वात् । फलद्वाराऽपि तन्माहात्म्यमाह—ध्यायतीवेति । पृथिव्यादयो ध्यायन्तीवेति निश्चला दृश्यन्ते योगीव । सुखबोधमन्यत् । पुनरप्यन्वयव्यतिरेकाभ्यां तदाह—तस्मादिति । यस्माद्ध्यानं महत्त्वहेतुस्तस्माद्ये इहलोके मनुष्याणां मध्ये महतां धनैर्गुणैर्वा महत्त्वं प्राप्नुवन्ति धनादिं महत्त्वहेतुं लभन्ते त एव पुरुषाः ध्यानापादांशा ध्यानस्यापादनमनुष्ठानं तेन तत्फललाभो लक्ष्यते तस्यांशो येषामस्ति ते ध्यानापादांशा इव भवन्ति निश्चला इव लक्ष्यन्ते । अथ पुनर्ये स्वल्पाः क्षुद्राः किञ्चिदपि धनादिमहत्त्वैकदेशमप्राप्ताः ते पूर्वोक्तविपरीताः कलहिनः कलहशीलाः पिशुनाः परदोषोद्भासकाः उपवादिनः उप समीपमेव परदोषं वदितुं शीलं येषां ते उपवादिनश्च भवन्तीत्यर्थः । अथान्वयमुपसंहरति—अथेति । अथ धनादिनिमित्तमहत्त्ववशादन्यान् प्रति प्रभवन्तीति प्रभवो राजादयो ध्यानापादांशा इवैव ते भवन्तीत्याद्युक्तार्थम् ॥ १, २ ॥

इति नवमे षष्ठः खण्डः ॥ ६ ॥

विज्ञानं वाव ध्यानाद् भूयः विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेद्ँ् सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यँ्राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याँ् सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाँश्च मनुष्याँ्श्च पशूँ्श्च वयाँ्सि च तृणवनस्पतीञ्छ्वापदान्या-

कीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥ १ ॥

विज्ञानं शास्त्रार्थविषयं वाव ध्यानाद्भूयस्तस्य ध्यानकारणत्वात् विज्ञानस्य महत्त्वं साधयति—'विज्ञानेन वा ऋग्वेदं विजानाति' इत्यादिना 'विज्ञानमुपास्स्व' इत्यतः प्राक्तनेन। यस्यार्थज्ञानं ध्यानकारणं तदृग्वेदादिकं शास्त्रीयविज्ञानेनैव प्रमाणतया विजानाति। अन्यत् सर्वमृङ्वर्थम् ॥ १ ॥

स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकाञ्ज्ञानवतोऽभिसिद्ध्यति यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्ते। अस्ति भगवो विज्ञानाद् भूय इति। विज्ञानाद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

स य इति फलोक्तौ विज्ञानं शास्त्रविषयं ज्ञानमन्यविषयं नैपुणं तद्वतो लोकान् तद्वत्पुरुषयुक्ताँल्लोकान् स उपासकः अभिसिद्ध्यति प्राप्नोति समानमन्यत् ॥ २ ॥

इति नवमे सप्तमः खण्डः ॥ ७ ॥

बलं वाव विज्ञानाद् भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते। स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन् परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन् द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति। बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाँसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति ॥ १ ॥ स यो बलं ब्रह्मेत्युपास्ते यावद् बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्ते। अस्ति भगवो बलाद् भूय इति। बलाद्वाव

भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

बलमन्नोपभोगजनितं मनसो विज्ञेयप्रतिभानसामर्थ्यं वाव ज्ञानाद् भूयः । किञ्च—प्रत्यक्षं तस्य ततो भूयस्त्वमित्याह—अपि हेति । विज्ञानवतां शतमप्येकः बलवानाकम्पय चालयतीत्यतो विज्ञानाद् भूयस्त्वमत्र । तयोः कार्यकारणभावमुपपादयति—स यदेति । स पुरुषो यदा बली बलवान् भवत्यथ उत्थाता उत्थानस्य कर्ता भवति । उत्तिष्ठंश्च गुर्वादीनां परिचरिता शुश्रूषायाः कर्ता भवति । परिचरंस्तेषामुपसत्ता समीपगोऽन्तरङ्गः प्रियो भवति । उपसीदंश्च गुर्वादेर्द्रष्टा भवति । ततस्तदुक्तस्य श्रोता भवति । तत उपपत्तिभिस्तस्य मन्ता भवति । ततो बोद्धा तदुक्तस्य निश्चयवान्भवति । निश्चित्य तदुक्तार्थस्य कर्ताऽनुष्ठाता भवति । ततो विज्ञाताऽनुष्ठानस्य फलानुभविता भवतीत्यर्थः । तस्य माहात्म्यादपि भूयस्त्वमित्याह—बलेन पृथिवीति । तिष्ठतीत्यादि सुबोधम् ॥ १, २ ॥

इति नवमे अष्टमः खण्डः ॥ ८ ॥

अन्नं वाव बलाद् भूयः । तस्माद्यद्यपि दशरात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवति । अथाऽन्नस्यायै द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥ १ ॥

अन्नं वाव बलाद्भूयो बलहेतुत्वादित्यन्वयव्यतिरेकाभ्यां साधयति—तस्मादिति । यस्माद्बलस्यान्नं कारणं तस्माद्यद्यपि कश्चिद्दशरात्रीर्दशदिनानि नाश्नीयात्तर्हि प्रायेण म्रियते । अथवा यद्यदि उ अपि ह जीवेत्तदा अद्रष्टेत्यादि पूर्वविपरीतं सर्वं भवति । अथ यद्यन्नस्यायै इति वर्णव्यत्ययेन आयी आयश्च आगमनमन्नस्य प्राप्तिः, सा विद्यते यस्य आयी प्राप्तिमान्भवति । तदा द्रष्टेत्यादि समानम् ॥ १ ॥

फलमाह—

स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान् पानवतोऽभिसिद्ध्यति । यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्ते । अस्ति भगवोऽन्नाद् भूय इति । अन्ना-

द्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

स उपासकोऽन्नवतो बह्वन्नयुक्तान् पानवतो बहूदकयुक्तांश्च लोकानभिसिद्ध्यति । उभयोर्नित्यसम्बन्धात्पानग्रहणम् । समानमन्यत् ॥ २ ॥

इति नवमे नवमः खण्डः ॥ ९ ॥

आपो वाव अन्नाद् भूयः । तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीति । अथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीति आप एवेमा मूर्ता येयं पृथिवी यदन्तरिक्षं यद् द्यौर्यत्र पर्वता यद्देवमनुष्या यत्पशवश्च वयाँसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकमाप एवेमा मूर्ता अप उपास्स्वेति ॥ १ ॥ स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान् कामाँस्तृप्तिमान् भवति यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्ते । अस्ति भगवोऽद्भ्यो भूय इति । अद्भ्यो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

आपो वै अन्नाद्भूय अपामन्नकारणत्वादित्यन्वयव्यतिरेकाभ्यां साधयति — तस्मादिति । यस्मादेवं तस्माद्यदा यस्मिन्काले सुवृष्टिः शोभना वृष्टिर्न भवति तदा प्राणा व्याधीयन्ते । कुतः ? कनीयोऽल्पतरमन्नं भविष्यतीत्येतन्निमित्तात् । यदा सुवृष्टिः सस्यहिता भवत्यानन्दिनो हृष्टा भवन्ति । कुतः ? अन्नं बहु भविष्यतीति । सर्वजगदात्मकत्वादप्यपां भूयस्त्वमित्याह—आप इति । आप एवेमाः मूर्ता मूर्तिभेदाकारपरिणताः येयं पृथिवी । यदन्तरिक्षमित्यादि सर्वं समानम् ॥ १, २ ॥

इति नवमे दशमः खण्डः ॥ १० ॥

तेजो वाव अद्भ्यो भूयः । तद्वा एतद्वायुमागृह्याकाशमभितपति । तदाहुर्निशोचति नितपति वर्षिष्यति वा इति । तेज एव तत्पूर्वं दर्शयित्वाऽथाऽऽपः सृजते । तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्लादाश्चरन्ति । तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति ।

तेज एव तत्पूर्वं दर्शयित्वाऽथाऽऽपः सृजते । तेज उपास्स्वेति ॥ १ ॥

तेजो वै अद्भ्यो भूयः। तेजसोऽप्कारणत्वाद् भूयस्त्वमुपपद्यत इत्याह—तदिति। तद्वै एतत्तेजो वायुमागृह्यावष्टभ्य स्वात्मना निश्चलीकृत्य आकाशमभिव्याप्नुवद्यदा तपति तदा आहुर्लौकिकाः। किम्? निशोचति सन्तपति सामान्येन जगत् नितपति देहानतो वर्षिष्यति। वै प्रसिद्धमिति। तस्मात्तेज एव तदुक्तमुद्भूतं स्वस्वरूपं पूर्वं प्रथमं दर्शयित्वा अथ अनन्तरमपः सृजतेऽतस्तेजसो भूयस्त्वमित्यर्थः। विधान्तरेणापि तेजसोऽप्कारणत्वमाह—तदेतदिति। तदेतत्तेज ऊर्ध्वगाभिर्विद्युद्भिस्तिरश्चीभिश्च तिर्यग्गताभिश्च विद्युद्भिः सहाह्लादास्तनयित्नुशब्दाश्चरन्ति जायन्ते। तस्मादेतद्दर्शनाल्लौकिका आहुः। किम्? विद्योतते स्तनयत्यतो वर्षिष्यति। वै प्रसिद्धमिति। समानमन्यत् ॥ १ ॥

स यस्तेजो ब्रह्मेत्युपास्ते। तेजस्वी वै स तेजस्वतो लोकान् भास्वतोऽपहततमस्कानभिसिद्धयति। यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्ते। अस्ति भगवस्तेजसो भूय इति। तेजसो वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

स य इति फलोक्तौ तेजस्वी स उपासकस्तेजस्वतो बाह्यतेजस्वतो भास्वतोऽन्तःप्रकाशवतोऽत एवापहततमस्कान् अपनीतबाह्याध्यात्मिकान् ज्ञानादितमस्कान् लोकान् अनभिसिद्ध्यतीत्यादि समानम् ॥ २ ॥

इति नवमे एकादशः खण्डः ॥ ११ ॥

आकाशो वाव तेजसो भूयान्। आकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निः। आकाशेनाह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशे न रमत आकाशे जायत आकाशमभि जायत। आकाशमुपास्स्वेति ॥ १ ॥

आकाशो भूताकाशो वाव तेजसो वायुसहिताद् भूयान्। वायुमागृह्येत्यनेन सतेजसो वायोरुक्तत्वान्न तस्य पृथग्वक्तव्यत्वमित्यर्थः। भूयस्त्वं साधयति—आकाश इति। आकाशे आकाशान्तर्वर्तिनौ वै सूर्याचन्द्रमसौ विद्युन्नक्षत्राण्यग्निरित्येतानि तेजोरूपाणि यच्च यदन्त-

र्वर्ति तत्ततोऽल्पमिति प्रसिद्धेर्युक्तं तस्य ततो भूयस्त्वमित्यर्थः। इतश्चास्त्याकाशस्य भूयस्त्वमित्याह—आकाशेनेति। आकाशेनाह्वयति आह्वानं करोति। आहूतश्चाकाशेन शृणोति शृण्वतोक्तं चाऽन्य आकाशेन प्रतिशृणोति। सर्वोऽपि लोक आकाशे रमते क्रीडत्यन्योन्यम्। तथा आकाशे न रमते च बन्ध्वादिवियोगे सति। आकाशे जायते उत्पद्यते न मूर्तेनावष्टब्धे। तथा आकाशमभिलक्ष्य अङ्कुरादि जायते न प्रतिलोममित्यर्थः॥ १॥

स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान् प्रकाशवतोऽसम्बाधानुरुगायवतोऽभिसिद्ध्यति। यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्ते। अस्ति भगव आकाशाद् भूय इति। आकाशाद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति॥ २॥

स य इत्यादिफलोक्तौ आकाशवतो वै स उपासको लोकान् प्रकाशवतश्च लोकान् असम्बाधान् अन्योन्यपीडारहितान् उरुगायवतो विस्तीर्णगतिमतो लोकानभिसिद्ध्यतीत्यादि समानम्॥ २॥

इति नवमे द्वादशः खण्डः॥ १२॥

कार्यकारणभावेन उत्तरोत्तरं व्यापकमुक्त्वा इदानीं निमित्तनैमित्तिकभावेन तदाह—

स्मरो वाव आकाशाद् भूयः। तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव ते कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन्। यदा वाव ते स्मरेयुरथ मन्वीरन्नथ विजानीरन्। स्मरेण वै पुत्रान् विजानाति स्मरेण पशून्। स्मरमुपास्स्वेति॥ १॥ स यः स्मरं ब्रह्मेत्युपास्ते यावत् स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्ते। अस्ति भगवः स्मराद् भूय इति। स्मराद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति॥ २॥

स्मरणं स्मरोऽन्तःकरणधर्मो वै आकाशाद् भूयो लिङ्गव्यत्ययेन भूयानित्यर्थः। भूयस्त्वमन्वयव्यतिरेकाभ्यां साधयति—तस्मादिति। यस्मात्स्मरणभूयस्त्वं तस्माद्यद्यपि बहवः पुरुषा एकत्रासीरन् उपविशुः

ते तत्रासीना न स्मरन्तश्चेत्स्युस्तर्हि तेऽन्योन्यं भाषितमपि कञ्चन शब्दं न वै नैव शृणुयुः। तथा मन्तव्यं विज्ञातव्यं वा यदि ते न स्मरन्तश्चेत्स्युस्तदा न मन्वीरन् न विजानीरन्। यदा वाव ते पुरुषाः श्रोतव्यादि स्मरेयुः। अथ तदा शृणुयुरथ मन्वीयुरथ विजानीरन्नित्यर्थः। किञ्च स्मरेण स्मरणेन वै ममैते पुत्रा इति पुत्रान्विजानात्यतः स्मरस्य भूयस्त्वात् स्मर-मुपास्वेत्याद्युक्तार्थम् ॥ १ .

इति नवमे त्रयोदशः खण्डः ॥ १३ ॥

आशा वाव स्मराद् भूयसी। आशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्राँश्च पशूँश्चेच्छत इमं च लोकममुं चेच्छते। आशामुपास्स्वेति ॥ १ ॥

आशाऽप्राप्तवस्त्वाकाङ्क्षा वाव स्मराद्भूयसी। कुतः ? आशाया वै अन्तःकरणस्थया इद्धो वर्धित आशाविषयं स्मरन्स्मरो भवति। स्मर-भूतश्च सन् ऋगादीन्मन्त्रानधीते, अधीत्य तदर्थं च बुद्ध्वा कर्माणि कुरुते, तत्फलभूतांश्च पुत्रान्पशूंश्चेच्छते, तत्साधनान्यनुतिष्ठति। इमञ्च-अमुञ्च लोकमिच्छते इहामुत्र लोकेच्छया क्रमेण लोकसङ्ग्राहकपार-लौकिकानि कर्माण्यनुतिष्ठति आशेद्धः सन्नित्यर्थः ॥ १ ॥

स य आशां ब्रह्मेत्युपास्त आशयाऽस्य सर्वे कामाः समृद्ध्यन्त्य-मोघा हास्याशिषो भवन्ति। यावदाशाया गतं तत्रास्य यथाकाम-चारो भवति य आशां ब्रह्मेत्युपास्ते। अस्ति भगव आशाया भूय इति। आशाया वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

स य इति फलोक्तौ आशया ब्रह्मत्वेनोपासितया अस्योपासकस्य सर्वे कामाः समृद्ध्यन्ति समृद्धिं गच्छन्ति। अमोघाः सफला ह अस्योपासक-स्याशिषः प्रार्थना भवन्तीत्यर्थः ॥ २ ॥

इति नवमे चतुर्दशः खण्डः ॥ १४ ॥

प्राणो वा आशाया भूयान्। यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वँ समर्पितम्। प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति। प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥ १ ॥

प्राणो वै सर्वजगद्विधारकः सूत्रभूत आराधा भूयान्। तद्दृष्टान्तेन समर्थयते—यथेति। यथा लोके रथचक्रस्यारा नाभौ रथचक्रपिण्डिकायां समर्पिताः प्रोता एवं यथादृष्टान्तमस्मिँल्लिङ्गव्यष्टिसमुदायरूपे मुख्ये प्राणेऽध्यात्मादिरूपेणावस्थिते जीवत्वोपाधिभूते सर्वं यथोक्तं नामाद्याशान्तम् आशापाशविपाशितस्मृतिनिमित्तसद्भावं जगत्समर्पितमित्यर्थः। एतदुक्त्युक्तं प्राणस्य सर्वात्मकत्वं साधयति—प्राण इति। प्राणः प्राणेन स्वशक्त्यैव याति स्वतन्त्रत्वात्। प्राणः प्राणं स्वात्मानमेव प्राणाय स्वात्मने एव ददाति अप्राणस्य दातृत्वाद्यसंभवात्। तथा प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥ १ ॥

कथमेतदित्यतः पित्रादिशब्दानां प्राणविषयत्वमन्वयव्यतिरेकाभ्यामाह—

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाचार्यं वा ब्राह्मणं वा किञ्चिद् भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः। पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥

स कश्चिद्यदि पित्रादीनां मध्येऽन्यतमं प्रति भृशमिव किञ्चित् त्वंकारादियुक्तं वचनमाह प्रयुञ्ज्यात् तदैनं पार्श्वस्थास्त्वा त्वां धिगस्त्वित्याहुः कथयेयुः। कुतः? पितृहा पितृहन्ता वै त्वमसि। समानमन्यत् ॥ २ ॥

अथ यद्यप्येनानुत्क्रान्तप्राणान् शूलेन समासं व्यतिषन्दहेन्नैवैनं ब्रूयुः पितृहासीति न मातृहासीति न भ्रातृहासीति न स्वसृहासीति नाचार्यहासीति न ब्राह्मणहासीति ॥ ३ ॥

अथैनान् पित्रादीनुत्क्रान्तप्राणांस्त्यक्तदेहान् यद्यपि शूलेन प्रसिद्धेन कृत्वा समासं समस्य पुञ्जीकृत्य व्यतिषं व्यत्यस्य अवयवान्विभज्य सन्दहेत् भस्मीकुर्यात् तथाऽप्येनं क्रूरमपि कर्म कुर्वाणं नैव ब्रूयुः पितृहासीत्यादि। समानमन्यत् ॥ ३ ॥

प्राणो ह्येवैतानि सर्वाणि भवति। स वा एष एवं पश्यन्नेवं मन्वान एवंविजानन्नतिवादी भवति। तं चेद् ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥ ४ ॥

अतः प्राणो ह्येवैतानि पित्रादीनि सर्वाणि भूतानि। तस्मात्प्राणो भूयानित्यर्थः। एतद्विज्ञानस्य फलमाह—स वा इति। स वै एष प्राणविदेवं यथोक्तप्रकारेण प्रथमं वाक्यतो विजानन् तत एनं यथोक्तान्वयव्यतिरेकाख्योपपत्त्या मन्वानश्चिन्तयन् पश्चादेवं यथोक्तं सर्वात्मकं प्राणं पश्यन् अनुभवन् साक्षात्कुर्वन्नतिवादी भवति नामाद्याशान्तं जगदतीत्य वदनशीलो भवति। तमतिवादिनं ब्रह्मादिस्तम्बपर्यन्तस्य जगतः प्राणात्माऽहमिति ब्रुवाणं चेद्यदि त्वमतिवाद्यस्यत्युक्तिमान् भवसीति केचिद् ब्रयुस्तर्हि बाढमतिवाद्यस्मीति ब्रूयात् नापह्नवीत अपलापं न कुर्यात्तत्करणे हेत्वभावादित्यर्थः॥ ४॥

इति नवमे पञ्चदशः खण्डः॥ १५॥

सर्वातिशयः प्राण एव नातः परमस्तीति प्रश्नकरणादुपरतं नारदं मत्वा सनत्कुमारो मिथ्याज्ञानात् प्रच्यावयन्नाह—

एष तु वा अतिवदति यः सत्येनातिवदति। सोऽहं भगवः सत्येनातिवदनानीति। सत्यं त्वेव विजिज्ञासितव्यमिति। सत्यं भगवो विजिज्ञास इति॥ १॥

तुशब्दः प्राणविदतिवादित्वपक्षनिरासार्थः। एष वै एव अतिवदति यः सत्येन सर्वातिक्रान्तभूमाख्यपरमार्थसत्यविज्ञानवत्तया अतिवदति। प्राणविदस्तु नामाद्यपेक्षयाऽतिवादित्वं न निरङ्कुशम्। तर्हि सोऽहं भगवस्त्वत्तोऽहं सत्यं विजिज्ञासे विशेषेण ज्ञातुमिच्छेयमित्यर्थः॥ १॥

इति नवमे षोडशः खण्डः॥ १६॥

एवमुक्तो गुरुराह—

यदा वै विजानात्यथ सत्यं वदति। नाविजानन् सत्यं वदति। विजानन्नेव सत्यं वदति। विज्ञानं त्वेव विजिज्ञासितव्यमिति। विज्ञानं भगवो विजिज्ञास इति॥ १॥

यदा वै सदेव भूमाख्यं परमार्थतः सत्यं ततोऽन्यदनृतमिति विजानाति अथातः तदैव सत्यं वदतीत्यर्थः। एतदेव अन्वयव्यतिरेकाभ्यां साधयति—नाविजानन्निति। उक्तपरमार्थसत्यं नाविजानन् सत्यं वदति। किन्तु विजानन्नेव सत्यं वदत्यतो विज्ञानं त्वेव तदर्थं विजिज्ञासितव्यमित्युक्ते नारद आह विज्ञानं भगवो विजिज्ञास इत्यर्थः॥ १॥

इति नवमे सप्तदशः खण्डः॥ १७॥

एवमुक्तो ज्ञानस्यापि कारणं गुरुरुपदिशति–

यदा वै मनुतेऽथ विजानाति । नामत्वा विजानाति । मत्वैव विजानाति । मतिस्त्वेव विजिज्ञासितव्येति । मतिं भगवो विजिज्ञास इति ॥ १ ॥

मतिर्मननं मन्तव्यविषयम् । समानमन्यत् ॥ १ ॥

इति नवमे अष्टादशः खण्डः ॥ १८ ॥

एवमुक्तो ज्ञानस्यापि तस्य कारणपरम्परामुपदिशति–

यदा वै श्रद्दधात्यथ मनुते । नाश्रद्दधन् मनुते । श्रद्दधदेव मनुते । श्रद्धा त्वेव विजिज्ञासितव्येति । श्रद्धां भगवो विजिज्ञास इति ॥ १ ॥

श्रद्धा आस्तिक्यबुद्धिस्तां करोतीति श्रद्दधातीत्यादि समानम् ॥ १ ॥

इति नवमे एकोनविंशः खण्डः ॥ १९ ॥

यदा वै निस्तिष्ठत्यथ श्रद्दधाति । नानिस्तिष्ठञ्छ्रद्दधाति । निस्तिष्ठन्नेव श्रद्दधाति । निष्ठा त्वेव विजिज्ञासितव्येति । निष्ठां भगवो विजिज्ञास इति ॥ १ ॥

निस्तिष्ठति निष्ठा गुरुशुश्रूषादिः ॥ १ ॥

इति नवमे विंशः खण्डः ॥ २० ॥

यदा वै करोत्यथ निस्तिष्ठति । नाकृत्वा निस्तिष्ठति । कृत्वैव निस्तिष्ठति । कृतिस्त्वेव विजिज्ञासितव्येति । कृतिं भगवो विजिज्ञास इति ॥ १ ॥

करोति कृतिरिन्द्रियसंयमश्चित्तैकाग्रताकरणं च ॥ १ ॥

इति नवमे एकविंशः खण्डः ॥ २१ ॥

यदा वै सुखं लभतेऽथ करोति । नासुखं लब्ध्वा करोति । सुखमेव लब्ध्वा करोति । सुखं त्वेव विजिज्ञासितव्यमिति । सुखं भगवो विजिज्ञास इति ॥ १ ॥

यदा वै सुखं भूमाख्यं वक्ष्यमाणं लभते लब्धव्यं मयेति मन्यते। अथ तदा तदुद्देशे करोति। समानमन्यत्॥ १॥

इति नवमे द्वाविंशः खण्डः॥ २२॥

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति। भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति। भूमानं भगवो विजिज्ञास इति॥ १॥

यो वै भूमा महान्निरतिशयस्तत्सुखम्। यतो भूम्नोऽर्वाक् सातिशयत्वादल्पं तस्मिन्नल्पे सुखं नास्त्यल्पस्य अधिकतृष्णाहेतुत्वात्। अतः परमार्थाख्यो भूमैव सुखम्। तस्माद्भूमा त्वेव विजिज्ञासितव्य इत्यादि समानम्॥ १॥

इति नवमे त्रयोविंशः खण्डः॥ २३॥

तल्लक्षणमाह—

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा। अथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम् यो। वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्। स भगवः कस्मिन् प्रतिष्ठित इति। स्वे महिम्नि यदि वा न महिम्नीति॥ १॥

तत्र यस्मिन्भूम्नि तत्त्वेऽन्यद् द्रष्टव्यमन्येन करणेनान्यो द्रष्टा न पश्यति। तथा नान्यच्छृणोति नान्यद्विजानाति स भूमा। एतच्चेतरेन्द्रियव्यापारनिषेधोपलक्षणपरम्। तथा च सकलसांसारिकव्यवहाराभावोपलक्षितं तत्त्वं भूमेति लक्षणार्थः। अथ यत्राविद्याविषये अन्योऽन्येन अन्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं परिच्छिन्नमविद्याकालभावि स्वप्नदृश्यवत्। यो वै भूमा तदमृतमविनाशी। अथ यदल्पं तन्मर्त्यं विनाशीत्यर्थः। सुखत्ववचनाद्भूम्न आश्रयं पृच्छति—स इति। स एवं लक्षणो भूमा हे भगवो भगवन् कस्मिन्प्रतिष्ठित इति पृष्ट आह—स्वे महिम्नीति। स्वे आत्मीये महिम्नि विभूतौ प्रतिष्ठितो भूमा यदि प्रतिष्ठामिच्छसि भूम्नः क्वचित्। यदि वा परमार्थमेव पृच्छसीति न महिम्न्यपि प्रतिष्ठित इति ब्रूमोऽप्रतिष्ठितोऽनाश्रितो भूमा क्वचित्॥ १॥

यदि क्वचित्प्रतिष्ठामिच्छसि तर्हि स्वे आत्मीये महिम्नीत्युक्तमित्यतस्तस्य स्वस्वरूपमात्रविषयत्वान्न स्वरूपातिरिक्तनिषेध विषयप्रसिद्धमहिमविषयत्वमित्याह—

गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्या-

यतनानीति नाहमेवं ब्रवीमि । ब्रवीमीति होवाचान्यो ह्यन्यस्मिन् प्रतिष्ठित इति ॥ २ ॥

गावश्चाश्वश्च गोअश्वमिह लोके महिमेत्याचक्षते लौकिकास्तथा हस्तिहिरण्यं दासभार्यं क्षेत्राणि आयतनानि च प्रसिद्धानि महिमेत्याचक्षते । तदाश्रितस्तत्प्रतिष्ठितश्च चैत्रो यथा भवति एवं स्वतोऽन्यमहिमानमाश्रितो भूमेति नाहं ब्रवीमि । अत्र व्यवहितसम्बन्धमाश्रित्य हेतुमाह—अन्यो ह्यन्यस्मिन्प्रतिष्ठित इति । भूम्नि तु स्वतोऽन्यत्वाभावादित्यर्थः । तर्हि कथं ब्रवीमीत्यत आह—ब्रवीमीति । एवं ब्रवीमीति ह किल सनत्कुमारो होवाचेत्यर्थः ॥ २ ॥

इति नवमे चतुर्विंशः खण्डः ॥ २४ ॥

कथमित्यपेक्षायामाह—

स एवाधस्तात् स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदँ सर्वमिति । अथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदँ सर्वमिति ॥ १ ॥

यतः स भूमैव अधस्तात्स उपरिष्टात्स पुरस्तात्स दक्षिणतः स उत्तरतः वर्तते अतः स एव भूमैवेदं सर्वं तद्व्यतिरेकेण अन्यस्याभावात् । तस्मान्नासौ क्वचित्प्रतिष्ठित इत्यप्रतिष्ठितत्वे हेतुरुक्तो भवतीत्यर्थः । यत्र नान्यत् पश्यतीत्यधिकरणाधिकर्तव्यनिर्देशात् स एवाधस्तादिति च परोक्षनिर्देशात् द्रष्टुर्जीवादन्यो भूमेति शङ्का मा भूदिति भूमानमेव अहमात्मना निर्दिशति—अथात इति । अनन्तरमहमित्येवमाकारेण भूमा आदिश्यते निर्दिश्यत इत्यहङ्कारादेशः । समानमन्यत् ॥ १ ॥

अहमिति सङ्घातोऽप्यविवेकिभिर्निर्दिश्यते । अतस्तस्यात्मत्वशङ्कां वारयितुमाह—

अथात आत्मादेश एव आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदँ सर्वमिति । स वा एष एवंपश्यन्नेवंमन्वान एवंविजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति

तस्य सर्वेषु लोकेषु कामचारो भवति । अथ येऽन्यथाऽतो विदु रन्यराजानस्ते क्षय्यलोका भवन्ति । तेषाँ सर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥

अथ अनन्तरं आत्मनैव केवलेन शुद्धेन सत्स्वरूपेणाऽऽदिश्यत इत्यादेशः । समानमन्यत् । इदं सर्वमात्मैवेति पश्यतो जीवन्मुक्तस्य फलमाह—स वा इति । स वै एष विद्वान्मननविज्ञानाभ्यां तर्कोपदेशिकरूपाभ्यामेवं यथावद् भूमानं पश्यन् साक्षादनुभवन्नात्मन्येव रमणं यस्येत्यात्मरतिः । तथाऽऽत्मक्रीडः देहमात्रसाधना रतिः बाह्यसाधना क्रीडा, लोके स्त्रीभिः सखिभिश्च क्रीडतीति दर्शनात् । साऽप्यात्मन्येव यस्य स तथा । मिथुनं द्वन्द्वजनितं सुखं तदपि द्वन्द्वनिरपेक्षमात्मन्येव यस्य स तथा । शब्दादिनिमित्त आनन्दोऽविदुषां न तथाऽस्य विदुषः । किं तर्हि ? आत्मज्ञाननिमित्तमेवेत्यर्थः । अथ विदेहमुक्तिमाह—स स्वराडिति । स विद्वान्पतिते देहे स्वराड् भवति । तस्य स्वराड्भावमापन्नस्य सर्वेषु लोकेषु कामचारो यथेच्छाचारो भवतीत्यर्थः । एवं फलोक्तिद्वारा विद्वांसं स्तुत्वा अविद्वन्निन्दाद्वाराऽपि तं स्तौति—अथेति । अथ पुनर्ये अत उक्तदर्शनादन्यथा वैपरीत्येन विदुस्ते अन्यराजानोऽन्यः परो राजा स्वामी येषां तेऽन्यराजानः क्षय्यलोकाः क्षयिष्णुलोकाश्च भवन्ति । अत एतेषामविदुषां सर्वेषु लोकेष्वकामचारो न यथेच्छाचारो भवतीत्यर्थः ॥ २ ॥

इति नवमे पञ्चविंशः खण्डः ॥ २५ ॥

विद्यास्तुत्यर्थमेव विदुषः स्रष्टृत्वमाह 'तस्य ह वा एतस्य इत्यारभ्य सर्वमि'ति इत्यन्तेन—

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशात्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्प आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदँ सर्वमिति ॥ १ ॥

तस्य प्रकृतस्योक्तदर्शनादिमतो ह वै एतस्य स्वाराज्यप्राप्तस्य विदुष आत्मतः स्वात्मनः सकाशादेव प्राणादेर्नामान्तस्योत्पत्त्यादिरभूत् । क्रीडादि-सर्वमपि, व्यवहारजातं चेति । समानमन्यत् ॥ १ ॥

ब्राह्मणोक्ते विद्याफले मन्त्रमपि संवादयति--

तदेष श्लोको न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताँ सर्वँ ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति । स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतं च दश चैकश्च सहस्राणि च विँशतिः । आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः । तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान् सनत्कुमारः। ताँ स्कन्द इत्याचक्षते ताँ स्कन्द इत्याचक्षते ॥ २ ॥

तत्तस्मिन् ब्राह्मणोक्तेऽर्थे एष वक्ष्यमाणः श्लोकः मन्त्रो भवति । पश्यतीति पश्यो यथोक्तदर्शी विद्वान्मृत्युं मरणं न पश्यति न रोगं पश्यति न उत अपि दुःखतां दुःखभावं च पश्यति । पश्यो विद्वान्सर्वं ह सर्वमेवात्मानं पश्यति । अतः सर्वशः सर्वप्रकारेण सर्वमाप्नोति पूर्णो भवतीति यावदिति । किञ्च-स विद्वान्सृष्टेः प्रागेकधा भवति । सृष्टिकाले पुनस्त्रिधादि भवति । संहारकाले पुनरेकश्च भवतीत्येवं स्वतन्त्र इत्यर्थः । अथास्य विद्याया अवभासहेतुभूतान्तःकरणस्य शुद्धिसाधनमुपदिशति — आहारशुद्धाविति । भोक्तुर्भोगाय आह्रियते इत्याहारः शब्दादिविषयविज्ञानं तस्य शुद्धी रागद्वेषादिदोषैरसंस्पर्शस्तस्यामाहारशुद्धौ सत्त्वस्यान्तःकरणस्य शुद्धिर्विमलता। सत्त्वशुद्धौ सत्यां यथाऽवगते भूम्नि ध्रुवाऽनवच्छिन्ना स्मृतिः स्मरणं लभ्यते । स्मृतिलाभे च सति सर्वेषामविद्याक्लृप्ताशेषानर्थपाशरूपाणां ग्रन्थीनां रागादीनां हृदयाश्रयाणां विप्रमोक्षो विशेषेण प्रमोक्षणं विनाशो भवतीत्यर्थः । अथाख्यायिकां श्रुतिः स्वमुखेनैवोपसंहरति—तस्मा इति । तस्मै नारदाय मृदितो विनाशितो ज्ञानवैराग्यादिद्वारेण कषायो रागद्वेषादिलक्षणो यस्य स मृदितकषायस्तस्मै मृदितकषायाय तमसोऽविद्यालक्षणात्पारं परमार्थतत्त्वं भगवानुत्पत्त्यादि-

वेत्ता सनत्कुमारो दर्शयति दर्शितवान् । तमेव सनत्कुमारं स्कन्दः कार्तिकेय इत्याचक्षते कथयन्ति तद्विदः । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥ २ ॥

इति नवमे षड्विंशः खण्डः ॥ २६ ॥

॥ इति छान्दोग्यब्राह्मणे नवमः प्रपाठकः ॥

सद्विद्याविग्रहादनेकमहिमत्रय्यादिविद्याविदो
ह्यासीच्छोकमहार्णवे निपतनं श्रीनारदस्याप्यृषेः ।
यं भूमानमवाप्य तत्क्षणमभूच्छोकार्णवोत्तारणं
प्राणान्ते सदृशा (?) मगम्यममलं तं नौमि सिंहाननम् ॥१॥

इति श्रीपरमहंसपरिव्राजकाचार्य-श्रीपुरुषोत्तमाश्रमपूज्यपादशिष्य-
नित्यानन्दाश्रमविरचितायां छान्दोग्योपनिषद्व्याख्यायां
मिताक्षरायां सप्तमोऽध्यायः ॥ ७ ॥

---

॥ अथ अष्टमोऽध्यायः ॥

दिग्देशगतिशून्यं परमार्थसदद्वयं ब्रह्म सदेकमेवाद्वितीयम्, आत्मैवेदं सर्वमिति च षष्ठसप्तमयोरधिगमितमुत्तममध्यमाधिकारिणोः इदानीं मन्दाधिकारिणां देशादिभेदवदेव वास्तवमिति बुद्धिर्न शक्यते सहसा तादृग्ब्रह्मविषया कर्तुम् । अतस्ते तावन्मार्गस्था भवन्तु । ततः शनैः परमार्थसदपि ग्राहयिष्यामीति मन्यमाना तद्बुद्ध्यनुरोधेनैव हृदयपुण्डरीकदेशः सत्यादिगुणजातं मूर्धन्या नाड्या गतितत्साधनविशेषा ब्रह्मचर्यादयश्च उपदेष्टव्या इत्यष्टमाध्यायात्मिका श्रुतिः प्रवर्तते—

ॐ । अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ॥ १ ॥

अथोत्तममध्यमबुद्धीन् प्रति निर्विशेषब्रह्मोपदेशानन्तरं मन्दबुद्धीन् प्रति सविशेषं ब्रह्मोपदिश्यत इत्यर्थः । तत्र तावदुपास्यस्यायतनं निर्दिशति—यदिदमिति । अस्मिन्प्रत्यक्षे ब्रह्मोपलब्धिहेतुत्वाद् ब्रह्मणः सदाख्यस्य पुरमिव पुरं शरीरं ब्रह्मपुरं तस्मिन् ब्रह्मपुरे शरीरे यदिदं प्रसिद्धं दहरमल्पं पुण्डरीकं पुण्डरीकसदृशं वेश्मेव वेश्म हृदयमेव अस्मिन् वेश्मन्यन्तर्मध्ये दहरः सूक्ष्म आकाश इवाशरीरत्वादाकाशोऽव्याकृताख्यस्तस्मिन्नाकाशे ब्रह्मणि यदन्तर्मध्ये वक्ष्यमाणं द्यावापृथिव्यादिरूपं तत्तेनाकाशाख्येन आश्रयेण सहान्वेष्टव्यं शास्त्राद्युपायैरन्विष्य च तद्वाव तदेव साश्रयं द्यावापृथिव्यादि विजिज्ञासितव्यं साक्षात्करणीयमित्यर्थः । यद्वा तस्मिन् हृदयपुण्डरीके दहराकाशे ब्रह्म तदन्वेष्टव्यम् । समानमन्यत् ॥ १ ॥

अस्य यथाश्रुतमर्थं गृहीत्वा चोद्यं श्रुतिरुत्थापयति—

तं चेद् ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयात् ॥ २ ॥

तमेवमुक्तवन्तमाचार्यं चेद्यदि अन्तेवासिनो ब्रयुश्चोदयेयुः। कथम्? यदिदमस्मिन्नुक्तार्थे ब्रह्मपुरे दहरं पुण्डरीकं वेश्मास्मिंस्ततोऽपि दहरोऽल्पतर आकाशोऽन्तः किं तदत्राकाशे वर्तते यदन्वेष्टव्यम्? यद्वाव विजिज्ञासितव्यम्? न किञ्चन विद्यते इत्यर्थः। अत्राचार्यं श्रुतिर्नियोजयति—स ब्रूयादिति। स आचार्यस्तं प्रति ब्रूयात् ॥ २ ॥

यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः। उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते। उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमिति ॥ ३ ॥

अन्तःकरणोपाधिवशाद्दहरोऽपि सन् स्वतस्तु यावद्वै परिमाणतः प्रसिद्धोऽयं भौतिक आकाशस्तावानेषोऽन्तर्हृदय आकाशः। अस्मिंश्च बुद्ध्युपाधिके ब्रह्माकाशे अन्तरेव मध्ये एवोभे द्यौश्च पृथिवी च द्यावापृथिवी समहिते सम्यगाहिते स्थिते। तथा उभावग्निश्च वायुश्च सूर्याचन्द्रमसौ उभौ विद्युन्नक्षत्राणि च समाहिताविति प्रत्येकं सम्बध्यते। तथा यच्च वस्त्वस्यात्मनो देहवतः आत्मीयत्वेनेह लोके वर्तमानमस्ति यच्च नष्टं भविष्यच्च वस्त्वात्मीयत्वेन नास्ति तत्सर्वमस्मिन् हृद्याकाशे ब्रह्मणि समाहितं वर्तत एवेति नासदित्यर्थः ॥ ३ ॥

अत्रापि शङ्कासमाधाने अवतारयति—

तं चेद् ब्रूयुरस्मिँश्चेदिदं ब्रह्मपुरे सर्वँ समाहितँ सर्वाणि च तानि सर्वे च कामा यदैनज्जरा वाप्नोति प्रध्वँसते वा किं ततोऽतिशिष्यत इति ॥ ४ ॥

तमेवमुक्तवन्तमाचार्यमन्तेवासिनश्चेद् ब्रुयुः। किम्? अस्मिन्ब्रह्मपुरे देहे तदुपलक्षितान्तराकाशे ब्रह्माख्ये चेद्यदिदं सर्वं द्यावापृथिव्यादि समाहितं सर्वाणि च स्थावरजङ्गमानि भूतानि सर्वे च कामाः काम्यमाना विषयाः समाहितस्तर्हि यदा यस्मिन्काले एतच्छरीरं जरा वा

वलीपलितादिलक्षणा आप्नोति प्राप्नोति शस्त्रादिना वृक्णं प्रध्वंसते वा विस्रंसते विनश्यति ततो देहनाशात्तदाश्रितं हृदयपुण्डरीकवर्ति ब्रह्मापि नश्यत्येवेति किमतिशिष्यतेऽवशिष्यते। न किञ्चिदप्यवशिष्यत इत्यर्थः ॥ ४ ॥

एवमन्तेवासिभिश्चोदिते—

स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते। एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिताः। एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः। यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥ ५ ॥

स आचार्यो ब्रूयात्। किम्? अस्य देहस्य जरयैतद्यथोक्तमन्तराकाशाख्यं ब्रह्म न जीर्यति देहवन्न विक्रियते। नाप्यस्य शरीरस्य वधेन शस्त्रादिघातेन एतद् ब्रह्म हन्यते आकाशवत्। यदेतद् ब्रह्मैव पुरं ब्रह्मपुरं सत्यमवितथमत एवास्मिन् ब्रह्मपुरे आत्मनि बहिः प्रार्थ्यमानाः कामाः समाहिताः। एषः चोक्त आकाशो भवतामात्मा स्वरूपम्। तल्लक्षणमाह—अपहतपाप्मेति। अपहतः पाप्मा धर्माधर्माख्यो यस्य सोऽयमपहतपाप्मा। तथा विजरो विगतज्वरो विमृत्युर्विगतमृत्युर्विशोको विगतः शोक इष्टादिवियोगनिमित्तो मानसतापो यस्य स तथा विजिघत्सो विगताशनेच्छः अपिपासः पिपासा पानेच्छा सा न विद्यते यस्य स तथा, पानेच्छारहितः, सत्यकामोऽवितथकामस्तद्धेतुभूताः सङ्कल्पा अपि सत्या यस्यासौ सत्यसङ्कल्प इत्यर्थः। एतादृगात्मस्वरूपाऽज्ञाने पुण्यफलक्षयोऽस्वातन्त्र्यञ्चेति वक्तुं तावदस्वातन्त्र्ये दृष्टान्तमाह—यथा हीति। यथा ह्येवेह लोके यथा राज्ञोऽनुशासनं तथा प्रजा अन्वाविशंत्यन्वागच्छन्ति प्राप्नुवन्ति। किम्? यं यमन्तं प्रदेशमभिकामा अर्थिनो भवन्ति तं तमेवेत्यर्थः। एतदेव विवृणोति—यं जनपदं देशं यं क्षेत्रभागं वार्थिनो भवन्ति तं तमेव जनपदं क्षेत्रभागमुपजीवन्ति उपभुञ्जत इत्यर्थः ॥ ५ ॥

अथ पुण्यफलक्षये दृष्टान्तमाह—

तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते। तद्य इहात्मानमननुविद्य व्रजन्त्येताँश्च सत्यान् कामाँ-

स्तेषाँ सर्वेषु लोकेष्वकामचारो भवति । अथ य इहात्मानमनुविद्य व्रजन्त्येताँश्च सत्यान् कामाँस्तेषाँ सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥

तत्तत्र दृष्टान्तो यथेह लोके तासामेव स्वाम्यनुशासनानुवर्तिनीनां सेवादिकर्मजितो लोको भोगः क्षीयते एवं यथादृष्टान्तमेवामुत्र परलोकेऽप्यग्निहोत्रादिपुण्यकर्मजितो लोकः क्षीयत इत्यर्थः । एतद्दोषद्वयं केषामित्यतस्तद्विषयं दर्शयन् उक्तकामचारदृष्टान्तस्य दार्ष्टान्तिकमाह—य इति । तत्रैवं सतीह लोके ये आत्मानं यथोक्तलक्षणमननुविद्य यथोपदेशमनु स्वसंवेद्यतामकृत्वा एतान् यथोक्तानात्मस्थान् कामांश्चाननुविद्य व्रजन्त्यस्माद्देहात् प्रयन्ति । तेषाम् अविदुषां सर्वेषु लोकेष्वकामचारोऽस्वतन्त्रता भवति, राजानुशासनानुवर्तिनीनां प्रजानामिवेत्यर्थः । अथ विदुषां फलमाह—अथेति । अथ ये पुनरिह लोके आत्मानं यथावदनुविद्य तत्स्थान् सत्यान् कामांश्चानुविद्य व्रजन्ति अस्माद्देहात्प्रयन्ति तेषां सर्वेषु लोकेषु कामचारो भवति राज्ञ इवेत्यर्थः ॥ ६ ॥

इति दशमे प्रथमः खण्डः ॥ १ ॥

कामचारत्वमेव दर्शयति—

स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति । तेन पितृलोकेन सम्पन्नो महीयते ॥ १ ॥

स यथोक्तो विद्वांस्त्यक्तदेहो यदि पितृलोककामः पितरो जनयितारस्ते एव सुखहेतुत्वेन भोग्यत्वाल्लोकास्तेषु कामः सम्बन्धेच्छा यस्य भवति तस्य सङ्कल्पादेव पितरो मानसा एव समुत्तिष्ठन्त्यात्मसम्बन्धितामापाद्यन्ते । तेन पितृलोकेन सम्पन्नः समृद्धो महीयते वर्धते पूज्यते वा, महिमानमनुभवतीत्यर्थः ॥ १ ॥

अथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति । तेन मातृलोकेन सम्पन्नो महीयत ॥ २ ॥ अथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति । तेन भ्रातृलोकेन सम्पन्नो महीयते ॥ ३ ॥ अथ यदि स्वसृलोककामो भवति सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति । तेन स्वसृलोकेन सम्पन्नो महीयते ॥ ४ ॥ अथ

यदि सखिलोककामो भवति सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति । तेन सखिलोकेन सम्पन्नो महीयते ॥ ५ ॥ अथ यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतः । तेन गन्धमाल्यलोकेन सम्पन्नो महीयते ॥ ६ ॥ अथ यद्यन्नपानलोककामो भवति सङ्कल्पादेवास्यान्नपाने समुत्तिष्ठतः । तेनान्नपानलोकेन सम्पन्नो महीयते ॥ ७ ॥ अथ यदि गीतवादितलोककामो भवति सङ्कल्पादेवास्य गीतवादिते समुत्तिष्ठतः । तेन गीतवादितलोकेन सम्पन्नो महीयते ॥ ८ ॥ अथ यदि स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्तिः । तेन स्त्रीलोकेन सम्पन्नो महीयते ॥ ९ ॥

एवमेव प्रसिद्धार्थमात्रादिपर्याया व्याख्येयाः ॥ २—९ ॥

यथोक्तेष्वेव कामचारत्वशङ्कां वारयितुमाह—

यं यमन्तमभ कामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति । तेन सम्पन्नो महीयते ॥ १० ॥

यं यमन्तं प्रदेशं प्रत्यभिकामो भवति यं च कामं काम्यमुक्तपित्रादेरन्यदपि कामयते स कामः प्रदेशश्चास्य विदुषः सङ्कल्पादेव समुत्तिष्ठति । तेन सङ्कल्पमात्रात्समुत्थेन कामादिसम्पन्नः महीयत इत्युक्तार्थम् ॥ १ ॥

इति दशमे द्वितीयः खण्डः ॥ २ ॥

यथोक्तात्मध्यानसाधनानुष्ठानं प्रति साधकानामुत्साहजननार्थमनुक्रोशन्ती श्रुतिराह—

त इमे सत्याः कामा अनृतापिधानास्तेषाँ सत्यानाँ सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥ १ ॥

ते इमे आत्मस्थाः कामा अनृतमपिधानमिव अपिधानं येषां तेऽनृतापिधानाः । एतदेव स्पष्टयति—तेषामिति । तेषामात्मस्थानामेव सतां सत्यकामानाम् अमृतं मिथ्याभूतं स्त्र्यादितृष्णया यथेच्छाचारत्वलक्षणमपिधानमाच्छादकम् । कथमेतदवगम्यत इत्यत आह—यो यो हीति ।

हि यस्मादस्याविदुष इष्टः पुत्रो भ्राता इतोऽस्माल्लोकात्प्रैति म्रियते तमिष्टं हृदयाकाशे विद्यमानमपीहलोके पुनर्दर्शनायेच्छन्नपि न लभते ॥ १ ॥

अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दते। अत्र ह्यस्यैते सत्याः कामा-अनृतापिधानाः। तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥ २ ॥

अथ पुनर्ये चास्य विदुष इहलोके जीवाः जीवन्ति ये च प्रेताः सम्बन्धिनो यच्चान्यद् वस्त्रान्नादीहलोके इच्छन्न लभते तत्सर्वमत्र हृदये ब्रह्मणि गत्वा विन्दते लभते इत्युक्तं निगमयति– अत्र हीति। हि यस्मादत्र हार्दाकाशे अस्य विदुषः एते कामाः सत्या एव वर्तन्ते अतोऽवगम्यते अनृतापिधाननिमित्तमेवैषाम् अविद्यावस्थायामलाभो विद्यावस्थायां तदभावेन लाभस्योक्तत्वादित्यर्थः। सतामप्यलाभं दृष्टान्तेनाह–तद्यथेति। तत्र दृष्टान्तो यथा –लोकेऽपि हिरण्यनिधिं निक्षेपं निहितं भूमेरधस्तान्निक्षिप्तमक्षेत्रज्ञाः निधिक्षेत्रमजानन्तो निधेरुपर्युपरि सञ्चरतोऽपि निधिं न विन्देयुः। एवमेव यथादृष्टान्तमेव सर्वा अविद्यावत्यः अहरहः प्रत्यहं सुषुप्तिकाले एतं हार्दाख्यं ब्रह्मैव लोकं गच्छन्त्योऽपि प्राप्नुवन्त्योऽपि न विन्दन्ति न लभन्ते। कुतः? अनृतेन मिथ्याज्ञानकृततृष्णाभेदेन प्रत्यूढाः स्वरूपाद्बहिः कृताः। अतः कष्टमिदं यत्स्वायत्तमपि ब्रह्म न लभ्यते इति भावः ॥ २ ॥

नामादाविव हृदये ब्रह्मदृष्ट्या आरोपमात्रमिति शङ्कां वारयति–

स वा एष आत्मा हृदि तस्यैतदेव निरुक्तँ हृदयमिति। तस्माद्धृदयमहरहर्वा एवंवित् स्वर्गं लोकमेति ॥ ३ ॥

स वै अपहतपाप्मेति प्रकृत एष आकाशशब्दवाच्य आत्मा हृदि हृदयपुण्डरीके वर्तत एव। कथमवगम्यत इत्यत आह––तस्येति। तस्य-तस्य हृदयब्रह्मण एतदेव निरुक्तं निर्वचनम्। किम्? हृदयमात्मा वर्तत इति। यस्मादेवं तस्मात् हृदयमिति हृदयनामनिर्वचनप्रसिद्ध्या तत्रास्तीत्यवगम्यत इति भावः। आत्मावगतिफलमाह–अहरिति।

एवंवित् हृदयमात्मेति जानन् अहरहः प्रत्यहं स्वर्गं लोकं हार्दं ब्रह्मेति प्रतिपद्यते ॥ ३ ॥

अथ विदुषो मुक्त्यालम्बनं ब्रह्म तादात्म्येन स्तोतुमाह—

अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते। एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥ ४ ॥

अथ विवेकानन्तरं य एष प्रकृतः सम्प्रसादः सुषुप्तौ स्वेनाऽऽत्मना सता सम्पन्नः सन् सम्यक् प्रसीदतीति सम्प्रसादो विद्वानस्माच्छरीरात् समुत्थायेमं देहं हित्वा शरीरात्मभावनां परित्यज्य परं परमात्मलक्षणं ज्योतिर्ज्ञप्तिरूपमुपसम्पद्य साक्षादुपगम्य स्वेनात्मीयेन रूपेणाभिनिष्पद्यते। एष युष्माकमात्मेति आचार्योऽन्तेवासिभ्यो होवाच। किञ्च—एतदात्मतत्त्वममृतं भूमरूपम् अत एवाभयम् अत एव ब्रह्म। तस्मादुपासनार्हमिति भावः। अथोपासनाविधिस्तुत्यर्थमुपास्यब्रह्मनाम निर्दिशति—तस्येति। तस्य ह वै एतस्य ब्रह्मणो नामाभिधानं किम्? सत्यमिति ॥ ४ ॥

उपास्यस्तुत्यर्थं नामाक्षराण्याह—

तानि ह वा एतानि त्रीण्यक्षराणि सतीयमिति। तद्यत्सत् तदमृतमथ यत्ति तन्मर्त्यम्। अथ यद्यं तेनोभे यच्छति। यदनेनोभे यच्छति। तस्माद्यमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥ ५ ॥

तानि ह वै एतानि त्रीणि ब्रह्मणो नामाक्षराणि। कानि? सतीयमिति। सकारस्तकारोऽयमिति। तकारे ईकारोऽनुबन्ध उच्चारणार्थः। तेषामवान्तरभेदमाह—तदिति। तत्र तेषु नामाक्षरेषु मध्ये यत्सकारस्तदमृतम्। तकारनिर्देशस्तु सकारस्य सद्ब्रह्मामृतवाचकत्वेन अमृतत्वसाधनार्थः। अथ यत्ति तकाराक्षरस्तन्मर्त्त्यम्। अथ यद्यं यकाराक्षरं तेन यकाराक्षरेण उभे पूर्वे अमृतमर्त्त्याख्येअक्षरे यच्छक्त्युपासको नियमयति वशीकरोति। कुतः? यद्यस्मादनेन यकारेणोभे सकारतकाराख्ये अक्षरे यच्छति तस्माद्यमित्यर्थः। उपासनाफलमाह—अहरहरिति। एवं ब्रह्मनामनिर्वचनेन नामवतो वेत्ता एवंवित्। शेषमुक्तार्थम् ॥ ५ ॥

इति दशमे तृतीयः खण्डः ॥ ३ ॥

उक्तं संप्रसादस्वरूपभूतं ब्रह्म पुनर्गुणैः ब्रह्मचर्यसाधनसम्बन्धार्थं स्तौति—

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतँ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतँ सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ॥ १ ॥

अथशब्दः प्रकारान्तरेण स्तुतिप्रारम्भार्थः। य उक्तलक्षण आत्मा स सेतुरिव सेतुः। तद्वद्विधृतिः विधारणः सर्वस्य जन्तोर्वर्णाश्रमादिभेदवतो विधारकः। किमर्थम्? एषां भूरादिलोकानामसंभेदाय अविदारणाय विनाशायेत्यर्थः। सेतुस्वरूपमाह—नैतमिति। एतं सेतुमात्मानमहोरात्रे न तरतः परिच्छेदकरणेन नातिक्रामतो न प्राप्नुवतः। अत एव न जरा न मृत्युर्न शोको न सुकृतं धर्मो न दुष्कृतमधर्मस्तरतीति प्रत्येकं सम्बद्ध्यते। किं बहुना, सर्वे अहोरात्राद्या उक्ता अनुक्ताश्च पाप्मानः अतः सदाख्यादात्मनो निवर्तन्ते तमप्राप्यैवेत्यर्थः। अत्र हेतुमाह—अपहतपाप्मा हीति। हि यस्मादेव ब्रह्मव लोको ब्रह्मलोकोऽपहतो गतः पाप्मा धर्माधर्मौ यस्मादित्यपहतपाप्मेत्यर्थः॥ १॥

तस्माद्वा एतँ सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति। तस्माद्वा एतँ सेतुं तीर्त्वाऽपि नक्तमहरेवाभिनिष्पद्यते। सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥ २ ॥

यस्मादान्ध्यादि शरीरवत एव तस्मात्सेतुप्राप्तेः पूर्वं शरीरसम्बन्धात् अन्धोऽपि सन् वै एतं सेतुं तीर्त्वा प्राप्य अनन्धो भवति। तथा पूर्वं विद्धो दुःखादिसम्बन्धी सन् देहवियोगात् सेतुं प्राप्य अविद्धो भवति। तथैव पूर्वमुपतापी रोगाद्युपतापवान् सन्ननुपतापी भवति। किञ्च—यस्माद् ब्रह्मण्यहोरात्रे न स्तः तस्माद्वै एतं सेतुं तीर्त्वा प्राप्य नक्तं तमोरूपम् अहरेवात्मज्योतिरेव अभिनिष्पद्यते सम्पद्यते। अत्र हेतुमाह—सकृदिति। हि यस्मादेष ब्रह्मैव लोकः सकृत्सदा विभातः स्वेनरूपेण भासमानोऽवतिष्ठत इत्यर्थः॥ २॥

एतत्फलं विद्याबलेन केषां सिद्ध्यतीत्यपेक्षायामाह—

तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्म-लोकस्तेषाँ सर्वेषु लोकेषु कामचारो भवति ॥ ३ ॥

तत्तत्रैवं सति ये एवैतं यथोक्तं ब्रह्मलोकं ब्रह्मचर्येण स्त्रीविषय-तृष्णात्यागेन उपदेशादनुविन्दन्ति स्वसंवेद्यतामापादयन्ति तेषामेवैष ब्रह्मलोको नान्येषामित्यर्थः । उक्तफलमुपसंहरति—तेषामिति । तेषां ब्रह्मचर्यवतां ब्रह्मविदां सर्वेषु लोकेषु कामचारो भवतीत्युक्तार्थम् ।। ३ ।।

इति दशमे चतुर्थः खण्डः ॥ ४ ॥

ब्रह्मचर्यं विदधती यज्ञादिभिस्तं स्तौति—

अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत्। ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दते। अथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तत् ब्रह्मचर्येण ह्येवेष्ट्वात्मानमनुविन्दते ॥ १ ॥

ब्रह्मचर्यस्योक्तरीत्या विविदिषितत्वे तदीयस्तुतिप्रारम्भार्थोऽथशब्दः । यद्यज्ञः पुरुषार्थसाधनमाचक्षते कथयन्ति तद्विदस्तद्ब्रह्मचर्यमेव । कुतः ? यज्ञो ब्रह्मचर्यफलेऽन्तर्भवतीत्यपेक्षायां यज्ञफलस्य ब्रह्मचर्यवतो लाभा-दित्याह—ब्रह्मचर्येण हीति । हि यस्माद्यो ज्ञाता ब्रह्मचर्येणैवात्मनो ज्ञानात् तमात्मभूतं ब्रह्मलोकं विन्दते । तथाऽथ यदिष्टमीश्वराराधनमित्याचक्षते ब्रह्मचर्यमेव तत् । कुतः ? ब्रह्मचर्येणैव हि यस्मादीश्वरमिष्ट्वा पूजयित्वा आत्मविषयामेषणां वा कृत्वा आत्मानमनुविन्दते ॥ १ ॥

अथ यत्सत्रायणमित्याचक्षते ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येव सतं आत्मनस्त्राणं वन्दते। अथ यन्मौनमित्याचक्षते ब्रह्मचर्य-मेव तत् । ब्रह्मचर्येण ह्येवात्मानमनुविद्य मनुते ॥ २ ॥

अथ यत्सत्रायणं बहुयजमानकं कर्माचक्षते ब्रह्मचर्यमेव तत् । कुतः ? एष ह्यात्मानं रक्षयति । अथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तत्, ब्रह्मचर्येण ह्येवात्मानमुपदेशादनुविद्य मनुते मननं ध्यानं करोति ।। २ ।।

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तत् । एष ह्यात्मा

न नश्यति यं ब्रह्मचर्येणानुविन्दते । अथ यदरण्यायनमित्या-
चक्षते ब्रह्मचर्यमेव तत् । तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके
तृतीयस्यामितो दिवि तदैरंमदीयँ सरस्तदश्वत्थः सोमसवन-
स्तदपराजिता पूर्ब्रह्मणः प्रभुविमितँ हिरण्मयम् ॥ ३ ॥

अथ यदनाशकायनम् उपवासपरायणत्वमित्याचक्षते ब्रह्मचर्यमेव तत् । कुतः ? एष ह्यात्मा न नश्यति यमात्मानं ब्रह्मचर्येणानुविन्दते । अथ यदरण्यायनम् अरण्यावास इत्याचक्षते ब्रह्मचर्यमेव तत् । अत्र वक्ष्यमाणयोः अरण्ययोरयनादिति हेतूक्तिमभिप्रेत्य ब्रह्मचर्यसहकृत-विद्यासाध्यफलमाह—अरश्चेति । इतोऽस्माल्लोकादारभ्य तृतीयस्यां तृतीय-त्वेन व्यवस्थितायां दिवि द्युलोकाख्ये ब्रह्मलोके अरश्च ण्यश्च ह वै प्रसिद्धौ अर्णवौ समुद्रौ वर्तेते तत्तत्र ब्रह्मलोके ऐरम् इरान्नं तन्मय ऐरो मण्ड-स्तेनपूर्णमैरंमदीयं तदुपयोगिनां मदकरं दर्पोत्पादकं सरोऽस्ति । तत्तत्र ब्रह्मलोके अश्वत्थो वृक्षः सोमममृतं स्रवतीति सोमसवनो नामतो वा । तत्रैषा परैर्ब्रह्मचर्यवद्भ्योऽन्यैर्न जीयते इत्यपराजिता नाम पूः पुरी हिरण्यगर्भस्य वर्तते । तत्रैव च प्रभुणा ब्रह्मणा विमितं निर्मितं हिरण्मयं सौवर्णमयं मण्डपमिति शेषः ॥ ३ ॥

तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति ।
तेषामेवैष ब्रह्मलोकः । तेषाँ सर्वेषु लोकेषु कामचारो भवति ॥४॥

तत्तत्रैव चैतौ अर्णवौ यौ अरं च ण्यं चेत्यरण्याख्यावुक्तौ तौ ये ब्रह्मचर्येणानुविन्दन्ति । अतेषामेव एष व्याख्यातो ब्रह्मलोकः, तेषामेव च सर्वेषु लोकेषु कामचारो भवतीत्युक्तार्थम् ॥ ४ ॥

इति दशमे पञ्चमः खण्डः ॥ ५ ॥

अथ ब्रह्मचर्यादिसाधनसम्पन्नस्य यथोक्तहृदयब्रह्मोपासकस्य मूर्धन्या नाड्या गतिं वक्तुमाह—

अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति
शुक्लस्य नीलस्य पीतस्य लोहितस्येति । असौ वा आदित्यः
पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः ॥ १ ॥

अधिकारिणः सफलोपास्तिविधानानन्तर्यमथशब्दार्थः। या एताः वक्ष्यमाणा हृदयस्य हृदयपुण्डरीकाकारस्य सम्बन्धिन्यो नाड्यस्ताः पिङ्गलस्येति। षष्ठ्यत्र तृतीयार्थे। वर्णतः पिङ्गलेन अणिम्ना सूक्ष्मान्नरसेन अर्थात्पूर्णास्तिष्ठन्ति तदाकारा वर्तन्ते। तथा शुक्लस्य शुक्लेन नीलस्य नीलेन पीतस्य पीतेन लोहितस्य लोहितेन अणिम्ना रसेन पूर्णास्तिष्ठन्तीति प्रत्येकं सम्बन्धद्योतनार्थ इतिशब्दः। नाडीगतरसानामेतादृग्वर्णवैचित्र्यं तु तादृगादित्यतेजःसम्बन्धादिति वक्तुं तावदादित्यस्य तादृग्वर्णवत्त्वमाह—असौ वा आदित्यः पिङ्गल इत्यादिना। एतच्छास्त्रादादित्यस्य एतद्वर्णवत्त्वमभ्युपेयमित्यर्थः॥ १॥

अस्य नाडीसम्बन्धं दृष्टान्तेनाह—

तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं च। अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः तेऽमुष्मिन्नादित्ये सृप्ताः॥ २॥

तत्तत्र दृष्टान्तो लोके महान्विस्तीर्णः पन्था महापथ आततो व्याप्त उभौ ग्रामौ गच्छति। उभौ कौ? इमं च सन्निहितममुं च विप्रकृष्टमित्युभौ। एवं यथादृष्टान्तमेवैताः प्रसिद्धा आदित्यरश्मय इमं पुरुषममुं चादित्यमुभौ उभयत्र गच्छन्ति प्रविष्टा इत्यर्थः। एतदेव प्रकटयति—अमुष्मादिति। या रश्मयोऽमुष्मात् आदित्यमण्डलात् प्रतायन्ते सन्तता भवन्ति ताः, रश्मय आसु यथोक्तास्वध्यात्मनाडीषु सृप्ताः गताः प्रविष्टाः। ये चाभ्यो नाडीभ्यः प्रतायन्ते प्रवृत्ताः सन्तानभूतास्ते रश्मयोऽमुष्मिन्नादित्ये सृप्ता गता इत्यर्थः॥ २॥

उक्तरूपाणां नाडीनां विज्ञानमयस्य स्वोपाधिकरणत्वेन स्तुत्यर्थं स्वापमाह—

तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति। तेजसा हि तदा सम्पन्नो भवति॥ ३॥

तत्तत्रैवं सति यत्र यस्मिन्काले एतत्स्वप्नं यथा स्यात्तथा सुप्तः समस्तः सामस्त्येन उपसंहृतसर्वकरणवृत्तिरतः सम्प्रसन्नः सम्यक् प्रसन्नोऽत एव स्वप्नं स्वप्नप्रत्ययं न विजानाति नानुभवति तदाऽसौ जीवो यथोक्तासु नाडीषु सृप्तः प्रविष्टः नाडीद्वारा पूर्वोक्तं हृदयाकाशं सदाख्यं

प्राप्तो भवतीति यावत्। तं सता सम्पन्नं कञ्चन कश्चिदपि पाप्मा धर्माधर्मरूपः न स्पृशति। कुतः? हि यस्मात्तदा सुषुप्तौ तेजसा नाड्यन्तर्गतेन सौरेण परमात्माख्येन वा सम्पन्नः सर्वतो व्याप्तो भवति॥ ३॥

एवं स्तुतनाडीद्वारा गमनं वक्तुं मरणकालं प्रसञ्जयति—

अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति। स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति॥ ४॥

नाडीभिरूर्ध्वगमनप्रदर्शनार्थोऽथशब्दः। यत्र यस्मिन्काले अबलिमानमबलभावं देहस्य जरादिनिमित्तं कृशीभावमेतत् नयनं यथा स्यात्तथा नीतः प्रापितो भवति। तं मुमूर्षुमभितः सर्वतो वेष्टयित्वा आसीना उपविष्टाः ज्ञातय आहुः। किम्? जानासि मां पुत्रं जानासि पितरमिति च। स मुमूर्षुर्यावदस्माच्छरीरात् अनुत्क्रान्तोऽनिर्गतो भवति तावज्जानाति॥ ४॥

अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते। स ओमिति वा होद्वा मीयते। स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति। एतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम्॥ ५॥

अथ प्रारब्धक्षयानन्तरं यत्र यस्मिन् काले एतदुत्क्रमणं यथा स्यात्तथास्माच्छरीरादुत्क्रामति। अथ तदैतैरेव नाडीषु प्रसृतादित्यरश्मिभिरेव ऊर्ध्वमाक्रमते। स यथोक्तदहरविज्ञानसम्पन्न आत्मानम् ओमित्योङ्कारेण मरणकालेऽपि ध्यायन् वा ह एव उत् ऊर्ध्वं वा मीयते गच्छति। अविद्वांस्तु तिर्यग्गच्छतीत्यभिप्रायो वाशब्दादवगम्यते। स उत्क्रमिष्यन् विद्वान् यावद्यावता कालेन मनः क्षिपेन्मनसः क्षेपः स्यात्तावता कालेन क्षिप्रमेव गच्छति प्राप्नोति। किमर्थमित्यतः आह—एतदिति। एतद्वै खलु प्रसिद्धं ब्रह्मलोकस्य द्वारमतो विदुषां प्रपदनं प्रपद्यते ब्रह्मलोकमनेनादित्यलक्षणद्वारेणेति प्रपदनं ब्रह्मलोकप्राप्तिसाधनमविदुषां त्वस्मादादित्यान्निरोधो निरोधनमादित्यप्राप्तिरपि न भवतीत्यर्थः॥ ५॥

तदेष श्लोकः। शतं चैका च हृदयस्य नाड्यस्तासां मूर्धान-

मभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति ॥ ६ ॥

उक्तनाडीविभागे मन्त्रं संवादयति—वदति । तत्तत्रोक्तेऽर्थे एष श्लोको भवति । हृदयस्य नाड्यः शतं चैका चैकोत्तरशतं प्रधानभूताः तासां नाडीनां मध्ये एका नाडी मूर्धानमभिलक्ष्य निःसृता निर्गता । तया नाड्या ऊर्ध्वमायन् गच्छन्नमृतत्वम् अमृतत्वभावमेति प्राप्नोति । विष्वङ् नानागतयोऽन्या नाड्यः उत्क्रमणे उत्क्रान्त्यर्थं संसारप्राप्त्यर्थमेव भवन्ति । द्विरभ्यासो नाडीप्रकरणस्य दहरविद्याप्रकरणस्य वा समाप्त्यर्थः ॥ ६ ॥

इति दशमे षष्ठः खण्डः ॥ ६ ॥

अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्येत्याद्युक्तः सम्प्रसादः कः, केन वा साधनेन तस्य परमात्माधिगमः, अधिगम्यमानश्च परमात्मा किंरूपः, कथं वा तस्य चागमः ? इत्येतान् प्रश्नान्निर्णेतुं तावत्प्रजापतिवाक्यमनुवदति—

य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः । स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥ १ ॥

अपहतपाप्मादिविशेषणकहृदयस्थो ब्रह्मचर्याद्युपलब्धिसाधनक उक्तः । स आत्माऽन्वेष्टव्य उपदेशतोऽन्विष्य स विजिज्ञासितव्यः स्वसंवेद्यतामापादयितव्यः । तत्फलमाह—सर्वांश्च लोकानिति । उक्तार्थम् ॥ १ ॥

विद्याया ग्रहणविधिप्रदर्शनार्थं स्तुत्यर्थं वा आख्यायिकामारचयति—

तद्धोभये देवासुरा अनुबुबुधिरे । ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामानिति । इन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥

तदेतदुक्तं प्रजापतेर्वचनं ह किल उभये देवा असुरा अनु परम्परया स्वकर्णगोचरापन्नं बुबुधिरे अनुबुद्धवन्तः । ते देवा असुरा ह अन्योन्यं

परिषदि ऊचुः ।' किम् ? हन्त यद्यनुमतिर्भवतां भवेत्तर्हि प्रजापतिनोक्तं तमात्मानमन्विच्छामोऽन्वेषणं कुर्मो यमात्मानमन्विष्य सर्वांश्च कामानाप्नोतीत्युक्त्वा इन्द्रो ह देवानां राजा एवं विरोचनश्चासुराणां राजाऽपि सन् प्रजापतिं प्रत्यभिप्रवव्राज प्रगतवान् । कथम् ? तौ हेन्द्रविरोचनौ असंविदानौ संविदानं मैत्रीमकुर्वाणावेव समित्पाणी समिद्भारहस्तौ प्रजापतिसकाशं समीपमाजग्मतुरागतवन्तौ ॥ २ ॥

तौ ह द्वात्रिँ शतं वर्षाणि ब्रह्मचर्यमूषतुः । तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति । तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः । स सर्वाँ श्च लोकानाप्नोति सर्वाँ श्च कामान् यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते । तमिच्छन्ताववास्तमिति ॥ ३ ॥

तौ हेन्द्रविरोचनौ गत्वा द्वात्रिंशतं वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्यमूषतुरुषितवन्तौ । तौ आगतौ इन्द्रविरोचनौ प्रति ह प्रजापतिरुवाच— किमिच्छन्तौ किंप्रयोजनमभिप्रेत्य इच्छन्तौ अवास्तमुषितवन्तौ । इत्येवमुक्तौ इन्द्रविरोचनौ होचतुः । किम् ? य अपहतपाप्मेत्यादि भगवतो वचो वचनं वेदयन्ते शिष्टा अतस्तमेवंभूतमात्मानं ज्ञातुमिच्छन्तौ । अवास्वेति वक्तव्ये अवास्तमिति प्रजापतिवचनानुकर्षणमात्रम् ॥ ३ ॥

तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति । अथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति । एष उ एवैषु सर्वेष्वेतेषु परिख्यायत इति होवाच ॥ ४ ॥

तावेवमुक्तवन्तौ इन्द्रविरोचनौ प्रति ह प्रजापतिरुवाच । किम् ? य एषोऽक्षिणि पुरुषो द्रष्टा योगिभिः दृश्यते एष आत्माऽपहतपाप्मादिगुणत्वेनोक्त एतदात्मतत्त्वममृतं भूमाख्यमत एवाभयमत एव ब्रह्मेत्येवमुक्तौ प्रजापतिना । अथशब्दः प्रश्नार्थः । हे भगवो योऽयमप्सु परिख्यायते परि समन्तात् ख्यायते यश्चायमादर्शे आत्मनः प्रतिबिम्बाकारः परिख्यायते खड्गादौ च एष एषां मध्ये भगवतोक्तः आत्मा कतमः किमन्यतरः किं वा सर्वेष्वेक एवेति पृष्टः प्रजापतिर्यश्चक्षुषि द्रष्टा दृश्यते इत्युक्त एष

स्वहृदयस्थः उ एवात्मा सवषु यथोक्तेष्ववादिषु सर्वेष्वन्तेषु मध्येषु परिख्यायते दृश्यत इति ह प्रजापतिरुवाचेत्यर्थः ॥ ४ ॥

इति दशमे सप्तमः खण्डः ॥ ७ ॥

अथ प्रजापतिस्तयोर्विपरीतग्रहणनिवृत्त्युपायमुपदिशति—

उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति । तौ होदशरावेऽवेक्षाञ्चक्राते । तौ ह प्रजापतिरुवाच किं पश्यथ इति । तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति ॥ १ ॥

उदशरावे उदकपूर्णे शरावे उदकपूर्णशरावादौ आत्मानमवेक्ष्य यत्तत्रात्मानं पश्यन्तौ न विजानीथो युवां तन्मे मम प्रब्रूतं मां चक्षीयाथामिति । उक्तौ तौ ह तथैवोदशरावेऽवेक्षाञ्चक्राते अवेक्षणं चक्रतुः । तथाकृतवन्तौ तौ ह प्रजापतिरुवाच । किं पश्यथ ? इत्येवं प्रजापतिना पृष्टौ ताविन्द्रविरोचनौ होचतुः । किम् ? हे भगवो यथा आवां नखलोमादिमन्तौ स्तः तथैवाऽऽवाम् आलोमभ्यो लोमाभिव्याप्य तथा आनखेभ्य इदं प्रतिरूपं प्रतिबिम्बभूतं सर्वमेवात्मानं पश्यावः ॥ १ ॥

इत्युक्तवन्तावनिवृत्तविपरीतग्रहणौ—

तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति । तौ ह साध्वलङ्कृतौ । सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते । तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥ २ ॥

तौ प्रजापतिस्तन्निवृत्त्यर्थं पुनरप्युवाच । किम् ? युवां साध्वलङ्कृतौ साधु सुष्ठुनालङ्कारेण तौ सुवसनौ सुष्ठुवस्त्रपरिष्कृतौ छिन्नलोमनखौ च भूत्वा उदशरावे पुनरवेक्षेथामित्युक्तौ तथैव कृतवन्तावित्याह । तौ ह साध्वलङ्कृतावित्युक्तार्थेन तथा कृतवन्तौ तौ ह प्रजापतिरित्येवमुक्तार्थः पूर्ववत् ॥ २ ॥

तौ होचतुर्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्वलङ्कृतौ सुवसनौ

परिष्कृतावित्येष आत्मेति । होवाचैतदमृतमभयमेतद्

ब्रह्मेति । तौ ह शान्तहृदयौ प्रवव्रजतुः ॥ ३ ॥

तौ होचतुः । किम्? हे भगवः आवां साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व इतीदमुदाहरणं यथा एवमेवेमौ प्रतिबिम्बौ साध्वलङ्कृतौ सुवसनौ परिष्कृतावित्येवं विपरीतमेवोक्तवन्तौ । प्रजापतिस्तु स्वाभिप्रेतमेवात्मानं एष आत्मेति होवाच एतदमृतमभयमेतद् ब्रह्मेत्येवं विपरीतग्रहणनिवृत्त्यर्थमुक्तवानपि केनचिद्दोषेण प्रतिबद्धौ तौ ह इन्द्रविरोचनौ क्रमेण छायातद्धेतुशरीरयोः क्रमेणात्मत्वं गृहीत्वा शान्तहृदयौ तुष्टहृदयौ कृतार्थबुद्धी प्रवव्रजतुः जग्मतुः ॥ ३ ॥

तौ हान्वीक्ष्य प्रजापतिरुवाच अनुपलभ्यात्मानमननुविद्य

व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते

पराभविष्यन्तीति । स ह शान्तहृदय एव विरोचनोऽसुरा

ञ्जगाम । तेभ्यो हैतामुपनिषदं प्रोवाचात्मैवेह महय्य आत्मा

परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाव-

वाप्नोतीमं चामुं चेति ॥ ४ ॥

तौ ह इन्द्रविरोचनौ दूरं गच्छन्तौ अन्वीक्ष्य अपहतपाप्मादिवचनवदेतदप्यनयोः श्रवणगोचरमेष्यतीति मत्वा प्रजापतिरुवाच । किम्? अनुपलभ्य यथोक्तमात्मानं शास्त्राचार्याभ्यामज्ञात्वाऽननुविद्य स्वप्रत्यक्षतां चाकृत्वा विपरीतनिश्चयौ भूत्वा एताविन्द्रविरोचनौ व्रजतः गच्छेयाताम् । अतो यतरे ये केचन देवा असुरा वा एतदुपनिषद् आभ्यां या गृहीतात्मविद्या छायातदाश्रयदेहविषया सेयमुपनिषद्येषां देवानामसुराणां वा ते तदुपनिषद एवंविज्ञाना एतन्निश्चया भविष्यन्ति ते पराभूता भविष्यन्तीत्युक्तं प्रजापतिवाक्यं श्रुत्वा स्वगृहं गच्छन् यो सुरराजः स ह शान्तहृदय एव सन् विरोचनोऽसुरान् जगाम । गत्वा च तेभ्योऽसुरेभ्य एतां शरीरात्मबुद्धिरूपामुपनिषदं प्रोवाच । देहमात्रएवात्मा पित्रोक्त इत्युक्तवान् अतो भवद्भिरपि प्रजापतिनोक्त आत्मैव देह एवेहलोके महय्यः पूजनीयस्तथा परिचर्यः परिचरणीयः सेवनीयः । एवमात्मानं देहमेवेह लोके महयन्नात्मानमेव परिचरंश्चोभौ लोकाववाप्नोति । का इमं च लोकममुं च परलोकमित्युभावित्यर्थः ॥ ४ ॥

यस्मादेवमसुरसम्प्रदायोऽद्याप्यनुवर्तते—

तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेति। असुराणाँ ह्येषोपनिषत् प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति सँ स्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥

तस्माद्देहात्मवादस्यापि आसुरत्वादद्यापि इहलोके अददानं यथाविभागमन्नादेरदानशीलम् अश्रद्दधानं सत्कार्येषु श्रद्धारहितम् अयजमानम् अयजमानस्वभावं आसुरः खल्वयं बतेति खिद्यमानाः शिष्टा आहुः। कुतः? हि यस्मादसुराणामेषा अश्रद्दधानादिलक्षणोपनिषद्विज्ञानमित्यर्थः। प्रकृतोपनिषत्कार्यमाह—प्रेतस्येति। एतदुपनिषदा संस्कृताः प्रेतस्य मृतस्य शरीरं कुणपं भिक्षया गन्धमाल्यादिलक्षणया वसनेन वस्त्राच्छादनेनालङ्कारेण ध्वजादिना संस्कुर्वन्त्यनेन कुणपसंस्कारेणामुं परलोकं जेष्यन्तो वयमिति मन्यन्त इत्यर्थः ॥ ५ ॥

इति दशमे अष्टमः खण्डः ॥ ८ ॥

एवं स ह शान्तहृदयं इत्यनेन विरोचनगतं विशेषं दर्शयित्वा इन्द्रगतविशेषमाह—

अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श। यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति। स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥

अथशब्द इन्द्रगतविशेषकथनार्थः। इन्द्रो ह दैव्या सम्पदा युक्तत्वात् प्रजापतिवचनं पुनःपुनः स्मरन्नेवागच्छेत्। देवानप्राप्यैव एतद्वक्ष्यमाणं छायात्मनि स्वात्मग्रहणनिमित्तं भयं दोषं ददर्श। तदेव प्रकटयति—यथैवेति। यथैव खल्वस्मिञ्छरीरे साध्वलङ्कारेणालङ्कृतेऽयं छायात्मापि साध्वलङ्कृतो भवति सुवसने सुष्ठुवसनयुक्ते सुवसनः परिष्कृते नखलोमादिच्छिन्ने च परिष्कृतो नखलोमादिरहितो भवति, एवमेव देहस्य नखाद्यपगमे छायात्मनोऽपि तदपगमवदस्मिञ्छरीरे अन्धे सति छायात्माऽप्यन्धो भवति। तथा स्रामे एकनेत्रे देहे सति छायात्मा स्रामः। चक्षुषा नासिकया वा स्रवतीति वा स्रामः। परिवृक्णे छिन्नहस्ताद्यव-

यवे देहे छायात्माऽपि परिवृक्णो भवति। किञ्च—अस्यैव देहस्य नाशमनु एष छायात्मा नश्यति॥ १॥

अतः—

स समित्पाणिः पुनरेयाय। तँ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन् पुनरागम इति। स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति। नाहमत्र भोग्यं पश्यामीति॥ २॥

नाहमत्रास्मिञ्छायात्मदर्शने भोग्यं फलं पश्यामीत्येवं छायादर्शने दोषमध्यवस्य स इन्द्रः समित्पाणिः समिद्भारहस्तो ब्रह्मचर्यं वस्तुं पुनरेयाय आगतवान्। तमागतमिन्द्रं प्रजापतिरुवाच। किम्? हे मघवन् यद्यदि त्वं शान्तहृदयो विरोचनेन सार्धं प्राव्राजीः गतवानसि। तर्हि किमिच्छन् पुनरागमस्तवागमनमित्युक्तः स इन्द्रो होवाचेत्यादि पश्यामीत्यन्तमुक्तार्थम्॥ २॥

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि। वसापराणि द्वात्रिँ शतं वर्षाणीति। स हापराणि द्वात्रिँ शतं वर्षाण्युवास तस्मै होवाच॥ ३॥

एवमेव यथा त्वयैष छायात्मा विनाशित्वादिधर्मत्वेनोक्तस्तत्तथैव हे मघवन्निति होवाच। एतं त्वेव यत्पूर्वं मयाऽक्ष्यादौ द्रष्टृत्वेनोक्तस्तमेवात्मानं भूयः पुनरप्यनुव्याख्यास्यामीत्यतस्त्वं वसापराणि द्वात्रिंशतं वर्षाणि ब्रह्मचर्यं दोषक्षपणायेत्युक्तः स इन्द्रोऽपराणि द्वात्रिंशतं वर्षाण्युवास। तस्मै एवमुषितवते प्रतिज्ञातमात्मानमुवाचेत्यर्थः॥ ३॥

इति दशमे नवमः खण्डः॥ ९॥

कथम्?

य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति। स ह शान्तहृदयः प्रवव्राज। स हाप्राप्यैव देवानेतद्भयं ददर्श। तद्यद्यपीदँ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति॥ १॥

य उक्तलक्षण एष स्वप्ने महीयमानः स्त्र्यादिभिः पूज्यमानश्चरति स्वप्नभोगाननुभवत्येष आत्मेत्याद्युक्तार्थः। एवमुक्तः स हेन्द्रः शान्तहृदयः प्रवव्राजेत्याद्युक्तार्थम्। कथं भयदर्शनं वृत्तमित्यत आह—तद्यद्यपीति। तद्यदिदं शरीरं यद्यप्यन्धं भवति तथाप्ययं स्वप्नात्माऽपि अनन्धो भवति। तथा यदीदं शरीरं स्राममेकनेत्रविकलं भवति तथापि सोऽस्रामश्च भवति। न वै नैव एष स्वप्नात्माऽस्य देहस्य दोषेण दुष्यति ॥ १ ॥

न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

नाप्यस्य शरीरस्य वधेन स हन्यते। नास्य शरीरस्य स्राम्येण चक्षुरादिगतस्रावत्वेनायं छायात्मवत्स्रामो भवति। तथापि त्वेनं स्वप्नदृशं केचन घ्नन्त्येवेति। एवकार इवार्थस्तथा विच्छादयन्तीव। हस्त्यादयो विद्रावयन्तीव। तथाऽप्रियं पुत्रादिमरणनिमित्तं वेत्तेव। विज्ञातेव भवत्यपि च रोदितीव। अतो नाहमत्र स्वप्नात्मज्ञानेऽपि भोग्यं पश्यामीति ॥ २ ॥

स समित्पाणिः पुनरेयाय। तँ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति। स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥ न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसाऽपराणि द्वात्रिँशतं वर्षाणीति। स हाऽपराणि द्वात्रिँशतं वर्षाण्युवास। तस्मै होवाच ॥ ४ ॥

एवं विचार्य स इन्द्रः समित्पाणिरित्याद्युक्तार्थम्। एवं द्विरुक्तस्यापि यथावदग्रहणादद्यापि दोषवत्त्वं तस्य मत्वा प्रजापतिः पुनरपि तत्क्षपणायाह—वसापराणीति। उक्तार्थम् ॥ ३, ४ ॥

इति दशमे दशमः खण्डः ॥ १० ॥

तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति। स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाह खल्वयमेवँ सम्प्रत्यात्मान जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति। नाहमत्र भोग्य पश्यामीति ॥ १ ॥

योऽक्षिणि द्रष्टा स्वप्ने च महीयमानश्चरति तद्यत्रैतत्सुप्त इत्याद्युक्तार्थम् ॥ १ ॥

स समित्पाणिः पुनरेयाय। तँ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति। स होवाच नाह खल्वयं भगव एवँ संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति। नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

एवं प्रजापतिना आगमनप्रयोजनं पृष्टः सुषुप्तेऽपि दोषं दृष्टवानित्याह—स हेति। स इन्द्रो होवाच। किम्? नाहं नैव खल्वयं सुषुप्तस्थोऽप्यात्मैव जाग्रदाद्यवस्थात्मवत् संप्रति इदानीम् अयमहमस्मीत्यात्मानं जानाति नो एव नैवेमानि प्रसिद्धानि भूतानि च जानाति। अतोऽयं सुषुप्तः आत्मा विनाशमेवापीतोऽपि गतो भवति विनष्ट इव भवति। अतो नाहमत्र सुषुप्तेऽपि भोग्यं पश्यामीत्यादि समानम् ॥ २ ॥

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि। नो एवान्यत्रैतस्माद्वसाऽपराणि पञ्च वर्षाणीति। सहापराणि पञ्च वर्षाण्युवास। तान्येकशतँ सम्पेदुः। एतत्तद्यदाहुरेकशतँ ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास। तस्मै होवाच ॥ ३ ॥

ब्रह्मचर्यवर्षाण्येकीकृत्याह—तानीति। तानि इन्द्रब्रह्मचर्यवर्षाणि एकशतमेकाधिकं शतं सम्पेदुः सम्पन्नानि। अस्याः संख्यायाः श्रुतिः स्वमुखेनैतिह्यत्वं विद्यास्तुत्यर्थमाह—एतदिति। यदेवं वृत्तं तदेतदाहुः शिष्टाः। किम्? एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास तस्मै मृदितकषायाय इन्द्राय स्थानत्रयदोषसम्बन्धरहितमात्मस्वरूपमप-

हतपाप्मादिलक्षणमुवाच। अतो महदेतत् ज्ञानमित्यर्थः ॥ ३ ॥

इति दशमे एकादशः खण्डः ॥ ११ ॥

कार्यकारणशरीरपरिवेष्टितौ विश्वतैजसौ उक्तौ। कारणमात्रप्रतिबद्धश्च प्राज्ञो व्याख्यातः। सम्प्रति अशरीरं तुरीयमुपदेष्टुं सशरीर एव विशेषज्ञानवान् भवति। अशरीरस्य तु तदभावात्तत्र विनाशभ्रमो न तु विनश्यतीत्यभिप्रेत्य शरीरं निन्दति—

मघवन् मर्त्यं वा इदँ शरीरमात्तं मृत्युना। तदस्यामृतस्याशरीरस्यात्मनोऽधि ानम्। आत्तो वै सशरीरः प्रियाप्रियाभ्याम्। न ह वै सशरी . सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न ियाप्रिये स्पृशतः ॥ १ ॥

हे मघवन्निदं दृश्यमानं वै प्रसिद्धं शरीरं मर्त्यं विनाशि सन्मृत्युना आत्तं व्याप्तं ग्रस्तमित्युक्ते त्रासेन वैराग्यं भवतीत्येतदर्थं पुनरुक्तम्। तच्छरीरमस्य सम्प्रसादस्यामृतस्य मरणादिदेहेन्द्रियादिधर्मवर्जितस्य अशरीरस्य। तत्र वाय्वादिवन्मूर्तत्वादियुक्तमस्यात्मनः। आत्मनोऽधिष्ठानं भोगस्येति शेषः। यद्वा जीवरूपेण प्रवेश्य सदैवाधितिष्ठत्यस्मिञ्छरीरे इत्यधिष्ठानम्। एवं शरीरं विद्यते यस्य स्वभावतोऽशरीरस्याऽपि सोऽस्य सशरीरः सन् प्रियाप्रियाभ्यां सुखदुःखाभ्यामात्तो व्याप्तो वै प्रसिद्धम्। तामेवोपपादयति- न वै इति। न वै सशरीरस्य सतोऽविवेकात् प्रियाप्रिययोः सन्ततिरूपयोः अपहतिर्विनाशः उच्छेदोऽस्ति। एवमज्ञस्य देहसम्बन्धद्वारा संसारित्वमुक्त्वा तस्यैव विद्यावतो देहसम्बन्धनिवृत्तिद्वारेण मुक्तिं दर्शयति—अशरीरमिति। अशरीरं निवर्तितसशरीरभ्रमं वाव सन्तं नैव प्रियाप्रिये स्पृशतः ॥ १ ॥

अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि। तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन स्वेन रूपेणाभिनिष्पद्यन्ते ॥ २ ॥

न विद्यते पाण्यादिमच्छरीरं यस्येत्यशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरित्येतान्यशरीराणि। तत्रैवं वाय्वादीनामशरीरत्वे सति यथैतानि वाय्वादीनि भूतानि पूर्वमाकाशैकतां गतानि सन्ति पश्चादमुष्माद्भौतिकादाकाशात् समुत्थाय परं प्रकृष्टं ग्रैष्म्यं सावित्रं ज्योतिरुपसम्पद्य प्राप्य अस्तमितभावं हित्वा स्वेन स्वेन रूपेण पुरोवर्तिपर्वतज्योतिर्ललतागजितादि-

लक्षणेन वाय्वादयः क्रमेणाभिनिष्पद्यन्ते अभिनिष्पत्तिमापद्यन्ते ॥ २ ॥

एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । स उत्तमपुरुषः । स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनँ स्मरन्निदँ शरीरँ स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ॥ ३० ॥

एवं यथादृष्टान्तमेव एष सम्प्रसादो जीवोऽविद्यावस्थायां शरीरसाम्यमापन्नः केनचिदाचार्येण नासि त्वं देहादिधर्मा, किन्तु तत्त्वमसीत्येवं प्रतिबोधितः सन्नस्माच्छरीरात् समुत्थाय देहात्मभावनां हित्वा परं परमात्मलक्षणं ज्योतिरुपसम्पद्य स्वेनात्मीयेन रूपेणाभिनिष्पद्यते इत्युक्तार्थम् । अभिनिष्पद्यमानस्य स्वरूपमाह —उत्तमपुरुष इति । स एवमभिनिष्पन्नः सम्प्रसादः उत्तमश्चासौ पुरुषश्चोत्तमपुरुषः जाग्रत्स्वप्नसुषुप्ताद्यपेक्षयेत्यर्थः । आत्मज्ञानस्तुतये विदुषः समाचारमाह—स तत्रेति । स सम्प्रसादः सर्वात्मभूतस्तत्र स्वात्मनि पर्येति पर्यटति । किं कुर्वन् ? क्वचिदिन्द्राद्यात्मना जक्षत् विषयान् भक्षयन् हसित्वा क्वचिद् ब्रह्मलोके मानसैः पित्रादिभिः क्रीडन् तथा मानसैरेव स्त्र्यादिभिर्वा यानैर्वा रथादिभिर्ज्ञातिभिर्वा रममाण उपजनं स्त्रीपुंसयोरन्योन्यसमागमाज्जातमुपजनमिदं स्थूलशरीरं न स्मरन् तत्स्मरणस्य दुःखहेतुत्वात् पर्येति पर्यटतीत्यर्थः । अथास्य लिङ्गोपाधिकस्वरूपं सदृष्टान्तमाह—स यथेति । स योग्यः प्रयुज्यत इति प्रयोग्योऽश्वादिर्यथा । लोके आचरति गच्छत्यनेनेत्याचरणो रथादिस्तस्मिन् युक्तः । एवं यथादृष्टान्तमेवास्मिन् स्थूलशरीरेऽयं प्राणो लिङ्गाख्यस्तदुपाधिकः प्राज्ञो रथित्वेन युक्त ईश्वरेण नियुक्तः ॥ ३ ॥

अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुः । अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम् । अथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वाक् । अथ यो वेदेदँ शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥

अथानन्तरं यत्र संसारदशायां यदैतत्प्रसिद्धं चक्षुराकाशं कृष्णतारोपलक्षितं देहच्छिद्रं अनुविषण्णमनुयुक्तमनुगतं तदा शारीरः चक्षुषि भवश्चाक्षुषः पुरुषः पूर्वं प्रजापत्युपदिष्टो दर्शनाय रूपाद्युपलब्धिनिमित्तं चक्षुः, चष्टे इति व्युत्पत्तेः। अथ यो वेदेदं वस्तु जिघ्राणि अस्य गन्धं विजानीयामिति यो वेद स आत्मा गन्धाय गन्धविज्ञानाय घ्राणम्, जिघ्रतीति व्युत्पत्तेः। अथेदं वस्तु अभिव्याहराणि वदिष्यामीति यो वेद स आत्माभिव्याहाराय अभिव्याहरणक्रियासिद्धये वागिन्द्रियं भवति, वक्तीति व्युत्पत्तेः। अथ यो वेदेदं वाक्यं शृणवानीति स आत्मा श्रवणाय श्रोत्रम्, शृणोतीति व्युत्पत्तेः ॥ ४ ॥

अथ यो वेदेदं मन्वानीति स आत्मा। मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते ॥ ५ ॥

अथ यो वेदेदं मन्वानि केवलमनसैव मन्वानि जानामीति यो वेद स आत्मा मनः, मनुत इति व्युत्पत्तेः। तच्च मनोऽस्यात्मनो दैवम् अप्राकृतं चक्षुर्व्यवहितादिज्ञानहेतुत्वात्। स वै एष स्वस्वरूपमापन्नो मुक्त एतेन दैवेन चक्षुषा मनसा एकान्कामान् पश्यन् रमते क्रीडते ॥ ५ ॥

एतान् कान्?

य एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते। तस्मात्तेषाँ सर्वे च लोका आत्ताः सर्वे च कामाः। स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ ६ ॥

य एते ब्रह्मलोके ब्रह्म लोकनाल्लोकस्तस्मिन् ये एते सङ्कल्पमात्रेण लभ्या इत्युक्तास्तानित्यर्थः। न केवलमेवमिन्द्रः एव प्रजापत्युपदेशात् कृतार्थोऽभूत्। किन्तु अन्येऽपि इन्द्राच्छ्रुत्वा आत्मानमुपास्य तथा बभूवुरित्याह—तं वा एतमिति। तं वै इन्द्राय प्रजापतिनोक्तम् एतमिन्द्रोक्तमात्मानं देवा अद्यत्वेऽप्युपासते। तस्मादुपासनाच्च तेषां देवानां सर्वे च लोका आत्ताः प्राप्ताः। सर्वे च कामाः आत्ता इत्यर्थः। ननु युक्तमेतत्फलं देवानां महाभाग्यत्वान्न त्वाधुनिकानां कलिकालवर्तिनां

मनुष्याणामित्यत आह—स सर्वानिति । यः कश्चित्पुमान् इन्द्रादिवत्तमुक्तरूपमात्मनम् आचार्यादिभ्योऽनुविद्य जानाति स्वसंवेद्यतामापादयति स इदानीन्तनोऽपि सर्वांश्च लोकानाप्नोति सर्वांश्च कामानाप्नोतीति ह प्रजापतिरुवाच । द्विरभ्यासो ब्रह्मात्मैकत्वज्ञानप्रकरणसमाप्त्यर्थः ॥ ६ ॥

॥ इति दशमे द्वादशः खण्डः ॥ १२ ॥

उक्तदहरविद्यायाः शेषभूतान् जपादिविधानार्थं मन्त्रानाह—

श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीति अभिसम्भवामीति ॥ १ ॥

श्यामवदत्यन्तं दुरवग्राह्यत्वाच्छ्यामं हार्दं ब्रह्म ध्यानेन ज्ञात्वा तस्माच्छ्यामात् हार्दाद् ब्रह्मणः सकाशात् शबल उक्तारण्याद्यनेककाममिश्रितत्वाद् ब्रह्मलोकः शबलस्तं प्रपद्ये गच्छेयम् । कुत इत्यपेक्षायामाह—शबलादिति । यस्मादहं शबलाद् ब्रह्मलोकान्नामरूपव्याकरणाय श्यामं हार्दं भावं प्रपद्ये प्रपन्नोऽस्मि तस्मात्तमेव प्रकृतिरूपं शबलं प्रपद्य इत्यर्थः । तत्प्राप्तिमनेकदृष्टान्तेनाह—अश्व इति । यथाऽश्वो रोमाणि लोमानि विधूय कम्पनेन श्रमं पांश्वादि च रोमतोऽपनीय निर्मलो भवति एवं हार्दब्रह्मज्ञानेन पापं धर्माधर्माख्यं विधूय अपनीय चन्द्रवद्यथा राहुग्रस्तश्चन्द्रो राहोर्मुखात् प्रमुच्य भास्वरो भवत्येवं शरीरं धूत्वा प्रहाय इहैव ध्यानेन कृतात्मा कृतकृत्यः सन्नकृतं नित्यं ब्रह्मलोकमभिसंभवामि । इतिशब्दो ध्यातुर्ध्यानसमाप्त्यर्थः । द्विर्वचनं मन्त्रसमाप्त्यर्थम् ॥ १ ॥

॥ इति दशमे त्रयोदशः खण्डः ॥ १३ ॥

दहरोऽस्मिन्नन्तराकाश इत्युक्ताकाशशब्दस्य ब्रह्मविषयत्वमुपपादयति—

आकाशो वै नामरूपयोर्निर्वहिता । ते यदन्तरा तद्ब्रह्म तदमृतँ स आत्मा । प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि । स हाहं यशसां यशः श्येतमदत्कमदत्कँ श्येतं लिन्दु माभिगां लिन्दु माभिगाम् ॥ १ ॥

आकाश इवाकाशोऽव्याकृताख्यो वै एव नाम प्रसिद्धो नामरूपयोः जगद्बीजयोर्निर्वहिता निर्वोढा व्याकर्ता। ते नामरूपे यदन्तरा यस्य ब्रह्मणोऽन्तरा मध्ये वर्तेते तद्ब्रह्म, तद्ब्रह्मामृतम्. स एव च सर्वभूताना-मात्मेति आपरोक्षमेवेत्यर्थः। एवं दर्शितोपास्यस्वरूपोपासकस्य प्रार्थना-मन्त्रमाह—प्रजापतेरिति। प्रजापतेश्चतुर्मुखस्य सभां परिषदं वेश्म च प्रपद्ये गच्छेयम्। यशः आत्मा चाहं भवामि। तदेव विशिनष्टि—ब्राह्मणानाम् इत्यादिना। ब्राह्मणादीनां यशो देहेन्द्रियादिलक्षणमनुप्रापत्सि प्राप्स्यासि प्राप्तुमिच्छामि। तेषां देहेन्द्रियादीनामात्मा भवामीति यावत्। उक्तमेव स्वयं परामृशति—स हाहं यशसां यश इति। सोऽहं यशसां देहेन्द्रि-यादिलक्षणानां यश आत्मा। उक्तं प्रार्थनाप्रयोजनमाह—श्येतमिति। श्येतं रोहितं स्त्रीचिह्नं योनिशब्दवाच्यं किं लक्षणम्? अदत्कं दन्तरहितमप्यदत्कं भक्षयितृ तत्सेविनाम्। एवंभूतं श्येतं लिन्दु पिच्छिलम् अशुद्धं तदेव लक्षणं स्त्रीचिह्नमहं माभिगां मागच्छेयम्। तदभिगमनस्य गर्भवास-लक्षणस्य अत्यन्तानर्थहेतुत्वं ज्ञापयितुं पुनर्वचनमित्यर्थः॥ १॥

इति दशमे चतुर्दशः खण्डः॥ १४॥

उक्तविद्यायाः पुरुषोत्प्रेक्षारूपाशङ्काव्युदासार्थमनादिपरम्परागतत्वमाह—

तद्धैतद् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः। आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभि-समावृत्त्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिँसन् सर्वभूतान्य-न्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभि-सम्पद्यते। न च पुनरावर्तते न च पुनरावर्तते॥ १॥

तदेतत्ससाधनमात्मज्ञानं ह किल तद्वाचकं सन्दर्भं ब्रह्मा हिरण्यगर्भः प्रजापतये विराडात्मने उवाच। प्रजापतिर्मनवे स्वपुत्राय मनुः प्रजाभ्य उवाचेत्यर्थः। एवं समापितां विद्यासाफल्यमुक्त्वा कर्मणोऽपि साफल्य-मविद्वत्सन्तोषार्थमाह—आचार्यकुलादिति। गुरोः यत्कर्म कर्तव्यं तत्कृत्वा

तदतिशेषेण कालेन यथाविधानं स्मृत्युक्तप्राङ्मुखत्वाद्यध्यापनविधानमनतिक्रम्य आचार्यकुलात् सार्थं वेदमधीत्या अभिसमावृत्त्य धर्मजिज्ञासां परिसमाप्य गुरुकुलान्निवृत्त्य दारानाहृत्य कुटुम्बे गार्हस्थ्ये कर्मणि स्थित्वा शुचौ देशे आसीनः स्वाध्यायं वेदमधीयानः पठमानो धार्मिकान् धर्मयुक्तान् पुत्रान् शिष्यांश्च विदधन् धार्मिकत्वेन तान्नियमयन् आत्मनि स्वहृदये हार्दे ब्रह्मणि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य उपसंहृत्य तीर्थेभ्यः शास्त्रानुज्ञाविषयेभ्योऽन्यत्र सर्वाणि स्थावरजङ्गमानि भूतान्यहिंसन्न पीडयन् वर्तेत। स खल्वधिकृतः कुटुम्बे एव यथोक्तेन प्रकारेण यावदायुषं यावज्जीवं वर्तयन् देहान्ते ब्रह्मलोकं हिरण्यगर्भाख्यमभिसम्पद्यते प्राप्नोति। न च पुनस्ततो ब्रह्मलोकान् महाप्रलयात् पूर्वकाले आवर्तते, महाप्रलयानन्तरं च पुनरावर्तते एव, कार्यब्रह्मप्राप्तत्वात्। द्विरभ्यास उपनिषद्विद्यापरिसमाप्त्यर्थः ॥ १ ॥

इति दशमे पञ्चदशः खण्डः ॥ १५ ॥

॥ इति छान्दोग्यब्राह्मणे दशमः प्रपाठकः ॥

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत् अनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥

❋ ॐ शान्तिः शान्तिः शान्तिः ❋

यन्मायादिकमाश्रितं बहुगुणं ब्रह्मचर्यादियुक्तो
हृदावरुध्यमूर्धगतया नाड्या प्राप्य सौत्रं पदम् (? ।
कामं क्रीडति यत्तुरीयममलं सैकं शताब्दं गुरौ
स्थित्वा देवपतिर्बुबोध तदहं ध्याये नृसिंहाभिधम् ॥ १ ॥
कार्यब्रह्मपदात्ततुङ्गफलवद्ध्यानप्रभेदाचलं
विश्वोद्भूतिविभूतिवादविलसद्वीचीतरङ्गाकुलम्।
दैन्यं मुञ्चत भो जना गुरुतरीमारोहतालं श्रमैर्-
गाहन्तामनवद्यहृद्यमणये छान्दोग्यरत्नाकरम् ॥ २ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्यनित्यानन्दाश्रमविरचितायां छान्दोग्योपनिषद्व्याख्यायां मिताक्षरायां अष्टमोऽध्यायः समाप्तः।

ॐ

॥ ॐ तत्सद्ब्रह्मणे नमः ॥

# बृहदारण्यकोपनिषत्

## मिताक्षराटीकासमलङ्कृता

---

योऽनन्तोऽनन्तशक्तिः सृजति जगदिदं पालयत्यन्तरात्मा

संविश्यान्ते निपीय स्वकमहिमगतः सत्यचिन्मूर्तिरास्ते ।

योऽनुग्रः सज्जनानां परमहिततमः पापिनामुग्रमूर्तिः

सोऽस्माकं वाञ्छितानि प्रदिशतु भगवानात्मदः श्रीनृसिंहः ॥ १ ॥

यन्मूलप्रवहत्पवित्रपयसः संसेवनादेव मे

रागद्वेषमदाभिधा ग्रहगणा नेशुः स्म संतापिनः ।

यत्संसारपरिश्रमापहदयासंशीतलामोदभाग्

वन्दे तत्पुरुषोत्तमाश्रमगुरोः पादारविन्दद्वयम् ॥ २ ॥

या काण्वोपनिषत्प्रसिद्धबृहदारण्यश्रुतेः सादरं

तद्भाष्यप्रमुखं विलोक्य विपुला टीका कृता ज्ञानिनाम् ।

रम्या तत्कलनासमर्थमतिभिर्मोक्षेच्छुभिर्योगिभिः

सुज्ञेया तु मिताक्षरा पुनरियं व्याख्या मया रच्यते ॥ ३ ॥

उपनिषच्छब्देन तु मुख्यया वृत्त्या ब्रह्मविद्यैव वाच्या. उप समीपस्थं प्रत्यगात्मैकत्वं निश्चितं सत्तत्पराणां सहेतुसंसारं सादयतीत्युपनिषदिति व्युत्पत्तेः । ग्रन्थस्तु विद्यासमर्पकत्वेन उपचारात् उपनिषदित्युच्यते । बृहत्त्वं चास्य ब्रह्मविद्याहेतूनामन्तरङ्गबहिरङ्गभूतानां बहूनामिह उपदेशात्, अर्थतो ग्रन्थपरिमाणतश्च बहुत्वात् । आरण्यकत्वं चास्य

नियमपूर्वकमरण्येऽनूच्यमानत्वात् । ननु काण्डयोर्नियतपौर्वपर्ये कः सम्बन्ध इति चेच्छृणु । विद्योत्पत्त्यपेक्षितविवेकवैराग्यशमादिमुमुक्षुत्व-सम्पत्तिहेतुसत्त्वशुद्धिसम्पादकतया कर्मकाण्डस्य प्राथम्यम्, तज्जनित-शुद्ध्यपेक्षया तत्त्वज्ञानजनकत्वात् ज्ञानकाण्डस्य नियतमुत्तरभावित्व-मित्युपायोपेयभावः काण्डयोः सम्बन्ध इति ब्रूमः । तत्र क्रतुश्रेष्ठस्या-प्युपास्तिसहितस्य अश्वमेधस्य हिरण्यगर्भत्वरूपसंसारफलत्वमेवेति प्रदर्शिते किमु वक्तव्यमल्पीयसाम् अग्निहोत्रादीनां संसारफलत्व-मित्यर्थात् प्रदर्शनेन वैराग्योत्पत्तिर्भवतु अत्यभिप्रायेण अश्वमेधानधि-कारिणामश्वमेधविज्ञानादपि तत्फलसिद्ध्यर्थं तावत् क्रत्वङ्गप्रधान-भूताश्वविषयदर्शनम् 'उषा वा' इत्यादिप्रथमकण्डिकया आह—

ॐ उषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माऽश्वस्य मेध्यस्य द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तर-दिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्य-होरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो माँ्सानि । ऊवध्यँ् सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोच-ञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥ १ ॥

उषा वै ब्राह्मो मुहूर्तः प्रसिद्धः । मेध्यस्य मेधार्हस्य यज्ञियस्याश्वस्य शिरः शिरस्युषादृष्टिः कर्तव्या । कालावयवानां शरीरावयवानां च मध्य उषःशिरसो प्रधानत्वसामान्यात् । अङ्गेष्वनङ्गमतिः पशु-संस्कारार्था । तथा चाश्वमेधाधिकारी सत्यश्वे कर्मणो वीर्यवत्त्वार्थं कालादिदृष्टिमश्वावयवेषु कुर्यात् । तदनधिकारी तु अश्वाभावेऽप्यात्मान-मश्वं कल्पयित्वा शिरःप्रभृतिषु कालादिदृष्टिकरणेन प्रजापतित्वं सम्पाद्य प्रजापतिरस्मीति ज्ञानात्तद्भावं प्रतिपद्यते कालाद्यात्मकत्वात् प्रजापतेः । सूर्यश्चक्षुः, अश्वचक्षुषि सूर्यदृष्टिः कर्तव्या । उषसः शिर-सश्च सूर्यचक्षुषोरानन्तर्यसामान्यात् । अश्वस्य प्राणो वातो बाह्यो वायुरिति दृष्टिः कर्तव्येति सर्वत्र व्याख्येयम्, चलनत्वसामान्यात् ।

अश्वस्य व्यात्तं विवृतं मुखं वैश्वानरोऽग्निः। वैश्वानरग्रहणं तु क्रव्यादाग्निव्यावृत्त्यर्थम् "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इति श्रुत्यन्तरात्। आत्मा अश्वशरीरं संवत्सरः। उभयोः शरीरकालावयवानां हस्तमासादीनामात्मत्वसामान्यात्। अश्वस्य मेध्यस्य पृष्ठं द्यौर्द्युलोक ऊर्ध्वत्वसामान्यात्। अश्वस्य मेध्यस्येति पुनर्वचनं तु प्रत्येकमनुषङ्गार्थम्। अश्वस्योदरमन्तरिक्षमाकाशः सुषिरत्वसामान्यात्। पाजस्यमित्यत्र अर्थकाले जकारस्थाने दकारकरणेन पादा अस्यन्ते स्थाप्यन्तेऽस्मिन्निति पादस्यं पाजस्यं पादासनस्थानं खुरलक्षणं पृथिवी, आधारत्वादिसामान्यात्। अश्वपार्श्वे दिशः पूर्वाद्याश्चतस्रोऽपि। न च पार्श्वयोर्दिशां च संख्यावैषम्यात् तयोस्तद्दृष्टिकरणमयुक्तमिति वाच्यम्; अश्वस्य चरिष्णुत्वेन सर्वमुखत्वोपपत्तेः अश्वपार्श्वाभ्यां क्रमेण सर्वदिक्सम्बन्धसामान्यात्। पर्शवः पार्श्वास्थीनि अवान्तरदिश आग्नेय्याद्याः। उभयोः पार्श्वदिक्सम्बन्धसामान्यात्। अङ्गान्यनुक्तानि वक्ष्यमाणशरीरावयवरूपाणि ऋतवो वसन्ताद्याः, उभयोः शरीरसंवत्सराङ्गत्वसामान्यात्। पर्वाणि सन्धयो मासाश्चैत्रादयोऽर्धमासाश्च शुक्लपक्षादयः पुनः पुनरावर्त्यमानाः, उभयोः शरीरसंवत्सरसन्धिसामान्यात्। प्रतिष्ठाः प्रतितिष्ठत्येतैरिति प्रतिष्ठाः पादा अहोरात्राणि प्राजापत्यदैवपित्र्यमानुषाणि बहुवचनात्। एताभ्यां ह्यश्वसंवत्सरात्मानौ प्रतितिष्ठत इति प्रतिष्ठित्वसामान्यात्। अस्थीनि प्रसिद्धानि नक्षत्राणि, शुक्लत्वसामान्यात्। मांसानि प्रसिद्धानि। नभो नभस्था मेघा न प्रसिद्धमन्तरिक्षम्, तस्योदरत्वोक्तेरुभयो रुधिरोदकसेचकत्वसामान्यात्। ऊवध्यमर्धजीर्णमशनं सिकता वालुकाः, विश्लिष्टावयवत्वसामान्यात्। गुदा नाड्य एव सिन्धवो नद्यः स्यन्दनवत्त्वे सति बहुत्वसामान्यात्। यकृच्च क्लोमानश्च हृदयस्याधस्थौ दक्षिणोत्तरौ मांसपिण्डौ पर्वताः, काठिन्योच्छ्रयत्वसामान्यात्। लोमानि ओषधयो व्रीह्यादयः क्षुद्रत्वसामान्यात्। लोमग्रहणस्य केशानामप्युपलक्षणत्वेन केशा वनस्पतय आम्रादय, महत्त्वसामान्यात्। पूर्वार्धमश्वस्य नाभेरूर्ध्वभाग उद्यन् उद्गच्छन् मध्याह्नपर्यन्तमूर्ध्वं गच्छन् सवितेति ध्येयम् पूर्वत्वसामान्यात्। जघनार्धो नाभेरधोभागो निम्लोचन्नाम मध्याह्नादस्तं गच्छन् सविता, अपरत्वसामान्यात्। यद्विजृम्भत इत्यादौ प्रत्ययार्थस्याविवक्षितत्वाद्यद्विजृम्भणं गात्राणां विनामनेन मुखविदारणं तद्विद्योतनं प्रसिद्धम्, उभयोर्मुखमेघविदारकत्वसामान्यात्। यद्विधूननं गात्रकम्पनं स्तनितम्, गर्जनशब्दसामान्यात्। यन्मेहनं मूत्रकरणम्, तद्वर्षणं भूसेचनत्व-

सामान्यात्। अस्याश्वस्य वाग् हृषितशब्दो वागेव हेषितशब्द एव। नात्र आरोपणीयमस्तीत्यर्थः ॥ १ ॥

अथाश्वस्तुत्यर्थमेव तत्संज्ञपनात्प्रागूर्ध्वं च ग्रहवर्तनतत्स्थानविषयं दर्शनमाह 'अहर्वा' इत्यादि 'संबभूवतुः' इत्यन्तेन—

अहर्वा अश्वं पुरस्तान् महिमाऽन्वजायत। तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमाऽन्वजायत। तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः संबभूवतुः। हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान्समुद्र एवास्य बन्धुः समुद्रो योनिः ॥ २ ॥

पुरस्तात् संज्ञपनात्पूर्वमश्वमनुलक्षीकृत्य महिमा महत्त्वोपेतत्वात् महिमाख्यः सौवर्णो ग्रहोऽजायत प्रावर्तत, सोऽहर्दिनं वै दीप्तिसामान्यात्। तस्य सौवर्णस्य ग्रहस्य पूर्वे समुद्रे पूर्वः समुद्रो योनिरासादनस्थानम्, पूर्वत्वसामान्यात्। योऽयं महिमा राजतो ग्रह एवमश्वमनुलक्षीकृत्य पश्चादश्वसंज्ञपनानन्तरमजायत प्रावर्तत स रात्रिर्वर्णसामान्यात् जघन्यत्वाद्वा। तस्य राजतस्य ग्रहस्यापरे समुद्रेऽपरः समुद्रो योनिः, अपरत्वसामान्यात्। एतौ वै महिमानौ ग्रहौ अश्वमभितः पुरतः पृष्ठतश्च संबभूवतुः प्रावर्तेतामिति अश्वस्तुत्यर्थकं पुनर्वचनमश्वस्तुत्यर्थमेवैतद्ग्रहदर्शनं न स्वतन्त्रमिति द्योतनीयम्। अत एवाश्वस्य स्तुतिमाह—हयो भूत्वेत्यादिना। अत्र हयादयो जातिविशेषाः। सोऽश्वो हयो भूत्वा देवानवहत् देवत्वमगमयत्, तस्य प्रजापतिरूपत्वात्। देवानां वोढा वाऽभवत्। तथा वाजी भूत्वा गन्धर्वान् अर्वा भूत्वा असुरान् अश्वो भूत्वा मनुष्यान् अवहदिति प्रत्येकं सम्बध्यते। समुत्पद्य भूतानि द्रवन्ति लयं गच्छन्त्यस्मिन्निति समुद्रः परमात्मा, स एवास्य बन्धुः बध्यतेऽनेनेति बन्धुर्बन्धनम्। समुद्र एव पूर्वोक्तो योनिरुत्पत्तिकारणम्। एवमसौ शुद्धजन्माशुद्धस्थितिः शुद्धलयश्चेति स्तूयते। 'अप्सु योनिर्वा अश्वः' इति श्रुत्यन्तरात् प्रसिद्ध एवासौ समुद्रो योनिरित्यर्थः ॥ २ ॥

इति प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

एवमश्वमेधे मुख्याङ्गभूताश्वविषयं दर्शनं विधाय इदानीमाश्वमेधिकाग्निविषयं दर्शनं वक्तुं तत्स्तुत्यर्थतया तदुत्पत्तिप्रस्तावं तावदाह—

नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीत्। अशनायया-

ऽशनाया हि मृत्युस्तन्मनोऽकुरुताऽऽत्मन्वी स्यामिति । सो-ऽर्चन्नचरत् । तस्यार्चत आपोऽजायन्त । अर्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वम् । कँ ह वा अस्मै भवति य एवमेतदर्कस्या-र्कत्वं वेद ॥ १ ॥

इह संसारमण्डलेऽग्रे मनआदेरुत्पत्तेः प्राक् किञ्चन किञ्चिदपि नाम-रूपविभक्तविशेषं नैवाऽऽसीत् न बभूव । तर्हि किम् ? प्रागुत्पत्तेः शून्य-मेव बभूवेत्यत आह—मृत्युनेति । मृत्युना मायाशबलितलक्षणमूलकारणेन सूत्रात्मरूपेण हिरण्यगर्भात्मकसूक्ष्मशरीरमापन्नेन इदं नामरूपप्रविभक्त जगदावृतमासीन्न पुनः शून्यमासीत् । यच्चाऽऽव्रियते येन चाऽऽव्रियते तदुभयाः सर्वथाऽभावे मृत्युनैवेदमावृतमासीदिति नावक्ष्यन् । नहि संभवति गगनकुसुमच्छन्नो वन्ध्यासुत इति । किंलक्षणेन मृत्युनेत्यत आह—अशनायेति । अशितुमिच्छाऽशनाया तया लक्षणभूतया लक्षितेन मृत्युना बुद्ध्यादितादात्म्यमापन्नेन उक्तस्वरूपेणेत्यर्थः । कथं तया मृत्युर्लक्ष्यते ? तत्राऽऽह—अशनायेति । अशनाया ह्यशनायावान् प्रसिद्धो मृत्युर्यो ह्यशितु मिच्छति स तदिच्छानन्तरमेव जन्तून् हन्तीति प्रसिद्धमित्यतस्तया तद्वान् मृत्युर्लक्ष्यत इति युक्तमित्यर्थः । एवं कार्यस्य प्रागवस्थामभिधाय तदुत्पत्तिप्रकारमाह—तदिति । स प्रकृतो हिरण्यगर्भाख्यो मृत्युः यत्स्रष्टव्या-लोचनक्षमं तन्मनःशब्दवाच्यं सङ्कल्पादिलक्षणं करणमकुरुत कृतवान् । केनाभिप्रायेणेत्यत आह—आत्मन्वीति । अहमनेनाऽऽत्मना मनसा-ऽऽत्मन्वी मनस्वी स्यां भवेयमित्यभिप्रायेण । अभिव्यक्तीकृतस्य मनस उपयोगमाह—स इति । स मृत्युरर्चन् अर्चयन्पूजयन् आत्मानमेव कृतार्थोऽस्मीत्यचरत् चरणं कृतवान् । तस्य मृत्योरर्चतः पूजयत आपो रसात्मिकाः पूजाङ्गभूता अजायन्त । अत्र हैरण्यगर्भे सर्गे आकाशादिप्रभृ-तीनां त्रयाणां पञ्चीकृतानामुत्पत्त्यनन्तरमुत्पन्ना इति बोद्धव्यम् । अर्चते पूजां कुर्वते वै मे मह्यं कम् उदकमभूदिति यस्मान्मृत्युरमन्यत तदेव तस्मादेव हेतोरर्कस्य अग्नेर्वक्ष्यमाणस्य अश्वमेधक्रतूपयोगिकस्य अर्कत्व-मेतन्नाम्नोपास्यत्वाय । एतद्विधानविदोऽवान्तरफलमाह—कमिति । य एवं यथोक्तमेतत् अर्कस्यार्कत्वं वेद ह वै निश्चितमस्मा उपासकाय कम् उदकं सुखं वा भवति नामसामान्यादित्यर्थः ॥ १ ॥

अथाद्भ्यः सकाशात् पृथिवीद्वारा अग्न्युत्पत्तिमाह—

आपो वा अर्कस्तद्यदपाँ् शर आसीत् तत्समहन्यत । सा पृथिव्यभवत् । तस्यामश्राम्यत् । तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्ततासिः ॥ २ ॥

आपो वा अर्क इति गौण्या वृत्त्योच्यते । भूतान्तरसहितास्वप्सु कारणभूतासु पृथिवीद्वारा पार्थिवस्याग्नेः स्थितत्वात् 'अयमग्निरर्क' इति च वक्ष्यमाणत्वात् । तत्तत्रात्सु भूतान्तरसहितासु उत्पन्नासु सतीषु यदपां शर आसीत्कारणस्योच्छूनत्वलक्षणो दध्न इव मण्डभूतं बभूव तत्तेजसा सा वाह्नान्तः पच्यमानं समहन्यत सङ्घातमापद्यत कठिनमभूत् । सा पृथिव्यभवत् । ताभ्योऽद्भ्यो विराट्शब्दवाच्यम् अण्डमभवदिति यावत् । तस्यां पृथिव्यामुत्पादितायां स मृत्युरश्राम्यत् लोकवच्छ्रमयुक्तो बभूव । तस्य मृत्योः श्रान्तस्य अत एव तप्तस्य खिन्नस्य तेजोरसस्तेज एव रसस्तेजोरसोऽग्निरूपो विराडभिमानी प्रजापतिश्चतुर्मुखब्रह्मशब्दवाच्यः प्रथमशरीरी निरवर्तत उत्पन्न इत्यर्थः ॥ २ ॥

एवमुत्पन्नस्य विराजो ध्यानार्थमाह—

स त्रेधाऽऽत्मानं व्यकुरुताऽऽदित्यं तृतीयं वायुं तृतीयँ् स एष प्राणस्त्रेधा विहितः । तस्य प्राची दिक्शिरोऽसौ चासौ चेर्मौ । अथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥

स मृत्युर्हिरण्यगर्भात्मैव विराड् अनुपमर्दनेन त्रेधा त्रिप्रकारमात्मानं कार्यकरणसङ्घातं स्वयमेव व्यकुरुत व्यभजत् । कथं त्रेधेत्यत आह—आदित्यमिति । आदित्यं तृतीयमग्निवाय्वपेक्षया व्यकुरुत । तथाऽग्न्यादित्यापेक्षया वायुं तृतीयम् । तथा वाय्वादित्यापेक्षयाऽग्निं तृतीयमिति द्रष्टव्यम्, स त्रेधाऽऽत्मानमित्युपक्रमात् । सशब्देन अव्यवहितविराडात्मपरामर्शशङ्कां वारयति—स इति । स एष मृत्य्वात्मा प्राणः सूत्रभूत एव अग्निवाय्वादित्यरूपेण स्वोत्पन्नविराडनुपमर्दनेन त्रेधा विहितो विभक्त इत्यर्थः । अथास्य विराजोऽग्नेरर्कनाम्नोऽश्वस्येव संस्कारार्थं दर्शनमाह—तस्येति । तस्य चित्यस्याग्नेः

शिरः प्राची दिगुत्कृष्टत्वसामान्यात् । अग्नेः ईर्मौ बाहू असौ चासौ चैशान्याग्नेय्यौ पार्श्वदिक्सम्बन्धसामान्यात् । अन्ययोर्बाह्वोः पार्श्वसम्बन्धो वर्तते । अनयोरपि दिशोः पार्श्वत्वेन कल्प्यमानदक्षिणोत्तरदिक्सम्बन्धः समान इत्यर्थः । अथानन्तरमस्य चित्याग्नेः प्राङ्मुखस्य पुच्छं जघन्यो भागः प्रतीची पश्चिमा दिक् जघन्यत्वसामान्यात् । अग्नेः सक्थ्यौ सक्थिनी पृष्ठनिष्ठोन्नतास्थिनी असौ चासौ च वायव्यनैर्ऋत्यौ, पृष्ठकोणत्वसामान्यात् । अग्नेः पार्श्वे दक्षिणा चोदीची च, उभयादिक्सम्बन्धसामान्यात् । द्यौः पृष्ठमन्तरिक्षमुदरमित्युक्तार्थम् । उर इयं पृथिवी, अधोभागत्वसामान्यात् । अथोपास्याग्नेः अप्रतिष्ठितत्वं गुणमाह—स इति । स एषोऽग्निः प्रजापतिरूपो लोककालाद्यात्मकोऽप्सु कारणभूतासु प्रतिष्ठितः । एतद्गुणोपासनफलमाह—यत्रेति । अग्नेरेवमप्सु प्रतिष्ठितत्वं विद्वान्यत्र क्व चैति गच्छति तत्तत्रैव प्रतितिष्ठति प्रतिष्ठां प्राप्नोतीत्यर्थः ॥ ३ ॥

यो मृत्युरवादि प्रतिपद्येमं विराजमसृजतेत्युक्तः स केन व्यापारेणेत्याकाङ्क्षायामुत्तरो ग्रन्थः । यद्वा तेजोरसो निरवर्तताग्निरित्यत्र अत्तुः सर्ग उक्तः । संप्रति तस्य स्थित्यर्थमन्नसर्ग उच्यते—

सोऽकामयत द्वितीयो म आत्मा जायेतेति । स मनसा वाचं मिथुनँ समभवदशनाया मृत्युस्तद्यद्रेत आसीत् स संवत्सरोऽभवत् । न ह पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभः । यावान् संवत्सरस्तमेतावतः कालस्य परस्तादसृजत । तं जातमभि व्याददात् स भाणकरोत् । सैव वागभवत् ॥ ४ ॥

स प्रकृतो मृत्युर्मनःकरणकः सूत्रात्माऽकामयत कामितवान् । किम् ? सूक्ष्मशरीरापेक्षया द्वितीयो मे ममाऽऽत्मा शरीरं स्थूलं जायेत उत्पद्येतेति । स मृत्युर्मनसा पूर्वोत्पन्नेन वाचं वेदत्रयीलक्षणां मिथुनं द्वन्द्वभावं समभवत् समभावयत्, मनसा त्रय्यालोचनलक्षणं संभावनं कृतवान् । त्रयीविहितसृष्टिक्रमं मनसाऽन्वालोचयदिति यावत् । 'सोऽकामयत' इत्यत्र सर्वनाम्नाऽव्यवहितपूर्वोक्तवैश्वानरपरामर्शशङ्का मा भूदित्येतदर्थं कामनावन्तं विशिनष्टि—अशनाया मृत्युरिति । एतन्मृत्योर्विशेषणं छान्दसम् । तथा च अशनायोपलक्षितो मृत्युः पूर्वोक्त एवात्र परामृष्टव्यो नेतरः । तत्तत्र

मिथुने यद्रेतो बीजं प्रथमशरीरिणः प्रजापतेरुत्पत्तिकारणभूतं जन्मान्तरीयं ज्ञानकर्मरूपमासीत् तत्त्रय्यालोचनेन पश्यन् मृत्युस्तद्भावभावितः सन्नपः सृष्ट्वा तेन रेतसा बीजेन अप्सु अनुप्रविश्य अण्डरूपेण गर्भीभूतः स मृत्युः संवत्सरोऽभवत् संवत्सरकालनिर्माता आदित्यो बभूव। ततस्तस्मात् संवत्सरकालनिर्मातुरादित्यात्मनो मृत्योः पुरा पूर्वं संवत्सरः कालविशेषो नाऽऽस न बभूव। हेति प्रसिद्धम्। तं संवत्सरकालनिर्मातारमन्तर्गर्भं प्रजापतिं यावानिह लोके संवत्सरः प्रसिद्ध एतावन्तं कालमबिभः भृतवान्मृत्युः। एतावतः कालस्य संवत्सरमात्रस्य परस्तादूर्ध्वं तं वैराजमसृजत सृष्टवान् अण्डमभिनदिति यावत्। तमेवं सृष्टं प्रथमशरीरिणं कुमारं मृत्युस्तमभिव्याददात् मुखव्यादानं कृतवान्। तेन तस्मिन्कृते सति स उत्पन्नः कुमारः स्वाभाविक्याऽविद्यया युक्तो भीतः सन् भाणित्येवं शब्दमात्रमकरोत्। सैव वाक् शब्दसामान्यमभवत् जातमित्यर्थः ॥ ४ ॥

अथर्गादिसृष्टिमुपदेष्टुं पीठिकामाह—

स ऐक्षत यदि वा इममभिमँ स्ये कनीयोऽन्नं करिष्य इति। स तया वाचा तेनाऽऽत्मनेदँ सर्वमसृजत यदिदं किञ्चर्चो यजूँ षि सामानि च्छन्दाँ सि यज्ञान् प्रजाः पशून्। स यद्यदेवासृजत तत्तदत्तुमध्रियत। सर्वं वा अत्तीति तददितेरदितित्वँ सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥ ५ ॥

स मृत्युः अशनायावानपि कृतरवं कुमारमालोक्य ऐक्षत ईक्षितवान् विचारमकरोत्। वै प्रसिद्धम्। इमं कुमारं स्रष्टव्यान्नहेतुभूतं यद्यहमभिमंस्ये हिंसिष्ये तदाऽन्नं कनीयोऽल्पीयः करिष्ये बीजभक्षणादिव। बहु च कर्तव्यं दीर्घकालभक्षणायेति विचार्य तद्भक्षणादुपरराम। एवं स मृत्युः क्रमेण तया वाचा कुमारवदननिर्गतया तेनाऽऽत्मना कुमारस्वरूपमापन्नेनेदं वाच्यवाचकरूपं सर्वं जगदसृजत। किञ्च यदिदम्। ऋचो नियताक्षरपादबन्धसमन्विता मन्त्रविशेषाः। यजूंषि अनियताक्षरपादाः। ऋच एव स्तोभाक्षरसंयुक्ताः सामानि। छन्दांसि गायत्र्यादीनि। तैर्विशिष्टानेतान् मन्त्रानसृजतेति यावत्। यज्ञांस्तत्साध्यान्। प्रजास्तत्कर्त्रीः। पशूंश्च ग्राम्यारण्यान् कर्मसाधनीभूतान् एवमसृजत। स मृत्युर्यद्यदेव क्रियां तत्साधनं फलं वाऽसृजत तत्तदत्तुं भक्षयितुमध्रियत धृतवान् मनः। सर्वं कृत्स्नं वा अत्ति

यस्मात् तस्माददितेरदितिनाम्नो मृत्योः अदितित्वं प्रसिद्धम्। एतद्गुण-फलमाह—सर्वस्येति। य एतददितेर्मृत्योरदितित्वं गुणं यथोक्तं वेद उपासीत स सर्वात्मा भूत्वा अदितिवत् सर्वस्यैतस्य अत्ता भवति। सर्वमन्न-मेवास्य भवति। सदा न कदाचिदस्य अत्ता भवतीति वक्तुं पुनर्वचन-मित्यर्थः ॥ ५ ॥

अथाश्वाश्वमेधयोः निर्वचनमुपोद्घातपूर्वकम् 'एष ह वा अश्वमेध' इत्यतः प्राक्तनेनाऽऽह—

सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति। सोऽश्राम्यत्। स तपोऽतप्यत। तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत्। प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरँ् श्वयितु-मध्रियत। तस्य शरीर एव मन आसीत् ॥ ६ ॥

स मृत्य्वात्मा प्रजापतिर्भूयसा यज्ञेन भूयोदक्षिणावत्त्वेन भूयान् यज्ञोऽश्वमेधस्तेन भूयो यजेय पुनरपि यजेय इत्यकामयत। भूयःशब्द-स्तु पूर्वजन्मकरणापेक्षया। एवं महत्कार्यं कामयित्वा स मृत्य्वात्मा विराडश्राम्यत् लोकवत्। स तपोऽतप्यत, तस्य श्रान्तस्य तप्तस्येति पूर्ववत्। यशो वीर्यमुदक्रामदित्येतयोः स्वयमेवार्थमाह—प्राणा इति। प्राणाश्चक्षुरादयो वै यशस्तद्धेतुत्वात्तथा शरीरे वीर्यं बलं त एव। न ह्युत्क्रान्तप्राणो यशस्वी बलवान् वा भवति। एवंभूतेषु प्राणेषु उत्क्रान्तेषु शरीरान्निर्गतेषु प्रजापतेस्तच्छरीरं श्वयितुमुच्छूनभावं गन्तुमध्रियत आरब्धममेध्यं चाभवत्। तस्य मृत्योः शरीरान्निर्गतस्यापि शरीर एव मन आसीत् आसङ्गाद्विषयासक्तस्येव विषय इत्यर्थः ॥ ६ ॥

ननु तस्मिन्नेव शरीरे गतमनाः सन् किमकरोदित्यपेक्षायामाह—

सोऽकामयत मेध्यं म इदँ् स्यादात्मन्व्यनेन स्यामिति। ततोऽश्वः समभवत्। यदश्वत् तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्व-मेधत्वम्। एष ह वा अश्वमेधं वेद य एनमेवं वेद। तमनव-रुध्येवामन्यत। तँ् संवत्सरस्य परस्तादात्मन आलभत पशून् देवताभ्यः प्रत्यौहत्। तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजा-पत्यमालभन्त। एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर

आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ। सो पुनरेकैव देवता भवति। मृत्युरेवाप पुनर्मृत्युं जयति। नैनं मृत्युराप्नोति। मृत्युरस्याऽऽत्मा भवत्येतासां देवतानामेको भवति ॥ ७ ॥

स शरीरान्निर्गतोऽपि प्रजापतिः सामर्थ्यातिशयात् ममेदं शरीरं मेध्यं मेधार्हं यज्ञियं स्याद्धवेदहं चानेन शरीरेण आत्मवान् शरीरवान् स्यां भवेयमित्यकामयत तत्पुरस्सरं प्रविवेशेति यावत्। यद्यस्माच्छरीरं मद्वियोगाद् यशोवीर्यं सदश्वदश्वयत् ततस्तस्मादश्वः समभवत्। तथा च शरीरतद्वतोरभेदविवक्षया अयमश्वः साक्षात्प्रजापतिरेवेति स्तूयते। गतयशोवीर्यत्वादमेध्यं सत् मत्प्रवेशात् तच्छरीरं मेध्यमभूदिति यस्मात्तदेव तस्मादेव अश्वमेधस्य क्रतोरश्वमेधत्वम् अश्वमेधनामलाभः। तथा च क्रियाद्यात्मकः क्रतुः साक्षात्प्रजापतिरेवेति स्तूयत इत्यर्थः। एवम् 'उषा वा नैवेहे'त्यादिना अश्वाग्न्योरुपासनमुक्तम्। इदानीं तदुभयमेकमेवेति विशिष्टोपासनं विधातुं प्रधानविधिमाह—एष ह वा इति। यः कश्चिदेनमश्वमग्निरूपमर्कं चैवम् 'उषा वा' इत्यादिनोक्तरूपेण 'तमनवरुध्येवामन्यत' इत्यारभ्य प्रदर्श्यमानप्रकारेण 'एष ह वा अश्वमेधो य एष तपती'त्यादिना 'सो पुनरेकैव देवता भवति मृत्युरि'त्यन्तेन वक्ष्यमाणविशेषेण च विशिष्टं वेद उपास्ते स एषोऽश्वमेधं वेद नान्यः। तस्मादेवंविधमश्वमेधं प्रजापतित्वकाम उपासीतेति विशिष्टविधिरिति वाक्यार्थः। तत्र पशुविषयं तावद्दर्शनमाह—तमिति। प्रजापतिर्भूयो यज्ञेन भूयो यजेयेति स्वीयसङ्कल्पानुगुणत्वेन स्वदेहस्यैव अश्वत्वं कल्पयित्वा तमश्वमनवरुद्ध्येव अवरोधमकृत्वैव मुक्तप्रग्रहम् उत्सृष्टममन्यत अचिन्तयत्। तमात्मरूपमश्वं संवत्सरस्य द्वादशमासपरिमितस्य कालस्य परस्ताद् ऊर्ध्वमात्मन आत्मार्थं प्रजापतिदेवताकत्वेन आलभत आलम्भं कृतवान्। पशून् ग्राम्यानारण्यांश्च देवताभ्यः स्वावयवभूताभ्यः प्रत्यौहत् यथादैवतं प्रतिगमितवान्। तस्मात् एवमन्योऽपि प्रजापतिवदुपासीतेति वाक्यार्थः। फलावस्थः प्रजापतिः इत्थमश्वमेधोपासनमकरोदित्यत्र आधुनिकानामाचारं प्रमाणति—तस्मादिति। यस्मात् प्रजापतिरेवमकरोत् तस्मादेव याज्ञिका प्राजापत्यं प्रजापति-

देवताकमत एव सर्वदेवत्यं सर्वदेवार्थं प्रोक्षितं मन्त्रपूतमालभन्ते देवतोद्देशेन उपयुञ्जते । कल्पितबाह्यपशुहेतुकोभयविधस्यापि क्रतोः फलरूपेण प्रत्यक्षत्वमित्याह—एष इति । य एष सर्वलोकप्रत्यक्षः सविता तपति जगदवभासयति, एष वा एवोभयविधोऽश्वमेधः फलात्मा-ऽवस्थितो दृश्यते । ननु कोऽसौ क्रतुफलात्मकः सविता मण्डलं देवता वेति सन्देहे तत्स्वरूपमाह—तस्येति । तस्य क्रतुफलस्य संवत्सरः प्रसिद्ध आत्मा स्वरूपमहोरात्रादिद्वारा तन्निवर्तकत्वात् । तथा च मण्डलाधिपति-रिति निश्चितम् । क्रतोरादित्यत्वमुक्त्वा तदङ्गस्याग्नेस्तदाह—अयमिति । योऽयं पार्थिवश्चित्योऽग्निः क्रत्वङ्गभूतस्तेजोरस इत्युक्तः, स एष फला-त्मकोऽर्कः सविता । नन्वेवं पूर्वोक्तस्यैव अग्नेरादित्यत्वं कस्मान्नियम्यत इत्यत आह—तस्येति । तस्य चित्यस्याग्नेरिमे भूरादयो लोका आत्मानः स्वरूपभूता शरीरावयवभूता इति । यावत् तस्य प्राची दिगित्यादिना पूर्वमप्युक्तत्वात् । इदानीमुभयोरेकत्वमनूद्य मृत्य्वात्मना सूत्रेण सहै-कत्वं दर्शयति—तावेताविति तावेतावुक्तरूपौ अर्काश्वमेधौ सा पुनरेकैव देवता । का सा देवता किमुभयोरन्यतराऽन्यैव वेति वीक्षायामाह— मृत्युरिति । पूर्वमप्येकैव देवताऽऽसीत् । सा पुनः क्रियादिनिर्वृत्त्युत्तर-कालमेकैव देवता मृत्युफललक्षणा प्राणाख्या भवति । एवंभूताश्वमेधो-पासकस्य फलमाह—अप पुनरिति । योऽश्वमेधं यथोक्तप्रकारेणोपास्ते अहमेव मृत्य्वात्मा प्रजापतिरस्मीति, स पुमान् पुनर्मृत्युमपजयति सकृन्मृत्वा पुनर्मरणाय न जायते । अपजितोऽपि मृत्युः शत्रुवदेनं पुनः प्राप्नुयादित्याशङ्क्याऽऽह—नैनमिति । एनमुपासकं मृत्युः पुनर्नाऽऽप्नोति । तत्र हेतुमाह—मृत्युरिति । मृत्युरस्यैवंविद आत्मा भवति । किञ्च फल-भूतः सन्नेतासामग्निवाय्वादित्यात्मकानामेकोऽभिन्नो भवति सर्वात्मकः प्रजापतिरेव भवतीत्यर्थः ॥ ७ ॥

इति प्रथमाध्यायस्य द्वितीयं ब्राह्मणम् ॥ २ ॥

एवमश्वमेधाग्निब्राह्मणाभ्या समुच्चितयोः केवलयोर्वा ज्ञानकर्मणो-र्मृत्य्वात्मभावः परं फलमित्युक्तम् । इदानीं तयोर्यत उद्भवस्तस्योद्भाव-कस्योपास्यस्य प्राणस्य स्वरूपनिर्णयार्थम् उद्गीथब्राह्मणमारभ्यते । प्राणो-पास्तिर्हि ज्ञानकर्मोत्पत्तिप्रतिबन्धकीभूतरागाद्यपध्वस्तिहेतुः, तस्याः पाप्ममृत्य्वतिक्रमणावान्तरफलत्वात् । कोऽसौ पाप्मा मृत्युः, कुतो वा

तस्योद्भवः, केन वा तस्यातिक्रमणं कथं वेति वीक्षायामेतत्सर्वं स्पष्ट-यितुमाख्यायिकामनुसृत्य 'द्वया ह' त्यादिश्रुतिः प्रवर्तते--

द्वया ह प्राजापत्या देवाश्चासुराश्च । ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त । ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति ॥ १ ॥

अत्र हशब्दः पूर्ववृत्तावद्योतकः । प्रजापतिशब्दश्च भविष्यद्वृत्ति-माश्रित्य यजमानविषयकः । तथा च द्वया द्विप्रकारा ह किल प्राजा-पत्याः प्रजापतेर्हिरण्यगर्भस्य यजमानावस्थस्य इमेऽपत्यभूता गोलकावस्था वागादयः प्राजापत्याः । के ते द्विप्रकारा इत्यत आह--देवाश्चासुरा-श्चेति । शास्त्रीयज्ञानकर्मवासनावासिता द्योतनात्मका देवाः । प्रत्यक्षा-नुमानजनित-दृष्टप्रयोजनस्वाभाविक-ज्ञानकर्मवासनावासिता असुराः । स्वेष्वेव असुषु रमणात् देवेभ्योऽन्यत्वाद्वा असुराः । चौ समुच्चये मिथः । यस्माद्वागादीनामासुरी वृत्तिर्बहुला ततस्तस्माद्देवाः कानीयसाः कनीयांस एव कानीयसा अल्पीयांस एव, शास्त्रप्रवृत्तेरत्यन्तं यत्नसाध्यत्वात् । ज्यायसा ज्यायांसो बहुतरा असुराः, शास्त्रानाधेयस्वाभाविक-प्रवृत्तेर्बहुलत्वात् । ते देवा असुरा एषु लोकेषु ब्रह्मादिस्थावरान्तेषु शास्त्रीयेतरज्ञानकर्मसाध्येषु निमित्तभूतेषु सत्सु अस्पर्धन्त स्पर्धां कृतवन्तः । तेषां देवासुराणां सात्त्विकतामसानुसारेण शमकामादिवृत्त्यु-द्भवाभिभवौ स्पर्धा । कदाचित्प्राणानां शास्त्रजनितवृत्त्युद्भवान् देवानां जये सति धर्मवृद्धेर्वागाद्युपहितस्य यजमानस्य धर्मप्राधान्यात् आमानुषाद्वा च प्रजापतेरुत्कर्षः । तद्विपरीतवृत्त्युद्भवात्तु असुराणां जये सत्यधर्मवृद्धेः आमानुषाद्वा च स्थाणोरपकर्षः । साम्ये च मनुष्यत्वप्राप्तिरित्यर्थः । ते देवा असुरैरभिभूयमाना ऊचुः हन्तेदानीमस्मिन् यज्ञे ज्योतिष्टोमाख्यः उद्गीथकर्मकर्तृप्राणस्वरूपाश्रयणेन असुरानभिभूय स्वं देवभावमत्ययाम अतिगच्छाम प्रतिपद्यामहे इत्यन्योन्यमुक्तवन्तः । उद्गीथकर्मकर्तृस्वरूपा-श्रयणं च ज्ञानकर्मभ्यां भवति । तत्र कर्म तदेतानि जपेदिति विधास्य-मानमन्त्रजपलक्षणम् । ज्ञानं त्विहाऽऽख्यायिकया परीक्ष्यमाणमशुद्ध-वागादिप्रत्याख्यानेन विशुद्धप्राणोपासनरूपमित्यर्थः ॥ १ ॥

तदुपास्यस्वरूपनिर्धारणाय परीक्षाप्रकारं दर्शयति 'ते ह वाचमूचुः' इत्यादिकण्डिकाषट्केन—

ते ह वाचमूचुस्त्वं न उद्गायेति । तथेति तेभ्यो वागुदगायत् । यो वाचि भोगस्तं देवेभ्य आगायत् । यत्कल्याणं वदति तदात्मने । ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन् । स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥ २ ॥

ते पूर्वोक्ता देवा होक्तप्रकारेण निश्चित्य वाचं वागभिमानिनीम् अग्न्याख्यामेवोद्गानकर्त्रीम् 'असतो मा सद्गमये'त्यादिमन्त्रप्रकाश्यां च देवतां मत्वा त्वं नोऽस्मभ्यमुद्गाय औद्गात्रं कर्म कुर्विति ऊचुरुक्तवन्तः । एवं देवैर्नियुक्ता वाग्देवता तथेति तथाऽस्त्विति तान्नियोक्तॄन् प्रत्युक्त्वा स्वसामर्थ्यमविचार्य उद्गानकर्तृत्वं मन्त्रप्रकाश्यत्वं चाऽऽत्मनोऽङ्गीकृत्य तेभ्योऽर्थिभ्य उदगायत उद्गानं कृतवती । कः पुनरनेन कर्मणा कार्यविशेषः कृत इत्यपेक्षायां यथा प्रकृते ज्योतिष्टोमे उद्गात्रा त्रिषु स्तोत्रेषु यजमानार्थमुद्गानं क्रियते नवस्ववशिष्टेषु स्वार्थं तद्वदत्रापि द्वादशस्तोत्रात्मके द्विविधं तदिति कथयंस्तं कार्यविशेषमाह—य इति । यो वाचि निमित्तभूतायां सत्यां सङ्घातस्य भोगः सुखविशेषस्तं देवेभ्योऽर्थिभ्य आगायदुद्गानेन प्रापितवती । यत्पुनः कल्याणं शोभनं वदति यथाशास्त्रं वर्णानभिनिर्वर्तयति तदात्मने स्वार्थमेव तद्ध्यसाधारणं वाग्देवतायाः कर्म यत्सम्यग्वर्णोच्चारणम् । एवं वाग्देवतायाः कल्याणवदनरूपाऽसाधारणविषयाभिषङ्गलक्षणं रन्ध्रं स्वावसरं प्रतिलभ्य तेऽसुरा स्वकार्योद्युक्ता इत्याह— त इति । तेऽसुराः कामादिस्वाधिकाराद्देवैः शमादिना कृत्वा प्रच्याव्यमाना देवच्छिद्रतन् अविदुर्विदितवन्तः । किं तदित्यत आह —अनेनेति । अनेन वा उद्गात्रा शास्त्रजनितकर्मज्ञानरूपेण नोऽस्मान् स्वाभाविककर्मज्ञानात्मकान् देवा अत्येष्यन्तीत्येवं विदित्वा तमुद्गातारं वाग्रूपमभिद्रुत्य वेगेनाभिगम्य स्वेनाऽऽसङ्गलक्षणेन पाप्मनाऽविध्यंस्ताडितवन्तः संयोजितवन्त इति यावत् । एवमसुरैः प्रजापतेर्वाचि पाप्मा क्षिप्त इति कुतोऽवगम्यत इत्याशङ्कायां प्रजास्वनुभूयमानपाप्मकार्यलक्षणलिङ्गेन अनुमीयमानः पाप्मा प्रजाकारणे प्रजापता-

वप्यनुमानादित्याह—स य इति । स यः पाप्मा साधकावस्थस्य प्रजापतेर्वाचि प्रक्षिप्तः स एषोऽनुमानेन प्रत्यक्षीक्रियते । कोऽसौ ? यदेव येनैव प्रयुक्ता सतीयं वागिदमप्रतिरूपमननानुरूपं शास्त्रप्रतिषिद्धं स्त्रीवर्णनादि वदति स एव । य एवं प्रजासु प्रतिकूलवदनहेतुत्वेनानुमितः स एव पाप्मा स कारणभूत प्रजापतिवाचि गतः । कारणानुविधायि हि कार्यमित्यर्थः ॥ २ ॥

अथ ह प्राणमूचुस्त्वं न उद्गायेति । तथेति तेभ्यः प्राण उदगायत् । यः प्राणे भोगस्तं देवेभ्य आगायत् । यत्कल्याणं जिघ्रति तदात्मने । ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन् । स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ॥ ३ ॥ अथ ह चक्षुरूचुस्त्वं न उद्गायेति । तथेति तेभ्यश्चक्षुरुदगायत् । यश्चक्षुषि भोगस्तं देवेभ्य आगायत् । यत्कल्याणं पश्यति तदात्मने । त विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन् । स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ॥ ४ ॥ अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति । तथेति तेभ्य श्रोत्रमुदगात् । यः श्रोत्रे भोगस्तं देवेभ्य आगायत् । यत्कल्याणँ शृणोति तदात्मने । ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन् । स यः स पाप्मा यदेवेदमप्रतिरूपँ शृणोति स एव स पाप्मा ॥ ५ ॥ अथ ह मन ऊचुस्त्वं न उद्गायेति । तथेति तेभ्यो मन उदगायत् । यो मनसि भागस्तं देवेभ्य आगायत् । यत्कल्याणँ सङ्कल्पयति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन् । स यः पाप्मा यदेवेदमप्रतिरूपँ सङ्कल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाऽविध्यन् ॥ ६ ॥

'अथ ह प्राणं प्राणदेवतामूचुरि'त्यारभ्य 'एवमु खल्वि'त्यन्तः प्राक्तनो ग्रन्थः समानार्थकः । कल्याणकल्याणकार्यदर्शनादनुक्तेष्वपि आसुरवेधोऽनुमीयत इत्याह--एवमिति । एवं वागादिवदेव खल्वनुक्ता एतास्त्वगादिदेवताः पाप्मभिः स्वैः स्वैरिन्द्रियासङ्गैरुपासृजन् संसर्गं कृतवन्तस्तेषामपि कल्याणेतरस्पर्शवत्त्वात् । भेदभ्रमव्यावृत्त्यर्थमेतदेव व्याचष्टे—एवमिति । एता देवता एवं वागादिवत्पाप्मनाऽविध्यन् विद्धवन्तः । विपर्ययेण वा व्याख्यानव्याख्येयभाव इत्यर्थः ॥ ३—६ ॥

एते वागादयो मृत्योरतिक्रमणेऽसमर्था इति निश्चित्य मुख्यं प्राणं प्रार्थितवन्त इत्याह—

अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति । तथेति तेभ्य एष प्राण उदगायत् । ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति । तदभिद्रुत्य पाप्मनाऽविध्यत्सन् । स यथाऽश्मानमृत्वा लोष्ठो विध्वँसेतैवँ हैव विध्वँसमाना विष्वञ्चो विनेशुस्ततो देवा अभवन् पराऽसुरा भवत्यात्मना पराऽस्य द्विषन्भ्रातृव्यो भवति य एवं वेद ॥ ७ ॥

अथ वागादिषु नैराश्यानन्तरम् । हेममित्यभिनयेन प्रदर्श्यते । आसन्यम् आस्ये भवमासन्यं मुखान्तर्बिलस्थम् । मुख्यं प्राणमूचुरित्यादि समानम् । ततस्तेऽसुराः पूर्वाभ्यासवशात्तं मुख्यं प्राणमभिद्रुत्य पाप्मनोक्त-लक्षणेन अविध्यत्सन् वेधितुमिच्छां कृतवन्तः संश्लिष्यमाणाः सन्तो विष्वञ्चो नानागतयो विनेशरित्यन्वयः । तत्र स प्रसिद्धो दृष्टान्तो यथा लोके पाषाणचूर्णनाय प्रक्षिप्तो लोष्टः पांसुपिण्डोऽश्मानं पाषाणमृत्वा प्राप्य स्वयं विध्वंसेत विस्रंसेत विचूर्णीभवेदेवं हैव एवमेव खलु विध्वंसमाना विशीर्यमाणा असुरा अपि विनष्टाः । ततस्तस्मादसुरविनाशाद् देवत्वप्रति-बन्धकपाप्मभ्यो वियोगात् मुख्यप्राणाश्रयणवशाद् देवा वागादयो वक्ष्य-माणस्वस्वरूपेण अग्न्याद्यात्मकेनाभवन् । असुराः पराभूता अभवन्नित्य-नुषङ्गः । न पुनः प्रारोहन्निति यावत् । आख्यायिकाक्रमेण यजमाना-वस्थप्रजापतिवदन्योऽपि आधुनिकस्तत्प्राप्तिकामोऽप्युपासीतेति सफला-मुपासनां विदधाति—भवतीति । एवं यथोक्तं वक्ष्यमाणदूर्नामादिगुणं च प्राणं यो वेदोपास्ते स आत्मना प्रजापतिस्वरूपेण भवति । अस्यो-

पासकस्य प्रजापतिप्रतिपक्षीभूतः पाप्मा द्विषन् भ्रातृव्यो नित्यद्वेष्टा शत्रुर्यः स च पराभवति लोष्टवद्विशीर्णो भवतीत्यर्थः ॥ ७ ॥

अथैवं वक्ष्यमाणत्वेन स्थितैरयास्याङ्गिरोदूर्भिगुणैर्विशिष्टासुकर्मको-पासनविधानपूर्वकं भवत्यात्मनेत्यादिनोक्तं द्विविधं प्रजापतिस्वरूपेण भवनं पाप्मशत्रुपराभवनं च फलमाख्यायिकामेवानुसृत्य स्पष्टयति 'ते होचुरि'त्यारभ्य 'अथाऽऽत्मन' इत्यतः प्राक्तनेन । तत्र देवताभाव-फलासाधारणगुणकथनार्थमाह—

ते होचुः क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति ।
सोऽयास्य आङ्गिरसोऽङ्गानाँ हि रसः ॥ ८ ॥

ते वागादयः प्राणेन परिप्रापितदेवस्वरूपाः फलावस्थाः सन्तो इत्यन्योन्यमूचुः । कथम् ? क्व न्विति वितर्के । यो नोऽस्मान् इत्थमसक्तं संयोजितवान् देवभावाय आत्मतत्त्वेनोपगमितवान् स क्व नु कस्मिन्नभू-दित्येवं लोकवदुपकारिणं विचारयन्तः सन्तोऽयं प्राण आस्ये मुखे य आकाशस्तस्मिन्नन्तरे वर्तत इत्यध्यवस्यन्तः । अनयाऽऽख्यायिकया गुणद्वयं सिद्धमित्याह—सोऽयास्य इति । यस्मादेवं वागादयः प्राणमास्ये-ऽन्तरुपलभ्य अयमास्येऽन्तरिति व्याजह्रुस्तस्मात्सोऽयास्यः, अत एव आङ्गिरसः कार्यकरणानामात्मा । तत्र हेतुर्हि यस्मादङ्गानां कार्यकरणानां रसस्तस्मादाङ्गिरस इत्यर्थः ॥ ८ ॥

प्राणस्य स्वतः शुद्धत्वेऽपि अशुद्धवागादिसम्बन्धादशुद्धत्वं स्यादिति शङ्कां वारयितुं पापहानिफलासाधारणगुणकं विशिष्टोपासनमाह—

सा वा एषा देवता दूर्नाम दूरँ ह्यस्या मृत्युर्दूरँ ह वा
अस्मान् मृत्युर्भवति य एवं वेद ॥ ९ ॥

यां प्राप्यासुरा विनष्टाः देवैरयमास्यऽन्तरिति निर्धारिता सा वा एषा वर्तमानोपासकशरीरस्था प्राणरूपा देवतैव दूर्नाम दूरित्येवं व्याख्याता, अतः शुद्धा । कथं दूर्नामत्वमित्यत आह—दूरं इति । हि यस्मादस्याः प्राणदेवतायाः सकाशान्मृत्युरासङ्गलक्षणः पाप्मा दूरं दूरे भवति । एतद्गुणविशिष्टप्राणविदः फलमाह—दूरमिति । य एवमुक्तप्रकारेण विशुद्धिगुणं प्राणं वेदोपास्ते, अस्मादुपासकान्मृत्युर्दूरं दूरे भवतीत्यर्थः ॥ ९ ॥

एतदेव स्पष्टयति—

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्राऽऽसां दिशामन्तस्तद्गमयाञ्चकार। यदासां पाप्मनो विन्यदधात् तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति ॥ १० ॥

सोक्तार्थैतासां वागादीनां देवतानां पाप्मानं मृत्युं मरणशीलमेभ्योऽपहत्य अपच्छिद्य यत्राऽऽसां दिशामन्तः शास्त्रीयज्ञानादिसंस्कृतजनाधिष्ठितमध्यदेशादतिरिक्तो देशो दिशामन्तस्तत्तत्र दिशामन्ते तत्संस्थे जने च गमयाञ्चकार गमनं कृतवती। यस्मात्तत्र दिगन्तस्थेऽन्त्यजन आसां वागादीनां पाप्मनो विन्यदधात् विविधं न्यग्भावेन स्थापितवती तस्मात्तमन्त्यं जनं नेयाद् दर्शनसंभाषणादिभिर्न संसृजेत्। तथाऽन्तं तज्जननिवासस्थानं नेयान्न गच्छेत्। नेदिति परिभयार्थे निपातः। यद्यहं गच्छेयं तदा निषेधातिक्रमात्पाप्मानं मृत्युमन्ववायानि अन्ववाप्स्यामीति भीत्या न गच्छेच्छिष्टमात्र इत्यर्थः ॥ १० ॥

इदानीं सङ्गृहीतं देवताभावफलं स्पष्टयति 'सा वा एषा' इति कण्डिकया—

सा वा एषा देवतैतासां देवतानां पाप्मानं
मृत्युमपहत्याथैना मृत्युमत्यवहत् ॥ ११ ॥

अथ पापविमोकानन्तरमेना वागादिदेवताः कर्मभूता मृत्युं पूर्वोक्तमतीत्य अवहत् स्वं रूपं प्रापितवतीत्यर्थः ॥ ११ ॥

एवं सामान्योक्तमेव वहनं प्रत्येकमाह—

स वै वाचमेव प्रथमामत्यवहत्। सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्। सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥ १२ ॥

स प्राणो वाचमेव वाग्देवतामेव प्रथमां प्रधानभूतामुद्गातुरत्यन्तसंनिहितत्वात् अत्यवहत्। सा वाग्यदा यस्मिन्काले मृत्युमतीत्य अमुच्यत मोचिता स्वयं तदा वागेव स प्रसिद्धोऽग्निरभवत् पूर्वमप्यग्निरेव सती। तर्हि पूर्वस्मात् को विशेष इत्यत आह—सोऽयमिति। सोऽयमतिक्रान्तः पापान्निष्क्रान्तोऽग्निः परेण मृत्युं मृत्योः परस्ताद्दीप्यते। पूर्वं तु वागध्यात्मप्रतिबद्धो नेदानीमिव दीप्तिमानासीदित्यर्थः ॥ १२ ॥

अथ प्राणमत्यवहत्। स यदा मृत्युमत्यमुच्यत स वायुरभवत्।

सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥ १३ ॥

अथानन्तरं प्राणं नासिकान्तःसञ्चारिणं घ्राणम् । पवते वाति । शेषं समानम् ॥ १३ ॥

अथ चक्षुरत्यवहत् । तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत् । सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥ १४ ॥

तपति द्योतते ॥ १४ ॥

अथ श्रोत्रमत्यवहत् । तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवँस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥ १५ ॥

दिशः प्राच्यादयः ॥ १५ ॥

एवमेषामग्न्यादिदेवताप्राप्तावप्युपासकस्य किमायातमित्यत आह—

अथ मनोऽत्यवहत् । तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत् । सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवँ ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥ १६ ॥

य उपासक एवमग्न्याद्यात्मकवागादिपञ्चकविशिष्टं प्राणमात्मत्वेन वेद प्राणोऽहमित्युपास्ते तमेनमुपासकमेवं ह वै यजमानवदेवैषा प्राणदेवता मृत्युमतीत्य अतिक्रमय्य वैराज पदं वहति प्रापयतीत्यर्थः ॥ १६ ॥

पुनः सङ्घातविधारकत्वलक्षणं गुणान्तरमाह—

अथाऽऽत्मनेऽन्नाद्यमागायत् । यद्धि किञ्चान्नमद्यतेऽनेनैव तद्यदत इह प्रतितिष्ठति ॥ १७ ॥

यथा वागादिभिरात्मार्थमागानं कृतं तथा प्राणोऽपि त्रिषु पवमानेषु साधारणं प्राजापत्यफलकमागानं कृत्वा अथानन्तरमवशिष्टेषु नवसु स्तोत्रेष्वात्मन आत्मार्थमन्नं च तदाद्यं चान्नाद्यमागायत् । न केवलं प्रजापतिशरीरे प्राणस्यान्नस्वीकारे श्रुतरेव मानम्, किन्तु तत्कार्यभूतप्राणिष्वन्नस्वीकारदर्शनात् । कारणेऽपि तदनुमेयमित्यभिप्रेत्याऽऽह—यद्धीति । हि यस्माल्लोके प्राणिभिर्यत्किञ्चन सामान्यतोऽन्नमात्रमद्यते भक्ष्यते तदन्नमात्रमनेनैव प्राणेनैवाद्यते तस्मात् स्वार्थमेतदागानम् । नन्वेतदवधारणं कथं प्राणवद्वागादीनामपि अन्नकृतोपकारदर्शनादित्यत आह—इहेति । इहास्मिन् प्राणेऽन्नं प्रतिष्ठितम् । अतो वागादीनां प्राणद्वारक एवान्नकृतोपकारो न तु स्वातन्त्र्येणेति । ननु तर्हि

प्राणस्यापि वागादिवत्स्वार्थागानादासङ्गपाप्मवेधः स्यादित्याशङ्कायामाह—इहेति । इहान्ने देहाकारपरिणते प्राणः प्रतितिष्ठति । तदनुसारिणश्च वागादयः स्थितिभाज इति प्राणान्नस्य स्वपरस्थित्यर्थत्वान्न पापवेधः प्राणस्येत्यर्थः ॥ १७ ॥

उक्तं प्राणद्वारकं वागाद्यन्नकृतोपकारं दर्शयन्ती प्राणगुणान्तराणि विधातुं श्रुतिः प्रवर्तते—

ते देवा अब्रुवन्नेतावद्वा इदँ सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति । ते वै माऽभिसंविशतेति । तथेति तँ समन्तं परिण्यविशन्त । तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवँ ह वा एनँ स्वा अभिसंविशन्ति भर्ता स्वानाँ श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं य उ हैवंविदँ स्वेषु प्रति प्रतिबुभूर्षति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनुभवति यो वै तमनु भार्यान्बिभूर्षं त स हैवालं भार्येभ्यो भवति ॥ १८ ॥

ते प्रकृता वागादयो देवाः प्राणं प्रति अब्रुवन् उक्तवन्तः । इदं सर्वम् । वै प्रसिद्धम् । यदन्नं प्राणस्थितिकारणं तदेतावन्नातोऽधिकमस्ति । तत्पुनस्त्वमात्मन आत्मार्थमागासीः आगानेन आत्मसात्कृतवानसि । वयं चान्नमन्तरेण स्थातुं नोत्सहामहे अतोऽनु पश्चान्नोऽस्मानस्मिन् अन्ने आत्मार्थे तवान्ने आभजस्व आभजयस्व, णिचो लोपश्छान्दसः । भागिनः नः कुर्विति । तैरुक्तः प्राणस्ते यूयं यद्यन्नार्थिनो वै तर्हि मामामभिसंविशत समन्तत आभिमुख्येन निविशतेत्यब्रवीदिति शेषः । एवं राज्ञा प्राणेन अनुज्ञातास्ते देवास्तथाऽस्त्वित्यङ्गीकृत्य तं प्राणं परिवेष्ट्य समन्तं समन्तान् न्यविशन्त निश्चयेनाविशन्त । प्राणं परिवेष्ट्य निविष्टवन्तो यस्मात्तस्माल्लोको यदन्नमनेन प्राणेनात्ति भक्षयति । तेनैव प्राणान्नेनैता वागादयस्तृप्यन्ति न स्वातन्त्र्येण तेषामन्नसम्बन्धः । अतोऽनेनैवेत्यवधारणं सार्थकम् । तद्गुणविज्ञानफलं दर्शयन् सकल गुणजातमुपदिशति—एवमिति । य उपासको वागादयः प्राणाश्रिताः स च प्राणोऽहमेवेति वेदोपास्ते तमेनमुपासकमेवं ह वै यथा प्राणं वागादय एवमेव खलु स्वा ज्ञातयोऽभिसंविशन्त्याश्रयन्ति । तथैव मभिनिविष्टानां भर्ता भवति श्रेष्ठः पूज्यो भवति । पुरोऽग्रत एता गन्ता भवति । अन्नादो व्याधिरहितः सन्दीप्ताग्निर्भवति । अधि-

पतिरधिष्ठाय पालयिता च भवति। प्राणवदेव वागादीनामिति प्रत्येकं बोध्यम्। अयं तु गुणविधिरेव न त्वाङ्गिरसत्वादिवद्विशिष्टविधिः प्रत्येकं फलश्रुतेः। संप्रति विद्यां स्तोतुं तद्विद्यावद्विद्वेषिणो दोषमाह—य इति। उ आश्चर्ये। ह निश्चयेन य एवंविदं प्राणविदं प्रति स्वेषु ज्ञातीनां मध्ये प्रतिः प्रतिकूलः सन्बुभूर्षति भवितुमिच्छति प्रतिस्पर्धी भवितुं वाञ्छति स प्राणस्पर्धिनोऽसुरा इव भार्येभ्यो भरणीयेभ्यो न हैवालं भरणीयान् भर्तुं नैव पर्याप्तः। अथ प्राणविदनुरक्तस्य लाभं दर्शयति—अथेति। अथ पुनर्य एव ज्ञातीनां मध्य एतं प्राणविदं वागादय इव प्राणमनुगतो भवत्यनुरक्तो भवति यो वा अथ वा एतमेवंविदमन्वेवानुवर्तयन्नेव आत्मीयान् भार्यान्बुभूर्षति प्राणानुवृत्त्या वागादिरिव भर्तुमिच्छति स एव ह निश्चयेन भार्येभ्योऽलं भर्तुमिति समानमित्यर्थः॥ १८॥

सोऽयास्य आङ्गिरसोऽङ्गानाँ हि रसः प्राणो वा अङ्गानाँ रसः प्राणो हि वा अङ्गानाँ रसस्तस्मात् यस्मात् कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गानाँ रसः॥ १९॥

पूर्वप्रतिज्ञातं यदाङ्गिरसत्वं तदेव सोऽयास्य आङ्गिरसोऽङ्गानां हि रस इत्यनेनानूद्य प्राणो वै प्रसिद्धोऽङ्गानां रस इति प्रतिज्ञाते तत्कथमिति हेत्वपेक्षायां प्राणो हीत्यादिवाक्यम्। अत्रैवमन्वयो यस्मात् कस्माच्चाङ्गाद्यतः कुतश्चिदनिर्धारिताच्छरीरावयवात् प्राण उत्क्रामति तदेव तत्रैव तदङ्गं शुष्यति शोषमुपैति नान्यदिति। अन्वयव्यतिरेकाभ्यां हि यस्मात्प्राणो वा एवाङ्गानां रसः प्रसिद्धस्तस्मादेष हि वै प्राणोऽङ्गानां रूपकर्मात्मकानां कार्यकरणानां रस आत्मेत्युपसंहार इत्यर्थः॥ १९॥

अथास्यैव नामराश्यात्मत्वं वक्तुम् 'एष उ एवे'त्यादिकण्डिकाचतुष्टयम्। तत्र तावद्वागात्मत्वं प्राणस्य तत्त्वेनोपास्यत्वाय आह—

एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः॥ २०॥

उक्तोऽर्थः। एष प्राण एव बृहस्पतिरपि। तच्छब्दवाच्यं प्रसिद्धदेवपुरोहितत्वं व्यावर्तयति—वाग्वै बृहतीति। वाग्वा अनुष्टुबिति श्रुत्यन्तराद् द्वात्रिंशदक्षरात्मकानुष्टुप्छन्दस्करूपाया वाचो बृहत्यां षट्त्रिंशदक्षरच्छन्दस्करूपायामन्तर्भावाद्वाग्वै बृहतीत्युक्तम्। तस्या

बृहत्या मध्यस्थत्वादुपलक्षणविधया सर्वच्छन्दस्कृग्ग्राहिकाया एष प्राणः पतिः स्थित्युत्पादनहेतुत्वात्तस्माद् बृहस्पतिरित्युपसंहार इत्यर्थः ॥ २० ॥

तथा यजुर्वेदात्मकत्वमाह—

एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्माद् ब्रह्मणस्पतिः ॥ २१ ॥

एष उ एव ब्रह्मणो यजुर्वेदस्य पतिः। कथम् ? वाग्वै वाग्विशेषरूपं यजुरेव ब्रह्म वेदो वेदाधिकारात्तस्या एष पतिरित्यादि समानमित्यर्थः ॥ २१ ॥

अथास्य सामवेदात्मकत्वमाह—

एष उ एव साम वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वम्। यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते। साम्नः सायुज्यँ सलोकतां य एवमेतत्साम वेद ॥ २२ ॥

एष उ एव साम। कथम् ? वाग्वै सामेष स्त्रीलिङ्गशब्दवाच्यवस्तुमात्रविषयः साशब्द सा वै वाक्। पुंलिङ्गशब्दाभिधेयवस्तुमात्रविषयोऽमशब्दः। अम एष प्राणः 'केन मे पौंस्नानि नामान्याप्नोषीति प्राणेनेति ब्रूयात्केन मे स्त्रीनामानीति वाचा' इति श्रुत्यन्तरात्। नन्वेतावता कस्य सामत्वं मुख्यं निश्चितमित्यत आह—सा चामश्चेति। एतद्व्युत्पत्तेर्वागुपसर्जनः प्राण एव मुख्यसामशब्दवाच्यो यस्मात् तस्मादध्येतृप्रसिद्धस्यापि साम्नो मुख्यसामशब्दवाच्यप्राणनिर्वर्त्यत्वेन गौणमेव सामत्वम्। अस्यैव प्राणस्य प्रकारान्तरेण सामत्वमुपासनार्थमाह—यदिति। यदु एवेति च्छेदः। उशब्दो विकल्पार्थः। यद्यस्माद्वाऽयं प्राणः सूत्रात्मा लिङ्गात्मना प्लुषिणा पुत्तिकाशरीरेण समस्तुल्यो मशकशरीरेण समो नागेन हस्तिशरीरेण सम एभिस्त्रिभिर्लोकैस्त्रैलोक्यात्मकविराट्शरीरेण समोऽनेन सर्वेण हिरण्यगर्भजगद्रूपेण समस्तुल्य एव गोत्वादिवत्कार्त्स्न्येन परिसमाप्तस्तस्माद् एव साम। एतद्गुणकप्राणोपासनफलमाह—अश्नुत इति। य एवं यथोक्तमेतत्सामगुणकं प्राणं वेदोपास्ते स साम्नः प्राणस्य सायुज्यं सयुग्भावं समानेन्द्रियाभिमानतामश्नुते व्याप्नोति सलोकतां प्राण-

समानलोकतां वाऽश्नुते भावनातारतम्यात्फलतारतम्यमेतस्य सायुज्यादेः प्रधानफलत्वादयमपि विशिष्टविधिरेवेत्यर्थः ॥ २२ ॥

देहलीप्रदीपन्यायेनेमामेव फलश्रुतिमनुसृत्य गुणान्तरमाह—

एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीदँ सर्वमुत्तब्धं वागेव गीथोच्च गीथा चेति स उद्गीथः ॥ २३ ॥

एष प्राणो वा उद्गीथः । कथम् ? हि यस्मात्प्राणेनेदं सर्वमुत्तब्धमुदूर्ध्वं स्तब्धमुत्तम्भितं विधृतमिति यावत् । तस्मात्प्राणो वा उत् । तथा वाचा यस्माद् गीयते तस्माद्वागेव गीथा । उद्गीथशब्दाभ्यां प्राण एव वाच्य इत्याह—उच्च गीथा चेति । एतस्माद्विग्रहात् स वागुपसर्जनः प्राण एवोद्गीथ इत्यर्थः ॥ २३ ॥

उद्गीथदेवता प्राण एव न वागादिरित्युक्तार्थदार्ढ्याय आख्यायिकामाह—

तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्धानं विपातयताद्यदितोऽयास्य आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन चोदगायदिति ॥ २४ ॥

तत्तत्रैतस्मिन्नर्थे हाऽऽख्यायिका प्रवृत्ता । चिकितानस्यापत्यं चैकितानिस्तस्यापत्यं युवा चैकितानेयो ब्रह्मदत्तनामा विश्वसृजामृषीणां सत्रे राजानं सोमं भक्षयन्नुवाच । किम् ? अयास्याङ्गिरसशब्देन उद्गातोच्यते । तादृक्प्राणोपासकत्वात् स यद्यदि इतोऽस्माद्वागुपसर्जनीभूतात्प्राणात् पूर्वोक्तादन्येन देवतान्तरेणोदगायदुद्गानं निर्वर्तितवानीति यदि स्यात्तदा त्यस्य तस्यानृतवादिनो मम मूर्धानं शिरोऽयं भक्ष्यमाणः सोमो राजा विपातयताद् विस्पष्टं पातयतु । एवं प्राण एवोद्गातेत्याख्यायिकानिधारितमर्थं श्रुतिः स्वेन वचसोपसंहरति—वाचेति । स उद्गाता अयास्योपासनया तद्रूपभूतो वाचा प्राणप्रधानया प्राणेन च स्वात्मभूतेन ह्येवोदगायदित्यर्थः ॥ २४ ॥

एवमुद्गीथदेवता प्राण एवेति निर्धार्य तस्य स्वसुवर्णप्रतिष्ठागुणविधानार्थमुत्तरं कण्डिकात्रय प्रवर्तते—

तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन् वाचि स्वरमिच्छेत । तया वाचा स्वरसम्पन्नयाऽऽर्त्विज्यं कुर्यात् । तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एव ।

अथो यस्य स्वं भवति भवति हास्य स्वं य एव-
मेतत्साम्नः स्वं वेद ॥ २५ ॥

तस्य विशुद्ध्यादिगुणवत्तया प्रकृतस्य हैतस्य बृहस्पत्यादिगुण-
वत्तया निरूपितस्य साम्नः प्राणस्य स्वं धनं यो वेदास्य विज्ञातुर्ह स्वं
धनं भवति। एवं गुणफलेन प्रलोभ्य अभिमुखीकृतं शुश्रूषुं प्रत्याह—
तस्येति। तस्य वै साम्नः स्वर एव कण्ठादिमाधुर्यमेव स्वं भूषणम्।
कथं तर्ह्येतत्संपादनीयमित्यत आह—तस्मादिति। यस्मादेवं तस्मात्
आर्त्विज्यमृत्विक्कर्म करिष्यन्नुद्गाता वाचि स्वरमिच्छेत। तन्मात्रेण
सौस्वर्यासम्भवात् तद्धेतुदन्तधावनादि कुर्यादित्यर्थादवगम्यते। एतत्तु
प्रासङ्गिकं फलम्। तयैवं संस्कृतया स्वरसम्पन्नया आर्त्विज्यमृत्विक्कर्म
कुर्यात्। सौस्वर्यस्य सामभूषणत्वे गमकं सदृष्टान्तमाह—तस्मादित्या-
दिना। तस्माच्छब्दस्तथाऽर्थः। अथोशब्दो यथाऽर्थः। तथा च यथा
यस्य स्वं धनं भवति तं दिदृक्षन्ते लौकिकास्तथा यज्ञे स्वरवन्तमुद्-
गातारं दिदृक्षन्त एव द्रष्टुमिच्छन्त्येव जना इत्यन्वयार्थः। एवं सिद्धं
सफलं गुणविज्ञानमुपसंहरति—भवति हास्य स्वं य एवमेतत्साम्नः स्वं
वेदेति। उक्तार्थम्। एतच्च कण्ठनिष्ठं माधुर्यं बाह्यं धनं सौस्वर्यस्य
ध्वनिगतत्वादित्यर्थः ॥ २५ ॥

इदानीं लाक्षणिकवर्णज्ञानपूर्वकं तदुच्चारणं वर्णनिष्ठत्वादान्तरं
धनमाह—

तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णम्। तस्य
वै स्वर एव सुवर्णं भवति। हास्य सुवर्णं य एवमेतत्साम्नः
सुवर्णं वेद ॥ २६ ॥

तस्य हैतस्य साम्नः सुवर्णं कण्ठ्योऽयं दन्त्योऽयमिति ज्ञानपूर्वकं
वर्णोच्चारणं सम्यगेव सामशब्दवाच्यप्राणभूतस्य आन्तरं धनमिति यो
वेदास्योपासकस्य सुवर्णं लोकप्रसिद्धमेव भवति। किं तत्सुवर्णमिति
शुश्रूषवे प्राह—तस्येति। तस्य साम्नः स्वर एव कण्ठ्यादिलक्षणो
व्याख्यातः सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेदेति
पूर्ववदुपसंहारः ॥ २६ ॥

तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै
वागेव प्रतिष्ठा। वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयते-
ऽन्न इत्यु हैक आहुः ॥ २७ ॥

प्रतितिष्ठत्यस्यामिति प्रतिष्ठा तां प्रतिष्ठां यो वेद स प्रतितिष्ठति । तस्य वै साम्नो वागेव जिह्वामूलादीन्यष्टौ स्थानानि प्रतिष्ठा । हि यस्मादेष प्राणो वाचि जिह्वामूलीयादिस्थानेषु प्रतिष्ठितः सन्खलु निश्चितमेतद्गानं गीयते गीतिभावमापद्यते, तस्माद्वागेव प्रतिष्ठेति सम्बन्धः । मतान्तरमाह—अन्न इति । अन्नेऽपरिणामे देहे प्रतिष्ठितो गीयते इत्येक उ ह खल्वाहुरित्येकीयपक्षस्य अनिन्दितत्वाद्विकल्पेन प्रतिष्ठागुणज्ञानं कुर्यात् । एतच्च स्वादिगुणविज्ञानमाङ्गिरसत्वादिवन्न याजमानिकम्, किन्त्वौद्गात्रं यज्ञे स्वरवन्तं दिदृक्षन्त इति वचनादित्यर्थः ॥ २७ ॥

इदानीं प्राणोपासकस्य मन्त्रजपविधित्सयाऽऽह—

अथातः पवमानानामेवाभ्यारोहः । स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेत् । असतो मा सद्गमय । तमसो मा ज्योतिर्गमय । मृत्योर्माऽमृतं गमयेति । स यदाहासतो मा सद्गमयेति । मृत्युर्वा असत्सदमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह तमसो मा ज्योतिर्गमयेति । मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह मृत्योर्माऽमृतं गमयेति नात्र तिरोहितमिवास्ति । अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत् । तस्मादु तेषु वरं वृणीत । यं कामं कामयेत तँ् स एष एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति । तद्धैतल्लोकजिदेव न हैवालोक्यताया आशाऽस्ति य एवमेतत्साम वेद ॥ २८ ॥

अथ प्राणविज्ञानकथनानन्तरं यस्माच्चैवंविदुषा देवभावाय प्रयुज्यमानमभ्यारोहफलं जपकर्म, अतस्तस्माद्विधीयते प्राणविद एवैतत् । अभ्यारोहोऽस्य वक्ष्यमाणजपकर्मणो नामधेयं प्राणविद्याविदाभिमुख्येन प्राणत्मानमारोहत्यनेनेति व्युत्पत्तेः । अस्य च सर्वत्रोद्गानकाले प्राप्तौ पवमानानामेवेति कालनियमेऽपि पवमानेषु त्रिष्वपि कर्तव्यतायां प्राप्तायां पुनः कालसङ्कोचं करोति—स वै खलु प्रस्तोता साम प्रस्तौतीति ।

एतत्प्रसिद्धम्। ततः किं सिद्धमित्यत आह—स इति। प्रस्तोता यत्र यस्मिन्काले साम प्रस्तुयात् प्रारभेत तत्तस्मिन्काल एतानि जपेत्। एतच्च याजमानिकमेव मन्त्राणां देवभावसाधनत्वादिप्रार्थनार्थत्वात्। एतानि कानीत्यपेक्षाया माह—असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मा-ऽमृतं गमयेतीति। अयमिति शब्दो मन्त्रत्रयसमाप्तिद्योतकः। मन्त्रार्थस्य तिरोहितत्वाद् ब्राह्मणं प्रतीकग्रहणपूर्वकं व्याचष्टे—स यदिति। स मन्त्रो-ऽसतो मा सद्गमयेति यदाह तत्र मृत्युर्वा असत्। मृत्युरिति देहेन्द्रि-यादीनां प्रवृत्तिहेतुस्वाभाविककर्मज्ञानयोरुक्तिः। तयोरत्यन्तमधःपात-हेतुत्वात् असच्छब्दवाच्यता। सदिति शास्त्रीयकर्मविज्ञाने उच्येते। तयोराध्यात्मिकपरिच्छेदाभिमानत्यागेन देवभावापत्तिहेतुतया अमरण-हेतुत्वात् सच्छब्दवाच्यत्वमिति। पदार्थमुक्त्वा वाक्यार्थमाह—मृत्योरिति। मृत्योः स्वाभाविककर्मज्ञानात्मकात् मा माममृतं शास्त्रीय-कर्मज्ञानात्मकं गमय देवभावसाधनस्वरूपतामापादयेति यावत्। अथ तात्पर्यार्थमाह—अमृतमिति। मा माममृतम् अमृतत्वसाधनयोग्यस्वभावं कुरु सम्पादयेत्येव एतन्मन्त्रवाक्यमाहोक्तवत्। तथा द्वितीयं मन्त्रं व्याचष्टे—तमसो मा ज्योतिर्गमयेति। अस्मिन्मन्त्रे तमःशब्देन अशास्त्रीयकर्मज्ञान-मूलम् अज्ञानमुच्यते, तस्यावरणात्मकत्वात्। तदेव मृत्युर्वै मरणहेतुत्वात्। उक्ततमोविपरीतं दैवं स्वरूपज्ञानं ज्योतिरुच्यते, प्रकाशस्वभावत्वात्। तदेव अमृतम् असरणहेतुत्वादिति। पदार्थमुक्त्वा वाक्यार्थमाह—मृत्योरिति। मृत्योरज्ञानात्मकादासुरभावादमृतं ज्ञानात्मकं देवभावं गमय। तात्पर्यार्थ-माह—अमृतमिति। अमृतं प्राजापत्यं फलभावं मा मां कुर्वित्येवैतदाह। एव-मुक्तमन्त्रद्वयार्थाभ्यामनतिरिक्तार्थतया तृतीयमन्त्रस्याव्याख्येयत्वमाह—मृत्योरिति। मृत्योरसाधनभावादसाध्यभावाच्च अमृतं साधनभावं साध्यभावं च गमयेत्यत्र अस्मिंस्तृतीये मन्त्रे तिरोहितमिवाप्रकटमपूर्वं नास्ति पूर्व-मन्त्रोक्तसाध्यसाधनभावसमुच्चितार्थकत्वात्। प्राणवदुद्गातुरपि स्वार्थं गानमस्तीत्याह—अथेति। अथ त्रिषु पवमानेषु यजमानोद्गानकरणा-नन्तरं यानीतराण्यवशिष्टानि नव स्तोत्राणि तेषु प्राणविदुद्गाताऽऽत्मन आत्मार्थमन्नाद्यमन्नं च तदाद्यं चान्नाद्यमागायेत् आगानेन सम्पादयेत्। अस्योद्गातुः सर्वफलसाधकत्वमाह—तस्मादिति। यस्मात्स एष उद्गाता एवंविद्यथोक्तप्राणवित्प्राणवदेवाऽऽत्मन आत्मार्थं वा यजमानाय वा यं कामं कामयेतेच्छति तमागायति आगानेन साधयति च तस्मादु तस्मादेव यजमानस्तेषु नवसु स्तोत्रेषु प्रयुज्यमानेषु यं कामं कामयेत यं कामयमानः

स्थितस्तं कामं वरं वृणीत प्रार्थयेदित्यन्वयार्थः। कर्मसमुच्चितादुपासनात् फलसिद्धौ शङ्काभावेऽपि केवलादुपासनात्तत्सिद्धिशङ्का स्यात्। तां निरस्यति—तदिति। य एतत्साम प्राणमेवं यथोक्तनिर्धारितमहिमानमात्मत्वेनाभिमानाभिव्यक्तेः वेदोपास्ते तस्य कर्मानधिकृतस्यापि तद्वैतप्राणदर्शनं केवलमपि लोकजिदेव लोकसाधनमेव। न हैवालोक्यताया अलोक्यत्वाय आशास्त्याशंसनं प्रार्थनमस्ति। तथा चोपासनासहितं कर्म सकृदेवानुष्ठितं सदहृष्टद्वारा फलसाधनं केवलोपासनं तु नैरन्तर्येणासकृदनुष्ठितं तत्साधनमित्येतदुभयविधमपि अन्तःकरणशुद्धिद्वारा वैराग्यहेतुरित्यर्थः॥ २८॥

इति प्रथमाध्याये तृतीयं ब्राह्मणम्॥ ३॥

एवं ज्ञानकर्मभ्यां प्रजापतित्वप्राप्तिर्व्याख्याता। इदानीमस्य प्रजापतेः फलभूतस्य जगत्सर्जनादौ स्वातन्त्र्यादिविभूत्युपवर्णनेन तं स्तोतुं ज्ञानकर्मणोर्वैदिकयोः फलोत्कर्षं 'आत्मैवेदमग्र आसीत्' इति पुरुषविधब्राह्मणेन 'तद्धेदम्' इत्यतः प्राक्तनेन वर्ण्यते वक्ष्यमाणब्रह्मविद्याधिकारहेतुभूतवैराग्योत्पादनाय—

आत्मैवेदमग्र आसीत् पुरुषविधः। सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्। सोऽहमस्मीत्यग्रे व्याहरत्। ततोऽहंनामाभवत्। तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्वोऽस्मात् सर्वस्मात् सर्वान्पाप्मन औषत्तस्मात्पुरुषः। ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद॥ १॥

तत्राऽऽत्मशब्दार्थश्च महर्षिभिरेवं स्मर्यते—'यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह। यदस्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते' इत्युपाधितो विशिष्टः स्वतश्च केवल इति। इदं दृश्यमानं शरीरभेदजातमग्रे शरीरोत्पत्तेः प्राणात्मैवाऽऽसीत्। कस्याऽऽत्मनोऽत्र ग्रहणमित्यत आह—पुरुषविध इति। पुरुषाकारः शिरःपाण्यादिलक्षणो मन्वादीनां स्रष्टा विराडात्मा स यजमानावस्थादर्शनादनु पश्चात्तत्फलं वीक्ष्य कोऽहं किंलक्षणोऽहमित्यालोच्य आत्मनः स्वशरीरादन्यद्वस्त्वन्तरं नापश्यत्। आलोचनकार्यमाह—स इति। श्रौतज्ञानादिसंस्कृतसाधकावस्थप्रजापतिवत्फलावस्थोऽपि स विराडात्माऽहमस्मि सर्वात्मेत्यग्रे प्रथमं व्याहरद् व्याहृतवान् यस्मात्ततस्तस्मादहंनामाऽभवत्। यस्मादेवं तस्मात्तत्कार्यभूतोऽपि लोक एतर्ह्येतस्मिन्नपि काल आमन्त्रितः कस्त्वमिति पृष्टोऽहमयमित्येवाग्रे प्रथममुक्त्वा अथानन्तरमन्यत्पिण्ड-

विशेषविषयं यदस्य पुरुषस्य मातापितृकृतं भवति तन्नाम प्रब्रूते कथयति। एवमुपासनार्थं प्रजापतेरहंनाम उक्त्वेदानीं पुरुषनामनिर्वचनमाह—स यदिति । स प्रजापतिः पूर्वस्मिञ्जन्मनि साधकावस्थायां कर्माद्यनुष्ठानैरहमिति भावनया चास्मात् प्रजापतित्वप्रतिपित्सुसमुदायात् सर्वस्मात् पूर्वो मुख्यः सन् सम्यक्कर्माद्यनुष्ठानैः कृत्वाऽऽसङ्गाज्ञानलक्षणान् सर्वान्पाप्मनः प्रजापतित्वप्राप्तिकारणप्रतिबन्धभूतान् यद्यस्मात् औषत् अदहत्तस्मात्पुरुषः । एतद्गुणविज्ञानफलमाह—ओषतीति । प्रजापतिवदन्योऽपि यः कश्चिदेवं वेद पुरुषगुणः प्रजापतिरहमस्मीत्युपास्ते स वै सोऽप्योषति ह तं दहत्येवाभिभवत्येव । तं कं योऽस्मादेवंभूतोपासकात्पूर्वः प्रथमः सन्प्रजापतित्वमात्मनो बुभूषति भवितुमिच्छति तमित्यर्थः ॥ १ ॥

स्तोतुमभिप्रेतमेतत्प्राजापत्यफलं संसारविषयं नैवातिक्रामतीत्याह । ततोऽभीष्टवैराग्यसिद्धये—

सोऽबिभेत्तस्मादेकाकी बिभेति । स हायमीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति । तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यत् । द्वितीयाद्वै भयं भवति ॥ २ ॥

योऽयं प्रथमशरीरी पुरुषविधो व्याख्यातः स प्रजापतिरबिभेत् भीतवान् । अहमेकाकी कोऽपि मां हनिष्यतीत्यात्मविषयविपरीतज्ञानवत्त्वाद्भयं प्राप्तः । अत्र कार्यगतभयलिङ्गं प्रमाणमाह—तस्मादिति । यस्माच्छरीरात्माभिमानतया प्रजापतिरेवमबिभेत् तस्मादद्यतनोऽप्येकाकी स्वविनाशमाशङ्क्य बिभेति । किञ्च यथाऽस्मदादिभी रज्ज्वादौ सर्पादिभ्रमजनितभयनिवृत्तये विचारेण तत्त्वज्ञानं सम्पाद्यते तथा प्रजापतिरपि भयतद्धेतुविपरीतधीध्वस्तिहेतु तत्त्वज्ञानं विचार्य सम्पादितवानित्यतोऽप्यस्य संसारान्तर्गतत्वमित्याशयेनाऽऽह—स इति । ह किल सोऽयं प्रजापतिरीक्षामीक्षणं विचारं चक्रे। कथम् ? यद्यस्मात् मन्मत्तोऽन्यत् वस्त्वन्तरं प्रतिद्वन्द्वीभूतं किमपि नास्ति तस्मादहं प्रत्यक्चैतन्याद्वितीयब्रह्मरूपः कस्मान्नु बिभेमीति । एवं विचारोत्पन्नतत्त्वज्ञानफलमाह—तत इति । तत एव यथाभूताद्वितीयात्मदर्शनादेवास्य प्रजापतेर्भयं सकारणं वीयाय विस्पष्टं गतवत् । उक्तार्थसमर्थनाय श्रुतिराह—कस्मादिति । यद् द्वितीयाद्वै द्वितीयादेव भयं भवति न तु स्वस्मात्स्वस्य भयम् । द्वितीयं चाविद्याकल्पितम् 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' इति माण्डूक्यश्रुतेः । तत्त्वज्ञाने च सत्यज्ञानाभावात् तन्मूलद्वैतदर्शनानुपपत्तेः

अयं कस्माद्भयभेष्यत् कुतो भीतिमलप्स्यत परमार्थनिरूपणावस्थायां न कुतश्चिदित्यर्थः ॥ २ ॥

एवं प्रजापतेर्भयाद्याविष्टत्वेन संसारान्तर्गतत्वमुक्त्वा तत्रैवारत्याविष्टत्वं हेत्वन्तरमाह—

स वै नैव रेमे। तस्मादेकाकी न रमते। स द्वितीयमैच्छत्। स हैतावानास यथा स्त्रीपुमाँ सौ संपरिष्वक्तौ स इममेवाऽऽत्मानं द्वेधाऽपातयत्। ततः पतिश्च पत्नी चाभवताम्। तस्मादिदमर्धबृगलमिव स्व इति ह स्माऽऽह याज्ञवल्क्यः। तस्मादयमाकाशः स्त्रिया पूर्यत एव ताँ समभवत्। ततो मनुष्या अजायन्त ॥ ३ ॥

स वै विराडात्मा नैव रेमे। एकाकित्वादस्मदादिवत् अरत्याविष्टो बभूव। निवृत्ताविद्यस्य पुरुषस्य स्वाधिकारसमाप्तिपर्यन्तमाधिकारिकजीवन्मुक्तानामिव प्रारब्धहेत्वविद्यालेशानुवृत्त्या अरत्याद्युपपद्यत इत्यर्थः। कार्यस्थयाऽरत्या कारणस्थारतिरनुमेयेत्याह—तस्मादिति। यस्मात्प्रजापतिरेकाकी न रेमे तस्मादेवैकाकित्वादिधर्मवत्त्वादेव आधुनिकोऽप्येकाकी न रमते। अरत्याविष्टस्य प्रजापतेस्तन्निरसनोद्योगप्रकारमाह—स इति। स प्रजापतिर्द्वितीयमरत्यपनोदनसमर्थं स्त्रीवस्त्वैच्छदिष्टवान्। तस्यैवमिच्छतोऽतिविषयासक्तस्य स्त्रिया परिष्वक्तस्येव आत्मन्यभिमाने सञ्जाते स ह प्रजापतिस्तेनैवाभिमानेन सत्यसङ्कल्पत्वादेतावान् एतावत्परिमाण आस बभूव। कियत्परिमाण इत्यपेक्षायामाह—यथेति। यथा लोके स्त्रीपुमांसौ अरत्यपनोदनाय संपरिष्वक्तौ अन्योन्यं गाढमालिङ्गितौ यत्परिमाणौ स्यातां तथा तत्परिमाणो बभूव। विराट्स्वरूपानुपमर्दनेनैव स विराडात्मेमं परिष्वक्तस्त्रीपुंसपरिमाणमात्मानं शरीरमेतावत्परिमाणं द्वेधाऽपातयद् द्विप्रकारं पातितवान्। ततस्तस्मात्पातनात् पतिर्मन्वाख्यः पत्नी शतरूपाख्या चाभवतां बभूवतु। प्रसिद्धयोः दम्पत्योरुक्तनिर्वचने लोकानुभवमनुकूलयति—तस्मादिति। यस्मात्पतिपत्न्यौ एकशरीरविभक्ते तस्मात्स्व आत्मन इदं प्राग्दारपरिग्रहादर्धबृगलमिव बृगलं विदलमर्धं च तद्बृगलं चार्धबृगलम्। शुक्त्यादिविभागवद्द्विदलं प्रसिद्धम्। अत्राभियुक्तसम्मतिमाह—इतीति। यज्ञस्य

वल्को वक्ता यज्ञवल्कस्तस्यापत्यं याज्ञवल्क्यो दैवरातिनामा हेतीत्थमाह स्मोक्तवान् । पुरुषार्धस्य विदलत्वे हेत्वन्तरमाह—तस्मादिति । यस्मात्पुरुषस्य शरीरमर्धं तस्मादयं पुरुषदेह आकाशः स्त्र्यर्धशून्य उद्वहनानन्तरं स्त्रिया पूर्यत एव शुक्त्यादिविभाग इव पुनः संपुटीकरणेन । अथ मिथुनद्वारिकां सृष्टिमाह—तामिति । स मन्वाख्यः पुरुषस्तां शतरूपाख्यामात्मनो दुहितरं पत्नीत्वेन कल्पितां समभवत् मिथुनभावेनोपगतवान् । ततस्तस्मात् तथाविधोपगमनान्मनुष्या अजायन्त उत्पन्ना इत्यर्थः ॥ ३ ॥

इदानीं गवादिसृष्टिं प्रस्तौति--

सो हेयमीक्षां चक्रे कथं नु माऽऽत्मन एव जनयित्वा संभवति । हन्त तिरोऽसानीति । सा गौरभवदृषभ इतरस्ताँ् समेवाभवत्ततो गावोऽजायन्त । वडवेतराऽभवदश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्ताँ् समेवाभवत् तत एकशफमजायताऽजेतराऽभवद्वस्त इतरोऽविरितरा मेष इतरस्ताँ् समेवाभवत्ततोऽजावयोऽजायन्त । एवमेव यदिदं किञ्च मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत ॥ ४ ॥

सेयं शतरूपा उ ह 'न सगोत्रां समानप्रवरां भार्यां विन्दत' इति दुहितृगमनादौ स्मार्तं प्रतिषेधं स्मरन्तीक्षां विचारणां चक्रे । अयं मा मामात्मनः स्वस्मादेव जनयित्वोत्पाद्य कथं नु संभवत्युपभुङ्क्ते । यद्यप्ययं कामाभिभूतः स्मार्तं प्रतिषेधमस्मरन्मां न मुञ्चत्यहं तु तं स्मरन्ती हन्तेदानीं तिरोऽसानि जात्यन्तरेण तिरोभूताऽसानि भविष्यामीति विचार्य सा शतरूपा गौरभवदितरो मनुर्ऋषभो भूत्वा तामेव गां समभवत् पूर्ववत्संभोगं कृतवान् । ततस्तस्माद् गोवृषभसम्बन्धाद् गावोऽजायन्त । इतरा शतरूपा वडवा अश्वाऽभवत् । इतरो मनुरश्ववृषोऽश्वश्चासौ वृषश्चाश्ववृषः । इतरा शतरूपा गर्दभी, इतरो मनुर्गर्दभः अभवदिति प्रत्येकं सम्बन्धः । तामेव वडवां गर्दभीं च समभवत् । ततो वडवाश्वसंयोगाद् गर्दभगर्दभीसंयोगाद् गर्दभाश्वजातीययोः दाम्पत्याच्च एकशफमेकखुरमश्वाश्वतरगर्दभाख्यं त्रयमजायत । इतरा शतरूपा अजाऽभवत्, इतरो मनुर्बस्तश्छागः । इतरा शतरूपाऽविः, इतरो मनुर्मेषः । तामेवाजामविं च समभवत् । ततः सम्भवनादजावयोऽजाश्च अवयश्चाजावयो जाति-

विशेषा अजायन्त । विशेषाणामानन्त्येन प्रत्येकं वक्तुमशक्यत्वात्तिर्यक्सृष्टिं संक्षिप्योपसंहरति—एवमिति । यदिदं किञ्च यत्किञ्चेदं मिथुनं स्त्रीपुंसलक्षणं द्वन्द्वमा पिपीलिकाभ्यः पिपीलिका अभिव्याप्य तत्सर्वं जगदेवमेव पशुन्यायेनैवासृजतेत्यर्थः ॥ ४ ॥

वक्ष्यमाणाग्निसोमेन्द्रादिसृष्टिं सिद्धवत्कृत्य सृष्टिं सर्वामुपसंहरति—

सोऽवेदहं वाव सृष्टिरस्म्यहँ हीदँ सर्वमसृक्षीति । ततः सृष्टिरभवत् । सृष्टयाँ हास्यैतस्यां भवति य एवं वेद ॥ ५ ॥

स प्रजापतिरिदं सर्वं जगत्सृष्ट्वाऽवेदवगतवान् । किम् ? अहं वाव अहमेव सृष्टिरस्मि सृज्यत इति सृष्टिः सृष्टं जगदहमेव । कुत एतदित्यत आह—अहं हीति । हि यस्मादिदं सर्वं जगदहमेवासृक्षि सृष्टवांस्तस्मान्मत्तो न भिद्यते मद्विवर्तत्वात् । यस्मादहं हीदं सर्वमसृक्षीत्युक्तं ततस्तस्मात्प्रजापतिः सृष्टिरभवत् सृष्टिनामा बभूव । स्रष्टुरेतद्गुणविदः फलमाह—सृष्ट्यामिति । प्रजापतिवदन्योऽपि यः कश्चित् साध्यात्माधिभूताधिदैवं जगदहमेवेति स्वात्मनाऽनन्यत्वेन वेदोपास्ते सोऽस्य प्रजापतेरेतस्यां सृष्टयां जगति ह खलु स्रष्टा भवतीत्यर्थः ॥ ५ ॥

एवमनुग्राह्यसृष्टिमुक्त्वा अनुग्राहकसृष्टिं प्रस्तौति—

अथेत्यभ्यमन्थत् । स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत । तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः । तद्यदिदमाहुरमुं यजामुं यजेत्येकैक देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः । अथ यत्किञ्चेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदँ सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः । सैषा ब्रह्मणोऽतिसृष्टिः । यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत । तस्मादतिसृष्टिरतिसृष्टयाँ हास्यैतस्यां भवति य एवं वेद ॥ ६ ॥

अथशब्दोऽनुग्राह्यसृष्ट्यानन्तर्यार्थः । इतिशब्दो मन्थनप्रकाराभिनयप्रदर्शनार्थः । मुखे हस्तौ निक्षिप्याभ्यमन्थदाभिमुख्येन मन्थनमकरोत् । एवं मुखं हस्ताभ्यां निष्पिष्य स प्रजापतिर्मुखाद्योनेर्हस्ताभ्यां च योनिभ्यामग्निं ब्राह्मणजातेरनुग्राहकमसृजत । मुखादेरग्निं प्रति योनित्वे गमकमाह—तस्मादिति । यस्माद्दाहकस्याग्नेर्हस्तौ मुखं च योनिस्तस्मादेतदुभयमपि अन्तरतोऽभ्यन्तरे अलोमकं लोमवर्जितम् ।

हस्तयोर्मुखे च योनिशब्दप्रयोगे निमित्तमाह--अलोमकेति । या हि स्त्रीणां योनिः सा ह्यन्तरतोऽलोमकेत्येतत्सामान्यात् तयोरग्नियोनित्वम् । सृजस्य स्रष्टुरनन्यत्वात् सृष्टं सर्वं स्रष्टा प्रजापतिरेवेत्युक्तस्य स्तुतिविवक्षयाऽविद्वन्मतं निन्दितुमुपन्यस्यति--तदिति । प्रत्येकं देवतानां भिन्नत्वं मन्यमानाः केवलयाज्ञिका यदिदमाहुः--अमुमिन्द्रं यज, अमुमग्निं यजेति एकैकं देवमुद्दिश्य, तन्न तथाऽऽदरणीयमिति वाक्यशेषः । एतस्यानादरणीयत्वे हेतुं वदन् अनुग्राहकसृष्टिमुपसंहरति--एतस्येति । हि यस्माद्यः सर्वोऽपि देवभेद एतस्यैव प्रजापतेरेव सा विसृष्टिः, तस्मादेष उ ह्येव हिरण्यगर्भात्मा प्राणः सर्वे देवा नान्यदेवतान्तरमस्तीत्यर्थः । एकस्यैव प्रजापतेर्द्विधोपास्यत्वाय अग्निसर्गमुक्त्वा अन्नसर्गमाह--अथेति । अथाग्निसर्गानन्तरं यत्किञ्चेदं लोक आर्द्रं द्रवात्मकं दृश्यते तत्प्रजापतिः स्वरेतसोऽसृजत सृष्टवान् । तदु सोम एव । स्रष्टव्यान्तरशङ्कां वारयति--एतावदिति । इदं सर्वं दृश्यमानं जगदेतावद्वा एतावदेव । कियत् ? अन्नं चान्नादश्चैव नातिरिक्तम् । कस्य सोमत्वमग्नित्वं चेत्यपेक्षायामाह--सोम इति । यदद्यतेऽन्नं स सोम एव, य एवान्नादः सोऽग्निरेवेत्यर्थः । अनुग्राहकदेवस्रष्टृ प्रजापत्युपासकस्य फलोक्त्यर्थमादौ देवसृष्टिं स्तौति--सैषेति । सैषाऽनुग्राहकदेवसृष्टिरनुग्राह्येभ्यो ब्रह्मणः प्रजापतेर्वा अतिसृष्टिरधिकतरा । कुतः ? यद्यस्मादनुग्राह्यापेक्षया स्वापेक्षया वा प्रजापतिः श्रेयसः प्रशस्यतरान् देवानसृजत । ननु 'अग्निर्मूर्धे'त्यादिश्रुतेरग्न्यादयोऽस्यावयवाः, तत्कथं तत्सृष्टिस्ततोऽप्यतिशयवतीति शङ्कते--अथेति । प्रजापतेर्यजमानावस्थापेक्षया देवसृष्टेरुत्कृष्टत्ववचनम् अविरुद्धमित्याशयेन परिहरति--यदिति । यद्यस्माद्यजमानावस्थः प्रजापतिर्मर्त्यः सन्मरणधर्मा सन्नमृतान् अमरणधर्मिणो देवान् कर्मज्ञानवह्निना सर्वान्पाप्मन ओषित्वाऽसृजत तस्मादियं देवसृष्टिः अतिसृष्टिरुत्कृष्टज्ञानकर्मणोः फलमिति । प्रथमपक्षे त्वथशब्दो देवसृष्टेरतिसृष्टित्वहेत्वन्तरार्थ इत्यर्थः । एतादृशप्रजापत्युपासकस्य फलमाह--अतीति । य एवं सृष्ट्यात्मा प्रजापतिरहमेवेति वेद सोऽस्य प्रजापतेरेतस्यामतिसृष्ट्यां देवादिप्रपञ्च ह भवति प्रजापतिवत्स्रष्टेति शेषः ॥ ६ ॥

एतावता उक्तव्याकृतस्य जगतोऽव्याकृतावस्थां बीजभूतां सबीजसंसारोद्धरणायाऽऽह--

तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यामेव व्याक्रियत असौ-

नामाऽयमिदँ रूप इति । तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामाऽयमिदँ रूप इति । स एष इह प्रविष्ट आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तं न पश्यन्ति । अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति वदन्वाक् पश्यँश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव । स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीता । अत्र ह्येते सर्वं एकं भवन्ति । तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा । अनेन ह्येतत्सर्वं वेद । यथा ह वै पदेनानुविन्देदेवं कीर्तिँ श्लोकं विन्दते य एवं वेद ॥ ७ ॥

तदिदं व्याकृतं जगत्तर्हि तदोत्पत्तेः प्रागव्याकृतम् अनभिव्यक्तनामरूपं ह किलाऽऽसीत् । तदव्याकृतं नामरूपाभ्यां नाम्ना रूपेणैव च न स्वरूपेण न प्रत्यगात्मना स्वयमेव व्याक्रियत । तदेव स्पष्टयति--असाविति । अयं पुरुषादिपदार्थोऽसौनामा देवदत्तो यज्ञदत्त इति वा नामाऽस्येत्यसौनामा, इदं शुक्लं कृष्णं वा रूपमस्यासौ इदंरूप इत्येवं व्याक्रियत इति सम्बन्धः । एतद्व्याकरणं सुप्तप्रबुद्धदृष्टान्तेन स्पष्टयति--तदिति । तदिदं सुप्तं सदव्याकृतं वस्तु एतर्ह्येतस्मिन्नपि काले नामरूपाभ्यामेव व्याक्रियते असौनामाऽयमिदँ रूप इत्युक्तार्थम् । तद्धेदमित्यत्र उक्तमूलकारणस्य नामरूपाभ्यामित्युक्ते तत्कार्ये प्रवेशमाह—स इति । स एष परमात्मैवेह ब्रह्मादिस्तम्बपर्यन्तेषु देहेष्वव्याकृते नामरूपे व्याकुर्वन्प्रविष्टः सूर्यादिवत्प्रतिबिम्बीभूतः । तथा परप्रत्यगभिधायकयोः सएषशब्दयोः सामानाधिकरण्येनोक्तैक्ये प्रविष्ट इति हेतूक्तिः । प्रवेशमर्यादामाह—आ नखेति । आ नखाग्रेभ्यो नखाग्रं मर्यादीकृत्य प्रविष्टः । तत्र दृष्टान्तद्वयमाह—यथेति । यथा क्षुरः क्षुरधाने क्षुरो धीयतेऽस्मिन्नापितोपस्कराधान एकदेशेऽवहितः प्रवेशितः स्थितः स्याद्यथा वा विश्वम्भरोऽग्निर्जाठरत्वेन विश्वस्य भरणाद्विश्वम्भरकुलाये अग्न्याधारभूतकाष्ठादिलक्षणे नीडे व्याप्य स्थितस्तथाऽऽत्मा सामान्यतः स्फूर्त्यात्मना देहं संव्याप्य स्थितो विशेषतश्च द्रष्टा श्रोतेत्यात्मना देहमव्याप्य तदेकदेशे चक्षुःश्रोत्रादिनाडीषु स्थित इत्यर्थः । इदानीं व्याकृताज्जगत आत्मानं पृथक्-

कर्तुमाह—तमिति । तं प्राणनादिक्रियाविशिष्टमात्मानं पश्यन्तोऽपि केवलं पूर्णमात्मानं न पश्यन्ति नोपलभन्ते । तत्र हेतुमाह—अकृत्स्न इति । हि यस्मात्स प्राणनादिक्रियाविशिष्टोऽकृत्स्नोऽसम्पूर्णः । कुतः एतदित्यत आह—प्राणन्नेवेति । प्राणन्नेव प्राणनक्रियां कुर्वन्नेवाऽऽत्मा प्राणो नाम भवति प्राणितीति व्युत्पत्तेर्नान्यक्रियां कुर्वन् । वदन् वदनक्रियां कुर्वन् वाक् वक्तीति व्युत्पत्तेः । एतच्च अनुक्तकर्मेन्द्रियव्यापाराणामुपलक्षणपरम् । पश्यन् दर्शनक्रियां कुर्वन्नात्मा चक्षुर्द्रष्टा, चष्टे इति व्युत्पत्तेः । शृण्वन् आत्मा श्रोत्रम्, शृणोतीति व्युत्पत्तेः । एतच्च अनुक्तघ्राणादिव्यापारोपलक्षणपरम् । मन्वानो मननक्रियां कुर्वन्नात्मा मनः मनुत इति व्युत्पत्तेः । एतदपि पूर्ववत् सर्वान्तरात्मव्यापारोपलक्षणपरम् । तान्येतानि प्राणादिनामान्यस्याऽऽत्मनः कर्मनामान्येव कर्मकृतानि नामानि पाठकादिवन्न वस्तुविषयाणि, अतो नाऽऽत्मादिशब्दवत्कृत्स्नवस्तुविद्योतकानि । अकृत्स्नवित्तु नाऽऽत्मविदित्याह—स इति । स योऽतोऽस्मात् प्राणनादिक्रियासमुदायादेकैकं प्राणमिति वा चक्षुरिति वा विशिष्टमनुपसंहृतेतरविशिष्टक्रियात्मकमेव आत्मानमुपास्ते जानाति स न वेद न जानाति कृत्स्नमात्मानम् । कुत इत्यत आह—अकृत्स्न इति । हि यस्मादेष आत्माऽकृत्स्नोऽसमस्तोऽतः प्राणादिसमुदायादेकैकेन प्राणादिविशेषणेन विशिष्टो भवति । तद्दर्शी तु न ब्रह्मात्मदर्शी । कथं तर्हि तद्दर्शीत्यपेक्षायां विद्यासूत्रमाह—आत्मेति । आत्मनः शब्दधियोरविषयत्वद्योतक इतिशब्दः । यस्य प्राणादिविशेषणान्युक्तानि यश्च तानि सर्वाण्याप्नुवन्नात्मेत्युच्यते तमात्मेत्येवोपासीत न केनचिद्विशेषणेन विशिष्टत्वेन शब्दप्रत्ययागम्यमात्मानमनुसन्दधीतेति यावत् । कुत इत्यपेक्षायां तत्र कृत्स्नत्वहेतुमाह—अत्रेति । अत्रास्मिन्निरुपाधिक आत्मन्येते सर्वे प्राणाद्युपाधिकृता विशेषा एकं भवन्त्यभिन्ना भवन्ति, तस्मात् आत्मेत्येवोपासीत । नन्वनात्मनोऽपि विद्यमानत्वात् कथमात्मानुसन्धान एव यत्नः क्रियत इत्यत आह—तदिति । तदेतत्पदनीयं गमनीयमन्वेषणीयम् । किं तत् ? अस्य सर्वस्यानात्मत्वार्थस्य सम्बन्धी यदयं प्रकृतः कृत्स्न आत्मा । अस्यैव पदनीयत्वे हेतुमाह—अनेनेति । इयमित्थंभावे तृतीया । अनेनाऽऽत्मज्ञानेन हि यस्मादेतत्सर्वमनात्मजातं वेद जानाति । कथं पुनरेतदसत्यादाचार्यादेः पदनीयमित्यत आह—यथेति । यथा ह वै लोके कल्पितेनापि पदेन गवादिखुराङ्कितेन देशेनान्विष्यमाणो नष्टं विवित्सितं गोसुवर्णादि वस्तु विन्देत् लभते एवं कल्पितश्रुत्यादिना

आत्मनि लब्धेऽनु सर्वं लभते। इदानीं विज्ञानस्य गुणफलमाह—कीर्तिमिति। एवं यथोक्तं नामरूपानुप्रवेशेन ख्यातिं गतं लब्धप्राणादिरूपं श्लोकं चाऽऽत्मानं यो वेद स कीर्तिं तद्वदेव प्रख्यातिं श्लोकं चेष्टैः सह सङ्घातं विन्दते लभते। यद्वा यथोक्तं वस्तु यो वेद स मुमुक्षूणामपेक्षितं कीर्तिशब्दितमैक्यज्ञानं तत्फलं च श्लोकशब्दितां मुक्तिमाप्नोतीति मुख्यमेव फलमित्यर्थः॥ ७॥

कुतोऽन्यत्सर्वमनादृत्य आत्मतत्त्वमेव विज्ञेयमित्याशङ्कायां लोकदृष्ट्यवष्टम्भेनाऽऽह—

तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मा। स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियँ रोत्स्यतीति। ईश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत। स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति॥ ८॥

तदेतत्प्राणपिण्डसमुदायादन्तरतरं पुत्रात्प्रियत्वेन प्रसिद्धात्प्रेयः प्रियतरं वित्ताच्च दैवमानुषादपरज्ञानसुवर्णादेः प्रेयः प्रियतरं पुत्रादेरन्यस्मात्प्रियत्वेन प्रसिद्धात्सर्वस्मात्प्रेयः प्रियतरम्। किं तत्? यदयमात्मा। नन्वनात्मनोऽपि प्रियत्वमनुभूयत इत्यत आह—स इति। यः कश्चित् आत्मवादी स आत्मनोऽन्यं पुत्रादिकं प्रियं ब्रुवाणं प्रति ब्रूयात्। किम्? तव पुत्रादिलक्षणं प्रियमभिप्रेतं तर्हि मन्दोऽसि यतस्तत्प्रियं रोत्स्यत्यावरणं प्राणरोधं प्राप्स्यति विनङ्क्ष्यतीति यावत्। स कस्मादेवं ब्रवीतीत्यपेक्षायामाह—ईश्वरो हेति। यस्मादेवं वक्तुमसावीश्वरो ह समर्थ एव तस्मादेवं वदेत्। कुतोऽस्येश्वरत्वमवगम्यत इत्याशङ्कायां यथाभूतार्थवादित्वादित्याह—तथेति। यस्मात्प्रियत्वेन कल्पितमनात्मवस्तु विनङ्क्ष्यतीति यत्तेनोक्तं तत्तथैव स्यात्संबाध्येव भवति, तस्मादस्येश्वरत्वमवगम्यते। एवमात्मनि मुख्या प्रीतिरिति स्थिते फलितमाह—आत्मानमिति। तस्मादन्यत्प्रियमुज्झित्वा आत्मानमेव प्रियमुपासीत। तत्फलमाह—स इति। स यः कश्चिदात्मैव प्रेमास्पदं नाऽनात्मेति निश्चित्य आत्मानमेव प्रियमुपास्तेऽस्योपासकस्य प्रियमात्मसुखं प्राणादिकं वा प्रमायुकं प्रमरणशीलं ह किल न भवतीत्येतन्नित्यानुवादो गुणफलं वा मुख्यस्य सर्वभावापत्तेर्वक्ष्यमाणत्वादित्यर्थः॥ ८॥

एवं सूत्रं व्याचिख्यासुः ब्राह्मणं सूत्रितविद्याविवक्षितप्रयोजनाभिधानायोपोद्घातं करोति—

तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या

मन्यन्ते । किमु तद्ब्रह्मावेद् यस्मात्तत्सर्वमभवदिति ॥ ९ ॥

तद्वक्ष्यमाणं नित्यनिरतिशयश्रेयःप्रतिपित्सव आहुः। किं तत् ? यद्ब्रह्मविद्यया ब्रह्म स्वात्मा तद्यया वेद्यते सा ब्रह्मविद्या तया ब्रह्मविद्यया सर्वं निरवशेषं भविष्यन्तो भविष्याम इत्येवं मनुष्या मन्यन्ते संभावयन्ति । किन्तु तद्ब्रह्म किं वाऽवेत् को वा सर्वभावप्रमाणकः सर्वभाव इति पृच्छति–किमिति । यस्माद्विज्ञानात्तद्ब्रह्म सर्वमभवत्तद्ब्रह्म किमु किमात्मस्वरूपमतिरिक्तं वा किं वाऽवेत्स्वरूपं तदतिरिक्तं वा जानीयाद्यस्मात् तत्सर्वमभवदिति । सर्वभावापत्तिरपि किं विद्यमानैवाभिव्यज्यते नूतना वोत्पाद्यत इत्यर्थः ॥ ९ ॥

एतेषां क्रमेणोत्तरमाह–

ब्रह्म वा इदमग्र आसीत् । तदात्मानमेवावेदहं ब्रह्मास्मीति । तस्मात्तत्सर्वमभवत् । तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् । तथर्षीणां तथा मनुष्याणाम् । तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवँ सूर्यश्चेति । तदिदमप्येतर्हि य एवंवेदाहं ब्रह्मास्मीति स इदँ सर्वं भवति । तस्य ह न देवाश्च नाभूत्या ईशते । आत्मा ह्येषाँ स भवति । अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवँ स देवानाम् । यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु । तस्मादेषां तन्न प्रिय यदेतन्मनुष्या विद्युः ॥ १० ॥

अग्रे प्राक्प्रबोधादपीदं शरीरस्थं प्रमात्रादिसाक्षिभूतं. त्वंपदलक्ष्यं ब्रह्म वाऽऽसीत् तद्ब्रह्मविद्याविशिष्टतया अधिकारित्वेन व्यवस्थितम् । नासि त्वं संसारी किन्तु सकलधर्मरहितं चिदानन्दैकरसं ब्रह्मवासीति दयालुनाऽऽचार्येण कथञ्चिद्बोधितमात्मानमेवाहं ब्रह्म प्रमात्रादिसाक्ष्यशनायाद्यतीतं नेति नेति अस्थूलादिलक्षणमस्मि भवामीत्येवमवेत् । तस्मादेव विज्ञानात्तद्ब्रह्म सर्वमभवदब्रह्माध्यारोपणाविद्यापगमात् तत्कार्यस्यासर्वत्वस्य निवृत्तौ स्वाभाविकं सर्वत्वं प्राप्तमिति यावत् । ब्रह्मविद्यामग्निहोत्रा-

दाविव मनुष्यत्वाद्यधिकारिविशेषणनियमो नास्तीत्याह—तदिति । तत् तत्र देवानां मध्ये यो यो देवः प्रत्यबुध्यताऽऽत्मानं यथावत्प्रतिबोधितवान् बोधनादेव स एव देवस्तद्ब्रह्म सर्वात्मकमभवन्न साधनान्तरेण । तथर्षीणां तथा मनुष्याणां मध्ये यो यः प्रत्यबुध्यत स तदभवदिति पूर्वेण सम्बन्धः । अस्या ब्रह्मविद्यायाः सर्वभावापत्तिः फलमित्येतस्यार्थस्य दार्ढ्याय श्रुतिर्मन्त्रानुदाहरति—तद्धैतदिति । तद्ब्रह्म तत् आत्मानमेवाहं ब्रह्मास्मीति पश्यन्नेतस्मादेव दर्शनादृषिः वामदेवाख्योऽहं मनुरभवं सूर्यश्चेति मन्त्रान् प्रतिपेदे प्रतिपन्नवान् किल । ननु महतां देवादीनां वीर्यातिशयत्वाद् ब्रह्मविद्यया सर्वभावापत्तिर्युज्यते । कथं पुनः कलिकालवर्तिनां मनुष्याणां विशेषतोऽल्पवीर्यवत्तया सर्वभावापत्तिरित्यत आह—तदिदमिति । तदिदं प्रकृतं यत्सर्वभूतानुप्रविष्टं ब्रह्म एतर्ह्येतस्मिन्नपि काले य कश्चिद् व्यावृत्तबाह्यौत्सुक्य आत्मानमेव उपाधिजनितभ्रान्तिविज्ञानाध्यारोपितविशेषवर्जितमहं सकलधर्मातीतं ब्रह्मैवास्मीति वेद अनुसन्धत्ते स एतादृग्ब्रह्मज्ञानात् अविद्याकृतासर्वत्व निवृत्त्या इदं सर्वं भवति । नन्वविद्यावतः कर्मिणोऽमृतत्वप्राप्तिमुद्दिश्य कर्मभ्यो व्युत्थानमिच्छतो देवकृतविघ्नसम्भववद्विद्यावतोऽपि

वार्तमानिकस्य पुरुषस्य देवकृतविघ्नसम्भवान्न विद्याफलप्राप्तिरित्यत आह—तस्येति । तस्य यथोक्तप्रकारेण ब्रह्मात्मज्ञानवतो देवा महावीर्याश्च नाप्यभूत्यै सर्वात्मकब्रह्मभावप्राप्तिनिराकरणाय नेशते ह न समर्था भवन्ति । तत्र हेतुमाह, यस्मात्स ब्रह्मविद् एषां देवानामात्मा शास्त्रप्रकाशितब्रह्मस्वरूपो भवति । एवं सोपपत्तिकं विद्यासूत्रमुक्त्वा अविद्यासूत्रमाह—अथेति । अथ सोपपत्तिविद्यासूत्रकथनानन्तरं यः कश्चिद्ब्रह्मवित् स्वात्मनि कर्तृत्वमङ्गीकृत्य आत्मनो व्यतिरिक्तां देवतामन्योऽहमुपास्यदेवतायाः सकाशादन्योऽसौ मत्त उपासनीयो देव इत्येवं भेददृष्ट्या उपास्ते स्तुतिनमस्कारादिना स उपासको न वेद उपास्योपासकयोस्तत्त्वं न जानाति । न केवलमेवंभूतोपासकोऽविद्यादोषवानेव, किन्तु पशुसदृशोऽपि भवतीत्याह—यथेति । यथा गवाश्वादिपशुः दोहनवाहनाद्युपकारैरुपभुज्यत एवमेव सोऽविद्वान् देवानां मध्य एकैकस्यापि देवस्य पशुवत् अनेकैरुपकारैरुपभोग्यो भवति । लोकपशोर्मनुष्यपशौ यथोक्तं विशेषं वक्तुं श्रुतिः स्वयमेवाऽऽह—यथा हेति । यथा लोके गोऽश्वादयो बहवः पशवो मनुष्यमात्मनोऽधिष्ठातारं स्वामिनं दोहनवाहनादिना भुञ्ज्युः पालयेयुरेवं बहुपशुस्थानीयोऽयं कर्मी पुरुष एकैक एव देवान् स्तुतिनमस्कारादिक्रियया भुनक्ति पालयति । देव-

ग्रहणमृषिपित्रादीनामप्युपलक्षणपरम्। अत एव मनुष्याणां पशुभावाद् व्युत्थानं देवा द्विषन्तीत्याह—एकस्मिन्निति। यथा लोके बहुपशुमतोऽप्येकस्मिन्पशौ आदीयमाने व्याघ्रादिनाऽपह्रियमाणेऽप्रियं भवति तथा बहुषु बहुपशुस्थानीय एकैकस्मिन्पुरुषे पशुभावाद् व्युत्तिष्ठमाने देवानामप्रियं भवतीति किमु वक्तव्यम्। अत एवाविद्यावतां पशुभावाद् व्युत्थानसाधनं तत्त्वज्ञानमपि देवा द्विषन्तीत्याह—तस्मादिति। यस्मात् मनुष्याणां पशुभावाद् व्युत्थानं देवानामप्रियं तस्माद्यदेतद्ब्रह्मणस्तत्त्वं मनुष्याः कथञ्चन विद्युर्विजानीयुस्तदेषां देवानां न प्रियं नेष्टमित्यर्थः॥१०॥

ब्रह्म वा इदमग्र आसीदेकमेव। तदेकँ सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति। तस्मात् क्षत्रात्परं नास्ति। तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते। राजसूये क्षत्र एव तद्यशो दधाति। सैषा क्षत्रस्य योनिर्यद्ब्रह्म। तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनँ हिनस्ति स्वाँ स योनिमृच्छति स पापीयान् भवति यथा श्रेयाँसँ हिँसित्वा॥ ११॥

विद्यावत्सह कार्येणाविद्याऽपीह सूत्रिता। तामेव प्रपञ्चयितुमध्यायशेषः। तत्र अथेत्यभ्यमन्थदित्यत्र अनुग्राहकदेवतासर्गं प्रक्रम्य अग्नेरेव सृष्टिरुक्ता नेन्द्रादीनाम्। अत्र त्वविद्यां प्रस्तुत्य तद्विवर्तत्वसिद्धये सोच्यते 'ब्रह्म वा इदमग्र आसीदेकमेवे'त्यादिना। अविद्वान् कैः कर्मभिः केषां देवानां भोग्य इति विशेषतोऽथो अयं वा आत्मेत्यादिना दर्शयितुम्। आत्मैवेदमग्र आसीदित्यत्र यदात्मशब्देनोक्तं स्रष्टृ ब्रह्म तदग्निं सृष्ट्वा तद्रूपं ब्राह्मणजात्यभिमानवत् अस्मिन्वाक्ये ब्रह्मशब्देनोच्यते। तथा चाग्रे- क्षत्रादिसर्गात्पूर्वमिदं क्षत्रादिभेदजातं ब्रह्मैवैकमभिन्नमासीत्, नासीत् क्षत्रादिभेदः। तद्ब्राह्मणजात्यभिमान्यग्न्यात्मकं ब्रह्मैकं परिपालनादिकर्तृक्षत्रादिना रहितं सन्न व्यभवत् न विभूतवत्कर्मणे नालमासीत्। ततस्तत्पूर्वोक्तं ब्रह्माऽऽत्मनो ब्राह्मणजातिनिमित्तकर्मकर्तृत्वविभूत्यै श्रेयोरूपं प्रशस्तरूपमत्यसृजत अतिशयेन सृष्टवत्। किं तत्? क्षत्रं क्षत्रियजातिम्। तामेव व्यक्तिभेदेन दर्शयति—यानीति। यान्येतानि प्रसिद्धानि

देवत्रा देवेषु क्षत्राणि । एतानि कानीत्यपेक्षायामाह—इन्द्र इति । इन्द्रो देवानां राजा वरुणो यादसां सोमो ब्राह्मणानां रुद्रः पशूनां पर्जन्यो विद्युदादीनां यमो धर्मराजः पितॄणां मृत्युर्यमदूतो रोगादीनामीशान ईश्वरो दीप्तीनां राजेत्येवमादीनि देवक्षत्राणि । यस्मादत्यसृजतेत्युक्तेः ब्राह्मणेभ्योऽप्यतिशयेन क्षत्रं सृष्टं तस्मात्कारणात् क्षत्रात् परमुत्कृष्टं नास्ति । क्षत्रस्य नियन्तृत्ववदुत्कर्षे हेत्वन्तरमाह—तस्मादिति । यस्मादयं ब्राह्मणजातेरपि नियन्ता तस्माद् ब्राह्मणः क्षत्रियस्य कारणभूतोऽप्यधस्ताद् व्यवस्थितः सन् राजसूये यज्ञ उपरि स्थितं क्षत्रियमुपास्ते । ब्रह्मणस्तदात्मीयं ब्राह्मणाख्यं यशः ख्यातिरूपं राजंस्त्वं ब्रह्मासीत्येवं क्षत्रे दधाति स्थापयत्येव । यशोविशेषणं वैवकारः । नन्वेवं क्षत्रे स्वकीयं यशः समर्पयतो ब्राह्मणस्यापकृष्टत्वं स्यादित्यत आह—सैषेति । यद्ब्रह्म ब्राह्मणजातिः सैषा क्षत्रस्य योनिरुत्पत्तिकारणमत उत्कृष्ट एव ब्राह्मणः । तस्माद्यद्यपि राजा राजसूयाभिषेककाले परमतां परमत्वं ब्रह्मत्वगुणं गच्छति प्राप्नोति तथाऽप्यन्ततोऽन्ते कर्मपरिसमाप्तौ ब्रह्मैव ब्राह्मणजातिमेव स्वां योनिं पुरोहितमुपनिश्रयति आश्रयति । य उ यः पुनर्बलाभिमानात्प्रमादाद्वा एतं स्वयोनिभूतं ब्राह्मणं हिनस्ति तिर्यग्भावेन पश्यति स स्वामात्मीयामेव योनिमृच्छति विच्छिनत्ति । स एतत्कर्म कृत्वा पापीयान्पापतरो भवति । यथा लोके श्रेयांसं प्रशस्यतरं हिंसित्वा परिभूय अपरः पापीयान्भवति तद्वदित्यर्थः ॥ ११ ॥

कर्माङ्गभूतद्रव्योपार्जनार्थं वैश्यसृष्टिमाह—

स नैव व्यभवत् । स विशमसृजत । यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥ १२ ॥

स ब्राह्मणाभिमान्यग्निपुरुषः क्षत्रसर्गात् पूर्ववत्कर्मणे समर्थो नैव व्यभवत् वित्तोपार्जयितुरभावात् । तदर्थं स ब्राह्मणाभिमान्यग्निर्विशमसृजत । कः पुनरसौ विट् ? यान्येतानि देवजातानीति । स्वार्थे निष्ठा । य एते देवजातिभेदा गणशो गणं गणं कृत्वाऽऽख्यायन्ते कथ्यन्ते वसवोऽष्टव्यक्तिक एको गणः एकादश रुद्राः द्वादशादित्याः विश्वाया अपत्यानि दश विश्वेदेवा मरुतः सप्तसंख्याताः सप्तगणाः ॥ १२ ॥

परिचारकसृष्टिमाह—

स नैव व्यभवत् । स शौद्रं वर्णमसृजत पूषणमियं वै । पूषेयँ् हीदँ् सर्वं पुष्यति यदिदं किञ्च ॥ १३ ॥

स नैव व्यभवत् पूर्ववत्परिचारकाभावात् । स शौद्रं शूद्रमेव शौद्रं वर्णमसृजत । तं देवशूद्रमाह--पूषणमिति । पुष्यतीति पूषा तं पूषणम् । तमेव विशेषत आह--इयमिति । इयं वै पृथिवी पूषा । कथमित्यपेक्षायां स्वयमेव निर्वचनमाह--इयं हीति । इयं पृथिवी हि खल्विदं सर्वं यदिदं किञ्च यत्किञ्चेदं प्राणिजातं तत्पुष्यति पुष्णातीत्यर्थः ॥ १३ ॥

क्षत्रस्योग्रत्वात् तन्नियन्तृधर्मसर्गमाह—

स नैव व्यभवत् । तच्छ्रेयोरूपमत्यसृजत धर्मम् । तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात् परं नास्ति अथो अबलीयान् बलीयाँ समाशँसते धर्मेण यथा राज्ञैवम् । यो वै स धर्मः सत्यं वै तत् । तस्मात् सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तँ सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥ १४ ॥

स चतुरो वर्णान् सृष्ट्वाऽपि नैव व्यभवत् । तत्स्रष्टृ ब्रह्म श्रेयोरूपं धर्ममत्यसृजत । तदेतत् सृष्टं श्रेयोरूपं क्षत्रस्य क्षत्रं क्षत्रस्यापि नियन्तृ यद्धर्मो यो धर्मश्चेतनभूतो देवतात्मकस्तस्मात् क्षत्रस्यापि क्षत्रान्नियन्तृभूताद्धर्मात्परं नियन्तृभूतं किञ्चिन्नास्ति तस्यैव सर्वनियन्तृत्वात् । तत्कथमित्यत आह—अथो इति । अथो अप्यबलीयान् दुर्बलतरो बलीयांसमात्मनो बलवत्तरमपि धर्मरूपेण बलेन जेतुमाशंसते कामयत इच्छति । तदेवोदाहरति—यथेति । यथा राज्ञा बलेनाल्पबलो बलीयांसं जेतुमाशंसत एवं तद्धर्मबलेन । अतः सिद्धं धर्मस्य सर्वनियन्तृत्वम् । अत्रैव पुनः सत्यादभिन्नत्वं हेत्वन्तरमाह—य इति । यो वै धर्मोऽनुष्ठीयमानो यागादिः स तत्प्रसिद्धं सत्यं वै ज्ञायमानः शास्त्रार्थ एव । अत्र लोकप्रसिद्धिं प्रमाणयति—तस्मादिति । यस्मादुभयोरभेदस्तस्माद् व्यवहारकाले सत्यं यथाशास्त्रार्थं वदन्तं पुरुषं धर्मं लोकानुष्ठेयत्वेन प्रसिद्धं लौकिकं न्यायं वदतीत्याहुः धर्मसत्यविवेकज्ञाः, धर्मं वा वदन्तं सत्यं वदतीत्याहुः । उक्तमभेदमुपसंहरति—एतदिति । हि यस्मादेवं तस्मादेतदुभयं सत्यधर्माख्यं ज्ञायमानानुष्ठीयमानशास्त्रार्थलक्षणं वा एतद्धर्म एव भवतीत्यर्थः ॥ १४ ॥

यदर्थं देवब्राह्मणादिसर्ग उक्तस्तं मनुष्यब्राह्मणादिसर्गमुक्तानुवादपूर्वकमाह--

तदेतद् ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो

मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रः। तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्याँ हि रूपाभ्यां ब्रह्माभवत्। अथ यो ह वा अस्माल्लोकात् स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽननुक्तोऽन्यद्वा कर्माकृतं यदिह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धा स्यान्ततः क्षीयत एवाऽऽत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते। अस्माद्ध्येवाऽऽत्मनो यद्यत् कामयते तत्तत्सृजते ॥ १५ ॥

तदेतदुक्तं दैवं ब्रह्म क्षत्रं विट् शूद्र एवं सति तदग्निरूपापन्नं स्रष्टृ ब्रह्म अग्निनैव केवलमग्निरूपणैव क्षत्रादिविकारप्राप्तिमन्तरेण देवेषु ब्रह्म ब्राह्मणजातिरभवत्। तदेव देवब्राह्मणमग्निरूपं तेनैव रूपेण मनुष्येषु ब्राह्मणो ब्राह्मणजातिरभवदित्यनुषज्यते। क्षत्रियेण इन्द्रादिदेवक्षत्रियेण नियन्त्रितोऽनुगृहीतश्च सन्मनुष्यक्षत्रियः सोमसूर्यवंश्यः पुरूरवइक्ष्वाकुप्रभृतिको देवमनुष्यब्राह्मणरूपेण विकृतात्स्रष्टृब्रह्मणः सकाशादभवत्। तथा वैश्येन वस्वादिदेववैश्येनाधिष्ठितः सन्मनुष्यवैश्योऽभवत्। शूद्रेण पूषरूपेण देवशूद्रेणाधिष्ठितः सन्मनुष्यशूद्रोऽभवत्। तस्मात्क्षत्रादिषु विकारापन्नं स्रष्टृब्रह्म अग्नौ ब्राह्मणे वा विकृतम्। तस्माद् देवेषु देवानां मध्येऽग्नावेव अग्निसम्बन्धं कर्म कृत्वैव लोकं कर्मफलमिच्छन्ते प्रार्थयन्ते। मनुष्येषु मनुष्याणां मध्ये मनुष्यत्वमवलम्ब्य कर्मफलसम्पादनेच्छायामग्न्यादिसाध्यक्रियामन्तरेणापि ब्राह्मणे ब्राह्मणजातिप्राप्तौ तन्निमित्तजपादिकर्मणा लोकमिच्छन्त इति सम्बध्यते। कथमग्निब्राह्मणयोरेव कर्मफलमिच्छन्तीत्यतो हेतुमाह—एताभ्यामिति। हि यस्माद्यत् स्रष्टृब्रह्म तदेताभ्यामग्निब्राह्मणलक्षणाभ्यां रूपाभ्यां साक्षाद्रूप्यभवत्। यत्र देवाधीनः पुरुषार्थस्तत्राग्निसम्बन्धं कर्म कर्तव्यम्। यत्र मनुष्याधीनः पुरुषार्थस्तत्र ब्रह्मावलम्ब्य कर्म कर्तव्यम्। केचिदग्न्यादिसाध्यकर्मणा मोक्षमिच्छन्ति। तान् प्रत्याह—अथेति। अथशब्दः पूर्वपक्षव्यावृत्त्यर्थः। यो ह वै यः कश्चित्स्वं लोकं परमात्माख्यमहं ब्रह्मास्मीत्यदृष्ट्वाऽविदित्वा अस्माल्लोकात्सांसारिकपिण्डग्रहणलक्षणात् प्रैति म्रियते तमेनं स स्वलोकः परमात्माऽविदितिः सन् शोकमोहादिदोषापनयनेन न भुनक्ति न पालयति। अत्र दृष्टान्तमाह—यथेति। यथा वेदो वा अननुक्तः

अनधीतः कर्माद्यवबोधकत्वेन न भुनक्ति, अन्यद्वा कृष्यादि कर्माकृतं स्वकीयफलदानेन न भुनक्ति तद्वत्। तथाऽपि अश्वमेधादिमहत्कर्मानुष्ठानान्मोक्षो भविष्यतीत्यत आह—यदिह वा इति। इह संसारमण्डले यः कश्चिन्महात्माऽपि अनेवंविदन्वयव्यतिरेकाभ्यां स्वं लोकमविद्वान् यन्महत् महामहिमाश्वमेधादि पुण्यं कर्म निरन्तरं करोति तत्कर्मास्य अविदुषो ह निश्चितमन्ततः फलभोगावसाने चीयत एव कृतकत्वात् स्वप्नविभूतिवत्। तस्मादात्मानमेव लोकं प्रत्यग्ब्रह्मैकत्वलक्षणमुपासीत अशेषाऽनात्मदृष्टिपरिहारेण निरन्तरमनुसन्दधीत। तत्फलमाह—स इति। स यः कश्चिदुक्तरीत्या आत्मानमेव लोकमुपास्ते अस्योपासकस्य ह निश्चितं कर्म न क्षीयते कर्माभावादेव। किञ्च स आत्मोपासको यद्यदिष्टं कामयते तत्तदस्माद्ध्येव आत्मनः सकाशात् सृजते न साधनान्तरमपेक्षत इत्यर्थः॥ १५॥

एवमुपोद्धातप्रसङ्गागतं विदुषः स्वातन्त्र्यमुक्त्वा उक्तपारतन्त्र्योऽविद्वान् केन केन कर्मणा कस्य कस्य पशुवदुपभोग्यो भवतीति प्रकृतापेक्षायामाह—

अथो अयं वा आत्मा सर्वेषां भूतानां लोकः। स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितृणामथ यन्मनुष्यान् वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाँ्स्या पिपीलिकाभ्य उपजीवन्ति तेन तेषां लोकः। यथा ह वै स्वायलोकायारिष्टिमिच्छेदेवँ् हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति। तद्वा एतद्विदितं मीमाँ्सितम्॥ १६॥

अथो अप्ययं वै प्रकृतो गृही कर्माधिकृतोऽविद्वानात्मा शरीरद्वयविशिष्टः सर्वेषां देवादिपिपीलिकान्तानां भूतानां प्राणिनां लोको भोग्यो विहितवर्णाश्रमादिकर्मभिरुपकारित्वात्। एतदेव विशेषत आह—स इति। स गृही यज्जुहोति देवतोद्देशेन द्रव्यत्यागपूर्वकमाहुतिमग्नौ प्रक्षिपति यद्यजते देवतोद्देशेन द्रव्यत्यागं करोति तेन होमयागलक्षणेन कर्मणाऽवश्यकर्तव्येन प्रतिबद्धः सन् पशुवत्परतन्त्रभूतो देवानामिन्द्रादीनां लोको भोग्यः। अथापि यदनुब्रूते स्वाध्याय-

मधीतेऽहरहस्तेन ऋषीणां लोक इति प्रत्येकं सम्बध्यते । अथ यत्पितृभ्यः पिण्डोदकादि निपृणाति प्रयच्छति यच्च प्रजामिच्छत उत्पादयति तेनोभयविधकर्मणा पितॄणाम् । अथ यन्मनुष्यान् गृहे भूम्युदकादिदानेन वासयते यच्चैभ्यो वसद्भ्योऽर्थिभ्यो वाऽशनं भोजनं ददाति तेनोभयकर्मणा मनुष्याणाम् । अथ यत् पशुभ्यस्तृणोदकं विन्दति लम्भयति तेन पशूनाम् । आपिपीलिकाभ्यः पिपीलिकाभिः सह श्वापदा मार्जारादयो वयांसि पक्षिणश्च यदस्य कर्मिणो गृहेषु कणबलिभाण्डक्षालनाद्युपजीवन्ति तेन तेषां लोक उपभोग्यः । एवमुपकारिणं देवादयोऽप्युपकुर्वन्तीत्याह—यथेति । यथा ह वै लोके स्वायलोकाय स्वदेहाय अरिष्टिमविनाशमिच्छेत् पोषणरक्षणादिभिः पालयेदेवं हैवमेवैवंविदे सर्वभूतभोग्योऽहमित्यात्मानम् ऋणिवत्परिकल्पितवते सर्वाणि भूतानि देवादीनि यथोक्तामरिष्टिमिच्छन्ति । ननु तथाऽपि नास्य होमादेरवश्यकर्तव्यत्वमित्यत आह—तद्वेति । तद्वा एतत्तदेतदेव यथोक्तानां कर्मणामवश्यकर्तव्यत्वं भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञश्चेति पञ्चमहायज्ञप्रकरणे विदितं विज्ञातम् । ननु श्रुतमप्यविचारितं नानुष्ठेयमित्यत आह—मीमांसितमिति । ऋणं ह वाव जायते जायमानो योऽस्ति स देवेभ्य ऋषिभ्यः पितृभ्यो मनुष्येभ्य इत्यादिना एतदवश्यकर्तव्यत्वं विचारितमित्यर्थः ॥ १६ ॥

ननूक्तविद्याविद्यात्मकनिवृत्तिप्रवृत्तिमार्गयोः तुल्यसामर्थ्यस्य ब्रह्मचारिणः स्वातन्त्र्ये सत्यपि येन प्रेरितो मनुष्यो ग्रहग्रस्त इवावशः स्वात्मलोकाद्बहिर्मुखीभूतो दुःखात्मके कर्मण्येव प्रवृत्तिमार्ग एव प्रवर्तते न निवृत्तौ, स कः प्रवर्तक इत्यपेक्षायां काम एवेति निर्णयार्थमाह—

आत्मैवेदमग्र आसीदेक एव । सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान् वै कामो नेच्छँश्च नातो भूयो विन्देत् । तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति । स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता । मन एवास्याऽऽत्मा वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैवँ श्रोत्रेण

हि तच्छृणोत्यात्मैवास्य कर्माऽऽत्मना हि कर्म करोति। स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदँ सर्वं यदिदं किञ्च तदिदँ सर्वमाप्नोति य एवं वेद ॥ १७ ॥

आत्मैवेदमग्र आसीदित्यत्र आत्मशब्देन स्वाभाविक्याऽविद्यया युक्तः कार्यकारणसङ्घातविशिष्टो ब्रह्मचार्युच्यते। तथा चाग्रे प्राग्दारसम्बन्धादिदं प्रसिद्धं दारादिजातं ब्रह्मचार्यात्मैक एवाऽऽसीत् नासीत् पृथक्। स ब्रह्मचार्यात्मा स्वाभाविक्यविद्यावासनावासितोऽकामयत कामितवान्। कथमित्यत आह—जायेति। जाया कर्माङ्गहेतुभूता मे मम कर्तुः स्यात्। अथ पुत्रसाधनीभूतजायासम्पत्त्यनन्तरं प्रजायेय प्रजारूपेणाहमेव उत्पद्येय। अथ कर्मसाधनीभूतं वित्तं दैवं मानुषं च देवताज्ञानगवादिलक्षणं मे मम स्यात्। अथ उभयविधवित्तसम्पत्त्यनन्तरं नित्यनैमित्तिककाम्याख्यं त्रिविधमपि कर्माहं कुर्वीय। एतावान्वै प्रसिद्धजायापुत्रवित्तकर्माण्येव हि कामः कामयितव्यो विषयः। यद्यपि फलैषणाऽप्यस्ति तथाऽपीयं साधनैषणैव मनुष्यादिलोकरूपफलविषयाऽपि भवति साधनेच्छायास्तदर्थत्वात्, अतोऽवधारणं युक्तम्। ननु तथाऽपि कामानामानन्त्यात् कथमवधारणमित्यत आह—नेति। यस्मादिच्छंश्चन इच्छन्नप्यतोऽस्मात् फलसाधनलक्षणाद्भूयोऽधिकतरं न न विन्देन्न लभेत अतोऽवधारणं युक्तम्। तथा चैवमविदुष एषणापरपर्यायः काम एव कर्ममार्गप्रवृत्तिहेतुरिति। निश्चितेऽर्थे आधुनिकानां कामपूर्वकप्रवृत्तिं प्रमाणयति—तस्मादिति। यस्मादेवमविदुषः प्रजापतेश्च स वै नैव रेमे इति स्त्र्यादिविषयेच्छाऽऽसीत् तस्मादप्येतर्हि इदानीन्तनोऽपि स्वाभाविक्याऽविद्यया युक्त एकाकी कामयते जाया मे स्यादथ प्रजायेय, अथ वित्तं मे स्यादथ कर्म कुर्वीय। इत्येवं कामयमानः स कामी यावदेतेषां यथोक्तानां जायादीनां मध्य एकैकमपि न प्राप्नोति तावदकृत्स्नोऽसम्पूर्णोऽहमित्यात्मानं मन्यते। कृत्स्नत्वसम्पादनासमर्थं प्रति तदुपायमाह—तस्येति। तस्य उ अकृत्स्नत्वाभिमानिनः कृत्स्नतैवं भवति। कथमित्यत आह—मन इति। अस्याकृत्स्नत्वाभिमानिनो मन एव आत्मैवात्मा प्राधान्यसामान्यात्। वाक् चोदनालक्षणशब्दव्यापारवती जायेव जाया भर्तृमनोनुवृत्तित्वसामान्यात्। प्राणः प्रजेव प्रजा वाङ्मनसाभ्यां जायापतिस्थानीयाभ्यां प्राणस्य

उत्पाद्यत्वसामान्यात्। चक्षुर्दर्शनक्रियावत् मानुषं मनुष्यसम्बन्धि वित्तम्। कुतो हि? यस्याच्चक्षुषा तत्प्रकृतं गवादिलक्षणं मानुषं वित्तं विन्दते लभत इति साधनत्वसामान्यात्। श्रोत्रं श्रवणक्रियावत् दैवं देवसम्बन्धि वित्तं हि, यस्मात्तद्दैवं वित्तं देवतादिविषयविज्ञानलक्षणं श्रोत्रेण शृणोति वाक्याद्विज्ञानोत्पत्तेः श्रोत्राधीनत्वात्। एवं साधनं सम्पादितवतोऽस्य अकृत्स्नत्वाभिमानिन आत्मैव शरीरमेव कर्म हि यस्मात् आत्मना शरीरेण कर्म करोति एवं कृत्स्नता सिद्धा। तस्मात्स एष पाङ्क्तः पञ्चभिर्निष्पाद्यः पाङ्क्तो यज्ञो दर्शनात्मकः। कथं पुनरस्य पञ्चत्वसम्पत्तिमात्रेण यज्ञत्वमित्याशङ्कायां बाह्ययज्ञस्यापि पाङ्क्तत्वमाह–पाङ्क्त इति पशुः पशुसाध्यो यज्ञः पाङ्क्तः, पुरुषः पुरुषसाध्यो यज्ञः पाङ्क्त एव। किं बहुना, पञ्चभूतात्मकं हैरण्यगर्भं जगदपि पाङ्क्तमेवेत्याह–पाङ्क्तमिति। इदं सर्वं कर्मसाधनफलात्मकं यदिदं किञ्च यत्किञ्चास्ति तत्सर्वं पाङ्क्तमेव। एतत्सम्पादनफलमाह—वदिति। य एवमुक्तप्रकारेण पाङ्क्तं यज्ञमात्मानं वेद सम्पादयति स तदिदं सर्वं जगदात्मत्वेनाऽऽप्नोतीत्यर्थः॥ १७॥

इति प्रथमाध्याये चतुर्थं ब्राह्मणम्॥ ४॥

एवं कामप्रयुक्तेन गृहस्थेनागृहस्थेन वा पाङ्क्तज्ञानकर्मभ्यां केवलज्ञानेन वा सृष्टस्य अद्यमानत्वेनान्नभूतस्य जगत उपासनार्थं सप्तधा विभागेन निरूपयितुं सप्तान्नब्राह्मणं प्रवर्तते। तत्र सर्वविनियोगान्नप्रकाशकसूत्रभूतान् मन्त्रानुदाहरति—

यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता। एकमस्य साधारणं द्वे देवानभाजयत्। त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत्। तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न। कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा। यो वै तामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन। स देवानपिगच्छति स ऊर्जमुपजीवतीति श्लोकाः॥१॥

पिता क्षेत्रज्ञो ज्ञानकर्माधिकारी मेधया पाङ्क्तोपासनया तपसा पाङ्क्तेन कर्मणा सप्तान्नानि यत्प्रसिद्धमजनयत्तन्मध्ये यत्क्षुत्क्लान्तिकरं सर्वैरद्यते तदेकमन्नमस्य सर्वस्यात्तृवर्गस्य साधारणम्। द्वे अन्ने वक्ष्यमाणे हुतप्रहुताख्ये हविष्प्रक्षेपबलिहरणलक्षणे दर्शपूर्णमासाख्ये वा देवानभाजयत् देवसात्कृतवान्। त्रीणि मनोवाक्प्राणलक्षणानि अन्नान्यात्मने स्वार्थमेव अकुरुत। एकं पयोव्रतरूपमन्नं पशुभ्यश्चतुष्पाद्द्विपदात्मकेभ्यः

प्रायच्छत् दत्तवान् । पयसोऽन्नत्वे हेतुमाह—तस्मिन्निति । यच्च प्राणिति प्राणचेष्टां करोति यच्च न प्राणचेष्टां करोति तत्सर्वं तस्मिन् पयसि प्रतिष्ठितम्, अग्निहोत्रादौ हूयमानस्य पयसः सर्वजगत्कारणत्वात् । तानि सर्वं सर्वदाऽद्यमानान्यन्नानि कस्मान्न क्षीयन्त इति प्रश्नरूपो मन्त्रः । तत्र पुरुषेण अनवरतमुत्पाद्यमानत्वात् अन्नक्षयो न भवतीत्युत्तरमभिप्रेत्य अन्नाक्षयहेतुत्वेन लब्धपुरुषाक्षितित्वगुणविज्ञानफलमाह—यो वेति । यो वै तामक्षितिम् अन्नाक्षयकारणं वेद स प्रतीकेन मुखेन मुख्यया वृत्त्या अन्न मत्त स विज्ञाता देवानपिगच्छति देवत्वं प्राप्नोति स ऊर्जममृतं चोपजीवति अमृतभोक्ता च भवतीति श्लोका मन्त्रा उक्ता इत्यर्थः ॥ १ ॥

एतेषां मन्त्राणां तिरोहितार्थत्वेन प्रतीकग्रहणपूर्वकं तद्व्याख्यानाय ब्राह्मणं प्रवर्तते—

यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति मेधया हि तपसाऽजनयत्पिता । एकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते । स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रँ ह्येतत् । द्वे देवानभाजयदिति हुतं च प्रहुतं च । तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वत्यथो आहुर्दर्शपूर्णमासाविति । तस्मान्नेष्टियाजुकः स्यात् । पशुभ्य एकं प्रायच्छदिति तत्पयः । पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति । तस्मात्कुमारं जातं घृतं वैवाग्रे प्रतिलेहयन्ति स्तनं वाऽनुधापयन्त्यथ वत्सं जातमाहुरतृणाद इति । तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदँ सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न । तद्यदिदमाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान् सर्वँ हि देवेभ्योऽन्नाद्यं प्रयच्छति । कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति । पुरुषो वा अक्षितिः । स हीदमन्नं पुनः पुनर्जनयते । यो वै ता-

मक्षितिं, वेदेति पुरुषो वा अक्षितिः। स हीदमन्नं धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात् क्षीयेत हि सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनेत्येतत् । स देवानपिगच्छति स ऊर्जमुपजीवतीति प्रशँसा ॥ २ ॥

यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति मन्त्रभागः । मेधया तपसा च हि पिता पूर्वोक्तोऽजनयदिति प्रसिद्धवद्द्योतकेन हिशब्देन व्याख्यातः। प्रसिद्धं ह्युक्तार्थकमेधातपसोर्जगत्कारणत्वम् । उक्तसप्तान्नविनियोजकं मन्त्रभागं प्रतीकपूर्वकं व्याचष्टे—एकमस्य साधारणमिति । मन्त्रेऽस्य भोक्तृसमुदायस्य तत्साधारणमन्नमिदमेव। किम् ? यदिदं सर्वैः प्राणिभिः अहन्यहनि अद्यते भुज्यते। एतस्य सर्वसाधारणस्यान्नस्य असाधारणं कुर्वतो दोषमाह—स इति । स यः कश्चिदेतत्सर्वप्राणभृत्स्थितिहेतु साधारणमन्नमुपास्ते तत्परो भवति स्वशरीरस्थित्यर्थान्नप्रधानो नादृष्टार्थं कर्मप्रधानो भवति। स एवंभूतः पाप्मनोऽधर्मान्न व्यावर्तते न मुच्यते। कुतो हि ? यस्मादेतदन्नं मिश्रं सर्वप्राणिसाधारणम्। द्वे अन्ने पिता देवान् अभाजयदिति मन्त्रोक्तमन्नद्वयं हुतं चाग्नौ हवनं प्रहुतं च हुत्वा बलिहरणमेतदन्नद्वयं दैवं यस्मात् तस्मादिदानीन्तना अपि गृहिणो देवेभ्यो जुह्वति, हुत्वा प्रजुह्वति च बलिहरणं च कुर्वते । एतस्य पूर्वपक्षत्वं सूचयितुं पक्षान्तरमाह—अथो इति । अथो अप्यन्य आहुर्ये द्वे अन्ने पित्रा प्रदत्ते न ते हुतप्रहुते, किन्तु दर्शपूर्णमासाविति यस्मात् तस्मान्नेष्टियाजुकः काम्येष्टियजनशीलो न स्यात्, तथात्वे तयोरन्नयोर्देवान्नत्वव्याहतिरेव स्यात्। पशुभ्यो द्विपाच्चतुष्पाद्भ्यो यदेकमन्नं पिता प्रायच्छदिति मन्त्रोक्तं तदन्नं पयः। कुत एतदवगम्यत इत्यत आह—पय इति । हि यस्मादग्रे प्रथमं मनुष्याः पशवश्च पय एवोपजीवन्ति तस्माज्जातं कुमारं बालं त्रैवर्णिका जातकर्मण्यग्रे घृतं वैव घृतमेव सुवर्णयुक्तं प्रतिलेहयन्ति प्राशयन्ति स्तनं वाऽनु पश्चाद्धापयन्ति पाययन्ति। अत्रैवर्णिकानां तु यथासम्भवम्। किञ्च—अथ द्विपात्पशुषु पयसोऽन्नत्वे लोकप्रसिद्धिप्रमाणीकरणानन्तरं जातं वत्समाहुः, कियत्प्रमाणो वत्सो जात इत्येवं पृष्टाः सन्त आहुः—तृणाद इति । तृणमत्तीति तृणादो न तृणादोऽतृणादः पयसैवाद्यापि वर्तत इति यावत् । तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति मन्त्रभागो यच्च प्राणिति मनुष्यपश्वादि यच्च न प्राणिति स्थावरादि इदं सर्वं पयसि प्रतिष्ठितमिति हि प्रसिद्धम्, पयआहुतिविपरिणामत्वात् सर्वस्य जगत इति ब्राह्मणेन व्याख्यातः। इदं दर्शनं

स्तोतुं मतान्तरमनूद्य दूषयति—ब्दिति। प्रयोगैक्यविवक्षया संवत्सरं सायंप्रातराहुत्योः इष्टकायाः संवत्सराहोरात्रयोः पुरुषदेहार्धयोश्च अविवक्षितभेदेन षष्ट्यधिकशतत्रयसंख्याकाः। प्रयोगभेदविवक्षया तु देहार्धादीनां विवक्षितभेदेन विंशत्यधिकसप्तशतसंख्याका आहुतीष्टकाहोरात्रनाड्यो भवन्तीत्येतत्संख्यासामान्येन पुरुषचित्याग्निसंवत्सरात्मकप्रजापतीनां समत्वं सम्पाद्य स प्रजापतिरहमस्मीति भावयन् असंवत्सरं वर्षपर्यन्तं पयसा जुह्वोमं कुर्वन् अग्नौ अप पुनर्मृत्युं जयति पुनर्मृत्युमपजयति पुनर्मरणाय न जायत इति यदिदं शाखान्तरीया आहुस्तत्तथा पूर्वोक्तप्रकारेण दर्शनं पयसः सर्वजगद्धेतुत्वलक्षणं न विद्यान्न जानीयात्। तर्हि कथं विद्यादित्यत आह—यदिति। एवं पयसि हीदँ सर्वं प्रतिष्ठितमित्युक्तप्रकारेण पयस्यन्तर्हितं विश्वमिति विद्वान् सन् यदहरेव यस्मिन्नेव दिवसे जुहोत्याहुतिप्रक्षेपं करोति तदहस्तस्मिन्नेव दिवसे मृत्युमपजयति न तु संवत्सरपर्यन्तमाहुत्यभ्यासापेक्षा। तत्र हेतुमाह—सर्वमिति। हि यस्मादेवमुक्तप्रकारेण विद्वान्सर्वं समस्तमन्नाद्यमन्नं च तदाद्यं सोमात्मकं पयो यस्मिन्नेव दिवसे देवेभ्यः प्रयच्छति ददाति तस्माद्युक्तं तस्मिन्नेव दिवसे सर्वान्नमयसोमात्मकपयआहुतिमयमात्मानं कृत्वा सर्वदेवान्नस्वरूपेण सर्वैर्देवैरेकात्मभावं गत्वा सर्वदेवमयप्रजापतिर्भूत्वा पुनर्मृत्युमपजयतीति भावः। कस्माद्धेतोस्तानि सप्तान्नानि सर्वदा सर्वैरद्यमानानि न क्षीयन्त इति मन्त्रेण प्रश्ने कृते ब्राह्मणमुत्तरमाह—पुरुष इति। पुरुषो वै भोक्तैव अक्षितिरन्नाक्षयहेतुः। ननु प्रत्युत क्षयहेतुर्भोक्ता कथमक्षयहेतुरित्यत आह—स इति। हि यस्मात्स भोक्ताऽपीदं भुज्यमानं सप्तविधं कार्यकरणलक्षणं क्रियाफलात्मकं पुनः पुनर्भूयो भूयो जनयत उत्पादयति तस्माद्भोगकालेऽपि भुज्यमानादिविपयकरागद्वेषादिना नाविहितप्रतिषेधाद्युत्पत्तेरावश्यकत्वेन मेधातपोभ्यां पितुरिवास्य जनकत्वसम्भवाद्भवत्येव पुरुषोऽक्षयहेतुः। यो वै तामक्षितिं वेदेति मन्त्रे पुरुषो वै भोक्ता अक्षितिरुच्यते। कुतो हि? यस्मात्स पुरुषो भोक्ताऽपीदमन्नं सप्तविधं धिया धिया लोकशास्त्रसाधारणबुद्ध्या कर्मभिश्च जनयते। एतमेव हेतुं व्यतिरेकद्वारेणोपपादयति—यद्धैतदिति। यदि हैतत्सप्तविधमन्नं न कुर्यात्तर्हि सातत्येन भुज्यमानत्वात् क्षीयेत ह विच्छिद्येत किल। सोऽक्षितिगुणकसप्तान्नात्मकप्रजापतित्वं वेद। सोऽन्नमत्ति प्रतीकेनेति मन्त्रे प्रतीकं मुखं मुख्यत्वमुच्यते। तदेव

आह—मुखेनेत्येतदिति। मुख्यत्वेन प्राधान्येनेति यावत्। स देवानपि गच्छति स ऊर्जमुपजीवतीति मन्त्रेणैतत्फलकथनं पूर्वोपास्तिफलप्रशंसा-प्राशस्त्यमात्रं नापूर्वार्थोऽन्योऽस्तीत्यर्थः ॥ २ ॥

एवं मन्त्रक्रममुल्लङ्घ्य अर्थक्रमवशात् साधनीभूतमन्नचतुष्टयं व्याख्याय इदानीं फलभूतमन्नत्रयं प्रतीकग्रहणपूर्वकं व्याकरोति—

त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुत। अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति। मनसा ह्येव पश्यति मनसा शृणोति। कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव। तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्च शब्दो वागेव सा। एषा ह्यन्तमायत्तैषा हि न प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एव। एतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥ ३ ॥

मन्त्रे मनो वाचं प्राणमित्येतानि त्रीण्यन्नानि पिताऽऽदौ सृष्ट्वा आत्मन आत्मार्थमकुरुत कृतवान्। तेषां मध्ये मनसोऽस्तित्वे प्रमाणमाह—अन्यत्रेति। पुरोऽवस्थितं गजं त्वं दृष्टवानिति केनचित्पृष्ट आह, अन्यत्र विषयान्तरे गतं मे मनो यस्य सोऽहमन्यत्रमना अभूवमासम्, अतो नादर्शम्। तथा इदं मदीयं वचस्त्वं श्रुतवानसीति पृष्ट आह अन्यत्रमना अभूवमतो नाश्रौषं न श्रुतवानस्मीति। हि यस्मात्सर्वो लोक आत्मसाक्षिकमनसैव पश्यति मनसैव शृणोति तद्वैयग्र्ये दर्शनाद्यभावात्। तस्मात्सिद्धं प्रत्यक्षादिप्रमाणक मनसोऽस्तित्वम्। किं पुनर्मनसः स्वरूपमित्यतस्तदाह—काम इति। कामः स्त्र्यादिविषयसम्बन्धाभिलाषः। सङ्कल्प इदं नीलमिदं शुक्लमिति विषयविशेषावधारणम्। विचिकित्सा संशयज्ञानम्। श्रद्धा अदृष्टार्थेषु आस्तिक्यबुद्धिः। अश्रद्धा तद्विपरीता बुद्धिः। धृतिर्धारणं देहाद्यवसादने सत्युत्तम्भनम्। अधृतिस्तद्विपर्ययः। ह्रीर्लज्जा। धीः प्रज्ञा। भीर्भयमित्येतत्। एवमादिकं सर्वं मनः सर्वं मन एव, वृत्तिवृत्तिमतोरभेदात्। पुनरपि तत्सद्भावे प्रमाणमाह—तस्मादिति। यस्माच्चक्षुषो ह्यगोचरे पृष्ठतोऽपि केनचित्स्पृष्टः कश्चित् हस्तस्यायं स्पर्शो जानोरयमिति मनसैव विजानाति विवेकेन प्रतिपद्यते।

तस्मादस्ति विवेककारणं मन इति । अथ आध्यात्मिकवाचः स्वरूपमाह-य इति । यः कश्च शब्दो वस्तुप्रकाशरूपो वर्णावर्णात्मकः स सर्वोऽपि सा प्रकृता वागेव । अत्र हेतुमाह—एषेति । यद्वा तस्याः कार्यमाह-एषेति। हि यस्मादेषा प्रकाशमात्रस्वरूपा वाक् अन्तमभिधेयनिर्णयावसानमायत्त अनुगता अत एषाऽभिधेयनिर्णायिका । वाक् हि निश्चितं न प्रकाश्या, किन्तु प्रकाशिकैवेत्यर्थः । आध्यात्मिकप्राणकार्यरूपं प्राणास्तित्वे प्रमाणं कथयंस्तत्स्वरूपमाह—प्राण इति । प्राणिति पुरतो निःसरतीति प्राणो मुखनासिकाभ्यन्तरचारिणी हृदयसम्बन्धिनी वायुवृत्तिः । मूत्रपुरीषादेरधोनयनादपानो नाभिमर्यादोऽधोवृत्तिः । हृदयमारभ्य नाभिपर्यन्तो व्यायमनकर्मा व्यानः प्राणापानयोर्नियमकर्मेति यावत् वीर्यवत्कर्महेतुश्च । ऊर्ध्ववृत्तिरुदान आपादतलमस्तकस्थानो देहपुष्ट्य ूर्ध्वगमनोत्क्रान्त्यादिहेतुः । भुक्तस्य पीतस्य च समं नयनात् समानः कोष्ठस्थानोऽन्नपक्ता । एतेषां वृत्तिविशेषाणां सामान्यभूतसामान्यदेहचेष्टाभिसम्बन्धिवृत्तिस्वरूपः प्राणोऽन इति शब्देनोच्यते । एतत्सर्वं प्राणादिवृत्तिजातमाध्यात्मिको वृत्तिमान् प्राण एव, वृत्तिवृत्तिमतोरभेदात् । एवमुक्तानां वागादीनां समुचितं स्वरूपं दर्शयति—एतदिति । अयमात्मा कार्यकरणसङ्घातः पिण्ड एतन्मय एतद्विकारः । एतदेव विवृणोति—वाङ्मयो मनोमयः प्राणमय इति । एतत्स्पष्टार्थम् ॥ ३ ॥

एवं वागादीनामाध्यात्मिकीं विभूतिमुक्त्वा आधिभौतिकीं तामाह—

त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥ ४ ॥

त्रयो लोका भूर्भुवः स्वरित्याख्या एते वाङ्मनः प्राणा एव । एतदेव विशेषतो विवृणोति—वागिति । वागेवायं भूर्लोकः । मनोऽन्तरिक्षलोकः । प्राणोऽसौ परोक्षः स्वर्लोकः ॥ ४ ॥

एषामेव वागादीनां वेदत्रयात्मकत्वं देवपितृमनुष्यात्मकत्वं पितृमातृप्रजात्मकत्वं विज्ञातविजिज्ञास्याविज्ञातवस्त्वात्मकत्वं चाऽऽह 'त्रयो वेदा एत एव' इत्यादिकण्डिकाषट्केन—

त्रयो वेदा एत एव वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥ ५ ॥ देवाः पितरो मनुष्या एत एव वागेव देवा मनः पितरः प्राणो मनुष्याः ॥ ६ ॥ पिता माता प्रजैत एव

मन एव पिता वाङ् माता प्राणः प्रजा ॥ ७ ॥ विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत्किञ्च विज्ञातं वाचस्तद्रूपं वाग्घि वि.ाता वागेनं तद्भूत्वाऽवति ॥ ८ ॥ यत्किञ्च विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वाऽवति ॥ ९ ॥ यकिञ्चाविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वाऽवति ॥ १० ॥

वाचो विज्ञातत्वे हेतुमाह —वागिवि। हि यस्माद्वाग् विज्ञाता प्रकाशात्मकत्वात्। एवं वाग्विभूतिविदः फलमाह—वागिवि। एनं वाग्विदं वाक् तद्भूत्वा विज्ञातस्वरूपं भूत्वा अवति पालयति विज्ञातस्वरूपेणैव अन्नत्वमापद्यत इति यावत् ॥ ५—१० ॥

एवं वागादीनामाधिभौतिकीं विस्तृतिमुक्त्वा आधिदैविकीं तामाह—

तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निस्तद्यावत्येव वाक् तावती पृथिवी तावानयमग्निः ॥ ११ ॥

तस्यै तस्याः प्रजापतेरन्नात्वेन प्रस्तुताया आधिदैविक्या वाचः पृथिवी शरीरमाधारो ज्योतीरूपं प्रकाशात्मकं करणभूतमाधेयरूपमयं पार्थिवोऽग्निः । अध्यात्मादेराधिदैविकांशत्वात् अंशांशिनोश्चाभेदात्। आधिदैविक्या वाचा सह तुल्यपरिमाणत्वमाह—तदिति । तत्तत्र वाचोऽध्यात्मादिभेदेन त्रैविध्ये सति अध्यात्माधिभूतभेदभिन्ना वाक् यावत्येव यावत्परिमाणैव भवति तदाधारत्वेन व्यवस्थिता कार्यभूता पृथिव्यपि तावत्येव भवति। अयं च पार्थिवोऽग्निराधेयभूतो ज्योतीरूपः करणात्मा पृथिवीमनुप्रविष्टस्तावानेव भवतीत्यर्थः ॥ ११ ॥

अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यः तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यः। तौ मिथुनँ समैतां ततः प्राणोऽजायत । स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ॥ १२ ॥

अथैतस्य मनसो द्यौः शरीरमित्यादि समानार्थकम्। मन एवास्य आत्मा वाक् जाया प्राणः प्रजा। मन एव पिता वाङ् माता प्राणः प्रजेत्यध्या-

त्माधिभूतप्रकरणयोरिव आधिदैविकयोरप्याह—ताविति । तौ अग्न्यादित्यौ आधिदैविके वाङ्मनसे आधिदैविके मातापितरौ मिथुनं मैथुन्यं समैतां समगच्छेताम् । ततस्तयोः सङ्गमनात् प्राणोऽन्नत्रयान्तर्गतप्राणाद्भिन्नः अन्तरिक्षगो वायुः परिस्पन्दकर्मार्थमजायत । स प्राण इन्द्रः परमेश्वरः । तथा स एष प्राणोऽसपत्नो न विद्यते सपत्नो यस्यासावसपत्नः । प्रतिपक्षत्वेनोपगतः । द्वितीयो वै सपत्नः शत्रुर्भवति । असपत्नगुणकप्राणोपासनफलमाह—नास्येति । नास्योपासकस्य सपत्नः प्रतिपक्षो भवति य एवमसपत्नं प्राणं वेदेत्यर्थः ॥ १२ ॥

अथैतस्य प्राणस्याऽऽपः शरीरं ज्योतीरूपमसौ चन्द्रः । तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रः । त एते सर्व एव समाः सर्वेऽनन्ताः । स यो हैतानन्तवत उपास्तेऽन्तवन्तँ स लोकं जयति । अथ यो हैताननन्तानुपास्तेऽनन्तँ स लोकं जयति ॥१३॥

अथैतस्य प्राणस्यान्नत्वेन प्रकृतस्य न तु वाङ्मनःप्राणत्वेन निर्दिष्टस्य आपः शरीरमित्यादि समानम् । अथैषाम् अध्यात्माधिभौतिकाधिदैविकानां वाङ्मनःप्राणानां ध्यानार्थं समत्वादिगुणमाह—त इति । त एते वागादयः सर्वे एव समास्तुल्याः । केन रूपेणेत्यपेक्षायां वक्ति—सर्वेऽनन्ता इति । आधिदैविकरूपेण अशेषजगद्व्याप्तिमन्तो यावत्संसारभाविनो वा एवमेवोपासनीया इति । अन्यथोपासने दोषं वदन् आह—स इति । स यः कश्चिद्धैतान् प्रजापतेः पितुरात्मभूतान् अन्तवतः परिच्छिन्नानध्यात्मरूपेण अधिभूतरूपेण वोपास्ते स उपासनानुरूपमन्तवन्तमेव लोकं फलं जयति साधयति परिच्छिन्न एव भवेत् न तेषामात्मभूतो भवति । अथ पुनर्यो हैतान् वागादीन् अनन्तान् सर्वप्राण्यात्मभूतानपरिच्छिन्नान् उपास्ते सोऽनन्तमेव लोकं जयत्यनन्तो भवतीत्यर्थः ॥१३॥

यदधिदैवविषये पाङ्क्तकर्मफलं तदपि पाङ्क्तं वक्तव्यम् तत्र मनोवाक्प्राणरूपा मातापितृ प्रजा इत्येवं लक्षणत्रयमुक्तम् । वित्तं कर्म चेत्यनुक्तत्वाच्यमियेतदर्थः 'स एष' इत्युत्तरो ग्रन्थः प्रवर्तते—

स एष संवत्सरः प्रजापतिः षोडशकलः । तस्य रात्रय एव पञ्चदश कलाः । ध्रुवैवास्य षोडशी कला । स रात्रिभिरेवाऽऽच पूर्यतेऽप च क्षीयते सोऽमावास्याँ रात्रिमेतया षोडश्या

कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते । तस्मादेताँ रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्य । एतस्या एव देवताया अपचित्यै ॥ १४ ॥

योऽयं त्र्यन्नात्मा प्रजापतिः प्रकृतः स एष संवत्सर संवत्सरात्मा षोडश कला अवयवा यस्य स षोडशकलः । ता एव षोडश कला आह—तस्येति । तस्य कलात्मनः प्रजापते रात्रयोऽहोरात्राण्येवाहोरात्रसम्बन्धिन्यस्तिथय एव पञ्चदश कलाः । ध्रुवैव नित्यैवास्य प्रजापतेः षोडशी षोडशानां पूरणी कला व्यवस्थिता । एतासां कलानां द्रव्यत्वं वक्तुं तत्साधर्म्यमाह—स इति । स प्रजापतिश्चन्द्रात्मा रात्रिभिरेव उक्तकलारूपाभिस्तिथिभिरेव प्रतिपदाद्याभिरुपचीयमानाभिः शुक्लपक्ष आपूर्यते वर्धते । ताभिरेव रात्रीभिरपचीयमानाभिरपक्षीयते च कृष्णपक्षे यावद् ध्रुवैका कला व्यवस्थिता । एवं कलानां वित्तत्वे सिद्धम् । तदुपचयापचयौ कर्मेत्यभिप्रेत्याऽऽह—स इति । प्रजापतिः कलात्माऽमावस्याम् अमावास्यायां रात्रिं रात्रावेतया षोडश्या कलया सर्वमिदं प्राणभृत् स्थावरजङ्गमात्मकम् ओषध्यात्मनाऽनु अस्याममावास्यां रात्रिमवस्थाय ततः परेद्युः प्रातर्जायते द्वितीयया कलया संयुक्तो भवति । प्रासङ्गिकमुपदिशति—तस्मादिति । यस्मादेष चन्द्र एतां रात्रिं सर्वप्राणिजातमनुप्रविष्टो ध्रुवया कलया वर्तते तस्माद्धेतोः एताममावास्यां रात्रिं प्राणभृतः मापयेत् । किम् ? प्राणिनः प्राणं न विच्छिन्द्यान्न प्रमापयेत् । किं बहुना कृकलास्यापि प्राणं न विच्छिन्द्यात् । स हि पापात्मा दृष्टोऽप्यमङ्गल इति कृत्वा स्वभावेनैव प्राणिभिर्हिंस्यते । विशेषतो निषेधप्रयोजनमाह—एतस्या इति । एतस्या एव सोमदेवताया अपचित्य पूजार्थमित्यर्थः ॥ १४ ॥

यदेवम् आधिदैविककलात्मकत्र्यन्नात्मप्रजापतेरुपासनमुक्तं तदहंग्रहेण कर्तव्यमित्यभिप्रेत्याऽऽह—

यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित्पुरुषस्तस्य वित्तमेव पञ्चदश कला आत्मैवास्य षोडशी कला । स वित्तेनैवाऽऽच पूर्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तम । तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनाऽगादित्येवाऽऽहुः ॥ १५ ॥

यो वै स परोक्षोऽभिहितः संवत्सरः प्रजापतिः षोडशकलः स

नैवात्यन्तं परोक्षो मन्तव्यो यस्मादयमेव स प्रत्यक्ष उपलभ्यते। कः? यः पुरुष एवंविद्यथोक्तं त्र्यन्नात्मकं प्रजापतिं स्वात्मभूतमेव वेद सोऽयं प्रत्यक्षः प्रजापतिः। केन सामान्येनेत्यत आह—तस्येति। तस्यैवं वदः पुरुषस्य गवादिवित्तमेव पञ्चदश कला कलावत् उपचयापचयधर्मित्वात् जगत्परिणामहेतुत्वाच्च। आत्मैव देह एवास्य विदुषः षोडशी कला ध्रुवास्थानीया। स विद्वान् वित्तेनैव आपूर्यते चापक्षीयते च चन्द्रवत्। आत्मैव ध्रुवा कलेत्युक्तं तदेव रथचक्रदृष्टान्तेन स्पष्टयति—यदिति। तदेतन्नभ्यं नाभिः चक्रपिण्डाकारस्तत्स्थानीयं नभ्यम्। किं तत्? यदयमात्मा पिण्डः शरीरं बाह्यं वित्तं प्रधिः परिवारस्थानीयं चक्रपिण्डाकारे नेम्यादिवत्। एवं सति फलितमाह—तस्मादिति। तस्मादेवं तस्माद्यपि सर्वज्यानिं सर्वस्वापहर यथा स्यात्तथा जीयते हीयते सर्वस्वापहरणनिमित्तां ग्लानिं प्राप्नोति, तथापि चेद्यदि आत्मना नाभिस्थानीयेन जीवति तदा प्रधिना बाह्येन जायादिपरिवारेण अगात्। क्षीणोऽयमरनेमिविमुक्तरथचक्रमिवेत्येव आहुर्लौकिका इत्यर्थः ॥ १५ ॥

एवं पाङ्क्तेन दैववित्तात्मकविद्यासंयुक्तेन कर्मणा त्र्यन्नात्मकप्रजापतिभावो व्याख्यातः। अनन्तरं च जायादिवित्तं परिवारस्थानीयमित्युक्तम्। तत्र पुत्रकर्मापरविद्यानां लोकप्राप्तिसाधनत्वमात्रं सामान्येनावगतं न पुनः पुत्रादीनां लोकप्राप्तिं प्रतीदमस्येति विशेषसम्बन्धोऽवगतः, अतस्तत् प्रदर्शनार्थम् 'अथ त्रयो वावे'ति कण्डिका प्रवर्तते-

अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति। सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा। कर्मणा पितृलोको विद्यया देवलोकः। देवलोको वै लोकानाँ् श्रेष्ठतस्माद्विद्यां प्रशँ् सन्ति ॥ १६ ॥

अथशब्दो वाक्योपक्रमार्थः। वावेत्यवधारणार्थः। शास्त्रोक्तसाधनार्हास्त्रय एव लोकाः। के त इत्यत आह—मनुष्यलोकः पितृलोको देवलोक इति। केन कः साध्य इत्यपेक्षायामाह—स इति। तेषां मध्ये सोऽयं मनुष्यलोकः पुत्रेणैव। भोगांशे त्वयोगव्यवच्छेदार्थ एवकारः। ज्योतिषेमं लोकमिति कर्मणाऽपि साध्यस्तथापि पितृकर्तव्यशेषानुष्ठानांशे नापुत्रस्य लोकोऽस्तीति पुत्रेणैव साधनेन जय्यो जेतव्यः साध्यो नान्येन कर्मणा विद्यया वेति शेषः। कर्मणाऽग्निहोत्रादिना

केवलेन पितृलोको जेतव्यो न पुत्रेण नापि विद्यया। विद्यया परया देवलोको जेतव्यो न पुत्रेण नापि कर्मणेत्यनुकृष्यते। देवलोको वै प्रसिद्धस्त्रयाणां लोकानां मध्ये श्रेष्ठः प्रशस्यतमः। तस्माद्देवलोकसाधनत्वाय विद्यां प्रशंसन्ति स्तुवन्तीत्यर्थः ॥ १६ ॥

एवं साध्यलोकत्रयात्मकफलभेदेन विनियुक्तानि पुत्रादीनि त्रीणि साधनानि। जायावित्तयोस्तु पुत्रकर्मार्थहेतुत्वेन न पृथक्साधनत्वम्। विद्याकर्मणोर्लोकजयहेतुत्वं तु स्वात्मप्रतिलाभेनैवेति प्रसिद्धम्। पुत्रस्य तु अक्रियात्मकत्वात् केन प्रकारेण लोकजयहेतुत्वमिति न ज्ञायते। अतस्तत्कथनार्थमाह—

अथातः सम्प्रत्तिर्यदा प्रैषन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति। स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति। यद्वै किञ्चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता। ये वै के च यज्ञास्तेषाँ सर्वेषां यज्ञ इत्येकता। ये वै के च लोकास्तेषाँ सर्वेषां लोक इत्येकतैतावद्वा इदँ सर्वमेतन्मा सर्वँ सन्नयमितोऽभुनजदिति। तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति। स यदैवंविदस्माल्लोकात् प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति। स यद्यनेन किञ्चिदक्ष्णयाऽकृतं भवति तस्मादेनँ सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम। स पुत्रेणैवास्मिँल्लोके प्रतितिष्ठत्यथैनमेते दैवाः प्राणा अमृता आविशन्ति ॥ १७ ॥

अथ पुत्रादिसाधनानां साध्यविशेषसम्बन्धकथनान्तरं यतः पुत्रस्यैतल्लोकसाधनत्वं कथमिति न ज्ञायतेऽतस्तत्कथयितुं संप्रत्तिः सम्प्रदानम्। पुत्रे हि पिता वक्ष्यमाणप्रकारेण स्वात्मव्यापारसंप्रदानं करोति, तेन संप्रत्तिसंज्ञकमिदं कर्म! तत्कस्मिन्काले कर्तव्यमित्यपेक्षायामाह— यदेति। स पिता यदा यस्मिन्काले प्रैष्यन्प्रव्रजिष्यन् मरिष्यन्वाऽरिष्टादिदर्शनेन मन्यतेऽथ तदा पुत्रमाहूयाऽऽह। किम्? त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति। स एवमुक्तः पुत्रः पूर्वमेवानुशिष्टत्वात्प्रत्याह प्रतिवचनमाह—अहं ब्रह्माहं यज्ञोऽहं लोक इति। ब्रह्मादिवचनानां तिरोहितार्थं मत्वा श्रुतिस्तद्व्याकरोति—यदिति। यद्वै किञ्च यत्किञ्चानक्तमवशिष्टमधीतमनधीतं च तस्य सर्वस्यैव ब्रह्मेत्येतस्मिन्पद एकतैकत्वमिति पदार्थः।

योऽध्ययनव्यापारो मम कर्तव्य आसीदेतावन्तं कालं वेदविषयः स इत ऊर्ध्वं त्वं ब्रह्म त्वत्कर्तृकोऽस्त्विति वाक्यार्थः । तथा ये वै के च यज्ञा अनुष्ठेयाः सन्तो मयाऽनुष्ठिता अननुष्ठिताश्च तेषां सर्वेषां यज्ञ इत्येतस्मिन्पद एकता एकत्वमेकार्थत्वमिति यावत् । ये वै के च लोका मया जेतव्याः सन्तो जिता अजिताश्च तेषां सर्वेषां लोक इत्येतत्पद एकतेति पदार्थः । अनयोर्यज्ञलोकयोर्वाक्यार्थस्तु ब्रह्मवाक्यार्थवदूहनीयः । इत ऊर्ध्वं मया कर्तव्याध्ययनयज्ञलोकजयहेतुभूतक्रियासङ्कल्पस्त्वयि समर्पित इति वदतोऽस्य पितुर्वाक्यार्थोक्तिपूर्वकं श्रुतिराह—एतावद्विति । एतावद्वा एतावत्परिमाणमेवेदं सर्वं यद्गृहिकर्तव्यं वेदाध्ययनयज्ञानुष्ठानलोकजयलक्षणमेतत्सर्वं मदधीनं सदतः परमयं पुत्रो मत्तोऽपच्छिद्य स्वाधीनकर्तव्यत्वमापद्यतोऽस्माद्वन्वहेतुभूतात् लोकान् मामभुनजन् पालयिष्यतीति लृडर्थे लङः छन्दसि कालनियमाभावात् । पुत्रानुशासनस्य फलमाह—तस्मादिति । यस्मादेवं सम्पन्नः पुत्रः पितरमस्माल्लोकात्कर्तव्यताबन्धनतो मोचयिष्यति तस्मात्पुत्रमनुशिष्टं लोक्यं पितृलोकहितमाहुर्ब्राह्मणाः तस्मादुक्तहेतोरेवाद्यतना अपि पुत्रवन्त एनं स्वपुत्रमनुशासति लोक्योऽयमस्माकं स्यादिति मन्वानाः । कृतसम्प्रत्तिकः पिता किं करोतीत्यपेक्षायामाह—स इति । स पुत्रसमर्पितकर्तव्यताकः पिताऽहमस्म्यनन्तवाङ्मनःप्राणात्मेत्येवंविद्यदा यस्मिन्कालेऽस्माल्लोकात्प्रैति म्रियतेऽथ तदैभिरेव प्रकृतैर्वाङ्मनःप्राणैरेव सह पुत्रमाविशति व्याप्नोति फलरूपेण परत्र वर्तमानोऽपि सन्ननुशिष्ट पुत्रात्मनाऽत्रापि वर्तत इति यावत् । पुत्रनिर्वचनमाह—स यदीति । स पुत्रो यदि कदाचिदनेन पित्राऽक्ष्णया कोणच्छिद्रतः किञ्चिदकृतं कस्मिंश्चित्कर्मैकदेशे कर्तव्यं सद्विस्मृतमकृतं भवति । तस्मादकृतात्कर्तव्यतारूपात् सर्वस्मात्सर्वलोकप्राप्तिप्रतिबन्धरूपात् पुत्रः स्वयं तत्सर्वमनुष्ठानेन पूरयित्वैनं पितरं मुञ्चति मोचयति यस्मात्पितुश्छिद्रपूरणेन पितरं त्रायते तस्मात्पुत्रो नाम । पितुः पुत्रतादात्म्येनैतल्लोकावस्थानमुक्तं निगमयति—स इति । स पिता मृतोऽपि सन्पुत्रेणाऽऽत्मनाऽस्मिंल्लोके प्रतितिष्ठति वर्तते । एवं प्रासङ्गिकं पुत्रत्वं निरूप्य प्रकृतं पितरमेवाधिकृत्याऽऽह—अथेति । पुत्रप्रकरणविच्छेदार्थोऽथशब्दः । एनं कृतसम्प्रत्तिकं पितरमेते वागादयः प्राणा दैवा हैरण्यगर्भा अमृता अमरणधर्माण आविशन्ति प्रविशन्तीत्यर्थः ॥ १७ ॥

तेषामावेशप्रकारमेवाऽऽह—

पृथिव्यै चैनमग्नेश्च दैवी वागाविशति । सा वै दैवी

वाग्यया यद्यदेव वदति तत्तद्भवति ॥ १८ ॥

पृथिव्या अग्नेश्च सकाशाद्दैव्याधिदैविकी वागेनं कृतसम्प्रत्तिकं पितरमाविशति । सा हि दैवी वाक्पृथिव्यग्निलक्षणा आध्यात्मिकासङ्गादिदोषैर्निरुद्धा । विदुषस्तद्दोषापगम आवरणभङ्गे सत्युदकमिव प्रदीपप्रकाशवच्च व्याप्नोतीत्यर्थः । सा पुनः कीदृग्विधेत्यत आह–सेति । सा वै दैवी वाग्भवति यया वाचा यद्यदेवाऽऽत्मने परस्मै वा वदति तत्तद्भवत्यनृतादिदोषरहितत्वादित्यर्थः ॥ १८ ॥

दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं

मनो येनाऽऽनन्द्येव भवत्यथो न शोचति ॥ १९ ॥

तथा दिवो द्युलोकादादित्याच्चैनं पितरं दैवं मन आविशति । किं तदित्यत आह–तदिति । तच्च दैवं मनो येन मनसाऽऽनन्द्येव भवत्यथो अपि शोचत्यपि नेत्यर्थः ॥ १९ ॥

अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः

प्राणो यः संचरँश्चासंचरँश्च न व्यथतेऽथो न रिष्यति

स एवंवित्सर्वेषां भूतानामात्मा भवति । यथैषा देवतैवँ स

यथैतां देवताँ सर्वाणि भूतान्यवन्त्येवँ हैवंविदँ सर्वाणि

भूतान्यवन्ति । यदु किञ्चेमाः प्रजाः शोचन्त्यमैवाऽऽसां

तद्भवति पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति ॥ २० ॥

अद्भ्यश्चन्द्रमसश्च सकाशाद्दैवः प्राण एनं पितरमाविशति । क इत्यत आह–स इति । स वै दैवः प्राणो यो जङ्गमेषु सञ्चरन्स्थावरेषु चासञ्चरन्न व्यथतेऽथो न रिष्यति न विनश्यत्यपि । एवंविदः फलमाह—स इति । य एवं यथोक्तं त्र्यन्नात्मस्वरूपं वेत्ति लभते स सर्वेषां भूतानामात्मा भवति यथैषा पूर्वसिद्धा हिरण्यगर्भदेवतैवं तद्वदस्य सर्वज्ञत्वं सर्वकर्तृत्वं च सर्वात्मकत्वात् । किञ्च स इति दृष्टान्तनिर्देशः । यथैतां हिरण्यगर्भदेवतामिज्यादिभिः सर्वाणि भूतान्यवन्ति पालयन्ति पूजयन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति इज्यादिलक्षणां पूजां सततं प्रयुञ्जते । नन्वस्य विदुषः सर्वप्राणिनामात्मत्वेन तत्कार्यकरणात्मत्वात् सर्वप्राणिदुःखैरस्य सम्बन्धः स्यादित्यत आह—यदिति । यदु किञ्च यत्किञ्चेमा प्रजाः शोचन्त्यवसीदन्ति

तच्छोकादिनिमित्तं दुःखमासां प्रजानाममैव स्वात्मभिः सहैव संयुक्तं भवति प्रजाभिः स्वगतं दुःखं स्वात्मनैवोपभुज्यत इति यावत्, अहंममाद्यभिमानत्वात्। अमुं प्राजापत्ये पदे वर्तमानं पुण्यमेव पुण्यफलं सुखमेव गच्छति। न ह वै नैव ह स्फुटं देवान्पापं पापफलं दुःखं गच्छति अहंममाद्यभिमानाभावात् अस्मदादीनां स्वोदरवर्तिकृम्यादिगतदुःखमेवेत्यर्थः ॥ २० ॥

त एत इत्यादिवाक्यात् वाङ्मनःप्राणानां साम्यनिश्चयात् कस्य ध्यानं कर्तव्यमुपासकेन कस्य वा कर्म व्रतत्वेन धार्यमिति जिज्ञासायां तदुभयं निश्चेतुमाह—

अथातो व्रतमीमाँ सा। प्रजापतिर्ह कर्माणि ससृजे। तानि सृष्टान्यन्योन्येनास्पर्धन्त। वदिष्याम्येवाहमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि यथाकर्म। तानि मृत्युः श्रमो भूत्वोपयेमे। तान्याप्नोत्। तान्याप्त्वा मृत्युरवारुन्ध। तस्माच्छ्राम्यत्येव वाक्श्राम्यति चक्षुः श्राम्यति श्रोत्रमथेममेव नाऽऽप्नोद्योऽयं मध्यमः प्राणस्तानि ज्ञातुं दध्रिरे। अयं वै नः श्रेष्ठो यः सञ्चराँ श्चासञ्चराँ श्च न व्यथतेऽथो न रिष्यति हन्तास्यैव सर्वे रूपमसामेति। त एतस्यैव सर्वे रूपमभवँ स्तस्मादेत एतेनाऽऽख्यायन्ते प्राणा इति तेन ह वाव तत्कुलमाचक्षते यस्मिन् कुले भवति य एवं वेद य उ हैवंविदा स्पर्धतेऽनुशुष्यत्यनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥ २१ ॥

अथ उपासनोक्त्यनन्तरं यतो जिज्ञासायाः सत्त्वमत एषां वागादीनां मध्ये कस्य कर्म व्रतत्वेन धारयितव्यमिति मीमांसा पूजितो विचारः प्रवर्तते। तत्राऽऽख्यायिकां प्रणयति—प्रजापतिरिति। प्रजापतिर्ह किल कर्माणि वागादिकरणानि स्वकर्मार्थत्वात्ससृजे। तानि पुनः सृष्टान्यन्योन्येन इतरेतरमस्पर्धन्त। स्पर्धाप्रकारमाह—वदिष्यामीति। वदिष्याम्येव स्वव्यापारात् वदनादनुपरतैवाहं स्यामिति वाग्व्रतं दध्रे धृतवती। द्रक्ष्याम्यहमिति चक्षुर्व्रतं दध्रे। श्रोष्याम्यह-

मिति श्रोत्रं व्रतं दध्रे । एवं वागादिवत् अन्यादि कर्माणि घ्राणादीनि करणानि यथाकर्म यद्यस्य कर्म तत्तत्स्वीयव्यापारमनुसृत्य व्रतं दध्रिरे । ततो मृत्युर्मारकः श्रमः श्रमरूपी भूत्वा तान्येवं व्रतं धारयमाणानि वागादीन्युपयेमे संजग्राह स्वकर्मभ्यः प्रच्यावितवान् । कथमित्यपेक्षायामाह–तानीति । तानि करणानि स्वव्यापारे प्रवृत्तानि मृत्युराप्नोत् श्रमरूपेणाऽऽत्मानं दर्शितवान् । आप्त्वा प्राप्य तानि मृत्युरवारुन्ध अवरोधं स्वकर्मभ्यः प्रच्यावनं कृतवान् । अत्र कार्यगतश्रमलिङ्गकं प्रमाणमाह–तस्मादिति । यस्मात्प्रजापतेर्वागादीनि श्रमविद्धानि तस्मादेवाद्यत्वेऽपि तदीयप्रजानां वाक्स्वकर्मणि वदने प्रवृत्ता श्राम्यत्येव श्रमरूपिणा मृत्युना ग्रस्ता स्वकर्मणः प्रच्यवते । तथा श्राम्यति चक्षुः, श्राम्यति श्रोत्रम् । अथ वागादिषु भग्नव्रतेषु सत्सु योऽयं मध्यमः प्राण इममेव मुख्यं प्राणं श्रमरूपी मृत्युर्नाप्नोत् प्राप्तवान् अद्यतनप्रजागतप्राणे श्रमादर्शनात् । ततः किमित्यपेक्षायामाख्यायिकामेव अनुसृत्याऽऽह–तानीति । तानि वागादीनि तं प्राणं ज्ञातुं दध्रिरे धृतवन्ति मनः । कथम् ? अयं वै प्राणो नोऽस्माकं मध्ये श्रेष्ठो यस्माद्यः सञ्चरंश्च असञ्चरंश्च न व्यथते अथो अपि न रिष्यति न विनश्यति । अस्य श्रेष्ठत्वे फलितमाह–हन्तेति । हन्तेदानीं सर्वे वयमस्यैव प्राणस्य रूपं स्वरूपमसाम प्रतिपद्येमहीति । एवं निश्चित्य ते सर्वे वागादय एतस्यैव प्राणस्य रूपमभवत् प्राणरूपमेवात्मत्वेन प्रतिपन्नाः सन्तः प्राणव्रतमेव दध्रिरे, अस्मद्व्रतानि न मृत्योर्वारणाय पर्याप्तानीत्यभिप्रायेण । एवं करणानां प्राणरूपत्वमुक्त्वा तन्नामत्वमाह–तस्मादिति । यस्मात्प्रकाशात्मकानि करणानि चलनव्यापारपूर्वकाण्येव स्वव्यापारेषु लक्ष्यन्ते चलनात्मकश्च प्राणस्तस्मादेते वागादय एतेन प्राणाभिधानेन आख्यायन्ते वागादयोऽपि प्राणा इत्युच्यन्ते । सम्प्रति विद्याफलमाह–तेनेति । य एवं सर्वकरणानां प्राणात्मतां तच्छब्दाभिधेयतां च वेद स विद्वान् यस्मिन्कुले जातो भवति तत्कुलं तेन ह वाव तेनैव विदुषा तन्नाम्ना चाऽऽचक्षते लौकिका अमुष्येदं कुलमिति कथयन्ति । किञ्च यः कश्चिद् हैवंविदा प्राणात्मदर्शिना सह स्पर्धते प्रतिपक्षी सन् सोऽस्मिन्नेव शरीरेऽनुशुष्य दीर्घकालं शोषं प्राप्यैव ह किलान्ततोऽन्ते म्रियते न सहसाऽनुपद्रुतः । एवमुक्तं प्राणदर्शनमुपसंहरति–इतीति । इत्येवं प्रदर्शितमध्यात्ममित्यर्थः ॥ २१ ॥

अथाधिदैवतम् । ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमाः । एवमन्या देवता यथादैवतँ्

स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायुः सैषाऽनस्तमिता देवता यद्वायुः ॥२२॥

अथानन्तरमधिदैवतं देवताविषयं दर्शनमुच्यते । कस्य देवविशेषस्य व्रतधारणं इति निर्णेतुं पूर्ववद्व्रतमीमांसा प्रारभ्यते । ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमाः । एवमन्या देवता विद्युदादिरूपाः । यथादैवतमिति । अध्यात्मवद् व्याख्येयम् । अत्रापि प्राणव्रतमेवाभग्नमित्याह—स इति । स दृष्टान्तो यथैषां प्राणानामाध्यात्मिकानां वागादीनां मध्ये मध्यमः प्राणो मृत्युनाऽनभिभूततया स्वेनैव प्राणव्रतेन अभग्नव्रत एवमेतासामग्न्यादीनां देवतानां मध्ये वायुरपि मृत्युनाऽनभिभूतः सन् स्वेनैव वायुव्रतेन अभग्नव्रतः । एतदेव प्रकटयति—म्लोचन्तीति । हि यस्मादाध्यात्मिकवागादिवदन्या अग्न्यादिदेवता म्लोचन्ति अस्तं यन्ति स्वकर्मभ्य उपरमन्ते न वायुरस्तं याति यथा मध्यमः प्राणः । तस्माद्यद्वायुर्योऽयं वायुः सैषा देवता अनस्तमिता अविनाशिव्रतेत्यर्थः ॥ २२ ॥

उक्तार्थदार्ढ्याय मन्त्रमाह—

अथैष श्लोको भवति यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति । प्राणाद्वा एष उदेति प्राणेऽस्तमेति । तं देवाश्चक्रिरे धर्मँ स एवाद्य स उ श्व इति । यद्वा एतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति । तस्मादेकमेव व्रतं चरेत् प्राण्याच्चैवापान्याच्च । नेन्मा पाप्मा मृत्युराप्नुवदिति । यद्यु चरेत्समापिपयिषेत् तेनो एतस्यै देवतायै सायुज्यँ सलोकतां जयति ॥ २३ ॥

अथाप्येतस्यैवार्थस्य प्रकाशक एष श्लोको मन्त्रो भवति । यतो यस्माद्वायोः प्राणाच्च क्रमेणाधिदैवतं सूर्योऽध्यात्मं च चक्षुः प्रातःकाले पुरुषप्रबोधकाले च यथाक्रमम् उदेत्युद्गच्छति यत्र वायौ प्राणे चापर सन्ध्यासमये पुरुषस्य स्वापसमये च यथाक्रमं सूर्यश्चक्षुश्चास्तं गच्छतीति मन्त्रप्रथमार्धस्य यच्छब्दार्थं ब्राह्मणभाग आह—प्राणादिति । प्राणादधिदैवाध्यात्मरूपादेष सूर्योऽधिदैवतमध्यात्मं च चक्षुरुदेति

प्राणोऽस्तमेति । देवा वागादयोऽग्न्यादयश्च तं धर्मं वायुव्रतं प्राणव्रतं चावश्यानुष्ठेयमिति चक्रिरे धृतवन्तः। स एव प्राणवायुव्रतलक्षणो धर्म एव अद्येदानीमनुवर्तते। स उ स एव धर्मः श्वोऽपि भविष्यत्यपि कालेऽनुवर्तिष्यते देवैरिति । मन्त्रोत्तरार्धं संक्षेपतो ब्राह्मणश्रुति र्व्याकरोति—यद्वा इति । अमुर्हि अमुष्मिन्मीमांसावच्छिन्ने भूतकाल एते वागादयोऽग्न्यादयश्च यद्वै यदेव वायुव्रतं प्राणव्रतं चाध्रियन्त तदेवाद्यापि कुर्वन्त्यनुवर्तन्ते अनुवर्तिष्यन्ते च । प्रकरणार्थमुपसंहरति—तस्मादिति। यस्माद्वागादयोऽग्न्यादयो वा परिस्पन्दविरहिणः सन्तः स्थातुमशक्ताः प्राणव्रतमेवैकं दध्रिरे तस्मादुपासकोऽप्येकमेव व्रतं चरेत् । किं तदित्यत आह—प्राण्यादिति। प्राण्यात्प्राणनव्यापारं कुर्यात अपान्यादपानव्यापारं कुर्यादितीतरेन्द्रियव्यापारं हित्वा। एतत्प्राणव्रताकरणे बाधकमाह—नेदिति । नेन्मा मां पाप्मा मृत्युः श्रमरूप्याप्नुवत् प्राप्नुयाद् ग्रसेत्। नेदिति परिभये। यद्यहमस्माद व्रतात्प्रच्युतः स्यां ग्रस्त एवाहं मृत्युनेत्येवं त्रस्तो धारयेत् प्राणव्रतमित्यभिप्रायः। इदं च प्राणव्रतं सर्वेन्द्रियव्यापारोपरमरूपं संन्यासलक्षणमामरणमनुवर्तयेदित्याह—यदिति । यद्य चरेद्यदि कदाचित्प्रारभेत प्राणव्रतं तर्हि समापिपयिषेत् समापयितुमिच्छेत् । सर्वभूतेषु वागादयोऽग्न्यादयश्च मदात्मका एवाहं च सूत्ररूपप्राणात्मा सर्वपरिस्पन्दकृदित्येवमुपासकस्य फलमाह—तेनेति। तेन उ प्राणव्रतधारणेनैतस्यै देवताया एतस्या एव सूत्ररूपप्राणदेवतायाः सायुज्यं सयुग्भावमेकात्मत्वं सलोकतामेकस्थानत्वं वा विद्यामान्द्यापेक्षया जयति प्राप्नोतीत्यर्थः ॥ २३ ॥

इति प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

तदेवं 'योऽन्यां देवतामुपास्ते' इत्यत्र सूत्रिताया अविद्यायाः साध्यसाधनलक्षणो व्याकृताव्याकृतरूपो विस्तर इयता ग्रन्थेन निरूपितः। तस्यैवेदानीं नामरूपकर्मात्मनोपसंहारं प्रतिपत्तिसौकर्यहेतुभूतं ब्रह्मविद्याधिकारहेतुभूतवैराग्यप्रयोजनकं वक्तुमुपसंहारब्राह्मणं प्रवर्तते—

त्रयं वा इदं नाम रूपं कर्म तेषां नाम्नां वागित्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्ति । एतदेषाँ साम्नैतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति ॥ १ ॥

इदं यथोक्तव्याकृताव्याकृतात्मकं जगत्त्रयं वै त्र्यात्मकमेव। किं तत्त्रयमित्यत आह—नाम रूपं कर्मेति । कथमेतदवधार्यत इत्यत आह—तेषामिति । तेषां नामरूपकर्मणां मध्य एषां नाम्नां नामविशे-

षाणां देवदत्तो यज्ञदत्त इत्येवमादीनां वाकशब्दसामान्यमित्येतदुक्थमुपादानकारणम् । अत्र हेतुमाह—अत इति । हि यस्मादतोऽस्माद्वाक्शब्दाभिधेयशब्दसामान्यमात्रात् सर्वाणि नामानि देवदत्त इत्येवमादीनि उत्तिष्ठन्त्युत्पद्यन्ते । कथमित्यत आह–एतदिति । एतद्वागभिधानं शब्दरूपमेषां नामविशेषणां समत्वात्साम सामान्यं तत्र च विशेषाणां कल्पितत्वस्य प्रसिद्धत्वात् । समत्वं साधयति—एतदिति । एतद्वाग्रूपं शब्दसामान्यं सर्वैः स्वविशेषभूतैर्नामभिः सममविशेषेणानुस्यूतमिति हि प्रसिद्धम्, सामान्याननुविद्धस्य विशेषस्याभावात् । किञ्चैषां नामविशेषाणामेतत्पूर्वोक्तं शब्दसामान्यं ब्रह्माऽऽत्मा अतः शब्दमात्रात्तद्विशेषाणां न पृथगात्मलाभः । तदेव साधयति–एतद्धीति । हि यस्मादेतद्वाग्रूपं शब्दसामान्यं सर्वाणि नामानि विशेषनामानि स्वरूपप्रदानेन बिभर्ति धारयति तस्माच्छब्दसामान्यरूपवाक्कार्यत्वात् तद्विशेषत्वात्तत्र कल्पितत्वादात्मत्वाच्च नामविशेषाणां वाङ्मात्रता सिद्धेत्यर्थः ॥ १ ॥

अथ रूपाणां चक्षुरित्येतदेषामुक्थम् । अतो हि सर्वाणि रूपाण्युत्तिष्ठन्ति । एतदेषाँ सामैतद्धि सर्वैं रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति ॥ २ ॥

अथ नामव्याख्यानानन्तरं रूपाणां सितादिरूपविशेषाणां चक्षुश्चक्षुर्विषयरूपसामान्यं शेषलक्षणमित्येनदेषां रूपविशेषाणाम् । उक्थमित्यादि पूर्ववत् ॥ २ ॥

अथ कर्मणामात्मेत्येतदेषामुक्थम् । अतो हि सर्वाणि कर्माण्युत्तिष्ठन्ति । एतदेषाँ सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति । तदेतत्त्रयँ सदेकमयमात्माऽऽत्मो एकः सन्नेतत्त्रयम् । तदेतदमृतँ सत्येन च्छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ॥ ३ ॥

अथ कर्मणां सर्वकर्मविशेषाणां मननदर्शनचलनात्मकानामात्मा-

आत्मशब्दवाच्यशरीरनिर्वर्त्यकर्मसामान्यमित्येतदेषाम् । उक्थमित्यादि पूर्ववत् । एवं नामरूपकर्मात्मना संक्षिप्तस्यापि जगतः संक्षेपान्तरमाह–वदिति । तदेतद्यथोक्तं नामरूपकर्माख्यं त्रयं परस्परं संहतं सत् त्रिदण्डविष्टम्भवदेकम् । केनाऽऽत्मनेत्यत आह–अयमिति । अयं प्रत्यक्ष आत्मा कार्यकरणात्मसङ्घातः पिण्डः । एवं नामादित्रयस्य देहमात्रत्वे कथं व्यवहारासाङ्कर्यमित्यत आह–आत्मेति । आत्मा पिण्ड एकः सन्नप्येतन्नामादित्रयं च भवति नामादिभिन्नस्य देहस्यागृह्य· माणत्वात् । एकस्मिन्नपि सङ्घाते कार्यकरणरूपेणावान्तरविभागमाह–तदेतदिति । तदेतदमृतं सत्येन च्छन्नमित्यस्यार्थं स्वयमेवाऽऽह–प्राण इति । प्राणो वै लिङ्गात्मा करणात्मकोऽन्तरुपष्टम्भकश्चैतन्योपाधित्वेन व्यवस्थितोऽमृतममृतभूतः स्थूलदेहे नश्यत्यप्यामोक्षमविनाशित्वात् । नामरूपे पञ्चीकृतभूतात्मके कार्यभूते शरीरस्थे सत्यं सत्यशब्दवाच्ये सच्च त्यच्च सत्यमिति व्युत्पत्तेः । ताभ्यामुक्तनामरूपाभ्यां विराडात्मक· स्थूलशरीरात्मकाभ्यामयमुक्तार्थः प्राणो लिङ्गात्मा सूत्राख्यश्छन्नो-ऽप्रकाशीकृतोऽतः प्रत्यगात्मतत्त्वं तु ततोऽपि सुतरां दुर्विज्ञेयमिति तद्वि-ज्ञानाय महान् यत्नः कार्यो मोक्षहेतुत्वात् । अतो देहत्रयाभिमानी दोषदृष्ट्या ततो विरक्तो विद्याधिकारीत्युपसंहारश्रुतेर्भावः ॥ ३ ॥

इति प्रथमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

॥ इति बृहदारण्यकब्राह्मणे तृतीयोऽध्यायः ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपाद-शिष्यनित्यानन्दाश्रमविरचितायां बृहदारण्यकव्याख्यायां मिताक्षराख्यायां प्रथमोऽध्यायः ॥ १ ॥

## ॥ अथ द्वितीयोऽध्यायः ॥

ॐ दृप्तबालाकिर्हानूचानो गार्ग्य आस । स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति । स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥ १ ॥

एवं सूत्रात्मनोपासनात् देहत्रयात्मकाखिलजगतो विरक्तं प्रति 'आत्मेत्येवोपासीते'त्यादिना सूत्रितायाः सफलात्मविद्याया विषयीभूता-त्मतत्त्वयाथात्म्यनिरूपणाय उत्तराध्यायः प्रवर्तते । तत्र पूर्वाध्यायान्तोक्त· सूत्रात्मानमेव आदित्यचन्द्रादिष्वात्मत्वेनोपास्य तद्रूपतामापन्नो गार्ग्यः सिद्धान्तविवक्षितात्मयाथात्म्यनिरूपणाय पूर्वपक्षवाद्युपस्थाप्यते । मुख्य-

ब्रह्मात्मदर्शी त्वजातशत्रुः सिद्धान्तं वदिष्यञ्श्रोता श्रुत्या अजातशत्रुः ब्राह्मणरूपय उपस्थाप्यते सुखबोधायार्थम् । दृप्तो गर्वितोऽसम्पूर्णब्रह्मवित्त्वात् बलाकाया अपत्यं बालाकिर्ह कल अनूचानोऽनुवचनसमर्थो गर्ग-गोत्रापत्यं गार्ग्यो ब्राह्मण आस बभूव । स पुनः कस्मिंश्चित्समयेऽजातशत्रनामानं ब्रह्मवित्त्वान्न जातः शत्रुरस्येति योगात् काश्यं काशिराजमभिगम्य हे राजंस्ते तुभ्यं मुख्यं ब्रह्म ब्रवाणि कथयामीत्युवाच उक्तवान् । स श्रद्धादिसम्पन्नोऽजातशत्रुरेतस्यां ब्रह्म ब्रवाणीत्यस्यां वाचि वचनमात्रे सहस्रं गवां दद्म इति तं ब्राह्मणं प्रत्युवाच । ननु साक्षाद् ब्रह्मकथनमेव सहस्रदाने निमित्तं कस्मान्नेष्यत इत्याशङ्कायां श्रुती राज्ञोऽभिप्रायमाह--जनक इति । जनको दित्सुर्जनकः शुश्रुषुरिति वै जानन्तो ब्रह्म शुश्रूषवो विवक्षवः प्रतिजिघृक्षवश्च जना ब्राह्मणा धावन्त्यभिगच्छन्ति, अतोऽसावपि तथैव मामपि सम्भावयन्नागत इति ब्रह्मकथनं विनैव तद्वचनमात्रेणैव सहस्रं ददामीति राज्ञोऽभिप्राय इत्यर्थः ॥ १ ॥

एवमभिमुखीभूतं शुश्रूषुं राजानं प्रति—

स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति । स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ॥ २ ॥

स गार्ग्यो ह किलोवाच । य एवासावादित्ये चक्षुषि चैकोऽभिमानी पुरुषश्चक्षुरादिद्वारा हृदि प्रविष्टोऽहं कर्ता भोक्ता चेत्यवस्थित एतमेव पुरुषमस्मिन्सङ्घातेऽहं ब्रह्मोपासे निरन्तरं पश्यामि अतस्तमेव पुरुषं ब्रह्म ब्रवीमि त्वमप्युपास्स्वेत्युक्ते सोऽजातशत्रुर्ह किल मा मेति हस्तेन वारयन्नुवाच । हे गार्ग्य एतस्मिन्विज्ञेये ब्रह्मणि मा मा संवदिष्ठा मा संवादं कार्षिरहमिदं जानामि । मा मेति द्विरभ्यासस्तु गार्ग्यमतिनिषेधार्थः । ननु जानीषे त्वं ब्रह्ममात्रं न तु तद्विशेषणोपासनफलानीत्याशङ्कमानं गार्ग्यमुपलक्ष्य मैवं शङ्किष्ठा यस्मादिदं सर्वमहमपि जानामीत्याह—अतिष्ठा इति । अतीत्य सर्वाणि भूतानि तिष्ठतीत्यतिष्ठाः सर्वेषां भूतानां मूर्धा शिरः पूज्यो राजा च राजते दीप्यत इति व्युत्पत्तेः । इति वै एवं विशेषणविशिष्टमेतद्ब्रह्माहं कार्यकरणसङ्घाते कर्तृभोक्तृ च पुरुषरूपमुपासेऽनवरतं पश्यामि । य एवमुक्तगुणत्रयविशिष्टमेतमुपास्ते सोऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा च भवतीति यथागुणोपासनमेव हि फलम् ॥ २ ॥

एवं संवादेनाऽऽदित्ये ब्रह्मण्यजातशत्रुणा प्रत्याख्यातेऽनन्तरं चन्द्रमसि गार्ग्यः प्रतिपन्नवानित्याह—

स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः। बृहन्पाण्डरवासाः सोमो राजेति वा अहमेतमुपास इति। स य एतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥ ३ ॥

स होवाच गार्ग्यो य एवासौ चन्द्रे मनसि चैक इत्यादि पूर्ववत्। बृहन्महान् पाण्डरं शुक्लं वासो यस्यासौ पाण्डरवासाश्चन्द्राभिमानिनः प्राणस्य अब्वासत्वात्। सोमो राजा चन्द्रसोमवल्ल्यात्मकः। अस्योपासकस्य प्रकृत्यात्मके च यज्ञेऽहरहर्ह किल सोमः सुतः कृतकण्डनो भवति। विकृत्यात्मके च यज्ञे प्रसुतः प्रकृष्टं सुतरां कण्डितो भवति। उभयविधयज्ञानुष्ठानसामर्थ्यं भवतीत्यर्थः ॥ ३ ॥

स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः। तेजस्वीति वा अहमेतमुपास इति। स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ॥ ४ ॥

तथा विद्युति त्वचि हृदि चैका देवता। गुणफले सुबोधे ॥ ४ ॥

स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः। पूर्णमप्रवर्तीति वा अहमेतमुपास इति। स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ॥ ५ ॥

तथाऽऽकाशे हृदयाकाशे हृदये चैका। पूर्णत्वगुणफलं पूर्यते प्रजया पशुभिः अप्रवर्ति न प्रवर्तयति स्वयं वा न प्रवर्तत इत्यप्रवर्ति। एतद्गुणफलं नास्यास्माल्लोकात् प्रजा उद्वर्तते विच्छिद्यते ॥ ५ ॥

स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति। होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः। इन्द्रो वैकुण्ठोऽपराजितासेनेति वा अहमेतमुपास इति। स य एतमेवमुपास्ते

जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥

तथा वायौ प्राणे हृदि चैका। तस्या विशेषणम् इन्द्रः परमेश्वरः। वैकुण्ठोऽप्रसह्यः। न परैर्जिता सेना तद्रूपः। क्रमेणैतद्गुणत्रयफलमाह—स य इति। जयनशीलो जिष्णुः। न परैर्जितः स्वभावो यस्येत्यपराजिष्णुः। अन्यतो मातृसपत्नीतो मात्रन्तराद्वा जाता अन्यतस्त्याः, ताञ्जेतुं शीलमस्येत्यन्यतस्त्यजायी ॥ ६ ॥

स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः। विषासहिरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति ॥ ७ ॥

अग्नौ वाचि हृदि चैका। तस्या विशेषणं विषासहिः सहत इति सासहिः विशेषेण प्रक्षिप्तं सर्वं भस्मीकरणेन सह इति विषासहिरग्निः। फलोक्तौ विषासहिः परेषां मर्षयिता ॥ ७ ॥

स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातत्रुर्मा मैतस्मिन्संवदिष्ठाः। प्रतिरूप इति वा अहमेतमुपास इति। स य एतमेवमुपास्ते प्रतिरूपँ् हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥ ८ ॥

अप्सु रेतसि हृदि चैका। तस्या विशेषणं प्रतिरूपोऽनुरूपः श्रुत्याद्यनुकूलः। फलं प्रतिरूपं श्रुत्यादिशासनानुरूपमेव एनमुपगच्छति नाप्रतिरूपं न विपरीतम्। अथो अप्यस्मादुपासकात्प्रतिरूपः श्रुत्याद्यनुकूल एव पुत्रो जायते न विपरीत इत्यर्थः ॥ ८ ॥

स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः। रोचिष्णुरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः संनिगच्छति सर्वाँ्स्तानतिरोचते ॥ ९ ॥

आदर्शे प्रसादस्वभावे तादृशे खड्गादौ च हार्दे चैका। तस्या

विशेषणं रोचिष्णुर्दीप्तिस्वभावः ॥ ६ ॥

स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः । असुरिति वा अहमेमुतपास इति । स य एतमेवमुपास्ते सर्वं ँ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालात्प्राणो जहाति ॥ १० ॥

यन्तं गच्छन्तं पश्चात्पृष्ठतः शब्दोऽनूदेत्युत्पद्यते । यश्चाध्यात्मं जीवनहेतुः प्राणस्तमेकीकृत्योपासे । तस्य विशेषणमसुर्जीवनहेतुः फलं सर्वं सपूर्णं यावत्कर्मोपात्तमायुरस्मिँल्लोक एति गच्छति कर्मपरिच्छिन्नकालात्पूर्वमेनं रोगादिना पीडयमानमपि प्राणो न जहाति न त्यजति ॥ १० ॥

स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः । द्वितीयोऽनपग इति वा अहमेतमुपास इति । स य एतमेवमुपास्ते द्वितीयवान्ह भवति नास्माद्गणश्छिद्यते ॥ ११ ॥

दिक्षु कर्णयोर्हृदि चैका देवताऽश्विनौ । तस्या विशेषणं द्वितीयो द्वितीयवत्त्वमनपगतत्वमन्योन्यमवियुक्तता च । दिशामश्विनोश्चैवंधर्मित्वात् । तादृशमेव फलं द्वितीयवान् साधुभृत्यादिमान् । अस्मादुपासकाद्गणः समूहश्च न विच्छिद्यते ॥ ११ ॥

स होवाच गार्ग्यो य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः । मृत्युरिति वा अहमेतमुपास इति । स य एतमेवमुपास्ते सर्वं ँ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ॥ १२ ॥

छायायां बाह्ये तमस्यध्यात्मं चाऽऽवरणात्मकेऽज्ञाने हृदि चैका । तस्या विशेषणं मृत्युः । फलं च शब्दब्रह्मोपासकस्येव । एतावांस्तु विशेषो यन्मृत्योरागमनात् प्राग् रोगादिपीडाया अप्यभावः ॥ १२ ॥

व्यस्तानि ब्रह्माण्युपदिश्य समस्तमुपदिशति—

स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास

इति। स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः। आत्मन्वीति वा अहमेतमुपास इति। स य एतमेवमुपास्त आत्मन्वीह भवति। आत्मन्विनीहास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥ १३ ॥

आत्मनि प्रजापतौ बुद्धौ च हृदि चैका। तस्या विशेषणमात्मन्वी। वश्य आत्मा विद्यते यस्यासावात्मन्वी स्वतन्त्रः। फलमात्मन्वित्यादि। एवमजातशत्रुणा स्वयंपरिज्ञातत्वेनैव क्रमेण प्रत्याख्यातेषु ब्रह्मसु स गार्ग्यो ह किल अप्रतिभासमानोत्तरस्तूष्णीमवाक्शिरा आस ॥ १३ ॥

तमेवंभूतमालक्ष्य—

स होवाचाजातशत्रुरेतावन्नू३ इति एतावद्धीति। नैतावता विदितं भवतीति। स होवाच गार्ग्य उप त्वा यानीति ॥ १४ ॥

सोऽजातशत्रुर्होवाच। किमेतावदेव ब्रह्म निर्ज्ञातम् आहोस्विदधिकमप्यस्तीति विचारार्था प्लुतिः। गार्ग्य आह—एतावद्धीति। एतावदेव नातः परं विदितमस्ति। अजातशत्रुराह—नेति। नैतावता मुख्यं ब्रह्म त्वया विदितं भवतीति वदता राज्ञाऽधिकमपि ज्ञातव्यमस्तीत्युक्तं भवति। तच्चानुपसन्नाय न वक्तव्यमित्याचारविधिज्ञः स गार्ग्यः स्वयमेव ह किल उवाच यथाऽन्यः शिष्यो गुरुमुपेयात्तथाऽहं त्वा त्वामुपयानि उपेयामित्यर्थः ॥ १४ ॥

एवमुक्ते—

स होवाचाजातशत्रुः प्रतिलोमं चैतद्यद्ब्राह्मणः क्षत्रियमुपेयात् ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति। तं पाणावादायोत्तस्थौ। तौ ह पुरुषँ सुप्तमाजग्मतुः। तमेतैर्नामभिरामन्त्रयाञ्चक्रे बृहन्पाण्डरवासः सोम राजन्निति स नोत्तस्थौ। तं पाणिनाऽऽपेषं बोधयाञ्चकार स होत्तस्थौ ॥ १५ ॥

सोऽजातशत्रुर्होवाच प्रतिलोमं विपरीतं चैतद्यद्ब्राह्मण उत्तमवर्ण आचार्यत्वेऽधिकृतः सन् क्षत्रियमनाचार्यस्वभावमुपेयात् उपगच्छेच्छिष्य वृत्त्या ब्रह्म मे वक्ष्यतीत्येवं तस्माद्धे गार्ग्य त्वमाचार्य एव तिष्ठ अहं तु त्वां यस्मिन्ज्ञाते सर्वविद्भवेत्तद्ब्रह्म विज्ञपयिष्याम्येव विज्ञापनमेव करिष्यामि। एवं प्रतिज्ञातब्रह्मबोधो यथा स्यात्तथोपक्रमत, इत्याह—

तमिवि । तं गार्ग्यं सलज्जं राजा पाणौ हस्त आदाय गृहीत्वा तस्य विश्वासजननाय उत्तस्थावुत्थितवान् । ततस्तौ ह गार्ग्याजातशत्रू कचिद्राजगृहप्रदेशे सुप्तं पुरुषं प्रत्याजग्मतुरागतौ । तं तु सुप्तपुरुषं बृहन्पाण्डरवासः सोम राजन्नित्येतैर्नामभिरामन्त्रयाञ्चक्रे राजा । एवमामन्त्रितोऽपि स सुप्तः पुरुषो नोत्तस्थो नैवोत्थितः । तमप्रतिबुध्यमानं पुरुषं पाणिना हस्तेन आपेषमापिष्याऽऽपिष्य बोधयाञ्चकार बोधितवान् । ततः स पुरुषो ह किलोत्तस्थौ उत्थितवान् । तथा च बृहन्नित्यादिप्राणात्मचन्द्रादिनाम्ना सम्बोधनेन गार्ग्याभिमत प्राणदेवतातिरिक्त एवाऽऽत्माऽस्मिञ्शरीरे कर्ता भोक्ता न प्राण इति निश्चितम् । अन्यथा उच्छ्वासनिश्वासरूपेण व्याप्रियमाणस्य प्राणस्य सम्बोधनाश्रवणमनुत्थानं च न स्यात् । आपेषणेन च सङ्घातो भोक्ता नेति निर्णीतम् । अन्यथा स्पर्शमात्रेणाप्युत्थानं स्यादित्यर्थः ॥ १५ ॥

अस्याऽऽत्मनः स्वाभाविकस्वरूपबोधनेच्छया--

स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः कैष तदाऽभूत् । कुत एतदागादिति तदु ह न मेने गार्ग्यः ॥१६॥

स्वयमेव गार्ग्यं प्रत्युवाच--हे गार्ग्य य एष प्रसिद्धो विज्ञानमयो विज्ञायतेऽनेनेति विज्ञानं बुद्धिस्तन्मयस्तत्प्रायः पुरुषः पुरि देहे शयनात् कल्पितानात्मनः पूरणात्पुरुष एष यत्र यस्मिन्पाणिपेषणप्रतिबोधात् प्राक्काल एतत्स्वपनं यथा भवति तथा सुप्तोऽभूत्तदैष विज्ञानमयः क कस्मिन्स्नाभाव्ये कीदृग्विधे स्वरूपे स्थितोऽभूत् । कुतः कीदृग्विधात् स्वरूपात्प्रच्युतः सन्नेतदागमनं यथा स्यात्तथा आगादागतः पाणिपेषणोत्तरकाल इति । एवं पृष्टो गार्ग्यः किमुक्तवानित्यत आह—तदिति । तदु ह यद्विज्ञानमयस्य स्वापे संवेशनस्थानं यतश्च स्थानाज्जागरिते कार्यकरणसङ्घातचेतयितृत्वेन आगमनं तत्स्थानं स्वरूपभूतं गार्ग्यः किल न मेने नैव ज्ञातवानित्यर्थः ॥ १६ ॥

तदपि जाग्रदादौ कर्तृत्वभोक्तृत्वादिनाऽऽत्मनः स्वाभाविकं किन्तु वागाद्युपाधिसम्बन्धकृतमेव । सुषुप्तौ तद्व्यतिरेकेण कर्तृत्वादेर्व्यतिरेकदर्शनादिति दर्शयितुं प्रथमप्रश्नस्योत्तरं तदनुवादपूर्वकमाहेत्याह—

स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्त-

हृदय आकाशस्तस्मिन् शेते । तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम । तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतँ श्रोत्रं गृहीतं मनः ॥ १७ ॥

स होवाचाजातशत्रुर्यत्र यस्मिन्काले सुप्तो विशेषविज्ञानरहितोऽभूद्य एष विज्ञानमयः पुरुषस्तत्तस्मिन् काल एषां चिदात्मतदाभासप्राणानां वागादीनां विज्ञानं स्वविषयप्रकाशनसामर्थ्यं विज्ञानेन चैतन्याभासलक्षणेन करणेन आदाय गृहीत्वाऽन्तर्हृदये हृदयमध्ये हृदयाकाशे हृदयकोटरे हृदयस्थायां बुद्धौ यो वेदान्तप्रसिद्ध एष विद्वदनुभवसिद्ध आकाशः परमात्मा जीवस्य स्वाभाविकस्वरूपभूतस्तस्मिन् परमात्मनि संसारिस्वभावे लिङ्गोपाधिकृतं विशेषात्मस्वभावमुत्सृज्य शेते वर्तते । तथा च श्रुत्यन्तरम्—'सता सोम्य तदा सम्पन्नो भवति' इति । एतत्कथमवगम्यत इत्यपेक्षायां नामप्रसिद्ध्येत्याह—तानीति । तानि वागादीनि यदा गृह्णात्यादत्ते अथ तदा ह किल पुरुष इति पुरुषस्य स्वपितीत्येतन्नाम यौगिकं भवति स्वमेवाऽऽत्मनमपीति अपिगच्छतीति व्युत्पत्तेः 'स्वमपीतो भवति तस्मादेनँ स्वपितीत्याचक्षते' इति श्रुत्यन्तरे स्वयमेव नामनिर्वचनसामर्थ्यात् । एवं नामप्रसिद्धेरस्य असंसार्यात्मस्वरूपावस्थानेऽवगतेऽप्यत्र का वा युक्तिरित्यत आह—तदिति । तत्तत्र स्वापकाले गृहीत एव प्राणो घ्राणेन्द्रियं वाक्चक्षुः श्रोत्रं मनश्च गृहीतं भवति । तथा चैतत्सम्बन्धाभावात् स्वापे कर्तृत्वाद्यसम्बन्धो जाग्रदादौ चैतत्सम्बन्धात्कर्तृत्वादि । अतस्तदौपाधिकमेवेति निश्चितम् ॥ १७ ॥

ननु स्वप्ने वागादिसम्बन्धाभावेऽपि कर्तृत्वादिसंसारस्य दर्शनाद् व्यतिरेकासिद्धिरित्याशङ्कायां तत्रापि जाग्रद्वासनायाः सत्त्वात्तत्परिकल्पितस्य च स्वप्नप्रपञ्चस्य मिथ्यात्वान्न व्यतिरेकासिद्धिः, अतोऽस्य स्वतः शुद्धत्वमेवेत्यभिप्रेत्याऽऽह—

स यत्रैतत्स्वप्न्यया चरति ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति । स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥ १८ ॥

स प्रकृत आत्मा यत्र यस्मिन्काले दर्शनलक्षणया स्वप्न्यया स्वप्न्यवृत्त्या चरति वर्तते तदा ह प्रसिद्धा अस्याऽऽत्मनस्ते वक्ष्यमाणा लोकाः कर्मफलानि । के त इत्यत आह—उतेति । तत्तत्र स्वप्नकाल उतापि महाराज इव भवति न पुनर्जागरित इव साक्षान्महाराजत्वम् । तथा उत महाब्राह्मण इव उताप्युच्चं देवत्वाद्यवचं तिर्यक्त्वादीत्युच्चावचमिव निगच्छति । तथा चेवशब्दप्रयोगाद्व्यभिचारदर्शनाच्चैते लोका मृषैव नास्या आत्मभूता इति । दृश्यत्वान्नाडीषु दृष्टस्वाप्निकपदार्थानां योग्यदेशकालाद्यभावाच्च ते मिथ्याभूता एव । ननु देहाद्बहिरेव स्वाप्निकपदार्थदर्शनान्न योग्यदेशाद्यसम्भव इत्याशङ्कायां दृष्टान्तपूर्वकमुत्तरमाह—स यथेति । स दृष्टान्तो यथा महाराजः सार्वभौमो देहस्थ एव सन् पर्यङ्के शयान उपसंहृतकरणः स्वप्नान्पश्यन् जानपदाञ्जनपदे देशे सञ्जाताञ्जाग्रद्वासनापरिकल्पितान् राजोपकरणभूतान् भृत्यादीन्गृहीत्वा उपादाय स्वे आत्मीये जनपदे जयादिनोपार्जिते देशे यथाकामं काममनतिक्रम्य यथेच्छं परिवर्तते परिक्रामेत् । जाग्रत्कालवदुपगतप्रकृतिं तदवच्छिन्नांश्च भोगान् भुञ्जानमिव स्वात्मानं पश्यतीति यावत् । एवमेष विज्ञानमय आत्मा । एतदिति क्रियाविशेषणम् । प्राणान्वागादीन् जागरितस्थानेभ्यो गृहीत्वा संहृत्य स्वे शरीरे स्वे देह एव यथाकामं परिवर्तते न बहिरित्यर्थः ॥ १८ ॥

यथाकामं परिवर्तत इत्युक्तत्वात्कामादिसम्बन्धस्यास्य स्वाभाविकत्वादशुद्धत्वमित्याशङ्कायां तत्सम्बन्धस्य सुषुप्तौ व्यतिरेकदर्शनेन अस्वाभाविकत्वाच्छुद्धत्वमेव स्वाभाविकमिति वक्तुमाह—

अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद । हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते । ताभिः प्रत्यवसृप्य पुरीतति शेते । स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीत । एवमेवैष एतच्छेते ॥ १९ ॥

अथ पुनर्जाग्रत्स्वप्नयोर्व्यतिरेकशुद्धिकथनान्तरमवस्थाद्वयद्रष्टा यदा यस्मिन्काले सुषुप्तो विशेषविज्ञानविक्षेपाभावेन सम्प्रसन्नः स्वस्वरूपब्रह्मैकतां गतो भवति तदा सुतरां शुद्धः सलिलमिव त्यक्तान्यसम्बन्धः कदा सुषुप्तो भवति ? यदा यस्मिन्काले न कस्यचन न कञ्चन विषयं वेद जानाति तदा सुषुप्तो भवति । केन क्रमेणेत्यत आह—हिता इति ।

हितफलप्राप्तिनिमित्तत्वाद्धिता इत्येवं नाम्न्यो नाड्यः शिरा देहस्यान्न-परिणामहेतुभूतास्ताश्च द्वाभ्यां सहस्राभ्यामधिका सप्ततिर्द्वासप्ततिः। किम् ? सहस्राणि। ताः पुनर्हृदयात्पुरीततमभिप्रतिष्ठन्ते हृदयं नामो उदरवक्षः-प्रदेशयोर्मध्यस्थितिः पुण्डरीकाकारो मांसपिण्डस्तत्परिवेष्टनं पुरीतदित्युच्यते। इह पुनस्तदुपलक्षितं शरीरं पुरीतदिति कथ्यते। तथा च हृदयात्पुरीततं शरीरमभिप्रतिष्ठन्तेऽभितो निःसरन्ति कृत्स्नं शरीरं व्याप्नुवत्योऽश्वत्थपर्णराजय इव बहिर्मुख्यः प्रवृत्ता इति यावत्। ततः किमित्यत आह—ताभिरिति। ताभिर्नाडीभिः कृत्वा प्रसिद्धाज्जागरणात् जाग्रद्विषयाया बुद्धेः कर्मवशात्प्रत्यवसर्पणमनु विज्ञानमय इन्द्रियाणि प्रत्यवसृप्योपसंहृत्य पुरीतति शरीरे शेते दुःखाननुविद्धसुखस्वाभाव्ये वर्तते। ननु पूर्वं विज्ञानमयो हृदयाकाशे ब्रह्मणि शेते इत्युक्त्वेदानीं पुरीतच्छयनमाचक्षाणस्य कथं न पूर्वापरविरोधः स्यादिति चेत्सत्यम् ; स्वाभाविक एव स्वात्मनि वर्तमानोऽपि कर्मानुगतबुद्ध्यनुवृत्तित्वात् पुरीतति शेत इत्युपचाराद‍ुच्यतेऽतो अनोक्तविरोधः। उक्तं शयनं दृष्टान्त-पूर्वकमाह—स इति। स यथा कुमारो वाऽत्यन्तं बालो महाराजो वा अत्यन्तं वश्यप्रकृतिको महाब्राह्मणो वाऽत्यन्तं परिपक्वविद्याविनयसम्पन्नो यथोक्तकारी अतिघ्नीमतिशयेन दुःखं हन्तीत्यतिघ्न्यानन्दस्य सुखस्यावस्था तां गत्वा प्राप्य शयीत दुःखाननुविद्धसुखस्वाभाव्येऽवतिष्ठेत। एवमेवैष विज्ञानमयः सर्वसंसारधर्मातीत एतच्छयनं यथा स्यात्तथा शेते सुषुप्तौ वर्तत इत्यर्थः ॥ १६ ॥

एवं कैष तदाऽभूदिति पूर्वप्रश्नप्रतिवचनेनास्य स्वतोऽसंसारित्व-कथनद्वारा ब्रह्मत्वमुक्तम्। इदानीं तस्याद्वितीयत्वं प्रकटयितुं कुत एतदागादिति द्वितीयप्रश्नस्य प्रतिवचनं क्वेत्याद्यधिकरणादिभेदभ्रम निवृत्तय आह—

स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति। तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥ २० ॥

स दृष्टान्तो यथोर्णनाभिः ऊर्णनाभिर्लूताख्यः कीटविशेषोऽसहाय एव संस्तन्तुं सृष्ट्वा तेन तन्तुना स्वात्मनोऽप्रविभक्तेन उच्चरेदुद्गच्छेत्। यथा

वा एकरूपादेकस्मादग्नेः सकाशात्क्षुद्रा अल्पा विस्फुलिङ्गा अग्न्यवयवा व्युच्चरन्ति विविधं नानामुखेन उच्चरन्त्युद्गच्छन्ति प्रसर्पन्ति। असहायस्य अविक्रियस्य च कारणत्वे यथेमौ दृष्टान्तौ एवमेव विज्ञानमयस्य प्राक्प्रबोधात्स्वापे स्वरूपभूत आकाश इत्युक्त इत्येतस्मादात्मनः सकाशात् सर्वे प्राणा वागादयः सर्वे लोका भूरादयः सर्वकर्मफलभूताः सर्वे देवाः प्राणलोकाधिष्ठातारोऽग्न्यादयः सर्वाणि भूतानि ब्रह्मादिस्तम्ब-पर्यन्तानि प्राणिजातानि व्युच्चरन्ति जलबुद्बुदादिवत्स्थितिं लयं च यस्मिन्गच्छन्ति तस्याऽऽकाशशब्देनोक्तस्या आत्मनो ब्रह्मण उपनि-षदिति नामो उप समीपं नि नितरां सादयति विज्ञानात्मान-मिति व्युत्पत्तेः। काऽसावुपनिषदित्यत आह—सत्यस्य सत्यमितीति। किं पुनः सत्यं किं वा सत्यस्य सत्यमित्यत आह—प्राणा इति। प्राणा वै सत्यं सच्च त्यच्चेति व्युत्पत्तेः। तेषां प्राणानां मध्य एष उक्त आत्मा सत्यमबाध्यं तत्त्वम् ॥ २० ॥

इति द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

एवं प्राणा वै सत्यमित्यादिब्राह्मणभागेन व्याख्याताया अध्युप-निषदो विशेषतोऽर्थप्रकटनाय ब्राह्मणद्वयं तत्र 'प्राणा वै सत्यमि'त्यन्तेन उक्तप्राणोपनिषद्व्याख्यानाय शिशुब्राह्मणं प्रवर्तते—

योह वै शिशुँ साधानँ सप्रत्याधानँ सस्थूणँ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि। अयं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवाऽऽधानमिदं प्रत्याधानं प्राणः स्थूणाऽन्नं दाम ॥ १ ॥

यो ह वै साधानं सप्रत्याधानं सस्थूणं सदामं च शिशुं वेदोपास्ते स ह किल सप्त चक्षुर्द्वय-नासिकाद्वय-श्रोत्रद्वय-मुखात्मकसप्तच्छिद्रा-यतनानि सप्त संख्याकानीन्द्रियाणि विषयासक्तत्वाद् द्विषतो भ्रातृव्या न् शत्रूनवरुणद्धि जितेन्द्रियो भवति। एवं फलेन प्रलोभितं को वा शिश्वादिपदार्थ इत्युत्पन्नजिज्ञासं प्रति तानाह—अयमिति। अयं वाव अयमेव शिशः शिशुरिव शिशुर्विषयेष्वितरकरणवदनासक्तत्वात्। कोऽसौ योऽयं मध्यमः शरीरमध्यस्थः प्राणो लिङ्गशरीरात्मा बृहन्पाण्डर-वास इत्याद्युक्तः षड्वीशशङ्कूनित्यादिना वक्ष्यमाणस्तस्य शिशोः प्राणस्य वत्सस्थानीयस्य करणात्मन इदं कार्यात्मकं शरीरमेवाऽऽधान-माधीयतेऽस्मिन्नित्याधानमधिष्ठानं तस्य प्राणस्येदं प्रसिद्धं शिरो मस्तकं प्रत्याधानं तत्र हि श्रोत्रादिच्छिद्रेष प्रत्येकमाधीयत इति

व्युत्पत्तेः । प्राणो बलापरपर्यायान्नपानादिजनिता शक्तिः स्थूणाऽवष्टम्भो बलावष्टम्भेनैव प्राणस्यास्मिन् शरीरेऽवस्थानात् । यद्वा-प्राण उच्छ्वासनिश्वासकर्मा वायुः शरीरः स्थूलशरीरपक्षपाती स्थूणा । तस्य शिशोर्भुक्तमन्नमशितं दाम वत्सस्येव बन्धनरज्जुः । तद्ध्यन्नं त्रिधा परिणम्यमानं सूक्ष्ममध्यमरूपेण द्विरूपदामलक्षणमुभयतः पाशभूतं सद्यथाक्रमं लिङ्गपक्षपातिशिश्वाख्यप्राणस्थूलशरीरयोः स्थूलवाय्वाख्यायामन्नपानजशक्त्याख्यायां वा स्थूणायां बन्धनहेतुस्तस्य कर्मक्षयात् क्षयात्प्राणोत्क्रान्तेरित्यर्थः ॥ १ ॥

इदानीं तस्यैव शिशोः प्रत्याधाने शिरस्यारूढस्य चक्षुषि काश्चन उपनिषदः प्रदर्श्यन्ते—

तमेताः सप्ताक्षितय उपतिष्ठन्ते । तद्या इमा अक्षन् लोहिन्यो राजयस्ताभिरेनँ रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनका तयाऽऽदित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया । नास्यान्नं क्षीयते य एवं वेद ॥ २ ॥

तमुक्तार्थकं प्राणमेता वक्ष्यमाणाः सप्तसंख्याका अक्षयहेतुत्वादक्षितय उपतिष्ठन्त उपस्थानं कुर्वन्ति । कास्ता इत्यत आह—तदिति । तत्तत्र या इमाः प्रसिद्धा अक्षन्नक्षणि लोहिन्यो लोहिता राजयो रेखास्ताभी रेखाभिर्द्वारभूताभिरेनं मध्यमं प्राणं रुद्रोऽन्वायत्तोऽनुगत उपतिष्ठत इति यावत् । तथाऽथानन्तरं या अक्षन्नापो धूमादिसंयोगेन अभिव्यज्यमानास्ताभिः पर्जन्यो देवतात्माऽन्वायत्तो या कनीनका चक्षुषि दृक्शक्तिस्तयाऽऽदित्योऽन्वायत्तः । यत्कृष्णं चक्षुषि तेनाग्निरन्वायत्तो यच्छुक्लं चक्षुषि तेनेन्द्रोऽन्वायत्तः अधरयाऽधस्तन्या वर्तन्या पक्ष्मणैनं मध्यमं प्राणं पृथिव्यन्वायत्ता द्यौः स्वर्ग उत्तरया उपरिभागस्थया वर्तन्याऽन्वायत्ता । एवंविधोपास्तिफलमाह—नेति । य एवमुक्तप्रकारेण प्राणान्नभूताः सप्ताक्षितीर्वेद अस्योपासकस्यान्नं न क्षीयत इत्यर्थः ॥ २ ॥

उक्ता रुद्रादिदेवताः प्राणोपासनाद्वागाद्यात्मिका एव संवृत्ता इति वागादय एवात्र रुद्रादिशब्दाभिधेया इत्यभिप्रेत्य उक्तेऽर्थे मन्त्रसम्मतिमाह—

तदेष श्लोको भवति । अर्वाग्बिलश्चमस ऊर्ध्वबुघ्नस्तस्मिन्यशो

निहितं विश्वरूपम्। तस्याऽऽसत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति। अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति प्राणा वै यशो विश्वरूपं प्राणानेतदाह तस्याऽऽसत ऋषयः सप्त तीर इति प्राणा वा ऋषयः प्राणानेतदाह। वागष्टमी ब्रह्मणा संविदानेति वाग्ध्यष्टमी ब्रह्मणा संवित्ते ॥ ३ ॥

तत्रैतस्मिन्नर्थ एष श्लोको मन्त्रो भवति 'अर्वाग्बिल' इत्यादिर्मन्त्रसमाप्तिद्योतकेतिशब्दान्तः। तं मन्त्रं प्रतीकपूर्वकं व्याकरोति—अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति। अस्मिन्मन्त्रभागे तत्प्राणस्य प्रत्याधानत्वेन उक्तमिदं प्रसिद्धं शिर एवार्वाग्बिलोऽर्वाङ्मुख ऊर्ध्वबुध्न ऊर्ध्वासनश्चमसः पात्रमिवोक्तम्। कथं हि यस्मादेष शिरोलक्षणश्चमसोऽर्वाग्बिलः अधःस्थितस्यैव मुखस्य बिलरूपत्वाच्छिरसो बुध्नाकारस्योपरिभागे दृश्यमानत्वाच्च तस्माच्छिर एवोक्तलक्षणश्चमसः। तस्मिन् शिरसि विश्वरूपं नानारूपं यशो निहितं यथा सोमश्चमस इति मन्त्रः। प्राणाः श्रोत्रादयः सप्त पूर्वोक्तास्तेषु प्रसृता वायवश्च। वै प्रसिद्धम्। विश्वरूपं नानार्थावभासित्वान्नानात्मकं शिरसि निहितं यशः शब्दादिप्रकाशकं प्राणात्मकमेव शब्दादिप्रकाशनरूपयशोहेतुत्वात् प्राणानाम्। अतः प्राणानेवैतद्यश इत्याह—तस्येति। तस्य शिरोलक्षणस्य चमसस्य तीरे पार्श्वे सप्त ऋषय आसते वर्तन्त इति मन्त्रः। प्राणाः करणाश्रयाः सप्त वायव एव ऋषयः प्रसिद्धऋषिवदेषां शब्दादिविषयद्रष्टृत्वात्तदाश्रयत्वेन तद्रूपत्वाद्वा ऋषित्वमतः प्राणानेतदाह। ब्रह्मणा वेदराशिना सह संविदाना संसर्गं प्राप्नुवती शब्दानुच्चारयन्ती वागष्टमी अष्टसंख्यापूरणीति मन्त्रोक्तेऽर्थे ब्राह्मणं हेतुमाह—वागिति। हि यस्मादष्टमी वाग्ब्रह्मणा वेदेन संवित्ते संसर्गं प्राप्नोति। शब्दोच्चारणक्रियावत्त्वेनाष्टमत्वं श्रोत्रादिषु सप्तमत्वं तु चर्वणक्रियोपाधिनेत्यर्थः ॥ ३ ॥

के ते प्राणा इत्यपेक्षायामाह—

इमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा

ह्यन्नमद्यतेऽत्तिर्ह वै नामैतद्यदत्रिरिति सर्वस्यात्ता भवति। सर्वमस्यान्नं भवति य एवं वेद ॥ ४ ॥

इमौ प्रसिद्धावेव कर्णौ गोतमभरद्वाजौ। अयमेव दक्षिणः कर्णो गोतमोऽयमेव उत्तरः कर्णो भरद्वाजो विपर्ययेण वा। तथेमावेव चक्षुषी विश्वामित्रजमदग्नी। अयमेव दक्षिणं विश्वामित्रोऽयमेव-उत्तरं जमदग्निः। इमावेव नासापुटे वसिष्ठकश्यपौ। अयमेव दक्षिणपुटो वसिष्ठोऽयमेवोत्तरः कश्यपः। रसाभिव्यक्तिहेतुचर्वणक्रियावती वागेव अत्रिः सप्तमः। हि यस्माद्वाचाऽन्नमद्यते भक्ष्यते तस्माद्वाचोऽत्रिरिति ह वै प्रसिद्धं नामैतदेव यदत्रिरिति श्रुत्या व्यपदिश्यते नाम तत्परोक्षेण 'परोक्षप्रिया इव हि देवा' इति श्रुतेरित्यर्थः। श्रुत्या व्याख्यातमन्त्रोक्तोपासनफलमाह—सर्वस्येति। य एवमुक्तं प्राणयाथात्म्यं वेद स मध्यमप्राणो भूत्वाऽऽधानप्रत्याधानगतः सर्वस्यान्नजातस्य अत्ता भोक्ता भवति सर्वमस्योपासकस्यान्नं भवति नात्रित्यर्थः ॥ ४ ॥

इति द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

अथ कथमेतेषां प्राणानां सत्यत्वं कथं वा ततोऽप्यात्मनः सत्यत्वमिति जिज्ञासायां मूर्तामूर्तब्राह्मणं प्रवर्तते—

द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यं च ॥ १ ॥

यदपोहद्वारेण नेति नेतीत्यादिना निरूपयिषितं ब्रह्म तस्य ब्रह्मणो मायामये द्वे वाव द्वे एव रूपे रूप्यते ज्ञाप्यतेऽरूपं ब्रह्म याभ्यामविद्याध्यारोपिताभ्यां रूपाभ्याम्। के ते इत्यत आह—मूर्तं चामूर्तं चेति। चकारौ अवधारणार्थौ। मूर्तामूर्तयोः प्रत्येकमर्थप्रतिपादकानि विशेषणान्याह—मर्त्यं च मरणधर्मि। अमृतं च तद्विपरीतम्। स्थितं च स्थास्नु परिच्छिन्नमिति यावत्। यच्च एति व्याप्नोतीति यत् स्थितविपरीतम्। सच्च प्रत्यक्षेणोपलभ्यमानासाधारणधर्मवत्। त्यं च तद्विपरीतम् ॥ १ ॥

के ते मूर्तामूर्ते कस्य वा कानि विशेषणानीति विशेषो न ज्ञायत इत्यत आह—

तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्। सतस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति। सतो ह्येष रसः ॥ २ ॥

यद्वायोश्चान्तरिक्षाच्चान्यत्परिशिष्टं पृथिव्यादिभूतत्रयं तदेतन्मूर्तं मूर्छितावयवं घनमत एवैतद्भूतत्रयं मर्त्यमत एवैतत्स्थितमत एवैतत्सत्। विपर्ययेण वा हेतुहेतुमद्भावः। उक्तविशेषणचतुष्टयवद्भूतत्रयस्य सारिष्टं कार्यं विशेषणानुवादपूर्वकमाह—तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत इति। विशेषणविशिष्टस्य पृथिव्यादिभूतत्रयस्यैष एव रसः सारः। कः? य एष मण्डललक्षणस्तपति। तत्र हेतुः, हि यस्मान्मूर्तादिविशेषणचतुष्टयं मण्डलेऽवसीयते तस्मात्सतः सदादिचतुष्टयविशेषणविशिष्टस्य भूतत्रयस्यैष मण्डलभूतो रसः। एतच्च आधिदैविककार्यात्मकस्य ब्रह्मणो रूपम् ॥ २ ॥

अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत् त्यम्। तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन् मण्डले पुरुषस्त्यस्य ह्येष रस इत्यधिदैवतम् ॥ ३ ॥

अथानन्तरं वायुश्चान्तरिक्षं चामूर्तं मूर्तविपरीतं ब्रह्मणो रूपम्। शेषं पूर्ववत्। य एतस्मिन्मण्डले पुरुषः करणात्मको हिरण्यगर्भो विराडात्मा। एतच्च आधिदैविककरणात्मकस्य ब्रह्मणो रूपम्। एवमुक्तमाधिदैविकं विभागमुपसंहरति—इत्यधिदैवतमिति ॥ ३ ॥

अथाध्यात्ममिदमेव मूर्तं यदन्यत्प्राणाच्च यश्चायमन्तरस्मिन्नाकाश एतन्मर्त्यमेतत्स्थितमेतत् सत् तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥४॥

अथानन्तरमध्यात्मविभाग उच्यते। तत्रेदमेव मूर्तम्। किम्? यत्प्राणाच्च शरीरस्थादुच्छ्वासात्मकात् वायोर्यश्चायमन्तरात्मनि शरीर आकाशस्तस्माच्चान्यच्छरीरारम्भकं भूतत्रयम्। शेषं पूर्ववद्वेदनीयम् ॥ ४ ॥

एवमध्यात्मकार्यात्मकस्य ब्रह्मणो रूपं निरूप्य करणात्मकस्य तदाह—

अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यदेतत्त्यम्। तस्यैतस्यामूर्तस्यैतस्यामृतस्य तस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन् पुरुषस्त्यस्य ह्येष रसः ॥ ५ ॥

अथानन्तरं प्राणश्च यश्चायमन्तरात्मन्नाकाशः पूर्वोक्तः। अमूर्तमित्यादि पूर्ववत्। योऽयं दक्षिणेऽक्षन्दक्षिणेऽक्षणि पुरुषो लिङ्गशरीरात्मेत्यर्थः॥५॥

अथास्य करणात्मनो वासनामयं रूपमाह—

तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासो यथा पाण्ड्वा-
विकं यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथा पुण्डरीकं सकृद्विद्युत्तँ
सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेद। अथात आदेशो
नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयँ
सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥ ६ ॥

तस्य आधिदैविकस्य हैतस्य आध्यात्मिकस्य लिङ्गपुरुषस्य मनसो वासनामयमिदं रूपम्। यथा लोके माहारजनं हरिद्रा तया रक्तं माहारजनं वासो वस्त्रम्। एवं स्त्र्यादिविषयसंयोगे सति तादृशं रञ्जनाकारमुत्पद्यते। यथा चाविरिदमाविकमूर्णादि ईषत्पाण्डुरं तथाऽन्यद्वासनारूपं लिङ्गस्य जायते। यथा चेन्द्रगोपः कीटविशेषः कौसुम्भवदत्यन्तं रक्तो भवति एवमेवास्य वासनारूपं भवति। यथा चाग्न्यर्चिर्भास्वरं भवति तथा क्वचित्कस्यचिद्वासनारूपं भवति। यथा च पुण्डरीकं शुक्लं तद्वदपि कस्यचिद्वासनारूपं भवति। यथा च सकृद्विद्युत्तं विद्योतनं सर्वतः प्रकाशकं भवति तथा ज्ञानप्रकाशविवृद्ध्यपेक्षया कस्यचिद्धिरण्यगर्भादेर्वासनारूपमुपजायते सत्त्वादितारतम्यादित्यर्थः। यथोक्तहिरण्यगर्भवासनारूपोपासनफलमाह—सकृदिति। एवं यथोक्तमन्त्यं हिरण्यगर्भीयवासनारूपं यो वेद तस्योपासकस्य सकृद्विद्युत्तेव विद्योतनमिव श्रीः ख्यातिर्भवति ह वै भवत्येवेत्यर्थः। तदेवं सत्यस्येति षष्ठ्यन्तं स्थूलसूक्ष्मप्रपञ्चात्मकं हेयभूतं सत्यशब्दार्थं व्याख्याय उपादेयभूतप्रथमान्तसत्यशब्दार्थव्याख्यानाय उत्तरः सन्दर्भः प्रवर्तते—अथात इति। अथ सत्यस्वरूपनिर्देशानन्तरं यत्सत्यस्य सत्यं तदेवावशिष्यते यस्मादतस्तस्मात्तस्य ब्रह्मणो नेति नेतीत्येतादृश आदेशो निर्देशः। तथा च नेति नेतीति वीप्सया मूर्तामूर्ततद्वासनात्मकाविद्यातत्कार्यसर्वनिषेधावधित्वेन तत्साक्षित्वेन च साक्षाद्ब्रह्म निर्दिष्टं भवति निरवधिकस्य निःसाक्षिकस्य च निषेधस्यासम्भवात्। ननु कस्मादेव ब्रह्म निर्दिश्यत इत्यत आह—न हीति। विषयीकर्तव्या यावन्तः पदार्थास्ते सर्वे नकारद्वयस्य विषयाः सन्तो निर्दिश्यन्त इति कृत्वा नेति नेत्यस्मादन्यत्परं निर्देशनं हि यस्मान्नास्ति तस्मादयमेव निर्देशो ब्रह्मणः। यद्वा हि यस्मा-

देतस्माद्ब्रह्मणो व्यतिरिक्तं नास्ति। अतो नेत्युच्यते न पुनर्ब्रह्मैव नास्तीत्यभिप्रायेण तथोच्यते । कुत एतदवगम्यते ? यतो निषिद्धादपरमार्थभूतादन्यदनिषिद्धं परं परमार्थभूतं ब्रह्मास्तीत्यतोऽवगम्यते । तस्योपनिषदिति प्रतिज्ञातमुपसंहरति–अथेति । यत उक्तप्रकारेण परमार्थसत्यं परं ब्रह्मैव अथातो युक्तमुक्तं ब्रह्मण उपनिषदिति नामधेयं नामैव नामधेयम्। किं तत् ? सत्यस्य सत्यं प्राणा सत्यं तेषामेव सत्यमित्युक्तार्थम् ॥ ६ ॥

इति द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

चतुर्थाध्यायस्य तार्तीयविद्यासूत्रस्य स्फुटव्याख्यानार्थत्वेन 'ब्रह्म ते ब्रवाणी'त्यारभ्य 'नेति नेती'त्यन्तेन व्याख्यातब्रह्मविद्याङ्गतया संन्यासविधानाय मैत्रेयीब्राह्मणमारभ्यते--

मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥ १ ॥

याज्ञवल्क्यो नाम ऋषिर्हि मैत्रेयीति स्वभार्यां सम्बोध्य उवाच। किम् ? अरे मैत्रेयि अस्माद् गार्हस्थ्यात् स्थानादाश्रमादुद्यास्यन्वा ऊर्ध्वं पारिव्रज्याख्यमाश्रमान्तरं यास्यन्नेवाहमस्मि भवाम्यतो हन्त तेऽनुमतिं प्रार्थयामीत्यर्थः। किञ्च ते तवानया द्वितीयया भार्यया कात्यायन्या सह अन्तं विच्छेदं करवाणि द्रव्यविभागेन विभक्तां कृत्वा गमिष्यामीत्यर्थः ॥ १ ॥

सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति। नेति होवाच याज्ञवल्क्यः। यथैवोपकरणवतां जीवितं तथैव ते जीवित स्यादमृतत्वस्य तु नाऽऽशास्ति वित्तेनेति ॥ २ ॥

सैवमुक्ता मैत्रेयी होवाच । भगो भगवन् । नु वितर्के। मे मम यद्यदीयं सर्वा सागरपरिखा पृथिवी वित्तेन धनेन पूर्णा स्यात्तदा कथं किं तेन पृथिवीपूर्णवित्तसाध्येन अग्निहोत्रादिकर्मणा अहममृताऽमरणधर्मिणी मुक्ता स्यां भवेयमिति पृष्टे नेति नैव अमृता स्या इत्युत्तरं ह किल याज्ञवल्क्य उवाच उक्तवान्। किं तर्हि तेन भवेदित्यत आह–यथेति। यथैव लोक उपकरणवतां साधनसंपत्तियुक्तानां जीवितं सुखोपभोगसम्पत्त्या कालक्रमणं तथैव तद्वदेव ते तव जीवितं स्यान्न तु पुनर्वित्तेन वित्तसाध्येन कर्मणाऽमृतत्वस्य मोक्षस्याऽऽशाऽस्ति आशाऽपि न कर्तव्येत्यर्थः ॥ २ ॥

सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहीति ॥ ३ ॥

सैवमुक्ता मैत्रेयी ह प्रत्युवाच । यद्येवं येनाहममृता न स्यां तेन कर्मणाऽहं किं कुर्याम् ? किन्तु यदेवामृतत्वसाधनं भगवान् वेद विजानाति तदेवामृतत्वसाधनं मे मह्यं ब्रूहि उपदिशेत्यर्थः ॥ ३ ॥

स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ४ ॥

स एवमुक्तो याज्ञवल्क्यो बतेत्यनुकम्प्य उवाच । अरे मैत्रेयि नोऽस्माकं त्वं पूर्वमपि प्रिया सतीष्टा भवतीदानीमपि प्रियं मच्चित्तानुकूलमेव भाषसे, अतस्त्वमेहि आस्स्व उपविश यत्तवेष्टममृतत्वसाधनमात्मज्ञानं तद् व्याख्यास्यामि कथयिष्यामि । व्याचक्षाणस्य तु व्याख्यानं कुर्वतो मे मम वाक्यान्यर्थतो निदिध्यासस्व निश्चयेन ध्यातुमिच्छेत्यर्थः ॥ ४ ॥

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवति । आत्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवति । आत्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति । आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति । आत्मनस्तुकामाय वित्तं प्रियं भवति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवति । आत्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवति । आत्मनस्तु कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्ति । आत्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्ति । आत्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्ति । आत्मनस्तु

कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति । आत्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदँ सर्वं विदितम् ॥ ५ ॥

स याज्ञवल्क्योऽमृतत्वसाधनज्ञानाङ्गभूतं सकलसुखसाधनेभ्यो वैराग्यमुत्पादयन्नुवाच । अरे मैत्रेयि वै प्रसिद्धमेतल्लोके यत्पत्युर्भर्तुः कामाय प्रयोजनाय पतिर्भार्यायाः प्रियो न भवति। किं तर्हि ? आत्मनस्तु कामायैव भार्यायाः पतिः प्रियो भवति । तथा न वा अरे जायाया इत्यादि समानं प्रसिद्धार्थकं च । न वा अरे सर्वस्य कामायेति सर्व-ग्रहणमुक्तानुक्तार्थमिति । अयं तु तदेतत्प्रेयः पुत्रादित्यादेर्वृत्तिस्थानीयः । यस्मादेवमात्मसुखसाधनत्वादन्यत्र गौणी प्रीतिरात्मनि तु मुख्या तस्मात् अरे मैत्रेयि परमप्रेमास्पदमात्मा वै आत्मैव द्रष्टव्यः साक्षाद्रूप-दर्शनविषयतामापादयितव्यः । केनोपायेनेत्यत आह—श्रोतव्य इति । श्रोतव्य आचार्यागमतः पश्चात् मन्तव्यस्तर्कतस्ततो निदिध्यासितव्यो निश्चयेन ध्यातव्यः । इत्येतैरुपायैरात्मनि साक्षात्कृते किं स्यादित्यत आह—आत्मन इति । हे मैत्रेयि श्रवणेन कृत्वोत्पन्नेन मत्या मननेन विज्ञानेन च निदिध्यासनेन दृढीकृतेनाऽऽत्मना वै दर्शनेन साक्षात्कार रूपेणेदं सर्वं स्थावरजङ्गमात्माकमनात्मभूतमखिलं विदितमेवेति ॥ ५ ॥

ननु कथमन्यस्मिन् विदितेऽन्यद्विदितं भवेदित्याशङ्कायामात्मव्यति-रेकेण अन्यस्याभावादित्याह—

ब्रह्म तं परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेद । क्षत्रं तं परादाद्यो-ऽन्यत्राऽऽत्मनः क्षत्रं वेद । लोकास्तं परादुर्योऽन्यत्राऽऽत्मनो लोकान्वेद । देवास्तं परादुर्योऽन्यत्राऽऽत्मनो देवान्वेद । भूतानि तं परादुर्योऽन्यत्राऽऽत्मनो भूतानि वेद । सर्वं तं परादाद्यो-ऽन्यत्राऽऽत्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदँ सर्वं यदयमात्मा ॥ ६ ॥

यः कोऽप्यात्मनः सकाशादन्यत्र पार्थक्येन ब्रह्म ब्राह्मणजातिं वेद मन्यते तमयथार्थदर्शिनं ब्रह्म ब्राह्मणजातिः परादात्पराकुर्यात् कैवल्या-सम्बन्धिनं कुर्यादयमनात्मस्वरूपेण मां पश्यतीत्यपराधात्। परमात्मा हि सर्वेषामात्मा । क्षत्रं तं परादादित्यादि पूर्ववत्। उक्तं सर्वमनूद्य तस्य आत्मानतिरिक्तत्वमित्युपसंहरति—इदं ब्रह्मेत्यादिना । यदयं योऽय-मात्मा द्रष्टव्य इति प्रकृतः स एवेदं सर्वमुक्तमनुक्तं च न ततः पृथगस्तीत्यर्थः ॥ ६ ॥

कथमेतदवगन्तुं शक्यत इत्याशङ्कायां स्फुरणात्मस्वरूपव्यतिरेकेन किञ्चिदपि ग्रहीतुं न शक्यत इति तु प्रसिद्धम् । यद्व्यतिरेकेण च यस्याग्रहणं तस्य तदात्मकत्वमेवेति व्याप्तौ दृष्टान्तत्रयमाह—

स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन । दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ७ ॥

स दृष्टान्तो यथा लोके दुन्दुभेर्भेर्यादेर्हन्यमानस्य दण्डादिना ताड्य-मानस्य बाह्यान्बहिर्भूतान् दुन्दुभिशब्दसामान्यान्निष्कृष्टान् दुन्दुभिशब्द-विशेषान् उच्चनीचादीन् ग्रहणाय ग्रहीतुं न शक्नुयान्न समर्थो भवेत्। कथं तर्हि तेषां ग्रहणमित्यत आह—दुन्दुभेरिति । दुन्दुभेस्तु दुन्दुभि-शब्दसामान्यस्य ग्रहणेन तु दुन्दुभ्याघातस्य वा दुन्दुभेर्हननोत्पन्न-वीरादिनवरसाद्यन्यतमरसविशेषितध्वनेर्वा ग्रहणेन तु शब्दो दुन्दुभि-शब्दविशेषो गृहीतः स्यात् । तथा च यथैवं शब्दविशेषाः शब्द-सामान्यान्नातिरिच्यन्ते तथा स्फुरणात्मकब्रह्मसामान्यात् स्फोर्यमाणाः पदार्था नातिरिच्यन्त इत्यर्थः ॥ ७ ॥

स यथा शङ्खस्य ध्मायमानस्य न बाह्यान् शब्दान् शक्नुयाद् ग्रहणाय । शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ८ ॥

स यथा शङ्खस्य ध्मायमानस्य शब्देन आपूर्यमाणस्येत्यादि समानम् ॥ ८ ॥

स यथा वीणायै वाद्यमानायै न बाह्यान् शब्दान् शक्नुयाद् ग्रह-णाय । वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ९ ॥

तथा वीणायै वाद्यमानाया इति चतुर्थ्यौ षष्ठ्यर्थे । समानमन्यत् । अनेकदृष्टान्तोदाहरणं त्वनेकविलक्षणाश्चेतनाचेतनरूपाः सर्वेऽपि पदार्थाः स्थितिकाले प्रज्ञानघनप्रत्यगात्मैकसत्ताका इति द्योतनार्थ-मित्यर्थः ॥ ९ ॥

एवं स्थितिकाले जगतो ब्रह्मैकत्वमवगमय्य उत्पत्तिकालेऽपि तथाऽवगमयितुं कार्याणामुत्पत्तेः प्राक्कारणादभिन्नत्वे दृष्टान्तमाह--

स यथाऽऽर्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्ति ।

एवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्य-

दृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः

पुराणं विद्योपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि

व्याख्यानान्यस्यैवैतानि निःश्वसितानि ॥ १० ॥

स दृष्टान्तो तथा आर्द्रैरेधोभिः काष्ठैरिद्धोऽग्निरार्द्रैधाग्निस्तस्मादभ्याहितादभितः प्रज्वलितात्पृथङ् नानाप्रकारं धूमाः धूमग्रहणं विस्फुलिङ्गादीनामप्युपलक्षणपरम् । धूमविस्फुलिङ्गादयो विनिश्चरन्ति विनिर्गच्छन्ति । तथा ऋग्वेदादिप्रपञ्च उत्पत्तेः प्राक् न ब्रह्मणः पृथगस्तीत्यभिप्रेत्य दार्ष्टान्तिकमाह –एवमिति । यथा दृष्टान्त एवं वै एवमेव अरे मैत्रेय्यस्य प्रकृतस्य परमात्मनो महतोऽनवच्छिन्नस्य भूतस्य परमार्थस्वभावस्य एतद्वक्ष्यमाणं निःश्वसितमिव निःश्वसितमप्रयत्नोत्पादितम् । किमेतदित्यत आह–यदिति । यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इति चतुर्विधमन्त्रजातमुच्यते । अथर्वणाऽङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरसः । इतिहास उर्वशीपुरूरवसोः संवादादिरूपो ब्राह्मणभागो यथा 'उर्वशी हाप्सरा' इत्यादिब्राह्मणमेव । पुराणअसद्वा इदमग्र आसीदित्यादि । विद्या देवजनविद्या । उदकुम्भं निधाय दास्यो मार्जालीयं परिनृत्यन्तीत्यादि ब्राह्मणमेव । उपनिषदः 'प्रियमित्येतदुपासीते' त्याद्याः । श्लोका ब्राह्मणप्रभवा मन्त्रा अर्वाग्बिल इत्याद्याः । सूत्राणि वेदे वस्तुसंग्राहकाणि वाक्यानि 'आत्मेत्येवोपासीते'-त्येवमादीनि । अनुव्याख्यानानि वस्तुसंग्राहकवाक्यानां विवरणवाक्यानि, यथा 'प्राणा वै सत्यमि'त्येवमादीनां शिशुमूर्तामूर्तब्राह्मणे । व्याख्यानानि 'मेधया हि तपसाऽजनयत्पिते'त्येवमादीनि । एतान्युक्तानि ऋग्वेदादीनि मन्त्रब्राह्मणात्मकानि अस्यैवेश्वरस्य निःश्वसितानि । तथा च पुरुषबुद्धिप्रयत्नपूर्वकत्वमन्तरेणैव नियतरचनावतः पूर्वसिद्धस्यैव वेदस्य सुप्तप्रबुद्धवत्सृष्टिसमयेऽभिव्यक्तत्वोक्ते वेदः स्वार्थे निरपेक्ष एव प्रमाणम् । अत एवेदं सर्वं यदयमात्मेति वेदस्य अप्रामाण्यकारणनिरासार्थं वाऽस्याः श्रुतेः प्रवृत्तिरस्त्वित्यर्थः ॥ १० ॥

अथ प्रलयकालेऽप्यस्य प्रपञ्चस्य ब्रह्मात्मकत्वमिति दृष्टान्तपूर्वकमाह—

स यथा सर्वासामपाँ समुद्र एकायनमेवँ सर्वेषाँ स्पर्शानां त्वगेकायनमेवँ सर्वेषाँ रसानां जिह्वैकायनमेवँ सर्वेषाँ गन्धानां नासिके एकायनमेवँ सर्वेषाँ रूपाणां चक्षुरेकायनमेवँ सर्वेषाँ शब्दानाँ श्रोत्रमेकायनमेवँ सर्वेषाँ सङ्कल्पानां मन एकायनमेवँ सर्वासां विद्यानाँ हृदयमेकायनमेवँ सर्वेषां कर्मणाँ हस्तावेकायनमेवँ सर्वेषामानन्दानामुपस्थ एकायनमेवँ सर्वेषां विसर्गाणां पायुरेकायनमेवँ सर्वेषामध्वनां पादावेकायनमेवँ सर्वेषां वेदानां वागेकायनम् ॥ ११ ॥

स दृष्टान्तो यथा येन प्रकारेण सर्वासां नद्यादिगतानामपां समुद्रोऽब्धिरुदकसामान्यम् एकायनमेकाश्रयोऽविभागप्राप्तिर्यथाऽयं दृष्टान्त एवं सर्वेषां स्पर्शानां मृदुकठिनादीनां वायोरात्मभूतानां त्वगेकायनं त्वग्विषयस्पर्शसामान्यमात्रमाश्रयः। तथा रसानामब्विशेषाणां जिह्वा विषयसामान्यम्। गन्धानां पृथिवीविशेषाणां नासिके गन्धसामान्यम्। रूपाणां तेजोविशेषाणां चक्षुर्विषयसामान्यम्। शब्दानामाकाशविशेषाणां श्रोत्रं विषयसामान्यम्। एतान्यपि विषयविशेषसामान्यानि मनोविषयसङ्कल्पेऽन्तर्भवन्ति। तेषां सङ्कल्पपूर्वकत्वात्। सर्वेषां सङ्कल्पविशेषाणां मनोविषयसामान्यं सङ्कल्पमात्रमयनं तस्याध्यवसायपारतन्त्र्यदर्शनाद् बुद्धिविषयविशेषेषु विद्याशब्दवाच्येष्वध्यवसायेष्वन्तर्भावः। तासां सर्वासां विद्यानां हृदयं बुद्धिसामान्यं विज्ञानमात्रमेकायनं तदपि कारणभूते प्रज्ञानघने ब्रह्मणि लीयत इति बोध्यम्। तथा सर्वेषां कर्मणां हस्तावेकायनमित्यादिना कर्मेन्द्रियाणां तद्विषयविशेषाणां च तत्तत्सामान्येषु लयस्तेषां च प्राणे तस्यापि कारणात्मनीत्यभिप्रायतः श्रुत्योच्यत इत्यर्थः॥ ११॥

एवं प्राकृतिकप्रलयदर्शनेन सर्वमूलप्रकृतिभूतमद्वयात्मतत्त्वमवगमितं तस्येदं सर्वं यदयमात्मेति प्रतिज्ञातत्वात्। इदानीं ब्रह्मविषयाविद्याऽनिरासद्वारेण योऽयमात्यन्तिकप्रलयस्तं दृष्टान्तपूर्वकमाह—

स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायेव स्यात्। यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एव। एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति। न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥

स दृष्टान्तो यथा सैन्धवखिल्यः सिन्धुरुदकं तत्र भवः सैन्धवः स चासौ खिल्यश्च सैन्धवखिल्यो लवणशकल उदके प्रास्तः प्रक्षिप्तः सन् खल्यारम्भकत्वेन तदवयवभूतमुदकं विलीयमानमनु पश्चाद्विलीयेतैव उदकभावमापद्यत एव। अस्य विलीनस्य खिल्यस्योद्ग्रहणाय उद्धृत्य पूर्ववद् ग्रहीतुं न ह नैव कश्चित्सुनिपुणोऽपि शक्तः स्यात्। अत्रेवशब्दोऽनर्थकः। कस्मात्? यतो यतो यस्माद्यस्माद्देशात् तदुदकमाददीत गृहीत्वा आस्वादयेत्तत्र तत्र लवणरसमेव तदुदकं न तु खिल्यभावो ग्रहीतुं शक्यते। यथाऽयं दृष्टान्त एवं वै, एवमेवारे मैत्रेयि विलीनखिल्यभावमिदं ब्रह्माऽऽत्मतत्त्वं महदनवच्छिन्नं भूतं कूटस्थमनन्तं न विद्यते अन्तःकारणं पूर्वावधिभूतं यस्य तदनन्तम्। अपारं न विद्यते पार उत्तरावधिभूतं कार्यं यस्य तदपारम्। विज्ञानघन एव विज्ञप्तिर्विज्ञानघनो जात्यन्तराननुविद्धस्वभावः। विज्ञानं चासौ घनश्चेति विज्ञानघनो विशुद्धज्ञप्तिमात्रैकरस एवाऽऽत्मा, एतेभ्यः पूर्वत्राह्मणे षष्ठ्यन्तसत्यशब्दवाच्येभ्यो भूतेभ्यः शरीरकरणविषयाकारपरिणतेभ्यो निमित्तभूतेभ्यो मनुष्योऽहं ब्राह्मणोऽहमित्यादिखिल्यभावेन समुत्थाय सम्यगुत्थाय जलाचन्द्रादिप्रतिबिम्बवत्तानि प्रकटीभूतानि खिल्यभावसम्पादकानि भूतानि विनश्यन्ति सन्त्यनु पश्चादुदकाद्यपगमे चन्द्रादिप्रतिबिम्बादिवत्खिल्यभावो विनश्यति। तथा चाविद्यातत्कार्यरूपखिल्यहेत्वपगमे प्रत्यगात्मा परमात्मैकत्वेन संसारधर्मानागन्धितोऽनन्तोऽपारः प्रज्ञप्तिमात्रस्वरूप एव। अस्यां च कैवल्यावस्थायां विशेषज्ञानं नास्तीत्याह—नेति। अरे मैत्रेय्येवं कार्यकरणसङ्घातेभ्यो विमुक्तस्य ब्रह्मविदः प्रेत्य विमोकानन्तरमथमसौ अमुष्य पुत्रो ममेदं क्षत्रं धनं सुखी दुःखीत्येवमादिलक्षणा विशेषसंज्ञा विशेषज्ञानं नास्तीत्यहं ब्रवीमीत्येवं ह किल परमार्थदर्शनं याज्ञवल्क्यो भार्याया उवाचेत्यर्थः ॥ १२ ॥

सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञाऽस्तीति ।
स होवाच न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय॥१३॥

सैवं प्रबोधिता मैत्रेयी होवाच । अत्रैवैकस्मिन्नेव वस्तुनि ब्रह्मात्मनि पूर्वं विज्ञानघन एवेति प्रतिज्ञाय पुनर्न प्रेत्य संज्ञाऽस्तीति विरुद्धं वदन् भगवान् मा माममूमुहत् मोहितवानित्युक्तः स याज्ञवल्क्यो ह प्रतिवचनमुवाच । अरे मैत्रेय्यहं मोहं मोहनवाक्यं नैव ब्रवीमि न प्रेत्य संज्ञाऽस्तीति तु विशेषज्ञानाभावस्यैवोक्तत्वात् । अत अरे मैत्रेयीदं शृणु यन्महद्भूतमनन्तमपारं प्रज्ञानघनस्वरूपं यथाव्याख्यातमिदमेव विज्ञानाय विज्ञातुमलं युक्तं स्वप्रकाशत्वादिति याज्ञवल्क्य उक्तवानित्यर्थः ॥ १३ ॥

अथैवमुक्तं विशेषविज्ञानाभावमन्वयव्यतिरेकाभ्यां दृढीकुर्वन्नाह —

यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरँ शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति । यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं जिघ्रेत् तत्केन कं पश्येत् तत्केन कँ शृणुयात् तत्केन कमभिवदेत् तत्केन कं मन्वीत तत्केन कं विजानीयात् । येनेदँ सर्वं विजानाति तं केन विजानीयात् । विज्ञातारमरे केन विजानीयादिति ॥ १४ ॥

यत्र यस्मिन्नविद्याविलासकाले हि प्रसिद्धं द्वैतमिवकस्मिन्नेव आत्मनि भासमानं भवति तत्तत्र तस्मिन्काल इतरो घ्रातेतरं गन्धं घ्राणेन जिघ्रति तद्विशेषविज्ञानेन सम्बद्ध्यते । एवमेव तदितर इतरं पश्यतीत्यादौ योजनीयम् । एतावता एतेभ्यो भूतेभ्य इत्यत्र सूचितो भूतविद्योपाधिकः संसारो व्याख्यातः । इदानीं महद्भूतमनन्तमपारमित्यादिसूचितं ब्रह्मात्मदर्शनं व्याख्यास्यन् भूतोपाध्यभावेन विशेषविज्ञानलक्षणसंसाराभाव इति व्यतिरेकमाह—यत्र वा इति । यत्र यस्यां विद्यावस्थायामस्य ब्रह्मविदः सर्वं कर्तृकर्मफलादिकं प्रत्यग्याथात्म्या-

विज्ञानविलापितं सदात्मैवाभूत्तत्र तस्यामवस्थायां केन करणेन कः कं विषयं जिघ्रेत् न कोऽपि केनापि किमपि जिघ्रेत् कारणाभावात्। तथा तत्केन कं पश्येदित्यादि। एवं कैवल्यावस्थायां विशेषविज्ञानाभाव-मन्वयव्यतिरेकाभ्यां प्रतिपाद्य तत्रैव कैमुतिकन्यायं दर्शयितुमविद्याव-स्थायामपि साक्षिणो ज्ञानाविषयत्वमाह—येनेति। यत्राप्यविद्यावस्थाया-मन्योन्यं जानाति तत्रापि येन कूटस्थबोधेन व्याप्तो लोकः सर्वं जानाति तं साक्षिणं केन करणेन को वा विज्ञाता विजानीयात् न केनापि चक्षुरादेर्विषयग्रहण एवोपक्षीणत्वात्। किं पुनर्वक्तव्यं विद्या-वस्थस्य असंसारिण आत्मनो ज्ञानाविषयत्वमित्याह—विज्ञातारमिति। अरे मैत्रेयि यः पुनः केवलोऽद्वयो विद्यावस्थो विज्ञातैव वर्तते तं विज्ञातारं केन विजानीयात् न केनापीत्यर्थः॥ १४॥

इति द्वितीयाध्याये चतुर्थं ब्राह्मणम्॥ ४॥

अथाऽऽत्मा मन्तव्यो दुन्दुभ्याघातदृष्टान्तप्रबोधितैर्हेतुभिश्चित्सामान्य-चिदुत्पत्तिचिदेकप्रलयात्मकैरित्युक्तहेत्वसिद्धिशङ्कां परिहर्तुं मधुब्राह्मणम्। अथ वा एतैर्हेतुभिः साधितमिदं सर्वं यदयमात्मेत्यस्यैव पूर्वप्रतिज्ञातस्य निगमनार्थमिदम्। यद्वा 'स वा अयं पुरुषो जायमान' इत्यादौ प्रति-देहमात्मोत्पत्तिप्रलयश्रवणात् आत्मनो नानात्वप्रसक्तौ तन्निवृत्त्यर्थ-मिदमारभ्यते—

इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु। यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चाय-मध्यात्मँ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽय-मात्मेदममृतमिदं ब्रह्मेदँ सर्वम्॥ १॥

इयं प्रसिद्धा पृथिवी सर्वेषां भूतानां प्राणिनां ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनां मध्विव मधु प्रियं कार्यम्। सर्वभूतकर्मणा पृथिवीयमारब्धा भोगार्थं तस्मात् सर्वभूतकर्मजन्या पृथिवीत्यर्थः। तथाऽस्यै पृथिव्य, अस्याः पृथिव्याः सर्वाणि भूतानि मधु कार्यं शरीराणां पृथिव्यादि-कार्यत्वात्। किञ्चास्यां पृथिव्यां यश्चायं तेजोमयश्चिन्मात्रप्रकाश-मयोऽमृतमयोऽमरणधर्मा पुरुषः। यश्चायमध्यात्ममात्मानं शरीर-मधिकृत्य वर्तत इत्यध्यात्मम्। शरीरे भवः शारीरो लिङ्गाभिमानी पृथिव्यंशमात्राभिमानी। तेजोमयोऽमृतमयः पुरुषोऽयमुभयविधोऽपि

पुरुषः सर्वेषां भूतानामुपकारकत्वात् कारणत्वेन मधु । सर्वाणि च भूतान्यस्य कार्यत्वेन मध्विति चशब्दाद्व्याख्येयम् । तथा चैतच्चतुष्टयं मध्वात्मकं सहाध्यात्माधिदैवं साधिभूतमिदं कृत्स्नं जगदेकैकस्य भोग्यत्वेनावतिष्ठमानं परस्परमुपकार्योपकारकभूतत्वात् स्वप्नवदेककारणपूर्वकमिति सिद्धं यस्मात्तस्मात्तदेकं ब्रह्मैव अवधेयम्, इतरविकारजातस्य वाचारम्भणमात्रत्वादित्याशयेनाऽऽह—अयमेति । योऽयं पूर्वं मैत्रेय्या इदं सर्वं यदयमात्मेति प्रतिज्ञातः स एवाऽऽत्मा अयमुक्तचतुर्विधमध्वात्मको नान्यः । इदं चतुष्टयकल्पनाधिष्ठानब्रह्मविषयं विज्ञानममृतम् । अमृतत्वसाधनमिदमेव आत्मतत्त्वं ब्रह्म ते ब्रवाणीत्यध्यायादौ प्रकृतं ब्रह्मेदमेव सर्वं नान्यत्किञ्चिदस्तीत्यर्थः ॥ १ ॥

इमा आपः सर्वेषां भूतानां मध्वासामपाँ सर्वाणि भूतानि मधु । यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ २ ॥

एवमन्येऽपि पर्याया ज्ञेयाः । रेतसि भवो रैतसः पुरुषोऽध्यात्मम्, अपां तत्र विशेषतोऽवस्थानात् 'आपो रेतो भूत्वे'त्यादिश्रुतेः ॥ २ ॥

अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु । यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ ३ ॥

वाङ्मयो वागभिमान्यग्नेरध्यात्मम् ॥ ३ ॥

अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु । यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ ४ ॥

प्राणो घ्राणेन्द्रियं वायोरध्यात्मम् ॥ ४ ॥

अयमादित्यः सर्वेषां भूतानां मध्वस्याऽऽदित्यस्य सर्वाणि

भूतानि मधु । यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ ५ ॥

चाक्षुष आदित्यस्याध्यात्मम् ॥ ५ ॥

भूतानि दिशः सर्वेषां भूतानां मध्वासां दिशाँ सर्वाणि भूतानि मधु । यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ ६ ॥

यद्यपि दिशां श्रोत्रमध्यात्मं तथापि प्रतिश्रुत्कायां प्रतिश्रवणवेलायां विशेषतः सन्निहितो भवतीति प्रातिश्रुत्कविशेषणम् ॥ ६ ॥

अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु । यश्चायमस्मिँश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ ७ ॥

मानसश्चन्द्रमसोऽध्यात्मम् ॥ ७ ॥

इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु । यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ ८ ॥

त्वक् तैजसो विद्युतोऽध्यात्मम् ॥ ८ ॥

अयँ स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु । यश्चायमस्मिन्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ ९ ॥

शब्दे भवः शाब्दः, स्वरे भवः सौवरः पर्जन्यस्याध्यात्मम् । अत्रापि

स्वरे विशेषतो भावात् सौवरविशेषणम् ॥ ९ ॥

अयमाकाशः सर्वेषां भूतानां मध्वस्याऽऽकाशस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ १० ॥

हृदयाकाश आकाशस्याध्यात्मम् ॥ १० ॥

यत्प्रयुक्ता एते भूतगणा देवतागणाश्च शरीरिभिः सम्बध्यमाना मधुत्वेन उपकुर्वन्ति तद्वक्तव्यमित्यत आह—

अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम ॥ ११ ॥

तच्छ्रेयोरूपमित्यादौ व्याख्यातः क्रियाद्यात्मनाऽयमिति प्रत्यक्षेण निर्दिष्टो धर्मोऽपूर्वाख्यः सामान्यरूपेण च कार्यारम्भकः । तत्र पृथिव्यादिप्रयोक्तरि धर्मे सामान्यरूपेण तदारम्भकत्वमाह—यश्चायमस्मिन्धर्मं इत्यादिना । कार्यकरणसङ्घातकर्तरि तु विशेषरूपेण कार्यारम्भकत्वमाह—यश्चायमध्यात्ममित्यादिना ॥ ११ ॥

इदँ सत्यँ सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ १२ ॥

सत्यमपि धर्मवद् द्विविधं तत्र सामान्यरूपं पृथिव्यादिषु कारणत्वेनानुगतमित्याह—यश्चायमस्मिन्सत्य इति । विशेषरूपं तु सङ्घाते तत्त्वेनानुगतमित्याह—अध्यात्मं सात्य इति । सत्ये भवः सात्य इत्यर्थः ॥ १२ ॥

सत्यधर्माभ्यां प्रागुक्तोऽयं सङ्घातविशेषो येन जातिविशेषेण संयुक्तो भवति तं निर्दिशति—

इदं मानुषँ सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि

भूतानि मधु । यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ १३ ॥

इदं मानुषमिति सर्वजात्युपलक्षणपरम् । सा च जातिर्यद्यप्येकै- [ प्युक्तै ] व तथापि निर्दिष्टशरीराच्छरीरान्तरगता बाह्येत्यभिप्रेत्य तद्विशिष्टं पुरुषं निर्दिशति—यश्चायमस्मिन्मानुष इति । निर्दिष्टशरीर-निष्ठा त्वाध्यात्मिकीति तद्विशिष्टं निर्दिशति—यश्चायमध्यात्मं मानुष इति ॥ १३ ॥

यः पुनर्मानुषादिजातिविशिष्टः सङ्घातस्तस्य मधुत्वमाह—

अयमात्मा सर्वेषां भूतानां मध्वस्याऽऽत्मनः सर्वाणि भूतानि मधु । यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥ १४ ॥

अयमात्मा उक्तजातिविशिष्टो देहो न तु चेतनो यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषः सोऽमूर्तरसः सर्वात्मकश्चेतनो निर्दिश्यते । अत्राध्यात्मविशेषाभावात्स न निर्दिश्यत इत्यभिप्रेत्याऽऽह—यश्चायमात्मा परिशिष्टो विज्ञानमयोऽसङ्घातवांश्चेतनस्तेजोमयोऽमृतमयः पुरुषः ॥ १४ ॥

अस्यान्त्यपर्यायोक्तस्याऽऽत्मनः स्वरूपमाह—

स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानाँ राजा । तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्वं एत आत्मानः समर्पिताः ॥ १५ ॥

यस्मिन् विध्वस्तव्याकृताव्याकृतात्मके परमात्मनि खिल्यदृष्टान्त-वचनेन विज्ञानात्मा प्रवेशितः स वै स एवायमात्माऽव्यवहितपूर्वपर्याये तेजोमय इत्यादिना निर्दिष्टो विज्ञानात्मा विद्वान् सर्वेषां भूतानामधिपतिः स्वतन्त्रपतिर्नः । न कुमारामात्यादिवत्स्वातन्त्र्यम्, किन्तु सर्वेषां भूतानां राजा अविलुप्तात्मदर्शित्वादप्रधर्षणीयोऽस्मिन् सर्वात्मभूते ब्रह्मविदि सर्वं जगत् समर्पितमिति दृष्टान्तपूर्वकमाह—तदिति । तत्प्रसिद्धं निदर्शनं यथा रथनाभौ च रथचक्रपिण्डिकायां रथनेमौ च वलयभूतायां सर्वेऽराः

समर्पिता आरोपिताः। यथाऽयं दृष्टान्त एवमेवास्मिन्नात्मनि परमात्मभूते ब्रह्मविदि सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि सर्वेऽग्न्यादयो देवाः सर्वे भूरादयो लोकाः स व प्राणा वागादयः सर्व चैत आत्मानो जलचन्द्रवत् प्रतिशरीरानुप्रवेशिनोऽविद्याकल्पिताः समर्पिता इत्यर्थः ॥ १५ ॥

एवं साकल्येन निरूपिताया ब्रह्मविद्यायाः स्तुत्यर्थं प्रवर्ग्यप्रकरणस्थाख्यायिकासंक्षेपकौ मन्त्रौ स्वप्रस्तावकब्राह्मणपूर्वकौ प्रवर्तेते—

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। तद्वां नरा सनयेदँस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्। दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ॥ १६ ॥

यत्प्रवर्ग्यप्रकरणे सूचितं परं तु नाऽऽविष्कृतं तद्वा इदं मध्विहानन्तरनिर्दिष्टं दध्यङ्नामा ब्राह्मणोऽथर्वणो गोत्रापत्यमाथर्वणोऽश्विभ्यां देवभिषग्भ्यामुवाच उक्तवान्। तदेवैतद् ऋषिर्मन्त्रस्तद्द्रष्टा वा पश्यन् अवोचत् प्रकटयामास। कथम्? हे नराकारावश्विनौ भवद्भ्यां लुब्धप्राकृतजनवत्सनये लाभाय यद्दंसः कर्मोग्रं क्रूरं कृतं रहसि वां युवयोस्तद्दंसः कर्माऽऽविष्कृणोमि प्रकटं करोमि। कः कामिव? तन्यतुः पर्जन्यो वृष्टिं न वृष्टिमिव। अत्र नकार इवार्थः। यत्कक्ष्यत्वेन वक्ष्यमाणमात्मज्ञानाख्यं मधु दध्यङ्नामा आथर्वणो वां युवाभ्यामश्वस्य शीर्ष्णा शिरसा। प्र यदीमुवाच प्र यत् ईमिति च्छेदः। यत्प्रोवाच तदप्याविष्कृणोमीति सम्बन्धः। ह ईमनर्थकौ निपातौ। इतिशब्दो मन्त्रसमाप्तिद्योतकः ॥ १६ ॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। आथर्वणायाश्विना दधीचेऽश्व्यँ शिरः प्रत्यैरयतम्। स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ॥ १७ ॥

आविष्कृणोमीति प्रतिज्ञाते क्रूरकर्ममधुनी के ते इत्यपेक्षायामिदं वै तन्मध्वित्याद्युक्तार्थब्राह्मणानुवादपूर्वकं मन्त्रमाह—आथर्वणायेति। हे अश्विना अश्विनौ। आथर्वणाय दधीचे दध्यङ्नाम्ने। अश्व्यम् अश्वस्येदमश्व्यं शिरो ब्राह्मणशिरश्छेदपूर्वकं प्रत्यैरयतं प्रतिगमितवन्तौ

युवामिति द्विशिरश्छेदलक्षणमुग्रं कर्म कृतम् । पश्चात्स चाऽऽथर्वणो ब्रह्मणो वां युवाभ्यां त्वाष्ट्रं मधु त्वष्टाऽऽदित्यस्तत्सम्बन्धि विज्ञानं यज्ञस्य शिरश्छेदप्रतिसन्धानादिविषयं प्रावोचदुक्तवानित्यन्वयः । स किमित्येवं जीवितसन्देहमारुह्य स्वशिरश्छेदपूर्वकं तत्र संधिताश्वशिरसा मधूक्तवानित्यत आह—ऋतायन्निति । पूर्वं प्रतिज्ञातं सत्यं परिपालयितुमिच्छन् । किञ्च हे दस्रौ परबलानामुपक्षपयितारौ शत्रूणां वा हिंसितारौ हेऽश्विनौ वां युवाभ्यां न केवलमुक्तार्थकं त्वाष्ट्रं मध्वेव प्रावोचत्, अपि तु यत्कक्ष्यं गोप्यं रहस्यं परमात्मसम्बन्धिविज्ञानं मधुब्राह्मणेनोपसंहृतं तृतीयचतुर्थाध्यायाभ्यां च प्रकटितं तदपि युवाभ्यामवोचदित्यर्थः ॥ १७ ॥

प्रथमद्वितीययोः प्रवर्ग्यकर्मार्थयोरध्याययोरर्थ आख्यायिकोपसंहर्तृमन्त्रवाक्याभ्यां दर्शितः । इदानीं ब्रह्मविद्यार्थयोस्तु तृतीयचतुर्थाध्याययोः उत्तराभ्याम् ऋग्भ्यामर्थः प्रकाशयितव्य इत्यत 'इदं वै तदि'त्युक्तार्थब्राह्मणपूर्वकं प्रवर्तते—

इदं वै तन्मधु । दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति । स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासवृतम् ॥ १८ ॥

पुर इति । प्रकरणादीश्वरोऽव्याकृते नामरूपे व्याकुर्वाणः प्रथमं भूतादिसर्गपुरस्सरं पञ्चीकृतेभ्यो भूतेभ्यो भूरादीन् लोकान्सृष्ट्वा पुरः शरीराणि चक्रे कृतवान् । द्विपदो द्वाभ्यां पदाभ्यामुपलक्षिता मनुष्यपक्ष्यादिशरीररूपाः काश्चन चक्रे । तथा चतुष्पदः चतुष्पादोपलक्षिताः पश्वादिशरीरात्मिकाः पुरश्चक्रे । एवं शरीराणि नानाविधानि सृष्ट्वा स ईश्वरः पुरः स्वप्रवेशात्पूर्वं पक्षी लिङ्गशरीरं भूत्वा पुरः शरीराणि पुरुषः पुरुषरूपः सन्नाविशत् प्रविवेश । इतिशब्दो मन्त्रसमाप्तिद्योतकः । कथमात्मनः पुरुषत्वमित्याशङ्कायां ब्राह्मणं स्वतः स्वमुखेन तद्व्युत्पादयति—स इति । स वै स एवायमात्मा सृष्ट्यादिकर्तृतया प्रकृतः सर्वासु पूर्षु शरीरेषु शयनात्पुरुषो भवति । तामेव व्युत्पत्तिं विशदयति—पुरि शेत इति पुरिशयः सन् पुरुष इत्युच्यते । नन्वेवमाधाराधेयनिर्देशाद् द्वैतापत्तिः स्यादित्यत आह—नेति । एनेनानेन परमात्मना किञ्चन

किञ्चिदप्यनावृतमनाच्छादितं नास्ति तथैनेन किञ्चन असंवृतमननुप्रवेशितं नास्ति। तथा च परमात्मैव अन्तर्वहिर्भावेन कार्यकरणरूपेण व्यवस्थितो न ततोऽन्यत्किञ्चिदस्तीत्यर्थः ॥ १८ ॥

इदं वै तन्मधु दध्यङ् ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। रूपँ् रूपं प्रतिरूपो बभूव। तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयते। युक्ता ह्यस्य हरयः शता दशेति। अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च। तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥ १९ ॥

एवं शरीरे प्रविष्टः परमात्मा किंरूप इत्यत आह—रूपमिति। स ईश्वरो रूपं रूपमुपाधिभेदं देहं देहं प्रति प्रतिरूपो रूपान्तरं प्रतिबिम्बो बभूव. अनुरूपो वेत्यवच्छेदपक्षात् प्रतिबिम्बपक्षः श्रेयानिति बोध्यम्। ननु किमर्थमसौ प्रतिबिम्बभावमापद्यते ? तत्राऽऽह—तदिति। तत्प्रतिबिम्बत्वमस्य निरुपाधिकस्य आत्मनो रूपं स्वरूपं प्रतिचक्षणाय आत्मयाथात्म्यप्रतिख्यापनाय। अन्यथाऽनाद्यनिर्वचनीयाविद्यापटावृतस्य बुद्धिवृत्त्युपाधिप्रतिबिम्बाभावे स्वरूपप्रकाशानुपपत्तेः। नन्वसङ्गादिलक्षणस्यास्य प्रतिबिम्बभावे किं कारणमित्यपेक्षायाम् आत्मज्ञानमेवोपादानमित्याह—इन्द्र इति। इन्द्रः परमेश्वरः। मायाभिरिति बहुवचनं विक्षेपाणां बाहुल्यात्। मायाभिर्मायया नामरूपविषयमिथ्याभिमानात्मना परिणतया पुरुरूपो बहुरूप ईयते तीयते मिथ्यैव जलसूर्यवत्। तथाऽपि परस्य बहुत्वे किं निमित्तमित्यत आह—युक्ता इति। रथयुक्त वाजिवदस्य प्रतीचो रथस्थानीये शरीरे युक्ताः प्रत्यञ्च स्वस्वविषयान् प्रति हरन्तीति हरय इन्द्रियाणि शता शतानि दश च। इतिशब्दो मन्त्रसमाप्तिद्योतकः। नन्वस्य हरय इति सम्बन्धप्रतीतेर्द्वैतापत्तिरित्यतस्तदर्थमाह—अयमिति। अयमात्मा वा एव हरय इन्द्रियादिरूपेणास्यैव अविद्यया भानादतोऽयमात्मा वा एव दश च सहस्राणि बहूनि चानन्तानि च हरिशब्दितानीन्द्रियाणि प्राणिबाहुल्यात्। इदानीमस्य पारमार्थिकं स्वरूपमाह—तदिति। न विद्यते पूर्वं कारणं यस्य तदपूर्वम्। न

विद्यतेऽपरं कार्यं यस्य तदनपरम्। न विद्यतेऽन्तराले जात्यन्तरं वस्तु यस्य तदनन्तरम्। न विद्यते बाह्यं बहिर्भूतं वस्तु यस्मात्तदबाह्यम। यदेतादृशं ब्रह्म तदेवैतत्समस्तं जगन्न तद्व्यतिरेकेणास्ति। किं पुनस्तद् ब्रह्म आत्मनोऽर्थान्तरं नेत्याह--अयमिति। अयं प्रत्यगात्मैव ब्रह्म। कोऽसौ प्रत्यगात्मा? तत्राऽऽह--सर्वानुभूरिति। यः सर्वमनुभवति स सर्वानुभूः द्रष्टा श्रोता मन्ता विज्ञाता स एव प्रत्यगात्मा। अयमेव सर्ववेदान्तानामर्थ इत्युपसंहरति--इतीति। इतीत्थमनुशासनं सर्ववेदान्तोपदेशः। एतदमृतमभयं चेत्यनर्थनिवृत्तिद्वारकानन्दात्वाप्तिरूपोभयप्रयोजनकः शास्त्रार्थः समाप्तः॥ १६॥

इति द्वितीयाध्याये पञ्चमं ब्राह्मणम्॥ ५॥

अथैवंनिरूपितब्रह्मविद्यास्तुत्यर्थं तदुत्पत्तये जपार्थं तस्या असाम्प्रदायिकत्वशङ्कापरिहारार्थमध्यापनार्थं च वंशब्राह्मणमारभ्यते--

अथ वँ्शः पौतिमाष्यो गौपवनाद् गौपवनः पौतिमाष्यात् पौतिमाष्यो गौपवनाद् गौपवनः कौशिकात्कौशिकः कौण्डिन्यात् कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः॥ १॥ आग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानभिम्लात आनभिम्लातादानभिम्लात आनभिम्लातादानभिम्लातो गौतमाद् गौतमः सैतवप्राचीनयोग्याभ्याँ् सैतवप्राचीनयोग्यौ पाराशर्यात् पाराशर्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद् भारद्वाजः पाराशर्यात्पाराशर्यो बैजवापायनाद्बैजवापायनः कौशिकायनेः कौशिकायनिः॥ २॥ घृतकौशिकाद् घृतकौशिकः पाराशर्यायणात् पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद् गौतमो गौतमाद् गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात् कैशोर्यः काप्यः

कुमारहारितात् कुमारहारितो गालवाद् गालवो विदर्भी-
कौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपा-
द्वाभ्रवः पथः सौभरात् पन्थाः सौभरोऽयास्यादाङ्गिरसा-
दयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्
त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्
दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः
प्राध्वँसनान्मृत्युः प्राध्वँसनः प्रध्वँसनात् प्रध्वँसन
एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः
सनातनात् सनातनः सनगात् सनगः परमेष्ठिनः परमेष्ठी
ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ३ ॥

अथानन्तरं वंशः शिष्यावसानोपलक्षणभूतात् पौतिमाष्यादारभ्य तदादिर्वेदाख्यब्रह्ममूलपर्यन्तोऽयं वंशः पर्वणः पर्वणो भिद्यते। अत्र प्रथमान्तः शिष्यः पञ्चम्यन्त आचार्यो बोद्धव्यः। परमेष्ठी विराड्ब्रह्मणो हिरण्यगर्भाद्विद्यां प्राप्तोऽस्य स्वयंभातवेदत्वात् तत आचार्यपरम्परा नास्ति। यत्पुनर्ब्रह्म वेदाख्यं तत्स्वयंभु नित्यं परस्यैव वेदरूपेणावस्थानात्। आदावन्ते च कृतमङ्गला ग्रन्थाः प्रचारिणो भवन्तीति द्योतयितुमाह— ब्रह्मण इति। ब्रह्मणे स्वयंभुवे वेदरूपेण अवस्थिताय नमो वाङ्मनः-कायकृतः प्रह्वीभावोऽस्त्वित्यर्थः ॥ १—३ ॥

इति द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

॥ इति बृहदारण्यकब्राह्मणे चतुर्थोऽध्यायः ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्य-
श्रीनित्यानन्दाश्रमविरचितायां बृहदारण्यकव्याख्यायां
मिताक्षराख्यायां द्वितीयोऽध्यायः ॥ २ ॥



## ॥ अथ तृतीयोऽध्यायः ॥

एवमागमप्रधानेन मधुकाण्डेन उक्तमेवार्थमुपपत्त्या निरूपयितुं यत्प्रधानं मुनिकाण्डमारभ्यते । तत्रोपपत्तीनां वादजल्परूपेण द्वैविध्यात् तावत्पञ्चमेऽध्याये जल्पकथया युक्तयो निरूप्यन्ते । तन्निरूपणाय तत्प्रस्तावं कर्तुमाख्यायिकां विज्ञानस्तुत्यर्थं विद्याप्राप्त्युपायदानप्रदर्शनार्थं चाश्वलब्राह्मणेन आरचयति—

ॐ जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे । तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेता बभूवुः । तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कःस्विदेषां ब्राह्मणानामनूचानतम इति । स ह गवाँ सहस्रमवरुरोध दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः ॥ १ ॥

विदेहानां वंशे भवो वैदेहो जनको नाम ह किल बभूव । स च बहुदक्षिणेन यज्ञेन शाखान्तर एतन्नाम्ना प्रसिद्धेन बहुदक्षिणाविशिष्टेन अश्वमेधादिना वा ईजेऽयजत् । तत्र तस्मिन्यज्ञे ह विद्वद्बाहुल्येन प्रसिद्धानां कुरूणां पञ्चालानां च देशानां ब्राह्मणा अभिसमेता अभिसङ्गता बभूवुः । तान् दृष्ट्वा तस्य ह जनकस्य वैदेहस्य कःस्वित् को नु खल्वेषां ब्राह्मणानां मध्येऽनूचानतमोऽतिशयेन अनूचानोऽनुवचनसमर्थो ब्रह्मिष्ठ इति विजिज्ञासा विशेषेण ज्ञातुमिच्छा बभूव । पश्चात्स जनको ह तद्विज्ञानोपायभूतं गवां सहस्रं गोष्ठेऽवरुरोध अवरोधं कारयामास । तासामेकैकस्याः गोः शृङ्गयोर्विषये दश दश पादाः पदस्य चतुर्थो भागः पाद एवंभूताः सुवर्णस्य दश दश पादा आबद्धा बभूवुः । शृङ्गयोरिति द्विवचनात्प्रतिशृङ्गं पञ्च पञ्च पादा आबद्धा इत्यर्थः ॥ १ ॥

एवं गा अवरुद्ध्य जनकः—

तान् होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति । ते ह ब्राह्मणा न दधृषुः । अथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाच एताः सोम्योदज सामश्रवा ३ इति । ता होदाचकार । ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रुवीतेति । अथ ह जनकस्य वैदेहस्य होताऽश्वलो बभूव । स हैनं पप्रच्छ त्वं न खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसा ३ इति । स

होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयँ स्म इति । तँ ह तत एव प्रष्टुं दध्रे होताऽश्वलः ॥ २ ॥

तान् ब्राह्मणान् ह किलोवाच भो ब्राह्मणा भगवन्तः पूजार्हा इति सम्बोध्य यो वो युष्माकं मध्ये ब्रह्मिष्ठोऽतिशयेन ब्रह्मज्ञः स एता अवरुद्धा गा उदजताम् उत्कालयतु, स्वगृहं प्रति नयत्वित्युक्ते ते ब्राह्मणा ह किल न दधृषुः न प्रगल्भाः संवृत्ता आत्मनो ब्रह्मिष्ठतां प्रतिज्ञातुमिति शेषः । अथ अनन्तरं याज्ञवल्क्यो ह किल स्वमात्मीयमेव ब्रह्मचारिणमन्तेवासिनमुवाच । किम् ? हे सोम्य सामश्रवा ३ इति प्लुतिः दूराद्धानार्था । सामविधिं शृणोतीति सामश्रवास्तत्सम्बोधनं सामश्रवः । एता गा उदजोद्गमय अस्मद्गृहान् प्रति । एवं गुरुवचनं श्रुत्वा ह किल ब्रह्मचारी ता गा उदाचकार उत्कालितवान्, नीतवान् आचार्यगृहं प्रति । एवं ब्रह्मिष्ठाय निर्दिष्टगवामपहरणात् याज्ञवल्क्येन स्वात्मनो ब्रह्मिष्ठत्वस्वीकरणात् अस्माकमब्रह्मिष्ठता प्रतिज्ञायत इति मन्वानास्ते ह ब्राह्मणाः चुक्रुधुः क्रोधं कृतवन्तः । तेषां क्रोधाभिप्रायमाह—कथमयं नोऽस्माकमेकैकप्रधानानामग्रे ब्रह्मिष्ठोऽस्मीति ब्रुवीत कथयेत् ? इतिशब्दोऽभिप्रायसमाप्तिद्योतकः । अथ क्रोधानन्तरं ह जनकस्य यजमानस्य अश्वलो नाम होता ऋत्विक् बभूवाऽऽसीत् । स ब्रह्मिष्ठाभिमानी राजाश्रयत्वाद् धृष्टः सन्नेनं याज्ञवल्क्यं पप्रच्छ । कथम् ? हे याज्ञवल्क्य नोऽस्माकमग्रे त्वं नु खलु ब्रह्मिष्ठोऽसी३ इति प्लुतिर्निर्भर्त्सनार्था । अनौद्धत्यं ब्रह्मविदो लिङ्गमिति सूचयन्ति श्रुतिर्याज्ञवल्क्यकृतमुत्तरं दर्शयति—स इति । स याज्ञवल्क्यो होवाच । वयं ब्रह्मिष्ठाय नमस्कुर्मः । किमिति तर्हि ब्रह्मिष्ठपणभूता गावः स्वगृहं प्रति प्रस्थापिता इत्यत आह—गोकामा इति । वयं गोकामा एव स्मः, अतो गोग्रहणं कृतवन्त इति मुनिनोक्ते ततो ब्रह्मिष्ठपणस्वीकरणादेव होताऽश्वलस्तं प्रष्टुं दध्रे धृतवान् मनः ॥ २ ॥

मधुकाण्डगतोद्गीथब्राह्मणोक्तमुख्यप्राणदर्शनं वागादीनां पाप्ममृत्योरतिक्रमणपूर्वकमग्न्यादिभावप्राप्तिसाधनमित्युक्तम् । परन्तु तेषां तद्भावप्राप्तौ प्रत्येकं साधनविशेषस्तु नोक्तः । स वक्तव्यस्तस्य उद्गीथोपासनाङ्गत्वादित्यतस्तद् वक्तुं याज्ञवल्क्येत्ययं प्रश्नप्रतिवचनात्मकः सन्दर्भः प्रवर्तते । तत्र प्रष्टुं यन्मनसि धृतं तत्प्रश्नम्—

याज्ञवल्क्येति होवाच यदिदँ सर्वं मृत्युनाऽऽप्तँ सर्वं

मृत्युनाऽभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति। होत्रर्त्विजाऽग्निना वाचा। वाग् वै यज्ञस्य होता। तद्येयं वाक् सोऽयमग्निः स होता स मुक्तिः साऽतिमुक्तिः॥ ३॥

हे याज्ञवल्क्येति सम्बोध्य उवाच। अस्य कर्मणो यदिदं साधनजातमृत्विगग्न्यादिलक्षणं मृत्युना कर्मलक्षणेन स्वाभाविकाज्ञानजासङ्गसहितेनाऽऽप्तं व्याप्तम्। न केवलं व्याप्तं किन्त्वभिपन्नं च मृत्युना ग्रस्तं च। अतः केन दर्शनलक्षणेन साधनेन यजमानो मृत्योराप्तिमतीत्य मृत्युगोचरत्वमतिक्रम्य मुच्यते स्वतन्त्रो मृत्योरवश्यो भवतीति अश्वलेन पृष्ट उत्तरमाह—होत्रर्त्विजाऽग्निना वा चेति। अस्याभिप्रेतार्थं श्रुतिः स्वयमेव व्याचष्टे—वाग्वा इति। यज्ञो वै यजमान इति श्रुतेर्यज्ञस्य यजमानस्य याऽध्यात्मं वाक्सैव अधियज्ञे होता तत्तत्रैवं सति येयं यजमानस्य वाक् सोऽयं प्रसिद्धोऽग्निरधिदैवतरूपः। स एव वागैक्यमापन्नोऽग्निः होता। स होताऽग्निरूपेण दृष्टो मुक्तिर्मृत्योरतिक्रमणरूपमुक्तेः साधनं सोक्तरूपा मुक्तिरतिमुक्तिः फलरूपाऽग्न्यादिभावापत्तिरूपातिमुक्तेः साधनम्। तथा चाध्यात्माधियज्ञीयसाधनद्वयस्य वाग्घोतृलक्षणस्य परिच्छिन्नस्य अपरिच्छिन्नाधिदैवताग्निरूपेण दृष्टिरहमपरिच्छिन्नाग्न्यात्मकयजमानवाग्रूपोऽग्निरित्येतादृशी यज्ञसमये क्रियमाणा यजमानस्याध्यात्मपरिच्छेदरूपमृत्युमतिक्रम्य फलभूताग्न्यादिभावापत्तिरूपातिमुक्तिसाधनमित्यर्थः सम्पन्नः॥ ३॥

उक्तमृत्युशब्दितकाम्यकर्मादिसाधनविपरिणामहेतुत्वाद् वृद्धिक्षयरहितसूर्यकृताहोरात्रलक्षणकालरूपात् मृत्योरतिक्रमणं केन दर्शनेन स्यादित्याह—

याज्ञवल्क्येति होवाच यदिदँ सर्वमहोरात्राभ्यामाप्तँ सर्वमहोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इति। अध्वर्युणर्त्विजा चक्षुषाऽऽदित्येन। चक्षुर्वै यज्ञस्याध्वर्युस्तद्यदिदं चक्षुः सोऽसावादित्यः सोऽध्वर्युः स मुक्तिः साऽतिमुक्तिः॥ ४॥

अर्थस्तु पूर्ववत्। पूर्ववद्यजमानचक्षुरध्वर्य्वोरादित्यात्मना अध्वर्युकर्तृकं ध्यानं मृत्य्वतिक्रमसाधनमित्युत्तरमाह—अध्वर्युणेत्यादिना॥ ४॥

अथ वृद्धिक्षयादिविशिष्टचन्द्रकर्तृकतिथ्यादिलक्षणकालातिक्रमणसाधनं पृच्छति—

याज्ञवल्क्येति होवाच यदिदꣳ सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तꣳ सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यत इति । उद्गात्रर्त्विजा वायुना प्राणेन । प्राणो वै यज्ञस्योद्गाता तद्योऽयं प्राणः स वायुः स उद्गाता स मुक्तिः साऽतिमुक्तिः ॥ ५ ॥

यजमानप्राणोद्गात्रोर्वाय्वात्मना ध्यानमुद्गातृकर्तृकं यजमानस्य पक्षद्वयमुक्तिसाधनमित्युत्तरमाह--उद्गात्रर्त्विजा इत्यादिना ॥ ५ ॥

स एवं कालादिमृत्युकृतपरिच्छेदात् मुच्यमानः किमालम्बने फलं प्राप्नोतीति पृच्छति—

याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनारम्बणमिव केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति । ब्रह्मणर्त्विजा मनसा चन्द्रेण । मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा स मुक्तिः साऽतिमुक्तिरित्यतिमोक्षा अथ सम्पदः ॥ ६ ॥

यदिदं प्रसिद्धमन्तरिक्षमाकाशमनारम्बणमनालम्बनमिव भासते अतः केनाऽऽक्रमेण अवष्टम्भेन यजमानः स्वर्गं लोकं कर्मफलमाक्रमते प्राप्नोतीति । याजमानिकमनोब्रह्मणोश्चन्द्रात्मना ब्रह्मर्त्विक्कृतं ध्यानमवलम्बनमित्युत्तरमाह--ब्रह्मर्त्विजा इत्यादिना । एवमनुक्तत्वगादीनामपि वाय्वात्मना दर्शनं द्रष्टव्यमित्यभिप्रेत्योपसंहरति--इतीति । इत्येवंप्रकारा अतिमोक्षा अतिमोक्षो विद्यते येषां ते अतिमोक्षाः अथानन्तरं संपद उच्यते अल्पीयस्स्वग्निहोत्रादिषु महतां कर्मणां तत्फलकामनया कर्मत्वादिसामान्यात् सम्पादनं फलस्यैव वा सम्पादनमधिकारिकृतं सम्पन्नामकं कर्मोच्यत इत्यर्थः ॥ ६ ॥

एतत्कर्म प्रकटयितुमश्वलप्रश्नमवतारयति—

याज्ञवल्क्येति होवाच कतिभिरयमद्यर्ग्भिर्होताऽस्मिन् यज्ञे करिष्यतीति । तिसृभिरिति । कतमास्तास्तिस्र इति । पुरोनुवाक्या च याज्या च शस्यैव तृतीया । किं ताभिर्जयतीति । यत्किञ्चेदं प्राणभृदिति ॥ ७ ॥

कतिभिः कतिसंख्याभिर्ऋग्भिर्ऋग्जातिभिरयं होताऽस्मिन्यज्ञे शंसनं करिष्यतीति पृष्टे तिसृभिर्ऋग्जातिभिरित्युत्तरमुक्तवन्तं प्रति पुनस्तासां स्वरूपं पृच्छति--कतमा इति। किंस्वरूपास्तास्तिस्र ऋग्जातय इति पृष्ट उत्तरमाह--पुर इति। पुरोनुवाक्या च प्रयोगकालात् प्राक् होत्रा प्रयुज्यमानर्ग्जातिः। याज्या च यागार्थं प्रयुज्यमानर्ग्जातिः। शस्या शस्त्रार्थं प्रयुज्यमानर्ग्जातिः। तृतीया तृतीयसंख्यापूरणी। एतासां फलं पृच्छति--किमिति। ताभिः पुरोनुवाक्याद्याभिः ऋग्जातिभिर्यजमानः किं जयति किं फलं प्राप्नुयात्? उत्तरमाह--यदिति। प्राणभृत् प्राणिजातं यत्किञ्चास्ति तत्सर्वं जयति। सर्वप्राण्यात्मकभूरादिलोकत्रयस्य संख्यासामान्यात् पुरोनुवाक्यादिषु तिसृषु सम्पादनादित्यर्थः॥ ७॥

एवमृग्जातिषु फलसम्पादनेऽभिहितेऽध्वर्युकृताहुतिषु तत्सम्पादनजिज्ञासया पृच्छति--

याज्ञवल्क्येति होवाच कत्ययमद्याध्वर्युरस्मिन्यज्ञ आहुतीर्होष्यतीति। तिस्र इति। कतमास्तास्तिस्र इति। या हुता उज्ज्वलन्ति या हुता अतिनेदन्ते या हुता अधिशेरते। किं ताभिर्जयतीति। या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति। दीप्यत इव हि देवलोको या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयत्यतीव हि पितृलोको या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयत्यध इव हि मनुष्यलोकः॥ ८॥

समानार्थमेतत्। या हुताः समिदाज्याहुतय उज्ज्वलन्ति या हुता मांसाद्याहुतयोऽतिनेदन्तेऽतीव शब्दं कुर्वन्ति या हुताः पयःसोमाहुतयोऽध्यधो गत्वा भूमेरधः शेरते किं ताभिर्जयतीत्यत आह--या इति। या आहुतयो हुता उज्ज्वलन्ति ताभिराहुतिभिर्देवलोकमेव जयति। एताभिः साक्षाद्देवलोकाख्यं फलमेव मया निर्वर्त्यत इति ध्यानेन संपादयति। कथमित्यपेक्षायामुज्ज्वलत्वसामान्यादित्याह--दीप्यत इति। हि यस्माद्देवलोको दीप्यत इवोज्ज्वल इवेत्यभिनयप्रदर्शनार्थः। तथा या हुता अतिनेदन्त इत्यादि समानम्। हि यस्मादतीव अतिकुत्सितशब्द इव पितृलोकस्तत्सम्बन्धायां हि संयमन्यां पुर्यां वैवस्वतेन यात्यमानानां हा हतोऽस्मि मुञ्च मुञ्चेति कुत्सितशब्दो भवति। उपरितनलोकापेक्षया पापप्रचुरत्वेन अधोगमनापेक्षया च मनुष्यलोको ह्यध इवेत्यर्थः॥ ८॥

याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो

देवताभिर्गोपायतीत्येकयेति कतमा सैकेति मन एवेति अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ॥६॥

अथायं ब्रह्म आहवनीयस्य दक्षिणतो ब्रह्मासने स्थित्वा कतिभिः देवताभिर्यज्ञं गोपायति रक्षति मनसा ध्यानेनैव व्याप्रियते, अतो मन एव एका देवता तया यज्ञं गोपायति। अस्मिन्मनसि सम्पाद्यमानं फलमपृष्टमपि मुनिराह—अनन्तमिति। यस्मादनन्तं वै प्रसिद्धं वृत्तिभेदेन मनोवृत्त्यधिष्ठातारो विश्वेदेवाश्चानन्तास्तस्मात्स उपासको मनस्तद्देवतयोरानन्त्यदृष्ट्यारोपेण अनन्तसामान्यादनन्तमेव लोकं जयतीत्यर्थः ॥ ६ ॥

याज्ञवल्क्येति होवाच कत्ययमद्योद्गाताऽस्मिन्यज्ञे स्तोत्रियाः स्तोष्यतीति तिस्र इति। कतमास्तास्तिस्र इति, पुरोनुवाक्या च याज्या च शस्यैव तृतीया। कतमास्ता या अध्यात्ममिति। प्राण एव पुरोनुवाक्याऽपानो याज्या व्यानः शस्या। किं ताभिर्जयतीति। पृथिवीलोकमेव पुरोऽनुवाक्यया जयत्यन्तरिक्षलोकं याज्या द्युलोकँ शस्यया। ततो ह होताऽश्वल उपरराम ॥ १० ॥

स्तोत्रिया गीतिविशिष्टा ऋग्जातयः। समानमन्यत्। एताः पूर्वोक्ताः पुरोनुवाक्याद्यो गीतिरूपेण वर्तमाना अधियज्ञसंज्ञका इत्येतत्पूर्वमवगतम्। परन्तु केन रूपेणैताः पुनरध्यात्मं भवतीति पृच्छति—कतमा इति। या अध्यात्मं स्तोत्रियास्तिस्र ऋचः कास्ता इति पृष्ट उत्तरमाह—प्राण इति। प्राण एव पुरोनुवाक्याऽपशब्दसामान्यात्। अपानो याज्या, उभयोः प्राणपुरोनुवाक्याभ्यामानन्तर्यादिसामान्यात्। व्यानः शस्या, 'अप्राणन्ननपानन्नृचमभिव्याहरती'ति श्रुत्यन्तरात्। एवं प्राणादिषु पुरोनुवाक्यादिदृष्टिकरणस्य फलं पृच्छति—किं ताभिर्जयतीति। पृष्ट उत्तरमाह—पृथिवीति। पृथिवीलोकमेव पुरोनुवाक्यया जयति अन्तरिक्षलोकं याज्यया द्युलोकं शस्यया जयति प्रथममध्यमोत्तमत्वसामान्यात्। एतत्तु यत्किञ्चेदं प्राणभृदिति सामान्योक्तस्यैव विशेषतः कथनम्। ततोऽनन्तरं होताऽश्वलो नायमस्मद्गोचर इत्यभिप्रायेण उपरराम इत्यर्थः ॥ १० ॥

इति तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

एवं कालकर्मलक्षणान्मृत्योरतिमुक्तिरूपोपासनफलस्यापि सूत्रान्तर्गतस्य मृत्युग्रस्तत्वकथनाय मृत्युस्वरूपं कथयितुं मुक्त्यतिमुक्तिप्रतियोगिभूतान् पदार्थांस्तावदाख्यायिकामनुसृत्य आह—

अथ हैनं जारत्कारव आर्तभागः पप्रच्छ याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहा इति । अष्टौ ग्रहा अष्टावतिग्रहा इति । ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति ॥१॥

अथ अश्वलोपरमानन्तरं जरत्कारुगोत्रो जारत्कारव ऋतभागस्य अपत्यमार्तभागो हे याज्ञवल्क्येति तत्सम्बोधनम् । होवाच । ततः सम्बोधनेनाभिमुखीकृतमेनं प्रकृतं याज्ञवल्क्यं मुक्त्यतिमुक्तिप्रतियोगित्वेन सामान्यतः प्रसिद्धा ग्रहाः कति कतिसंख्याका अतिग्रहाश्च कतीति संख्यां पप्रच्छ । उत्तरमाह—अष्टौ ग्रहा अष्टावतिग्रहा इति । संख्येयान् पृच्छति-ये तेऽष्टौ ग्रहा अष्टावतिग्रहाश्चोक्तास्ते कतमे क इत्यर्थः ॥ १ ॥

उत्तरमाह—

प्राणो वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन हि गन्धाञ्जिघ्रति ॥ २ ॥

प्राणो घ्राणो वै प्रसिद्धो वायुसहितो ग्रहो ग्रहवत्परवशहेतुत्वात् । सोऽपानेन गन्धेनातिग्राहेणेति दैर्घ्यं छान्दसम् । अतिग्रहेण गृहीतः । अपानगन्धग्रहयोरविनाभावात् । कथं तेन गृहीत इत्यत आह—अपानेनेति । अपानशब्देनात्रान्तर्मुखः श्वास उच्यते । तेन हि समाहृतान् गन्धान् लोको जिघ्रत्यतस्तेन प्राणो गृहीत इत्यर्थः ॥ २ ॥

वाग्वै ग्रहः स नाम्नाऽतिग्राहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ३ ॥

वाग् अध्यात्मपरिच्छिन्नासङ्गास्पदीभूतानृतादिवदनेषु प्रयुक्ता वै प्रसिद्धो ग्रहः । स नाम्ना वक्तव्येन विषयेणातिग्राहेण गृहीतः । वक्तव्यासङ्गेन हि प्रयुक्ता वाक्सर्वानर्थैर्युज्यत इति प्रसिद्धमित्यभिप्रेत्याऽऽह—वाचेति । हि यस्माल्लोको नामव्याप्तविषयावच्छिन्नया वाचा नामान्यभिवदतीत्यर्थः ॥ ३ ॥

जिह्वा वै ग्रहः । स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान् विजानाति ॥ ४ ॥ चक्षुर्वै ग्रहः । स रूपेणातिग्राहेण गृहीतश्चक्षुषा

हि रूपाणि पश्यति ॥ ५ ॥ श्रोत्रं वै ग्रहः । स शब्देनातिग्राहेण गृहीतः श्रोत्रेण हि शब्दान् शृणोति ॥ ६ ॥ मनो वै ग्रहः । स कामेनातिग्राहेण गृहीतो मनसा हि कामान् कामयते ॥ ७ ॥ हस्तौ वै ग्रहः । स कर्मणाऽतिग्राहेण गृहीतो हस्ताभ्याँ हि कर्म करोति ॥ ८ ॥ त्वग्वै ग्रहः । स स्पर्शेनातिग्राहेण गृहीतस्त्वचा हि स्पर्शान् वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥

एवं जिह्वाद्यास्त्वक्पर्यन्ता ग्रहा रसाद्याः स्पर्शपर्यन्ताश्चातिग्रहाः कण्डिकात्रयप्रतिपाद्या वेदितव्याः ॥ ४—९ ॥

एवं ग्रहातिग्रहान् मुक्त्यतिमुक्तिप्रतियोगिभूतान् बन्धनाख्यानभिधाय इदानीमतिमुक्तित्वेनोक्तस्य ज्ञानकर्मफलभूतस्यापि सूत्रपदस्य पूर्वोक्तरीत्या वागाद्यात्मकाग्न्याद्यभिन्नत्वेन ग्रहातिग्रहरूपमृत्य्वात्मकत्वात् ततोऽप्यतिमुक्त्यर्थं तन्मारकं मृत्य्वन्तरं पृच्छति—

याज्ञवल्क्येति होवाच यदिदँ सर्वं मृत्योरन्नं कास्वित्सा देवता यस्या मृत्युरन्नमिति, अग्निर्वै मृत्युः । सोऽपामन्नम् । अप पुनर्मृत्युं जयति ॥ १० ॥

यदिदं व्याकृतं सर्वं मृत्योरन्नं मृत्युना ग्रस्तमुत्पत्तिविनाशशालित्वात् । मृत्युरपि यस्या देवताया अन्नं भवेत्सा देवता कास्विदिति वितर्के । यदि मृत्योरपि मृत्य्वन्तरं मुनिर्ब्रूयात्तर्हि तस्यापि मृत्य्वन्तरमित्यनवस्था स्यात् यदि न ब्रूयात्तदा ग्रहातिग्रहलक्षणान्मृत्योर्मोक्षो नोपपद्यते तस्य मारकाभावादिति प्रष्टुरभिप्रायः । उत्तरमाह—अग्निरिति । अग्निर्वै प्रसिद्धो मृत्युः सर्वान्नभक्षकत्वात् । सोऽप्यग्निरपामन्नम् अद्भिरद्यमानत्वात् । यद्वा अग्निर्हिरण्यगर्भः आपस्तु तत्कारणमव्याकृतम् । 'अग्निर्वै सर्वा देवता आपो वा इदमासन्नि'ति च श्रुतेः । इत्येवं मृत्योरपि मृत्युदृष्टः तद्वत्सर्वमृत्युर्ब्रह्मात्मसाक्षात्कारलक्षणः चरमान्तःकरणवृत्तिरूपः कतकरेणुवत्स्वपरविरोधिभूतो वर्तते, अतो नानवस्थेति भावः । एवमुक्तसर्वमृत्यूत्पादने किं फलमित्यत आह—अप पुनरिति । ब्रह्मात्मसाक्षात्कारेण मृत्युना ग्रहादिविलाससहितानाद्यज्ञानमृत्यौ नाशिते सति विद्वान् पुनर्मृत्युं पुनर्मरणमपजयति निराकरोति तदर्थं नैवोत्पद्यत इत्यर्थः ॥ १० ॥

एतदेवोक्तं फलं विशदीकर्तुं पृच्छति—

याज्ञवल्क्येति । होवाच यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो३ नेति । नेति होवाच याज्ञवल्क्योऽत्रैव समव-नीयन्ते । स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते ॥ ११ ॥

परमात्मसाक्षात्काररूपेण महामृत्युना सविलासाज्ञानमृत्यौ नाशिते सति मुक्तो विद्वानयं पुरुषो यत्र यस्मिन्काले म्रियते तदाऽस्मान्म्रियमाणाद्विदुषः सकाशात्प्राणा वागादयो ग्रहा मुक्तिप्रतिबन्धकीभूतान्तःस्थवासनामयनामाद्यतिग्रहसहिता उदूर्ध्वमुत्क्रामन्ति आहोस्विन्नेति प्लुतिर्विचारणार्था । इति पृष्टे नेति नोत्क्रामन्तीत्युवाच याज्ञवल्क्यः । किं त्वत्रैव परे ब्रह्मण्येकतां गतेऽस्मिन्नेव विदुष्येव समवनीयन्ते प्रविलीयन्त ऊर्मय इव समुद्रे । तर्हि मृतप्रसिद्धिः कथमित्यपेक्षायां तस्या देहविषयत्वादित्याह—स इति । मुक्तदेह उच्छ्वयत्युच्छूनतां प्रतिपद्यते । आध्मायति दृतिवद्बाह्येन वायुना पूर्यते । आध्मातो मृतो निश्चेष्टः शेते । अतो देहस्यैव मरणधर्मतेत्यर्थः ॥ ११ ॥

नन्वेवं प्राणादीनां लयेऽप्यन्यस्य संसारहेतुभूतस्य कर्मादेर्लयश्चेन्न स्यात्तदा विदुषः पुनः संसारापत्तिः । अन्यथा हि मोक्ष इत्यभिप्रायवान् पृच्छति—

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति । नामेत्यनन्तं वै नाम । अनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति ॥ १२ ॥

यत्र यस्मिन्कालेऽयं पुरुषो विद्वान्म्रियते तदैनं किं न जहाति न त्यजतीत्युत्तरमाह—नामेतीति । सर्वमेवैनं जहाति नाममात्रं तु न जहाति । तत्कुतः ? अनन्तं नित्यं वै नाम प्रसिद्धं शुको मुक्त इतिवद् व्यवहारपारम्पर्यात् । ब्रह्मविद्यां स्तोतुं किञ्चिदाह—अनन्ता इति । अनन्ता वै प्रसिद्धा विश्वेदेवा अतस्तन्नामानन्त्याधिकृतान् विश्वान्देवान् यो विद्वान् ब्रह्मास्मीति दर्शनेन आत्मत्वेनोपगच्छति स तेन दर्शनेनानन्तमेव लोकं जयतीत्यर्थः ॥ १२ ॥

अथोक्तग्रहातिग्रहलक्षणमृत्योः किं प्रयोजकं यत्प्रयुक्तेन मृत्युना अविद्वान् बध्यत इति तत्स्वरूपनिर्धारणार्थं पृच्छति—

याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वाग-

प्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीँ् शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते। क्वायं तदा पुरुषो भवतीत्याहर सोम्य हस्तमार्तभागाऽऽवामेवैतस्य वेदिष्यावो न नावेतत्सजन इति। तौ होत्क्रम्य मन्त्रयाञ्चक्राते। तौ ह यदूचतुः कर्म हैव तदूचतुरथ यत्प्रशशँ्सतुः कर्म हैव तत्प्रशशँ्सतुः। पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति। ततो ह जारत्कारव आर्तभाग उपरराम॥ १३॥

यत्र यस्मिन्समयेऽस्य अविदुषः पुरुषस्य शिरःपाण्यादिविशिष्टस्य वाग् वागधिष्ठात्री देवता अग्निमप्येति अपिगच्छति। प्राणो घ्राणस्तदधिष्ठात्री वातमप्येतीति सर्वत्र सम्बध्यते। आत्मशब्देनात्र आत्माभिव्यक्त्यधिष्ठानं हृदयाकाशमुच्यते। तदाकाशं महाकाशमप्येति। तदा तस्मिन् कालेऽयं पुरुषः क कस्मिन्नाश्रितो भवति, किमाश्रितः कार्यकरणसङ्घातमुपादत्त इति पृष्टे उत्तरं वक्तुमुपोद्घातमाह—आहरेति। हे सोम्य हस्तमाहर देहि। हे आर्तभाग आवामेकान्ते गत्वैतस्य त्वत्पृष्टस्य यत्तत्त्वं वेदितव्यं तद्वेदिष्यावः। कुतो यस्मान्नौ आवयोरेतद्वस्तु सजने जनसमुदायसंयुक्ते देशे निर्णेतुं न शक्यते, अत्रानेकवादिविप्रतिपत्तेरित्येवमुक्त्वा यन्निर्णीतं तच्छ्रुतिः स्वमुखेनैवाऽऽचष्टे—तौ हेति। तौ ह याज्ञवल्क्यार्तभागौ सजनदेशादुत्क्रम्य मन्त्रयाञ्चक्राते। आदौ लौकिकवादिपक्षाणामेकैकं परिगृह्य विचारितवन्तौ। तौ ह विचार्य यदूचतुः सर्वानेव स्वभाववादादिपूर्वपक्षानपोह्य तच्छृणु। तत्तत्र विचारावस्थायामेकान्ते स्थित्वा कर्म हैवाऽऽश्रयं पुनः पुनः कार्यकरणोपादानहेतुमूचतुः। न केवलमूचतुरथापि तु कालेश्वराद्यभ्युपगतेषु हेतुषु यत्तौ प्रशशंसतुः कर्मैव ह तत्प्रशशंसतुः। कर्मैव प्रधानं कारणमिति प्रशंसापदोपपादितं प्राधान्यमुपसंहरति—पुण्य इति। यस्मादेवं ग्रहातिग्रहादिरूपकार्यकरणोपादानं कर्म प्रयुक्तमिति निश्चितं तस्मात्पुण्येन शास्त्रविहितेन कर्मणा देवादिषु जायमानः पुण्यः पुण्यात्मा वै भवति। पापेन शास्त्रनिषिद्धेन कर्मणा स्थावरादिषु जायमानः पापः पापात्मा भवति। तत एवं प्रश्ननिर्णयानन्तरं जारत्कारव आर्तभागो मनसाऽपि अचिन्तनीयपराजयोऽयमित्यभिप्रायेण उपरराम॥ १३॥

इति तृतीयाध्याये द्वितीयं ब्राह्मणम्॥ २॥

ननु पुण्योत्कर्षात् फलोत्कर्षप्रसिद्धेर्महापुण्योत्कर्षात् मोक्षो भविष्यतीत्याशङ्कानिरासार्थं तदुत्कर्षस्य व्याप्तिस्तु संसारान्तर्गतसूत्रपदान्तैवेति कथयितुं तद्व्याप्तिमाख्यायिकामनुसृत्य भुज्यब्राह्मणमाह--

अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्यव्रजाम ते पतञ्चलस्य काप्यस्य गृहानैम। तस्याऽऽसीद्दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसीति । सोऽब्रवीत् सुधन्वाऽऽङ्गिरस इति । तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन् स त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति ॥ १ ॥

अथ जारत्कारवोपरमानन्तरम् । भुज्युरिति । नामवान् लेह्यस्यापत्यं लाह्यस्तदपत्यं लाह्यायनिरेनं पप्रच्छेत्यादि पूर्ववत् । स्वविद्याया गुरूपदेशपूर्वकत्वं ज्ञापयितुमाख्यायिकामारचयति—मद्रेष्विति । मद्रेषु देशेष्वध्ययनार्थं व्रतचरणात् चरका विद्यार्थिन ऋत्विजो वा पर्यव्रजाम पर्यटितवन्तः । ते वयं काप्यस्य कपिगोत्रस्य पतञ्चलस्य पतञ्चलनाम्नो गृहानावस्थानैम गतवन्तः । तस्य पतञ्चलस्य दुहिता पुत्री गन्धर्वेण अमानुषेण केनचित्सत्त्वेन गृहीता आविष्टाऽऽसीत् । तं दुहितर्याविष्टं गन्धर्वं प्रति कोऽसि कस्त्वं किं नामाऽसीति सर्वे वयमपृच्छाम । स पुनरस्मान् प्रत्यब्रवीत् नाम्नाऽहं सुधन्वा गोत्रेण आङ्गिरस इति । तत्स्वरूपं ज्ञात्वा तं गन्धर्वं प्रति यदा यस्मिन्काले लोकानामन्तान् अवसानानि अपृच्छाम अथ तदैनं गन्धर्वं प्रति पारिक्षिताः परितो दुरितं क्षीयते येन स परिक्षिदश्वमेधस्तद्याजिनः पारिक्षिता क्वाभूवन् क गता बभूवुरित्यब्रूम । पृष्टवन्तो वयमित्यतः क्व पारिक्षिता अभवन्निति प्रश्नस्य गन्धर्वदत्तोत्तरज्ञः सोऽहं हे याज्ञवल्क्य क पारिक्षिता अभवन्निति त्वा त्वां पृच्छामि । मम गन्धर्वोपदिष्टं त्वं चेज्जानासि तर्हि वद, नो चेत्त्वमज्ञानादिना निगृहीत इति भावः ।। १ ।।

तां परिहर्तुमिच्छन्--

स होवाचोवाच वै सोऽगच्छन् वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति। क्व न्वश्वमेधयाजिनो गच्छन्तीति। द्वात्रिँ शतं वै देवरथाह्न्यान्ययं लोकस्तँ समन्तं पृथिवीं द्विस्तावत्

पर्येति ताँ᳭ समन्तं पृथिवीं द्विस्तावत्समुद्रः पर्येति। तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाऽऽकाशः। तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्। तान्वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनोऽभवन्निति। एवमिव वै स वायुमेव प्रशशँ᳭स। तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिः। अप पुनर्मृत्युं जयति य एवं वेद। ततो ह भुज्युर्लाह्यायनिरुपरराम ॥ २ ॥

स याज्ञवल्क्यो ह भुज्युं प्रति गन्धर्वोक्तप्रयुक्तिमुवाच। हे भुज्यो स गन्धर्वस्तुभ्यमिति वै उवाच। इतीति। किं त इदानीन्तनाः पारिक्षितास्तत्राऽऽगच्छन् यत्र पूर्वतना अश्वमेधयाजिनो गच्छन्ति। पूर्वतना अश्वमेधयाजिनः क्व नु कुत्र गच्छन्तीति पृष्टे तदुक्तुं तावद्भुवनकोशपरिमाणमाह—द्वात्रिंशतमिति। देव आदित्यस्तस्य रथो देवरथस्तस्यैकाहोरात्रावच्छिन्नगतिवेगेन यावान्देशो मीयते तावान्देश एकदेवरथाह्न्यं तस्य द्वात्रिंशत्संख्यया गणने कृते सति द्वात्रिंशतं वै प्रसिद्धानि देवरथाह्न्यानि भवन्त्येतावत्परिमाणोऽयं ससागरः सर्वप्राणिभोगहेतुभूतो लोको लोक्यते सूर्यादिभिः प्रकाश्यत इति लोकोऽतः परमलोकस्तं च लोकं समन्तं समन्ततः पृथिवी द्विस्तावल्लोकपरिमाणाद् द्विगुणपरिमाणा पर्येते परितो व्याप्य तिष्ठति। तां च पृथिवीं पृथिवीपरिमाणात् द्विस्तावद् द्विगुणपरिमाणः समुद्रः समन्त पर्येति व्याप्नोति। अयं तु समुद्रो घनोदक इति पुराणे प्रसिद्धः। एवमुक्तस्य ब्रह्माण्डस्य कपालयोर्विवरपरिमाणं सदृष्टान्तमाह—तदिति। तत्तत्र व्यवहारभूमौ यावती यावत्परिमाणा क्षुरस्य धाराऽग्रं वा अथवा यावत्सौक्ष्म्येण युक्तं मक्षिकायाः पत्रं पक्षस्तावत्परिमाणः कपालयोरन्तरेण मध्य आकाशोऽवकाशः। यद्विवक्षयेदं सर्वमुक्तं तदाह—तानिति। तेनाऽऽकाशद्वारेण तान् पारिक्षितानिन्द्रो विराडात्मभूतोऽश्वमेधे श्येनाकारेण चितोऽग्निः सुपर्णः पक्षपुच्छाद्यात्मकः पक्षी भूत्वा वायवे प्रायच्छत् प्रदत्तवान् स्वस्य स्थूलत्वेनोक्तच्छिद्रद्वारा बहिर्गमनासंभवात्। वायुः पुनस्तान् पारिक्षितानात्मनि स्वस्मिन् धित्वा स्थापयित्वा स्वात्मभूतान् कृत्वा तत्रागमयद्यत्र पूर्वेऽति-

कान्तकालिका अश्वमेधयाजिनोऽभवन्निति । एवमाख्यायिकया निर्णीतमर्थं मुनिरुपसंहरति--एवमिति । हे भुज्यो, एवमिव एवमेव वै स गन्धर्वस्तुभ्यं वायुमेव सूत्रमेव पारिक्षितगतिस्थानं प्रशशंस प्रकर्षेण कथयामासेति समाप्तं मुनिवचनम् । एवमाख्यायिकानिर्वृत्तमर्थं श्रुतिः स्वमुखेनैवास्मभ्यं कथयति--तस्मादित्यादिना । यत्राऽभवन्नित्यत्रस्थ इतिशब्द आख्यायिकासमाप्त्यर्थः । ते पूर्वेऽपि केत्यादिप्रकृतप्रश्नस्यैव शेषभूतं श्रुतिरेव स्वमुखेनाऽऽह--एवमिति । एवमिव एवमेव स गन्धर्वो वायुमेव क्रियाशक्तिप्रधानं सूत्रमेव प्रशशंस संस्तावयामास अस्यैवास्मिंश्चराचरे जगति सामान्यविशेषरूपेणान्तर्बहिश्च व्याप्यावस्थानाद्देवतान्तराणां स्वाण्डाद्बहिर्गमनाशक्तेः यस्मादेवं तस्माद्वायुरेव व्यष्टिरध्यात्माधिभूताधिदैवविभागेन व्यावृत्तरूपा विविधाऽष्टिर्व्याप्तिः । तथा वायुरेव समष्टिः समाऽनुगतरूपा केवलेन सूत्रात्मनाऽष्टिर्व्याप्तिः । एतद्विज्ञानफलमाह- अपेति । य एवं समष्टिव्यष्टिरूपवाय्वात्मकत्वेन । आत्मानं वेद उपगच्छति स पुनर्मृत्युं पुनर्मरणमपजयति तावद्यावत्तत्रावस्थानं न सर्वथा । ततो ह भुज्युर्लाह्यायनिरुपरराम । अतः स एवाप्रतिभारूपं निग्रहं प्राप्त इत्यर्थः ॥ २ ॥

इति तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

एवं यद्बोधात् पुण्यपापप्रयुक्तैर्ग्रहातिग्रहैर्ग्रस्तस्तान् अनवरतं त्यजन्नुपाददच्च आब्रह्मस्थावरं पुण्योत्कर्षादत्यविमुच्यमानः संसरत्येवेति ब्राह्मणत्रयेणोक्तम् । इदानीमस्य तदात्मैक्यबोधार्थमध्यायशेषः प्रवर्तते । तत्रैवं संसरतो मुमुक्षोरत्राधिकृतस्य किं वास्तवस्वरूपमिति जिज्ञासायां देहेन्द्रियाद्यतिरिक्तागौणब्रह्माभिन्नं प्रत्यगात्मत्वमिति तत्स्वरूपनिर्णयाय उषस्तब्राह्मणारम्भः--

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद् ब्रह्म । य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति । एष त आत्मा सर्वान्तरः । कतमो याज्ञवल्क्य सर्वान्तरः । यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तरो यो व्यानेन व्यानिति स त आत्मा सर्वान्तरो य उदानेनोदानिति स त आत्मा सर्वान्तरः । एष त आत्मा सर्वान्तरः ॥ १ ॥

अथानन्तरं चक्रस्यापत्यं चाक्रायण उषस्तनामा ब्राह्मण एनं पप्रच्छे-त्याद्युक्तार्थम् । यदिति परमात्मतत्त्वं विशेष्यं तस्यापरोक्षादित्यन्तं विशेषणं परोक्षत्वादिभ्रमव्युदासार्थम् । य इति जीवात्मा विशेष्यस्तस्य सर्वान्तर इति विशेषणं परिच्छिन्नत्वादिभ्रमव्यावृत्त्यर्थम् । तथा च यद्ब्रह्म बृहत्तमं साक्षात्स्वरूपत एवापरोक्षादपरोक्षं न तु घटादिवद्वृत्तिव्याप्यत्वेन । यद्वा साक्षादगौणं न तु मनो ब्रह्मेत्यादिवद्गौणम् । तदेव प्रत्यगात्मेत्याह--य इति । य आत्मा प्रत्यगात्मा सर्वान्तरः सर्वस्याभ्यन्तरस्तं ब्रह्माभिन्नं प्रत्यगात्मानं मे मह्यं व्याचक्ष्व विस्पष्टं कथय शृङ्गे गृहीत्वा गामिव दर्शयेति यावत् । तथा चोक्तविशेषणैः शोधितयोस्तत्त्वंपदार्थयोर्यद्य इति शब्दाभ्यां सामानाधिकरण्यादनुगतचिद्धातुप्रत्यगात्मत्वं जीवस्य स्वाभाविकं स्वरूपं पृष्टमिति भावः । उत्तरमाह--एष त आत्मा सर्वान्तर इति । एतद्विशेषणं साक्षादित्यादिविशेषणानामुपलक्षणपरम् । तथा च य उक्तविशेषणरुपलक्षितो ब्रह्मात्मैकत्वलक्षणः स एष ते तव कार्यकरणसङ्घातस्याऽऽत्मा । पुनः पृच्छति--कतम इति । हे याज्ञवल्क्य स्थूलसूक्ष्मदेहबुद्धिसाक्षिषु मध्ये कतमः सर्वान्तरः सर्वान्तरत्वादिविशेषणविशिष्टस्तवाभिमत इति पृष्टे चरमपक्षं गृहीत्वोत्तरमाह—य इति । यः प्राणेन मुखनासिकासञ्चारिणा प्राणिति प्राणचेष्टां करोति येनाचेतनः प्राणः प्राणनक्रियाविशिष्टो दारुयन्त्रस्येव क्रियत इति यावत् । स ते तव कार्यकरणसङ्घातस्योक्तविशेषणविशिष्टो विज्ञानमयः । एवं योऽपानेनेत्यादि व्याख्येयम् । व्यानितीत्यादौ दैर्घ्यं छान्दसम् । एवमुपादितं स्वरूपमुपसंहरति--एष त इति । यः प्रसिद्धः कार्यकरणसङ्घातप्रेरयिता स एष ते तव सङ्घातस्य आत्मा सर्वान्तरः साक्षी विज्ञानमय इत्यर्थः ॥ १ ॥

प्रश्नप्रतिवचनयोर्वैयधिकरण्यमाशङ्कते--

**स होवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद् व्यपदिष्टं भवति । यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति । एष त आत्मा सर्वान्तरः । कतमो याज्ञवल्क्य सर्वान्तरः । न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारँ शृणुयात् न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः ।**

एष त आत्मा सर्वान्तरः । अतोऽन्यदार्तम् । ततो होषस्त-श्चाक्रायण उपरराम ॥ २ ॥

स होवाच उषस्तश्चाक्रायणो हे मुने यथा कश्चिद् गामश्वं वा प्रत्यक्षं दर्शयामीति पूर्वं प्रतिज्ञाय पश्चाद्यश्चलत्यसौ गौः, यो धावत्यसावश्व इति चलनादिलिङ्गैः विब्रूयाद्व्यपदिशेत् । एवमात्मानं प्रत्यक्षं दर्शयामीति मत्प्रश्नानुसारेण प्रतिज्ञाय पश्चात्प्राणनादिलिङ्गैरेतदात्मस्वरूपं व्यपदिष्टं भवति । तथा च ते प्रतिज्ञाहान्यादिनिग्रहस्थानं स्यात् । अतस्त्वं गोतृष्णानिमित्तं छलवादं परित्यज्य मत्प्रश्नानुसार्युत्तरं वदेत्यभिप्रायवान् पूर्वोक्तं प्रश्नमनुवदति—यदेवेत्यादि व्याचक्ष्वेत्यन्तेन । मया तु पूर्वकृता प्रतिज्ञाऽनुवर्त्यत एवेत्याशयवान्पूर्वोक्तमुत्तरमनुवदति—एष त आत्मा सर्वान्तर इति । नन्वसौ गौरसावश्व इतिवत् प्रत्यक्षेण असावात्मेति दर्शयेति मत्प्रश्नो नानुसृतः स्यादित्याशयवान्पूर्वोक्तं प्रश्नान्तरमनुवदति—**कतमो याज्ञवल्क्यः सर्वान्तर** इति । सत्यमेतादृशश्चेत्तव प्रश्नस्तर्हि नैवानुसृत आत्मनस्तद्विषयत्वेन तथा द्रष्टुमशक्यत्वादित्यभिप्रेत्याऽऽह—नेति । दृष्टेर्दर्शनवृत्तेरनित्याया लौकिक्या द्रष्टारमलौकिक्या स्वात्मरूपया नित्यदृष्ट्या व्याप्तारं हे उषस्त त्वं न पश्येर्न पश्यसि न कदाचिदपि विषयत्वेन तव दृष्टेर्द्रष्टा स्यादिति । तथा श्रुतेः श्रवणवृत्तेर्मतेः केवलाया मनोवृत्तेर्विज्ञातेः केवलाया बुद्धिवृत्तेः । शेषं सुबोधम् । एवमुक्तदृष्ट्यादिसाक्षिणोऽन्यत्किञ्चिद्वास्तवं नास्तीत्युपसंहरति—**एष त आत्मा सर्वान्तर इति** । अतोऽस्मादुक्तरूपादात्मनोऽन्यदार्तं विनाशि रज्जुसर्पादिवन्मिथ्याभूतमिति यावत् । ततो होषस्तश्चाक्रायण उपररामेति पूर्ववदित्यर्थः ॥ २ ॥

इति तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

ब्राह्मणत्रयेण सप्रयोजकं बन्धनमभिहितम् । चतुर्थे च बद्धस्यास्तित्वव्यतिरिक्तत्वे विनिश्चितम् । अधुना तस्य सहेतुबन्धध्वंसि ससंन्यासं सम्यग्ज्ञानं वक्तुं कहोलब्राह्मणमारभ्यते—

अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद् ब्रह्म । य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति । एष त आत्मा सर्वान्तरः । कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति । एतं वै

तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति । या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा । उभे ह्येते एषणे एव भवतः । तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्तम् । ततो ह कहोलः कौषीतकेय उपरराम ॥ १ ॥

अथानन्तरं हैनं कहोलो नामतः कुषीतकस्यापत्यं कौषीतकेयः पप्रच्छेत्यादि समानम् । किञ्चिद्विशेषकथनाय पूर्वोक्ते एव प्रश्नप्रतिवचने अनुवदति—'यदेव साक्षादि'त्यारभ्य 'योऽशनाये'त्यन्तः प्राक्तनेन ग्रन्थेन । अत्र यदेवेत्येवकारप्रक्षेपस्तु य एवाऽऽत्मा उषस्तेन पृष्टस्तमेवाहं पृच्छामीति विद्यैक्यद्योतनार्थः । यद्विशेषकथनाय अयमनुवाद तं पूर्वानुक्तं विशेषमाह—य इति । योऽशनाया अशितुमिच्छाऽशनाया, पातुमिच्छा पिपासा ते अशनायापिपासे अत्येति । शोकशब्देन अरतिवाचिना तत्कार्यभूतः कामोऽत्रोच्यते । मोहो विपरीतप्रत्ययप्रभवो मनस्यविवेको भ्रमादिशब्दवाच्यः । जरा शरीरगतो विपरिणामः । तदवसानभूतः शरीरस्य विच्छेदो मृत्युः समस्तमत्येति अतिक्रामतीति प्रत्येकं सम्बध्यते, स एष त आत्मा सर्वान्तर इत्यर्थः । एवमुक्तज्ञानाङ्गं संन्यासं विदधाति—एतं वै तमित्यादिना । तमित्युषस्तब्राह्मणोक्तलक्षणं त्वंपदार्थरूपं परामृशति । एतमिति कहोलब्राह्मणोक्तमशनायादिरहितं तत्पदार्थरूपं परामृशति । सामानाधिकरण्यात्तु सिद्धमेकत्वं वैशब्दोऽवधारयति । तथा चैतमेव तं तमेवैतमित्येवं ब्रह्मैक्यरूपमात्मानं सर्वसंसारविनिर्मुक्तं नित्यतृप्तमहमेवास्मीति श्रुत्याचार्याभ्यां विदित्वा ज्ञात्वा ब्राह्मणा ब्रह्मनिष्ठा ब्राह्मण्यजातिमन्तो वा । पुत्रार्थमेषणा पुत्रोत्पत्तिमुद्दिश्य दारग्रहणेच्छालक्षणा । उपासनागवादिलक्षणदैवमानुषवित्तोपादानं वित्तैषणा । लोकैषणा पुत्रेणेमं लोकं जेष्यामि केवलकर्मणा पितृलोकमुपासनासहितेन केवलया वा तया देवलोकमिति बुद्ध्या तत्साधनानुष्ठानम् । एताभ्य एषणाभ्यो व्युत्थाय वैपरीत्येनोत्थाय संन्यासं कृत्वा अथानन्तरं शेषकाले देहस्थित्यर्थं

भिक्षाचर्यं भित्तार्थं चरणं संचरणं चरन्ति कुर्वन्ति । फलेच्छा साधनं संक्रामतीति न्यायात् लोकैषणैवैकेत्याह--येति । या हि प्रसिद्धा पुत्रैषणा सैव वित्तैषणा दृष्टफलसाधनत्वादिसामान्यात् । या पुत्रैषणयैकत्वमापन्ना वित्तैषणा कर्मभूता सा लोकैषणैव साध्यलोकैषणाप्रयुक्तत्वात्साधनैषणायाः । एवमेकत्वेऽपि लोकैषणायाः साधनमन्तरेणासिद्धेः साध्यसाधनभेदेन द्वैविध्यमाह--उभे इति । हि यस्मादुभे एते साध्यसाधनरूपे एषणे एव भवत इति । यस्मात्पूर्वे ब्राह्मणा क्रमेण तमेतमात्मानं विदित्वा व्युत्थानादि चक्रुस्तस्मादद्यतनोऽपि ब्राह्मण आपातदर्शी एषणाभ्यो व्युत्थाय पाण्डित्यं शास्त्रोत्था बुद्धिः पण्डा तद्वान् पण्डितस्तस्य कर्म वेदान्तवाक्यविचारलक्षणं श्रवणापरपर्यायं पाण्डित्यं निर्विद्य निःशेषं कृत्वाऽनन्तरं बाल्येन तिष्ठासेत् श्रवणज्ञानोत्पन्नाशेषानात्मदृष्टितिरस्करणसामर्थ्यं बलं तस्य भावो बाल्यं तेन ज्ञानबलभावेन विषयानाकृष्टचित्तः संस्तिष्ठासेत् स्थातुमिच्छेत् । बाल्यशब्दाभिधेयं मननं कुर्यादिति यावत् । बाल्यं च पाण्डित्यं च निर्विद्य निःशेषं कृत्वाऽथानन्तरं मुनिर्मौनवान् धारावाहिकात्मप्रत्ययप्रवाहवान् तिष्ठासेदित्यनुषज्यते निदिध्यासनं कुर्यादिति यावत् । एवममौनं चोक्तार्थपाण्डित्यबाल्यशब्दाभिधेयं श्रवणमननाख्यं निर्विद्य मौनं चोक्तार्थमुनिशब्दवाच्यं निदिध्यासनाख्यं निर्विद्य अथाऽनन्तरं ब्राह्मणो निरुपचरितब्राह्मण्यवान् साक्षात्कृतब्रह्म व स्यात्कृतकृत्यो भवेदिति यावत् । उक्तब्राह्मण्यसाधनं साधनान्तरशङ्कया पृच्छति-स इति । स ब्राह्मणः केन साधनेन स्यात् ? उत्तरमाह—येनेति । तेन उक्तनैष्कर्म्यसाधनेन स्याद्येनानवाप्तज्ञानोऽपीदृश उक्तब्राह्मणसदृश एव भवेत् । उक्तं ब्रह्मैक्यमुपसंहरति–अत इति । अतोऽस्माद् ब्राह्मण्यावस्थानात् अशनायाद्यतीतात्मरूपादन्यदेषणालक्षणं वस्त्वन्तरमार्तमार्तिपरिगृहीतं स्वप्नमायामरीच्युदकादिवदसारमित्यर्थः ॥ १ ॥

इति तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

यः सर्वान्तर इत्युक्तस्तन्निर्णयार्थं शाकल्यब्राह्मणात्प्राक्तनं ब्राह्मणत्रयं प्रवर्तते । तत्रानात्मभूतान् सर्वपदार्थांस्तावद् गार्गी ब्राह्मणेनाऽऽह—

अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिदँ सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति । कस्मिन्न खलु वायुरोतश्च प्रोत-

श्चेत्यन्तरिक्षलोकेषु गार्गीति । कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति । कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति । कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति । कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति । कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति । कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति । कस्मिन्नु खल्विन्द्र-लोका ओताश्चप्रोताश्चेति प्रजापतिलोकेषु गार्गीति । कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति । कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति । स होवाच गार्गि माऽतिप्राक्षीर्मा ते मूर्धा व्यपप्तदनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि माऽतिप्राक्षीरिति । ततो ह गार्गी वाचक्नव्युपरराम ॥ १ ॥

अथानन्तरमेनं मुनिं गार्गी नामतो वचक्नोर्दुहिता वाचक्नवी पप्रच्छ इत्यादि पूर्ववत् । किम् ? हे मुने यदिदं सर्वं भूभूधरादि पार्थिवं धातु-जातमप्सु उदके स्वकारणे ओतं च दीर्घतन्तुवत्प्रोतं च तिर्यक्तन्तुवत्, अन्यथा सक्तुमुष्टिवद्विशीर्येत । तथा च यथेयं पञ्चीकृता पृथिवी कार्यत्वात् स्वकारणभूतासु पञ्चीकृतास्वप्सु ओतप्रोता तद्वदपामपि कार्यत्वात् । कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेत्यनुमानविधया पृष्ट उत्तरमाह-वायाविति । हे गार्गि वायौ पञ्चीकृत ओताश्च प्रोताश्च । कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु पक्ष्यादिगतिहेतुभूतेषु पञ्चीकृतभूतात्मकेषु आकाशे-ष्वित्यादौ । सर्वत्रैकैकस्मिन्नपि बहुवचनं त्वारम्भकभूतानां बहुत्वा-पेक्षया । प्रजापतिलोका विराट्शरीरारम्भकपञ्चीकृतपञ्चमहाभूतात्मका ब्रह्मलोकेषु हिरण्यगर्भलोकेषु अपञ्चीकृतपञ्चभूतात्मकेषु । समानमन्यत् । एवं ब्रह्मलोकाश्रयं सूत्रात्मानमपि पृच्छन्तीं निषेधयति-स इति । स याज्ञवल्क्यो होवाच । किम् ? हे गार्गि यस्यां ब्रह्मलोका ओतप्रोतभावेन

वर्तते तां प्राणात्मभूतां सूत्रदेवतामानुमानिकत्वप्रश्नविषयतामतीत्य वर्तमानामनुमानेन मा प्राक्षीर्मा पृच्छ । निषेधातिक्रमणे दोषमाह—मा व इति । पृच्छन्त्याश्च ते तव मूर्धा शिरो मा व्यपप्तद्विस्पष्टं मा पतेत् । तत्पातप्रसङ्गं प्रकटन्प्रतिषेधमुपसंहरति—अनतिप्रश्न्यामिति । देवतायाः स्वप्रश्न आगमविषयस्तमतिक्रान्तो गार्ग्याः प्रश्न आनुमानिकत्वात्स प्रश्नो यस्या इन्द्रादिदेवताया विद्यते साऽतिप्रश्न्या । इयं तु नातिप्रश्न्याऽनतिप्रश्न्या स्वप्रश्नविषयैव केवलागमगम्येति यावत् । तामनतिप्रश्न्यां सूत्रदेवतां वा अतिपृच्छसि । अतो गार्गि मर्तुं चेन्नेच्छसि तर्हि मा प्राक्षीरित्यनुग्रहार्थो निषेधः । ततो ह गार्गी वाचक्नव्युपररामेत्युपसंहारः पूर्ववत् ॥ १ ॥

इति तृतीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

एवं सूत्रादर्वाक्तनं व्यापकमुक्त्वेदानीं तदागमैकगम्यं सूत्रं तदन्तर्गतमन्तर्यामिणं च जगज्जन्मादिहेतुभूतं वक्तुमन्तर्यामिब्राह्मणमारभ्यते—

अथ हैनमुद्दालक आरुणिः पप्रच्छ । याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्याऽऽसीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति । सोऽब्रवीत्कबन्ध आथर्वण इति । सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाँ्श्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्तीति । सोऽब्रवीत्पतञ्चलः काप्यो नाहं तद्भगवन्वेदेति । सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाँ्श्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोकँ् सर्वाणि च भूतानि योऽन्तरो यमयतीति । सोऽब्रवीत्पतञ्चलः काप्यो नाहं तं भगवन्वेदेति । सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाँ्श्च यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति स ब्रह्मवित्स लोकवित्स देववित्स वेदवित्स भूतवित्स आत्मवित्स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं

याज्ञवल्क्य सूत्रमविद्वाँ्स्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति। वेद वा अहं गौतम तत्सूत्रं तं चान्तर्यामिणमिति। यो वा इदं कश्चिद् ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥ १ ॥

नामतोऽरुणस्यापत्यमारुणिः, पप्रच्छेत्यादि पूर्ववत्। स्वस्य सूत्रादिविद्याया गुरुपूर्वकत्वेनाऽऽगमविषयत्वं ज्ञापयितुमाख्यायिकामारचयति—मद्रेष्विति। मद्रेषु देशेषु अवसाम उषितवन्तो वयं पतञ्चलनाम्नः काप्यस्य कपिगोत्रस्य गृहेषु यज्ञमधीयाना यज्ञशास्त्राध्ययनं कुर्वाणाश्छात्रा आस्म। तस्य पतञ्चलस्य भार्या गन्धर्वेणामानुषेण सत्त्वविशेषेण गृहीताऽऽविष्टाऽऽसीत्। तं गन्धर्वं पतञ्चलसहिता वयं याज्ञिकास्त्वं कोऽसीत्यपृच्छाम। एवं पृष्टः स गन्धर्वोऽस्मभ्यमब्रवीत्। किम्? अहं नाम्ना कबन्धोऽथर्वणोऽपत्यमाथर्वण इति। स गन्धर्वः पतञ्चलं काप्यं याज्ञिकांश्च प्रत्यब्रवीत्। किं हे काप्य तत्सूत्रं त्वं नु वितर्के वेत्थ जानीषे। किं तत्सूत्रमित्याकाङ्क्षायां तद्विशिनष्टि—येनेति। येन सूत्रेणायं च लोक इदं च जन्म, परश्च लोकः परं च जन्म, सर्वाणि च भूतानि ब्रह्मादिस्तम्बपर्यन्तानि संदृब्धानि संग्रथितानि भवन्तीति पृष्टः स पतञ्चलः काप्योऽब्रवीत्। किं हे भगवन्पूजावन्नहं तत्सूत्रम् न वेदेत्युक्ते स गन्धर्वः पुनः पतञ्चलं काप्यं याज्ञिकांश्चास्मान्प्रत्यब्रवीत्। किं हे काप्य त्वं तं सूत्रान्तर्गतमन्तर्यामिणं वेत्थ नु। कोऽसावन्तर्यामीत्याकाङ्क्षायां तं विशिनष्टि। य इमं च लोकं परं च लोकं सर्वाणि च भूतानीत्युक्तार्थम्। योऽन्तरोऽभ्यन्तरः सन् यमयति नियमयति दारुयन्त्रमिव भ्रमयति। स्वं स्वमुचितव्यापारं कारयतीति यावत्। अत्र प्रथमयच्छब्दस्तमित्यनुवादार्थः। एवमुक्तः स पतञ्चलः काप्यो हे भगवन्निति विनयेनाब्रवीन्नाहं तं सूत्रान्तर्गतमन्तर्यामिणं वेदेति। विनयं दृष्ट्वा स गन्धर्वः स्वस्याऽऽचार्यत्वकामः सत्फलेन प्रलोभयितुं पतञ्चलं काप्यं याज्ञिकांश्चाब्रवीत्। किं हे काप्य तत्सूत्रं तं सूत्रनियन्तृत्वेन तदन्तर्गतमन्तर्यामिणं चोक्तप्रकारकं यो वै कश्चिद्विद्यात्स ब्रह्मवित्परमात्मवित्स लोकान् भूरादीनन्तर्यामिणा नियम्यमानान् वेत्ति। स देवांश्चाग्न्यादीन् लोकिनस्तेन नियम्यमानान्वेत्ति। स वेदांश्च सर्वप्रमाण-

भूतान्वेत्ति । स भूतानि ब्रह्मादीनि सूत्रेण ध्रियमाणानि तदन्तर्गतेनान्तर्यामिणा नियम्यमानानि वेत्ति । स आत्मानं च कर्तृभोक्तृत्वविशिष्टमन्तर्यामिणा नियम्यमानं वेत्ति । स सर्वं च जगत्ताभ्यां विधार्य नियम्यमानं वेत्तीति । तेभ्य एवं सूत्रान्तर्यामिफलश्रुत्याऽभिमुखीभूतेभ्य आचार्यमुख्येभ्योऽस्मभ्यं गन्धर्वः सूत्रान्तर्यामिणो स्वरूपमब्रवीत्तत्स्वरूपमहं वेद गन्धर्वाल्लब्धागमः सञ्जानामि । किमेतावतेत्यत आह—हे याज्ञवल्क्य चेद्यदि त्वं तदुक्तविशेषणविशिष्टं सूत्रं तदन्तर्यामिणं चाविद्वानब्रह्मवित्सन् ब्रह्मगवीर्ब्रह्मविदां स्वभूता गा अन्यायेन उदजसे उन्नयसि तर्हि मच्छापदग्धस्य ते तव मूर्धा शिरो विपतिष्यतीति । एवमुक्तो याज्ञवल्क्य आह—वेदेति । गौतम इति गोत्रं यस्य स गौतमस्तत्सम्बोधनं हे गौतमोद्दालकोऽहं तत्सूत्रं तं चान्तर्यामिणं वेदेत्युक्ते गौतमः प्रत्याह—य इति । वेद वेदेतीदं वै यः कश्चित्प्राकृतोऽपि ब्रूयादात्मानं श्लाघयन् किं तेन गर्जितेन यथा वेत्थ जानासि तथा ब्रूहीति ॥ १ ॥

स होवाच वायुर्वै गौतम तत्सूत्रम् । वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति । तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रँ्सिषतास्याङ्गानीति । वायुना हि गौतम सूत्रेण संदृब्धानि भवन्तीति । एवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ॥ २ ॥

स एवमुक्तो याज्ञवल्क्यो होवाच । किम् ? हे गौतम तद् गन्धर्वोक्तं सूत्रं वायुर्वै वायुरेव । तथा च समष्टिव्यष्टिरूपेण सामान्यविशेषसर्वकर्मतदाश्रयत्वाद्वायोरात्मीयाभिमानिलिङ्गतादात्म्यापन्नो जीवोऽत्र फलरूपो वायुरुच्यते, न तु वायुमात्रं तस्य विधारणेऽस्वातन्त्र्यात् । उक्तस्य वायुतत्त्वस्य सूत्रत्वं विद्वत्प्रसिद्ध्या साधयति—वायुना वै गौतमेत्यादिनोक्तार्थेन । पुनर्लोकप्रसिद्ध्याऽपि तत्साधयति—तस्मादिति । हे गौतम यस्मात्सूत्रात्मकेन वायुना सर्वं विधृतं तस्मात्प्रेतं मृतं पुरुषं शरीरं मृतलक्षणज्ञा आहुः कथयन्ति । किमस्य मृतस्याङ्गानि करचरणादीनि व्यस्रंसिषत विशीर्णान्यभवन् , सूत्रापगमे मणय इवेत्यतो हे गौतम समष्टिप्राणात्मकेन वायुनैव सूत्रेण अङ्गादीनि संदृब्धानि संग्रथितानि भवन्तीति निगमितं निरूपितं सूत्रस्वरूपमङ्गीकृत्य उद्दालकोऽन्तर्यामिस्वरूपं पृच्छति—एवमिति । एतत्सूत्रस्वरूपमेवमेव सम्यगुक्तं हे याज्ञवल्क्येदानीं सूत्रगतमन्तर्यामिणं ब्रूहीति ॥ २ ॥

एवमुक्त आह—

यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद । यस्य पृथिवी शरीरम् । यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ३ ॥

यः पृथिव्यां तिष्ठन् वर्तमानो भवति सोऽन्तर्यामीत्युक्ते पृथिव्यवस्थितानां सर्वप्राणिनामन्तर्यामित्वप्रसङ्गस्तद्व्यावृत्त्यर्थं विशिनष्टि— पृथिव्या अन्तरोऽभ्यन्तर इति । तथाऽप्येतादृशपृथिव्यभिमानिदेवतायामतिप्रसङ्गः, तस्याश्च नियम्यमानसूत्रात्मकत्वान्नान्तर्यामित्वमतो विशिनष्टि— यं पृथिवी पृथिव्यभिमानिदेवता न वेद मय्यन्यः कश्चिद्वर्तत इति न जानाति । नन्वियं हि पृथिवी देवता कार्यकरणवती तस्यामन्योऽपि नियन्ता चेत्सोऽपि राजादिवत्तद्वान् वाच्यः । तथा च नासौ ईश्वरोऽस्मदादिवदित्यत आह—यस्येति । पृथिवी पृथिवीदेवताया यच्छरीरं तदेव शरीरं यस्यान्तर्यामिणो नस्वतः । शरीरग्रहणं करणानामप्युपलक्षणपरम्, 'न तस्य कार्यं करणं च विद्यत' इति मन्त्रवर्णात् । नन्वेतादृशोऽन्तर्याम्येव नास्ति तत्सत्तायां प्रमाणाभावादित्याशङ्कायां 'भीषाऽस्माद्वातः पवते' 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यावि'त्यादिश्रुतिप्रमाणमभिप्रेत्याऽऽह—य इति । य ईश्वरोऽभ्यन्तरः सन् पृथिवीं पृथिव्यभिमानिनीं देवतां सूत्रात्मभूतां यमयति स्वव्यापारे तत्कर्मसाक्षितया नियमेन प्रवर्तयत्येष ते तव कार्यकरणसङ्घातस्य आत्माऽन्तर्याम्यमृतः सर्वसंसारधर्मवर्जित इत्यर्थः ॥ ३ ॥

योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्याऽऽपः शरीरं योऽपोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ४ ॥

योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ५ ॥

योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षँ शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ६ ॥ यो वायौ तिष्ठन् वायोरन्तरो

यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ७ ॥ यो दिवि तिष्ठन्दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ८ ॥ य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्माऽऽदित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ९ ॥ यो दिक्षु तिष्ठन् दिग्भ्योन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयत्येव त आत्माऽन्तर्याम्यमृतः ॥ १० ॥ यश्चन्द्रतारके तिष्ठंश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकँ शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ११ ॥ य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याऽऽकाशः य आकाशमन्तरो यमयत्येष त आत्मा अन्तर्याम्यमृतः ॥१२॥ यस्तमसि तिष्ठँस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १३ ॥ यस्तेजसि तिष्ठँस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इत्यधिदैवतम् ॥ १४ ॥

एवमेव योऽप्सु तिष्ठन् योऽग्नौ योऽन्तरिक्षे यो वायौ यो दिवि य आदित्ये यो दिक्षु यश्चन्द्रतारके य आकाशे यस्यमसि बाह्य आवरणात्मके यस्तेजसीत्यधिदैवतमन्तर्यामिविषयं दर्शनं देवतासूक्तमित्यर्थः ॥ ४–१४ ॥

अथाभिभूतम् । यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरो

यँ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इत्यधिभूतम् ॥ १५ ॥

अथानन्तरमधिभूतं भूतेष्वन्तर्यामिविषयदर्शनमुच्यत इत्यर्थः। यः सर्वेषु भूतेष्वित्यधिभूतमधिभूतेषु ब्रह्मादिस्तम्बपर्यन्तेष्वन्तर्यामिदर्शनमुक्तम् ॥ १५ ॥

अथाध्यात्मम्। यः प्राणे तिष्ठन्प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥१६॥ यो वाचि तिष्ठन्वाचोऽन्तरोयं वाङ् न वेद यस्य वाक्शरीरं यो वाचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १७ ॥ यश्चक्षुषि तिष्ठँश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः॥ १८ ॥ यः श्रोत्रे तिष्ठन् श्रोत्रादन्तरो यँ श्रोत्रं न वेद यस्य श्रोत्रँ शरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥१९॥ यो मनसि तिष्ठन्मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनो मनोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥२०॥ यस्त्वचि तिष्ठँस्त्वचोऽन्तरो यं त्वङ् न वेद यस्य त्वक्शरीरं यस्त्वचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २१ ॥ यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानँ शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २२ ॥ यो रेतसि तिष्ठन् रेतसोऽन्तरो यँ रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्तोऽतोऽस्ति विज्ञाता। एष त आत्माऽन्तर्याम्यमृतोऽतो-

ऽन्यदार्तम् । ततो होद्दालक आरुणिरुपरराम ॥ २३ ॥

अथाध्यात्मम् अध्यात्मभूतेषु प्राणादिष्वन्तर्यामिदर्शन मुच्यत इत्यर्थः। यः प्राणे वायुसहिते घ्राणे यो वाचि यश्चक्षुषि यः श्रोत्रे योमनसि यस्त्वचि यो विज्ञाने बुद्धौ तन्मये शरीरे यो रेतसि प्रजनन इत्येते पर्याया बोद्धव्याः। ननु महाभागाः पृथिव्यादिदेवता मनुष्यादिवदात्मनो नियन्तारमन्तर्यामिणं कुतो न विदुरित्यत आह—अदृष्ट इति। न दृष्टोऽदृष्टः कस्यचिच्चक्षुर्दर्शनस्य विषयत्वमनापन्नः सन्स्वयं द्रष्टा भवति दृशिस्वरूपत्वाच्चक्षुषि संनिहितत्वाच्च। तथाऽश्रुतः श्रोत्रगोचरतामनापन्नः सन्स्वयं श्रोता अमतोऽसङ्कल्पत्वान्मनसो विषयतामनापन्नः सन्मन्ता। अविज्ञातो विज्ञानविषयतां सुखादिवदनापन्नः सन्विज्ञाता बुद्धिषु संनिहितत्वात्। ननु तथाऽप्येवं नियन्तृनियन्तव्यादिभेदेन द्रष्टृद्रष्टव्यादिभेदेन च भेदः स्यादित्याशङ्कायामाह—नेति। अतोऽस्मादन्तर्यामिणः सकाशादन्यो द्रष्टा नास्त्येव। एवमेव नान्योऽतोऽस्ति श्रोतेत्यादि योजनीयम्। उपपादितमन्तर्यामिस्वरूपमुपसंहरति—एष त इति। यस्माददृष्टाश्रुतादिरूपः सन्नेव द्रष्ट्रादिरूपस्तस्मादेष एवेश्वर आत्मा सर्वकर्मफलविभागकर्ता ते तव अन्तर्याम्यमृतः अतोऽस्मादीश्वरात्मनोऽन्यदार्तम्। ततो होद्दालक आरुणिरुपररामेत्युक्तार्थम् ॥ १६-२३ ॥

इति तृतीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

पूर्वब्राह्मणे सूत्रान्तर्यामिणौ निर्धारितौ तदुभयविधमप्यात्मनः सोपाधिकं रूपमिदानीं निरुपाधिकमशनायादिविनिर्मुक्तं साक्षादित्यादिलक्षणं वक्तुमक्षरब्राह्मणं प्रवर्तते—

अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि । तौ चेन्मे वक्ष्यति न वै जातु युष्माकमिमं कश्चिद् ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ॥ १ ॥

अथ सोपाधिकब्रह्मस्वरूपनिर्धारणानन्तरं वाचक्नवी वचक्नोर्दुहिता गार्गी पूर्वं मूर्धपातभयादुपरता सती पुनरुवाच। किम्? हे ब्राह्मणा भगवन्तः पूजावन्तः शृणुत मे मम वचोऽहमिदानीमिमं याज्ञवल्क्यं पुनर्द्वौ प्रश्नौ प्रक्ष्यामि प्रष्टुमिच्छामि हन्त यद्यनुमतिर्भवतामस्ति भवदनुमत्या हि मे मूर्धपातो न भवेत्तौ प्रश्नौ चेन्मे मम कथञ्चिद्वक्ष्यति कथयिष्यति तर्हि जातु कदाचिद्युष्माकं मध्ये कश्चित्कोऽप्यन्यतम इमं

याज्ञवल्क्यं ब्रह्मोद्यं ब्रह्मवादिनं न वै नैव जेता भवेदिति। एवमुक्ता ब्राह्मणा हे गार्गि मा भैः पृच्छ कुरु प्रश्नमित्यनुज्ञां दत्तवन्त इत्यर्थः ॥ १ ॥

सा होवाचाहं वै त्वा याज्ञवल्क्या। यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ॥ २ ॥

सैव लब्धानुज्ञा गार्गी ह याज्ञवल्क्यं प्रत्युवाच। किम्? हे याज्ञवल्क्य त्वा त्वां द्वौ प्रश्नौ प्रक्ष्यामीत्यनुषज्यते। कौ ताविति जिज्ञासायां तयोर्दुरुत्तरत्वं द्योतयितुं दृष्टान्तपूर्वकं तावाह—यथेति। यथा काश्यो वा काशिषु भवः काश्यो वा शूरत्वेन प्रसिद्धः। वैदेहो वा विदेहानां राजा उग्रपुत्रः शूरान्वय उज्ज्यमवतारितज्याकं धनुः पुनरधिज्यं कृत्वा आरोपितज्याकं विधाय द्वौ बाणवन्तौ शराग्रे यो वंशखण्डः सन्धीयते स बाण उच्यते, स विद्यते ययोस्तौ बाणवन्तौ शरौ। कथंभूतौ? सपत्नातिव्याधिनौ सपत्नाः शत्रवस्तानतिशयेन वेद्धुं शीलं ययोस्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपतिष्ठेत शत्रोः समीपत आत्मानं दर्शयेत्। एवमेवाहं त्वां शरस्थानीयाभ्यां द्वाभ्यां प्रश्नाभ्यामुपोदस्थां त्वत्समीप उत्थितवत्यस्मि। त्वं ब्रह्मिष्ठत्वप्रतिज्ञावांश्चेत्तर्हि तौ प्रश्नौ तयोर्मया क्रियमाणयोः प्रश्नयोरुत्तरं मे मह्यं ब्रूहीत्युक्तो मुनिर्हे गार्गि पृच्छ यथेच्छमित्युक्तवानित्यर्थः ॥ २ ॥

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिँस्तदोतं च प्रोतं चेति ॥ ३ ॥

सैवमुक्ता गार्गी होवाच अपृच्छत्। किम्? हे याज्ञवल्क्य यद्दिवो द्युसंज्ञितादुपरितनाण्डकपालादूर्ध्वमुपर्यस्ति यच्च पृथिव्या अधस्तनाण्डकपालादवागधो वर्तते यच्च द्यावापृथिव्यन्तरा द्यावापृथिव्योरण्डकपालयोर्मध्येऽस्ति ये चेमे प्रसिद्धे द्यावापृथिवी स्तः। यच्च भूतमतीतं यच्च भवद्वर्तमानं भविष्यच्च वर्तमानकालादूर्ध्वकालभावि लिङ्गगम्यं वर्तत इत्येवमाचक्षते कथयन्ति आगमविदः। एतत्सर्वं जगद् द्वैतजातं

यस्मिन्नेकीभवति तत्सूत्रसंज्ञकं पूर्वोक्तं कस्मिन्नोतं च प्रोतं चाप्स्विव पृथिवीत्यर्थः ॥ ३ ॥

स होवाच यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति ॥ ४ ॥

स याज्ञवल्क्यो होवाच हे गार्गि यत्त्वयोक्तं यदूर्ध्वं दिव इत्यादि तत्सूत्रं व्याकृतजगदात्मकमाकाशे अव्याकृतशब्दवाच्ये अविद्याशबलिते ईश्वरेऽन्तर्यामिणि नारायणाख्ये ओतं च प्रोतं चेत्यादि त्रिष्वपि कालेष्वित्यर्थः ॥ ४ ॥

सा होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवोचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति ॥ ५ ॥

सैवमुत्तरितप्रथमप्रश्ना गार्गी होवाच हे याज्ञवल्क्य यस्त्वं ममैतं दुर्वचनं प्रश्नं व्यवोचो विशेषणोत्तरितवानसि, अतस्ते तुभ्यं नमोऽस्तु। अथापरस्मै द्वितोयप्रश्नाय धारयस्व दृढीकुरु आत्मानम्। इतर आह— पृच्छ गार्गीति ॥ ५ ॥

एवमुक्तस्यैवार्थस्यावधारणार्थं पूर्वोक्तमेव प्रश्नं तदनुवादपूर्वकमुक्तमेव प्रतिवचनं चोभाभ्यां क्रमेणानूद्यते--

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिँस्तदोतं च प्रोतं चेति ॥ ६ ॥ स होवाच यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ॥ ७ ॥

सा होवाचेत्यारभ्य कस्मिन्नु खल्वित्यतः प्राक्तनेन। द्वितीयं पृच्छति। कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेत्युक्तार्थम् ॥ ६-७ ॥

स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरस-

मगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्र-
मनन्तरमबाह्यम्। न तदश्नाति किञ्चन न तदश्नाति कश्चन ॥८॥

स याज्ञवल्क्यो होवाच। हे गार्गि यत्त्वं पृष्टवत्यसि कस्मिन्नु खल्वित्यादिनाऽव्याकृताधिष्ठानं तद्वा अव्याकृताधिष्ठानमेतदक्षरं न क्षरति न क्षीयत इति वाऽक्षरं शुद्धं ब्रह्म ब्राह्मणा ब्रह्मविदोऽभिवदन्ति कथयन्ति। किं तद् ब्रूहीति श्रुतौ द्रष्टव्यम्। गार्गीप्रश्नानन्तरमितर आह--अस्थूलमिति। स्थूलाद्भिन्नमस्थूलम्। अस्तु तर्ह्यणु, इत्यत आह—अनणु, अणुभिन्नम्। एवमेव सर्वत्र निषेध्याशङ्कापूर्वकं तन्निषेधकपदानामुत्थानं बोद्धव्यम्। अह्रस्वमदीर्घमिति द्रव्यत्वप्रयोजकपरिमाणनिषेधेन द्रव्यत्वं निषिद्धम्। लौहित्यमग्निरूपं तद्भिन्नम्। स्नेहोऽब्गुणस्तद्भिन्नमिति मूर्तद्रव्यत्वं निषिद्धम्। तथा छायाऽदीप्तिस्तमो ध्वान्तं तदुभयभिन्नमिति चिदतिरिक्तत्वशङ्का निराकृता। तथा अवाय्वनाकाशमिति अमूर्तद्रव्यत्वं निषिद्धम्। अस्तु तर्हि वासनासङ्गदर्शनात्तदात्मकमित्यत आह--असङ्गमिति। अरसमगन्धमिति अरूपाद्युपलक्षणपरम्। चक्षुर्भिन्नं न विद्यते चक्षुर्यस्येति वा अचक्षुष्कम्। तथाऽश्रोत्रमवाग् अमनः। एतत्सर्वेन्द्रियनिषेधोपलक्षणपरम्। वृत्तिरूपविज्ञानलक्षणं तेजो न विद्यते यस्येत्यादि नञर्थः पूर्ववत्। प्राणोऽध्यात्मं मुखं प्रसिद्धम्। मीयते येन तन्मात्रं मानं मेवान्वयरूपम्। अन्तरं छिद्रम्। न विद्यते बाह्यं यस्येति अबाह्यम्। अपरिच्छिन्नमिति यावत्। अनात्मव्यक्तीनामानन्त्येन प्रत्येकं निषेधाशक्तेर्भोक्तृभोग्यात्मना एकीकृत्य निषेधति—नेति। तदक्षरं किञ्चन किञ्चिदपि विषयं नाश्नाति न भुङ्क्ते कश्चन कोऽपि लोकस्तदक्षरं नाश्नातीत्यर्थः ॥ ८ ॥

एवमशेषविशेषणनिषेधावधित्वेन तत्साक्षित्वेन चाक्षरास्तित्वे सिद्धे इदानीं तस्यैवाऽऽविद्यकेशितव्यसम्बन्धात् ईश्वरात्मभूतस्य अस्तित्वमनुमानविधयाऽऽह—

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति। एतस्य वा अक्षरस्य प्रशासने गार्गि

प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमन्वेतस्य प्रशासने गार्गि ददतो मनुष्याः। प्रशँ्सन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ॥ ९ ॥

हे गार्गि एतस्योक्तरूपस्याक्षरस्य प्रशासने आज्ञायां सूर्याचन्द्रमसौ विधृतौ नियमितौ तिष्ठतो वर्तेते भृत्यादिवत्। तथा यदक्षरप्रशासने द्यावापृथिव्यौ विधृते तिष्ठतो हस्तन्यस्तपाषाणादिवत्तदस्ति। तथा निमेषादयः कालावयवाः सर्वजनिमतः कलयितारो गणकवत् यस्य प्रशासने विधृतास्तिष्ठन्ति तदस्ति। तथा प्राच्यः प्रागञ्चनाः पूर्वदिग्गमना अन्या गङ्गाद्या नद्यः श्वेतेभ्यो हिमवदादिभ्यः पर्वतेभ्यः स्यन्दन्ते स्रवन्ति। तथा प्रतीच्यः प्रतीचीदिग्गमनाः सिन्ध्वाद्या नद्योऽन्याश्च या या नद्यो यां यां दिशमनुप्रवृत्तास्ता यदक्षरप्रशासनादद्यापि तथैव प्रवर्तन्ते तदस्ति। तथा ददतो दुःखार्जितान् गोहिरण्यादीन् प्रयच्छतः पुरुषान् मनुष्या हिरण्यदा अमृतत्वं भजन्त इति प्रमाणज्ञाः प्रशंसन्ति स्तुतिं कुर्वते। तथा चैतस्य प्रशंसनस्य फलसम्बन्धपूर्वकत्वेन तत्कर्त्रक्षरं सिद्धम्। न च स्वातन्त्र्येण देवादिकर्तृक एव फलसम्बन्ध इति वाच्यम्; तेषामपि ईश्वराधीनत्वादित्याह–*यजमानमिति*। देवा इन्द्रादयोऽन्यथा जीविते समर्था अपि जीवनं निमित्तीकृत्य पुरोडाशाद्युपजीवनप्रयोजनेन अनीश्वरमपि यजमानमन्वायत्ता अनुगताः। तथा पितरोऽर्यमादयो दर्वीहोममन्वायत्ता इति सम्बन्धः। तथा च देवादीनामेतादृग्धीनवृत्त्याश्रयणमक्षरास्तित्वे लिङ्गमित्यर्थः ॥ ९ ॥

किञ्च यदज्ञानज्ञानाभ्यां संसारमुक्ती तदस्त्यक्षरमिति साधयितुं कर्मणामेव मोक्षहेतुत्वमिति पक्षं निराकरोति—

यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति। यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः। अथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः ॥ १० ॥

हे गार्गि यो वै कश्चित्पुरुष एतदक्षरमविदित्वा अविज्ञाय अस्मिन् कर्मलोके जुहोति देवतोद्देशेन सङ्कल्पितं द्रव्यमग्नौ प्रक्षिपति यजते

देवतोद्देशेन द्रव्यं सङ्कल्पयति तपश्चान्द्रायणादि तप्यत आचरति यद्यपि बहूनि वर्षसहस्राणि तथाऽप्यस्य कर्तुस्तत्साङ्गमपि क्रियमाणं कर्म अन्तवदेव अन्तवत्फलकमेव भवति न नित्यमोक्षफलकम्। तथा च हे गार्गि यो वा एतदक्षरमहं ब्रह्मास्मीत्यविदित्वा अस्मात् कर्मलोकात् प्रैति म्रियते स कर्मी कृपणो दीनः पणीकृतदासवत्स्वकर्मफलस्यैव भोक्ता न मोक्षस्य। अथ तु य एतदक्षरं श्रुत्या आचार्योपदेशतोऽहं ब्रह्मास्मीति विदित्वा अस्माल्लोकात् प्रैति स ब्राह्मणो ब्रह्मीभूतो मुक्त इत्यर्थः ॥ १० ॥

अथाक्षरस्य ईश्वरत्वोपाधिविनिर्मुक्तं स्वाभाविकं स्वरूपमाह—

तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतँ श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ। नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ। एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ॥ ११ ॥

हे गार्गि, एतद्वै तदक्षरमस्थूलादिवाक्येन अवगमितमदृष्टं केनचिन्न दृष्टं दृष्टयविषयत्वात्। स्वयं तु द्रष्टृ दृशिस्वरूपत्वात्। एवमश्रुतं श्रोत्रित्यादि व्याख्येयम्। तस्य नानात्वशङ्कां निराकरोति—नेति। अस्मात् प्रकृतादक्षरादन्यद् द्रष्टृ दर्शनक्रियाकर्तृ नास्त्यतदेव तत्कर्तृ। समानमन्यत्। एवं सजातीयस्वगतनानात्वे निराकृत्य इदानीं विजातीयानामनात्मनां रज्जुभुजङ्गादिवत् परिकल्पितत्वप्रदर्शनेन तन्नानात्वमुपसंहारव्याजेन निषेधति—एतस्मिन्निति। एतस्मिन्न खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेत्युक्तार्थम् ॥ ११ ॥

सा होवाच ब्राह्मणा भगवन्तस्तदेव बहु मन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वं न वै जातु युष्माकमिमं कश्चिद् ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम ॥ १२ ॥

सोक्तप्रश्नद्वयनिर्णयश्रोत्री गार्ग्युवाच। किम्? हे ब्राह्मणा भगवन्तः प्रश्नौ चेन्मह्यं वक्ष्यति तदा न वै जातु युष्माकमिमं कश्चिद् ब्रह्मोद्यं जेतेति युष्मान्प्रति पूर्वोक्तं यन्मम वचनं तदेव वचनं बहु मन्येध्वं बहुमानविषयं कुरुध्वं प्रमाणीकुरुध्वं यद्यस्माद् दुर्वचौ प्रश्नौ अनेनोक्त-

रितौ तस्मादस्माद्याज्ञवल्क्यात् नमस्कारेण मुच्येध्वमस्मै नमस्कारं कृत्वाऽनुज्ञां प्राप्य यूयं मुच्यध्वम् अस्य पराजयो मनसाऽपि न शङ्कनीयः। तत एवं ब्राह्मणानां हितोपदेशानन्तरं वाचक्नवी उपररामेत्यर्थः॥ १२॥

इति तृतीयाध्याये अष्टमं ब्राह्मणम्॥ ८॥

एवं 'यत्साक्षादि'त्यादि प्रस्तुत्य सर्वान्तरत्वनिरूपणद्वारा साक्षित्वादिकमार्थिकं ब्राह्मणत्रयेन निर्धारितम्। इदानीं यदन्तर्यामिब्राह्मणे 'यः पृथिव्यामि'त्यादिश्रुत्या नियम्यसर्वापेक्षया कारणात्मनो नियन्तृत्वमुक्तं तदत्र पूर्वोक्तप्रकारानुसारेण प्राणसमानशब्दाभ्यामनूद्य तदेवाऽऽलम्ब्य नियम्यदेवताविशेषविस्तारसङ्कोचोक्तिद्वारा साक्षित्वादिरूपमात्मसम्बन्धितया साक्षान्निर्णेतुं शाकल्यब्राह्मणमारभ्यते—

अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति। स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते। त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच। कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिँशदित्योमिति होवाच। कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच। कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच। कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच। कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच। कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच। कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति॥ १॥

अथानन्तरमेनं याज्ञवल्क्यं शकलस्यापत्यं शाकल्यो विदग्ध इत्येवंनामा ब्राह्मणः पप्रच्छ। किम्? हे याज्ञवल्क्य कति कियत्संख्याका देवा इति एवं पृष्टः स याज्ञवल्क्यो यावन्तो यावत्संख्याका देवा वैश्वदेवस्य शस्त्रस्य निविद्युच्यन्ते श्रूयन्ते तावतो देवान् ह एतया वक्ष्यमाणया निविदा निवेद्यते ज्ञाप्यते संख्याऽनयेति निवित्तया प्रतिपेदे ज्ञातवान्। तान्येव निवित्संज्ञकानि मन्त्रपदानि दर्शयति—त्रय इति। त्रयश्च देवास्त्री च शता त्रीणि च शतानि पुनस्त्रयश्च त्री च सहस्रा त्रीणि च सहस्राणि। इयं तु मध्यमसंख्या बहुवचनादुत्तमा अनन्तसंख्याऽप्युक्तेति वेदितव्या 'अनन्ता वै विश्वेदेवा' इति श्रुतेः। उक्तसंख्यां शाकल्योऽङ्गीकरोतीत्याह—ओमिति होवाचेति। पुनस्तेषामेव देवानां सङ्कोच-

विषयां संख्यां पृच्छति—कत्येव देवा याज्ञवल्क्येति । षट्प्रश्नान् प्रति क्रमेण त्रयस्त्रिंशत्षट्त्रयो द्वावध्यर्ध एक इति प्रतिवचन उक्ते सत्यो-मित्यङ्गीकारोक्तिरित्यर्थः । अथ संख्येयस्वरूपं पृच्छति—कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्युक्तार्थम् ॥ १ ॥

स होवाच महिमान एवैषामेते त्रयस्त्रिँ्शत्त्वेव देवा इति । कतमे ते त्रयस्त्रिँ्शदित्यष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्यास्त एकत्रिँ्शदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिँ्शाविति ॥ २ ॥

स एवं पृष्टो याज्ञवल्क्यो होवाच । किम् ? एषां त्रयस्त्रिंशतो देवाना-मेते त्रयश्च त्री च शतेत्यादयो महिमानो विभूतयः । परमार्थतस्तु त्रयस्त्रिंशत्त्वेन देवाः । कतमे ते त्रयस्त्रिंशदिति शाकल्येन पृष्ट इतर आह—अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्यास्त एत एकत्रिंश-दिन्द्रश्चैव प्रजापतिश्चेति त्रयस्त्रिंशौ त्रयस्त्रिंशतां पूरणावित्यर्थः ॥ २ ॥

एवं संकोचादिभूतसंख्यानिर्णये कृते संख्येयान्देवान् क्रमेण पृच्छति—

कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चाऽऽदित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः । एतेषु हीदँ् सर्वँ् हितमिति तस्माद्वसव इति ॥ ३ ॥

उत्तरमाह—अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चाऽऽदित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः । कथम् ? हि यस्मादेतेष्वग्न्यादिषु कर्मफलसाधनात्मकं सर्वं वसु स्थितं तस्माद्वसव इत्यर्थः ॥ ३ ॥

तथा—

कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशः । ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति । तद्यद्रोदयन्ति तस्माद्रुद्रा इति ॥ ४ ॥

कतमे रुद्रा इति पुरुषे शरीरिणि इमे प्रसिद्धा दश प्राणा ज्ञानेन्द्रिय-कर्मेन्द्रियरूपा आत्मा मनश्चैकादश एकादशानां पूरणः । कथमेषां रुद्रत्वमित्यत आह—त इति । यदा यस्मिन्काले मर्त्यान् म्रियमाणाच्छरी-रात्ते प्राणा उत्क्रामन्त्यथ तदा रोदयन्ति सम्बन्धीभूतान् । तत्तस्मिन्

उत्क्रान्तिकाले यस्माद्रोदयन्ति तस्माद्रुद्रा इति सिद्धनिर्वचनप्रदर्शनमित्यर्थः ॥ ४ ॥

कतम आदित्या इति द्वादश वै मासाः संवत्सरस्यैत आदित्याः । एते हीदँ सर्वमाददाना यन्ति ते यदिदँ सर्वमाददाना यन्ति तस्मादादित्या इति ॥ ५ ॥

संवत्सरात्मकस्य कालस्य येऽवयवा वै प्रसिद्धा द्वादश मासाः स्वाभिमानीदेवताविशिष्टा एत आदित्याः । कथं हि ? यस्मादेते मासाभिमानिनो देवाः पुनः पुनः परिवर्तमानाः प्राणिनामायुरादीन् आददाना गृह्णन्त एव यन्ति गच्छन्ति । ते यस्मादिदं सर्वमाददाना यन्ति तस्मादादित्या इति सिद्धोऽर्थः ॥ ५ ॥

कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति । कतमः स्तनयित्नुरित्यशनिरिति । कतमो यज्ञः पशव इति ॥ ६ ॥

स्तनयित्नुर्मेघनादाभिमानिनी देवतैव इन्द्रो यज्ञः प्रजापतिः । कतमः स्तनयित्नुरिति । अशनिर्वज्रापरपर्यायं बलं तस्य मेघनादाभिमानिन्द्रनिष्ठत्वादिन्द्रत्वम् । कतमो यज्ञ इति पशव इति । तेषां यज्ञसाधनत्वादित्यर्थः ॥ ६ ॥

कतमे षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चाऽऽदित्यश्च द्यौश्चैते षडेते हीदँ सर्वँ षडिति ॥ ७ ॥

अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चाऽऽदित्यश्च द्यौश्च ते षडिति । हि यस्मात् । त्रयस्त्रिंशदाद्युक्तमिदं सर्वं देवजातं षडेते अग्न्यादय एव तस्मात् तेष्वन्तर्भूताः सन्तः षडेव देवा भवन्तीत्यर्थः ॥ ७ ॥

कतमे ते त्रयो देवा इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति । कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति । कतमोऽध्यर्ध इति योऽयं पवत इति ॥ ८ ॥

इमे पूर्वकण्डिकोक्तपृथिव्यन्तरिक्षद्युरूपा एव त्रयो लोकाः क्रमेण अग्निवाय्वादित्यात्मना एकीकृत्य त्रयो देवा इत्युच्यन्ते । कथं हि ?

यस्मादेषु त्रिषु लोकेष्विमेऽग्निवाय्वादित्यान्तर्भूताः सर्वे देवा वर्तन्त इत्याधाराधेययोरभेदात्तथोक्तमित्यर्थः। कतमौ तौ द्वौ देवाविति ? अन्नं चैव प्राणश्चेति। अत्रैवोक्तदेवानामन्तर्भाव इत्यर्थः। कतमोऽध्यर्ध इति। योऽयं बाह्यो वायुः पवते वाति सोऽध्यर्ध इत्यर्थः॥ ८॥

तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्धं इति। यद-स्मिन्निदँ सर्वमध्यार्ध्नोत्तेनाध्यर्धं इति। कतम एको देव इति प्राण इति। स ब्रह्म त्यदित्याचक्षते॥ ९॥

तत्तत्र अध्यर्धशब्दस्य वायुविषयत्व उक्ते सति शाकल्यादयो वादिन आहुश्चोदयन्ति। किम् ? यद्यतोऽयं वायुरेक एव पवते वाति अथातः कथमिवाध्यर्ध इति शङ्किते योगमाश्रित्य परिहरति—यदिति। यद्यस्मादस्मिन् वायौ सतीदं सर्वं चराचरमध्यधिकमार्ध्नोद् वृद्धिं प्रापत्तेन हेतुन अध्यर्धो वायुरित्यर्थः। कतम एको देव इति प्राण इति। कोऽसौ इत्यपेक्षायामाह—स इति। स प्राणो ब्रह्म सूत्रात्मरूपेण सर्वकार्याणां भरणात्कारणभूतो ब्रह्मेति भण्यते। तस्मात्तं प्राणं ब्रह्म त्यदिति परोक्षाभिधायकेन शब्देनाऽऽचक्षते प्राणविदः साक्षान्निर्देष्टुमशक्यत्वादित्यर्थः॥ ९॥

तदेवं संकोचविस्ताराभ्यां प्राणस्वरूपमुक्तम्। तस्यैवेदानीं पुनरष्टधा भेदो ध्यानसौकर्यायोच्यते—

पृथिव्येव यस्याऽऽयतनमग्निर्लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽऽत्मनः परायणँ स वै वेदिता स्या द्याज्ञवल्क्य वेद वा अहं तं पुरुषँ सर्वस्याऽऽत्मनः परायणं यमात्थ य एवायँ शारीरः पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यमृतमिति होवाच॥ १०॥

पृथिव्येव यस्य देवस्याऽऽयतनमाश्रयः शरीरमिति यावत्। अग्निर्लोको लोकयत्यनेनेति लोको लोकसाधनं चक्षुर्यस्य। मनो ज्योतिर्ज्योतिःशब्दाभिधेयं विज्ञानं सङ्कल्पविकल्पात्मकं प्रति हेतुभूतं यस्य। पुनः कथंभूतम् ? पृथिव्यभिमानिनं पुरुषं सर्वस्याऽऽत्मनः शरीरस्य बीजस्थानीयपितृजास्थिमज्जाशुक्ररूपस्य कारणस्य च परायणं परमाश्रय-

स्तं पृथिव्यभिमानिनं पुरुषं यो वै विद्यात् स वै स एव वेदिता विद्वान् स्याद्धे याज्ञवल्क्येति प्रश्नः । यद्येतद्वेदनेन पाण्डित्यं स्यात्तर्हि त्वं यं पुरुषं सर्वस्याऽऽत्मनः परायणमात्थ कथयसि तं पुरुषमहं वेद वै वेदैवेति मुनिवचनान्तरं यदि वेत्थ तं ब्रूहि तर्हि किंविशेषणोऽसौ इति श्रुतिद्रष्टव्यशाकल्यप्रश्नानन्तरमुत्तरमाह—य इति। य एवायं प्रसिद्धः शारीरः शरीरे पार्थिवांशमात्रे भवो जनकत्वेन स्थितो मातृजत्वङ्मांसरुधिरलक्षणकोशत्रयरूपः शारीरः पुरुषः स एष त्वया पृष्टः। एतावता समाप्तं दर्शनमिति मन्यमानं शाकल्यं प्रत्याह-–वदेति। हे शाकल्य वदैव पृच्छैव यद्यत्र प्रष्टव्यं विशेषणान्तरं जानासि। एवं संक्षोभितः शाकल्योऽमर्षवशेनाऽऽह—तस्येति। तस्य मातृजकोशत्रयात्मकस्य शरीरस्य का देवता किमुत्पत्तिकारणमत्र प्रकरणे देवताशब्देन सर्वत्र उत्पत्तिकारणस्यैव विवक्षितत्वात्। तं प्रति मुनिराहेति श्रुतिरस्मान् प्रत्याह—अमृतमिति होवाचेति। लोहितादिहेतुभूतो मातृजग्धान्नरसोऽमृतमित्युच्यते, तत्कारणमित्युवाच याज्ञवल्क्यः। तथा च या सामान्याश्रिता शाकल्यपृच्छा पृथिव्यभिमानिनी देवता सैव मातृजकोशत्रयात्मनाऽवस्थितेति मुनिना विशेषाश्रितोक्ता। अतो न प्रश्नप्रतिवचनयोर्वैयधिकरण्यम्। सामान्यतोऽयमेवार्थः सर्वेषु पर्यायेषु बोद्धव्यो विशेषस्तु कथ्यते ॥ १० ॥

काम एव यस्याऽऽयतनँ हृदयं लोको मनो ज्योतिर्यो
वै तं पुरुषं विद्यात्सर्वस्याऽऽत्मनः परायणँ स वै
वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषँ सर्वस्या-
ऽऽत्मनः परायणं यमात्थ । य एवायं काममयः पुरुषः
स एष वदैव शाकल्य । तस्य का देवतेति स्त्रिय इति
होवाच ॥ ११ ॥

कामो योषित्समागमेच्छा। हृदय बुद्धिः। लोक आलोकस्तेन हि सर्वं पश्यति। कामायतनस्य। देवस्य विशेषायतनमपि काम एवेत्याह—य एवायमिति। काममयः कामायतन एव अवच्छेदान्तराभावात्। तस्योत्पत्तिकारणं पृच्छति—तस्येति। तस्य कामस्य का देवता किम् उत्पत्तिकरणमिति पृष्टे स्त्रिय इति होवाच। स्त्रीतो हि कामो जायत इत्यर्थः ॥ ११ ॥

रूपाण्येव यस्याऽऽयतनं चक्षुर्लोको मनो ज्योतिर्यो

वै तं पुरुषं विद्यात्सर्वस्याऽऽत्मनः परायणँ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषँ सर्वस्याऽऽत्मनः परायणं यमात्थ । य एवासावादित्ये पुरुषः स एष वदैव शाकल्य । तस्य का देवतेति सत्यमिति होवाच ॥ १२ ॥

रूपाणि शुक्लादीन्यभास्वराणि तैः स्वप्रकाशनाय आदित्ये रविमण्डले पुरुषो विशेषायतन आरब्धस्तस्य सत्यशब्दितमध्यात्मं चक्षुरुत्पादकम्, 'चक्षोः सूर्यो अजायते'ति श्रुतेः ॥ १२ ॥

आकाश एव यस्याऽऽयतनँ श्रोत्रं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्याऽऽत्मनः परायणँ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषँ सर्वस्याऽऽत्मनः परायणं यमात्थ य एवायँ श्रौत्रः प्रातिश्रुत्कः पुरुषः स एष वदैव शाकल्य । तस्य का देवतेति दिश इति होवाच ॥ १३ ॥

श्रोत्रे भवः श्रौत्रस्तत्रापि प्रतिश्रवणवेलायां विशेषतो भवतीति प्रातिश्रुत्कस्तस्योत्पत्तिकारणं दिशो दिशस्तत्राधिदैवतमिति श्रुतेः ॥ १३ ॥

तम एव यस्याऽऽयतनँ हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽऽत्मनः परायणँ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषँ सर्वस्याऽऽत्मनः परायणं यमात्थ । य एवायं छायामयः पुरुषः स एष वदैव शाकल्य । तस्य का देवतेति मृत्युरिति होवाच ॥ १४ ॥

तमः शार्वराद्यन्धकारस्तदाश्रितस्य विशेषायतनं छायाऽज्ञानं तन्मयस्य उत्पादको मृत्युरीश्वरो 'मृत्युनैवेदमावृतमासीदि'ति श्रुतेः ॥ १४ ॥

रूपाण्येव यस्याऽऽयतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽऽत्मनः परायणँ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषँ सर्वस्याऽऽत्मनः परायणं यमात्थ । य एवायमादर्शे पुरुषः स एष वदैव

शाकल्य । तस्य का देवतेत्यसुरिति होवाच ॥ १५ ॥

रूपाणि भास्वराणि । आदर्शे प्रतिबिम्बाश्रये पुरुषस्तस्योत्पादकः असुः प्राणस्तेन हि बलापर्यायेण निघृष्यमाणे दर्पणादौ प्रतिबिम्बोदय उत्पद्यत इत्यर्थः ॥ १५ ॥

आप एव यस्याऽऽयतनँ हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्याऽऽत्मनः परायणँ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषँ सर्वस्याऽऽत्मनः परायणं यमात्थ । य एवायमप्सु पुरुषः स एष वदैव शाकल्य । तस्य का देवतेति वरुण इति होवाच ॥ १६ ॥

अप्सामान्याश्रितोऽप्सु विशेषभूतासु वाप्यादिगतासु वर्तमानः पुरुषस्तस्योत्पादको वरुण इति प्रसिद्धम् ॥ १६ ॥

रेत एव यस्याऽऽयतनँ हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽऽत्मनः परायणँ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषँ सर्वस्याऽऽत्मनः परायणं यमात्थ य एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य । तस्य का देवतेति प्रजापतिरिति होवाच ॥ १७ ॥

पुत्रशब्देन पितुर्जातान्यस्थिमज्जाशुक्राणि तस्योत्पादकः प्रजापतिः पितेत्यर्थः ॥ १७ ॥

एवमष्टधा प्रविभक्तः प्राणदेवः सत्रात्मा सामान्यविशेषावच्छेदेन तत्कारणात्मना च त्रिधा विभक्त इत्युक्तम् । तस्यैव पुनः पञ्चधा पञ्चदिग्विभागेन ध्यानं वक्तव्यमित्येतदर्थं श्रुतिः प्रवर्तत इति श्रौती सङ्गतिः । तत्र मुनिरवशिष्टं यदप्यस्य तन्मां पृच्छत्विति चेतसि निधाय तूष्णींभूतं शाकल्यं ग्रहेणेवाऽऽवेशयन्नाह । यद्वा मुनिरतिप्रश्नादनर्थं पश्यन् करुणयाऽऽह—

शाकल्येति होवाच याज्ञवल्क्यस्त्वाँ स्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता ३ इति ॥ १८ ॥

हे शाकल्य इमे ब्राह्मणाः । स्विद्वितर्के । नूनं त्वामङ्गारावक्षयणमङ्गारा अवक्षीयन्ते निरुध्यन्ते यस्मिंस्तदङ्गारावक्षयणं संदंशनादि अक्रता ३ इति

स्तुतिर्विचारार्था । अक्रत कृतवन्त इति याज्ञवल्क्य उवाच । त्वं तु अङ्गारस्थानीयेन मयाऽऽत्मानं दह्यमानं न जानासीति भावः ॥ १८ ॥

एवमुक्त' हितोपदेशं शाकल्यो विपरीतार्थं गृहीत्वा चोदयन्तीत्याह—

याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति । दिशो वेद सदेवाः सप्रतिष्ठा इति । यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः ॥ १६ ॥

हे याज्ञवल्क्य त्वं कुरुपञ्चालानां ब्राह्मणान् यदिदम् अत्यवादीरित्युक्तवानसि स्वयं भीतास्त्वामङ्गारावक्षयणं कृतवन्त इति, तत्किं ब्रह्म विद्वान् सन्नेवं ब्राह्मणानधिक्षिपसीति शाकल्य उवाच । एवमुक्तो याज्ञवल्क्यो मम दिग्विषयं ब्रह्मज्ञानमस्तीत्याह—दिश इति । दिशो वेद जानामि न केवलं दिङ्मात्रं जाने, अपि तु सदेवाः देवैरधिष्ठातृभिः सह वर्तमानाः सप्रतिष्ठाः प्रतिष्ठाभिः सह वर्तमाना इति । मुन्युक्त' शाकल्योऽनूद्य पृच्छति—यदिति । यद्यदि सदेवाः सप्रतिष्ठा दिशो वेत्थ जानासि ॥ १६ ॥

तर्हि हे याज्ञवल्क्य—

किंदेवतोऽस्यां प्राच्यां दिश्यसीति ? आदित्यदेवत इति । स आदित्यः कस्मिन्प्रतिष्ठित इति ? चक्षुषीति । कस्मिन्नु चक्षुः प्रतिष्ठितमिति ? रूपेष्विति । चक्षुषा हि रूपाणि पश्यति । कस्मिन्नु रूपाणि प्रतिष्ठितानीति ? हृदय इति होवाच । हृदयेन हि रूपाणि जानाति । हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद्याज्ञवल्क्य ॥ २० ॥

त्वमस्यां प्राच्यां दिशि किंदेवतोऽसि का देवता यस्यासौ किंदेवतः कयाऽधिष्ठातृदेवतया त्वं प्राचीदिग्रूपेण संपन्न इति यावत् । अस्याः का देवतेति प्रष्टव्येऽप्येवं प्रश्नकरणं तु मुनेर्दिगुपासनातादात्म्यसम्पत्तिरिहैव जातेति बोधयितुम् । इतर आह—आदित्य इति । प्राच्यां दिशि मम आदित्यो देवता यस्य सोऽहमादित्यदेवतस्तया प्राचीदिग्रूपत्वमापन्न इति यावत् । अथ प्रतिष्ठां पृच्छति—स आदित्यः कस्मिन्प्रतिष्ठित इति । स्वोत्पत्तिकारण एव प्रतिष्ठितत्वमाह—चक्षुषीति । 'चक्षोः सूर्यो अजायते'ति श्रुतेः । पुनश्चक्षुरुत्पादकं पृच्छति—कस्मिन्नु चक्षुः प्रतिष्ठितमिति । उत्तरमाह—रूपेष्विति । अत्र हेतुमाह—चक्षुषा

हि रूपाणि पश्यतीति । अतो रूपारब्धं चक्षुर्व्यञ्जकस्य व्यङ्ग्यसमान-जातीयत्वात् । रूपोत्पादकं पृच्छति—कस्मिन्नु रूपाणि प्रतिष्ठितानीति । उत्तरमाह—हृदय इति होवाच । हृदयस्थबुद्धौ । अत्र हेतुर्हि यस्मात् हृदयेन तत्स्थ बुद्ध्या सर्वाणि रूपाणि जानाति स्मरति बुद्ध्यभिन्नमनो-मात्रकल्पितानीति यावत् । तस्माद्धृदये ह्येव सर्वाणि वासनात्मकानि रूपाणि प्रतिष्ठितानि भवन्तीत्युपसंहृते शाकल्योऽङ्गीकरोति—एवमिति । हे याज्ञवल्क्य एतत्त्वदुक्तमेवमेव मयाऽप्येवं ज्ञायत इत्यर्थः । एव-मेव सर्वत्र सामान्यतोऽर्थो बोद्धव्यो विशेषस्तु कथ्यते ॥ २० ॥

किंदेवतोऽस्यां दक्षिणायां दिश्यसीति ? यमदेवत इति । स यमः कस्मिन्प्रतिष्ठित इति ? यज्ञ इति । कस्मिन्नु यज्ञः प्रतिष्ठित इति ? दक्षिणायामिति । कस्मिन्नु दक्षिणा प्रतिष्ठितेति ? श्रद्धायामिति । यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति । श्रद्धायाँ ह्येव दक्षिणा प्रतिष्ठितेति । कस्मिन्नु श्रद्धा प्रतिष्ठितेति ? हृदय इति होवाच । हृदयेन हि श्रद्धा जानाति । हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २१ ॥

यमो धर्मराजो यज्ञे प्रतिष्ठितः । स यमो हि दक्षिणां दिशं यज्ञेन यजमानो जयति, अतः कारणे हि कार्यप्रतिष्ठा युज्यते । यज्ञश्च दक्षि-णायां प्रतिष्ठितः । तया हि यज्ञो निष्क्रियत ऋत्विग्भ्यः । दक्षिणा च श्रद्धायां भक्तिसहितदित्सुत्वलक्षणायामास्तिक्यबुद्धौ । श्रद्धा च हृदयवृत्तिः अतो हृदये प्रतिष्ठितेत्यर्थः ॥ २१ ॥

किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति ? वरुणदेवत इति । स वरुणः कस्मिन्प्रतिष्ठित इति ? अप्स्विति । कस्मिन्न्वापः प्रति-ष्ठिता इति ? रेतसीति । कस्मिन्नु रेतः प्रतिष्ठितमिति ? हृदय इति । तस्मादपि प्रतिरूपं जातमाहुः हृदयादिव सृप्तो हृदयादिव निर्मित इति । हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २२ ॥

वरुणोऽप्सु प्रतिष्ठितः । 'श्रद्धा वा आपः, श्रद्धातो वरुणमसृजते'ति श्रुतेः । आपश्च रेतसि 'रेतसो ह्यापः सृष्टा' इति श्रुतेः । तच्च हृदये ।

तत एव हि कामिनो रेतः स्कन्दति। कामश्च हृदयवृत्तिः। सा च वृत्तिमति तिष्ठत्येव। अत्रैव लोकप्रसिद्धिमाह—तस्मादपीति। तस्मादेव पतिरूपमनुरूपं पुत्रं जातमाहुर्लौकिकाः। अस्य पितुर्हृदयादिवायं पुत्रः सृप्तो निःसृतो हृदयादिव निर्मित इत्यर्थः॥ २२॥

किंदेवतोऽस्यामुदीच्यां दिश्यसीति ? सोमदेवत इति। स सोमः कस्मिन्प्रतिष्ठित इति ? दीक्षायामिति। कस्मिन्नु दीक्षा प्रतिष्ठितेति ? सत्य इति। तस्मादपि दीक्षितमाहुः सत्यं वदेति। सत्ये ह्येव दीक्षा प्रतिष्ठितेति। कस्मिन्नु सत्यं प्रतिष्ठितमिति ? हृदय इति होवाच। हृदयेन हि सत्यं जानाति। हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य॥ २३॥

सोमदेवत इत्यत्र सोमलतां सोमदेवतां चैकीकृत्य निर्देशः। स सोमो दीक्षायां दीक्षितो हि यजमानः सोमं क्रीणाति। सा च सत्ये यस्मात्प्रतिष्ठिता तस्मादपि तस्मादेव दीक्षितं सत्यं वदेत्याहुः, कारणनाशे कार्यनाशो मा भूदित्यभिप्रायवन्तः पण्डिता इत्यर्थः॥ २३॥

किंदेवतोऽस्यां ध्रुवायां दिश्यसीति ? अग्निदेवत इति। सोऽग्निः कस्मिन्प्रतिष्ठित इति ? वाचीति। कस्मिन्नु वाक् प्रतिष्ठितेति ? हृदय इति। कस्मिन्नु हृदयं प्रतिष्ठितमिति॥ २४॥

मेरोः समन्ततो वसतामव्यभिचारादूर्ध्वा दिक् ध्रुवेत्युच्यते। तस्यां प्रकाशभूयस्त्वात् अग्निर्देवता। स च वाचि। सा च हृदीत्यर्थः॥ २४॥

एवमाद्यद्वितीयादिपञ्चमदिक्पर्यायक्रमेण रूपकर्मनाम्नां सर्वजगदात्मकानां मनोविलासरूपत्वादर्थान्मनोद्वारा हृद्युपसंहार उक्तः। तच्च सर्वात्मकं हृदयं कस्मिन्नु प्रतिष्ठितमिति पृष्टे उत्तरमाह—

अहँल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासै। यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानो वैतदद्युर्वयाँसि वैतद्विमथ्नीरन्निति॥ २५॥

अहनि लीयत इति व्युत्पत्तेर्नूनं त्वं प्रेतोभूतोऽसीति लक्ष्यते। यतो यत्किञ्चित् प्रेतवद्भाषस इति प्रेतनाम्ना शाकल्यं सम्बोधयन् याज्ञवल्क्य उवाच। किम् ? यत्रैतद्धृदयं शरीरस्य आत्मभूतमस्मदस्मत्त

एतस्माच्छरीरादन्यत्र वर्तत इति यदि मन्यासै मन्यसे तदा शरीरं मृतमेव स्यादिति शेषः। एतमेव विशदयति—यदीति। यद्यदि ह्येतत् हृदयमस्मच्छरीरादन्यत्र स्याद्भवेत्तदा श्वानो वा एतच्छरीरमद्युर्भक्षयेयुः। वयांसि वा पक्षिणो वा गृध्रादय एतच्छरीरं विमथ्नीरन् विलोडयेयुः विकर्षेरन्। अतः शरीर एव हृदयं प्रतिष्ठितं तदपि हृदय इत्यर्थादुक्तमित्यर्थः ॥ २५ ॥

एवमन्योन्यप्रतिष्ठितयोः स्थूलसूक्ष्मशरीरयोः कार्यत्वात्तेऽपि कुत्र प्रतिष्ठिते इति पृच्छति—

कस्मिन्नु त्वं चाऽऽत्मा च प्रतिष्ठितौ स्थ इति ? प्राण इति। कस्मिन्नु प्राणः प्रतिष्ठित इति ? अपान इति। कस्मिन्न्वपानः प्रतिष्ठित इति ? व्यान इति। कस्मिन्नु व्यानः प्रतिष्ठित इति ? उदान इति। कस्मिन्नूदानः प्रतिष्ठित इति ? समान इति। स एष नेति नेत्यात्मा ऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति। एतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः। स यस्तान् पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्। तं त्वौपनिषदं पुरुषं पृच्छामि। तं चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति। तँ ह न मेने शाकल्यस्तस्य ह मूर्धा विपपात। अपि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥२६॥

कस्मिन्न त्वं च शरीरमात्मा च हृदयं चेत्येतौ युवां प्रतिष्ठितौ स्थ इति पृष्ट उत्तरमाह—प्राण इति। प्राणे ऊर्ध्ववृत्त्यात्मके प्रतिष्ठितौ। स चापानेऽधोवृत्तिरूपे, अन्यथा ऊर्ध्वमेव गच्छेत्। स चापानो व्याने मध्यस्थवृत्तिरूपे, अन्यथा उभयोरूर्ध्वाधोगमनमेव भवेत्। स च व्यान उदाने नाभिस्थवृत्तिरूपे कीलकस्थानीये त्रयाणां बन्धनरूपे। स चोदानः समाने सूत्रात्मशब्दवाच्ये। सोऽप्यन्तर्यामिणि। सोऽप्यक्षरे कूटस्थे ब्रह्मणीति अप्यर्थात् दर्शितमेवेति मत्वा श्रुतिः स्वमुखेनैव तस्य ब्रह्मणः स्वरूपमाह—स इति। स यः सूत्राश्रयान्तर्यामित्वकल्पनाधिष्ठानभूतः स परमात्मैष प्रत्यगात्मैव मूर्तामूर्तब्राह्मणे नेति नेतीत्येवं सकलोपाधिनिषेधेन निर्दिष्ट आत्मा अगृह्यः करणागोचरः। कुतो हि ?

यस्माच्छब्दप्रत्यययोः प्रवृत्तिनिमित्तसकलकार्यधर्मातीतत्वान्न गृह्यते। तथा अशीर्योऽपक्षयधर्मरहितो हि यस्मान्न शीर्यते नापक्षीयते, शरीरादेरेव तद्धर्मत्वात्। तथा असङ्गः सङ्गित्वधर्महीनो हि यस्मान्न सज्यते केनचित्सह न सम्बध्यते, मूर्तस्यैव तद्धर्मत्वात्। तथा असितोऽबद्धो बाह्याभ्यन्तरशून्यो न व्यथते। यस्मादेवमादिधर्मैं रहितस्तस्मान्न रिष्यति न विनश्यतीत्यर्थः। अथ पुनः पूर्वामेव आख्यायिकामनुसृत्य अयं प्रेतीभूतो ब्रह्मवित्सन्नेव मां ब्रह्म पृच्छतीति सापराधित्वं सम्पादयितुं मुनिः पृच्छति—एतानीति। एतान्युक्तानि पृथिव्यादीन्यष्टौ आयतनानि अष्टौ लोका अग्न्यादयोऽष्टौ देवा अमृतमिति होवाचेत्यादयोऽष्टौ पुरुषाः शारीरः पुरुष इत्याद्युक्ताः। तान् शारीरप्रभृतीनष्टौ पुरुषान् स यः कश्चिद् ब्रह्मज्ञश्चतुष्कभेदेन निरुह्य निश्चयेन उह्य गमयित्वा लोकस्थितिमुपपाद्य पुनः प्राचीदिगादिद्वारेण स्वात्मनि हृदये प्रत्युह्य उपसंहृत्य पश्चात् हृदयाद्यात्मत्वलक्षणमपि समानान्तमुपाधिधर्ममत्यक्रामदतिक्रान्तवान्। स्वेनैवाऽऽत्मना व्यवस्थितस्तं ब्रह्मज्ञमौपनिषदमुपनिषत्स्वेव विज्ञेयं पुरुषमशनायादिधर्मविवर्जितं हे शाकल्य त्वा त्वां पृच्छामि। तं चेत्पुरुषं मे मह्यं न विवक्ष्यसि विस्पष्टं न कथयिष्यसि तर्हि ते तव अब्रह्मविदो ब्रह्मवित्त्वाभिमानिनो मूर्धा शिरो विपतिष्यति विस्पष्टं पतिष्यति। इतिशब्द आख्यायिकासमाप्तिद्योतकः। एवं शापे दत्ते किं वृत्तमिति जिज्ञासायां श्रुतिः स्वमुखेनैवाऽऽह—तमिति। तमौपनिषदं पुरुषं शाकल्यो न मेने ह न ज्ञातवान्किल। तस्य ह शाकल्यस्य मूर्धा विपपात पतितः। ब्रह्मविद्द्वेषे परलोकविघातोऽपि स्यादिति दर्शयितुमष्टाध्याय्यां निर्वृत्ताख्यायिकार्थमिह सूचयति—अपीति। न केवलमसौ मृत एव, किन्त्वस्य अस्थीन्यप्यग्निहोत्रेण संस्कारार्थं शिष्यैश्चैलखण्डेन बद्ध्वा गृहान् प्रति नीयमानानि परिमोषिणस्तस्करा अन्यद्धनमेतैर्नीयत इति मन्यमानाः सन्तोऽपजह्रुरपहृतवन्त इत्यर्थः॥ २६॥

यस्य ब्रह्मणो नेति नेतीत्यन्यप्रतिषेधद्वारेण निर्देशः कृतस्तस्येदानीं विधिमुखेन निर्देशः कर्तव्यो जगतो मूलं च वक्तव्यमित्येतदर्थं श्रुतिराख्यायिकामेव पुनरनुसृत्य ब्राह्मणानुमतिमन्तरेण गोग्रहणस्य अनर्थपर्यवसायित्वात् तदनुमतिसंपत्तिहेतुभूतं पराजयं कर्तुं मुनिस्तान् पृच्छतीत्याह—

अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्वे वा मा पृच्छत। यो वः कामयते तं वः पृच्छामि सर्वान् वा वः पृच्छामीति। ते ह ब्राह्मणा न दधृषुः ॥ २७॥

अथ शाकल्यशिरःपातं दृष्ट्वा ब्राह्मणानां तूष्णींभावानन्तरं भो ब्राह्मणा भगवन्त इति सम्बोध्य तान्प्रति होवाच। किम्? वो युष्माकं मध्ये यो याज्ञवल्क्यं पृच्छामीति कामयत इच्छति स मा मां पृच्छतु। वा अथवा सर्वे यूयं मा मां पृच्छत। यद्वा वो युष्माकं मध्ये याज्ञवल्क्यो मां पृच्छत्विति यः कामयते तं पुरुषं वो युष्माकं मध्ये वर्तमानमहं पृच्छामि। वाऽथवा सर्वान् वो युष्मानहं पृच्छामीत्येवमुक्ता अपि ते ब्राह्मणा न दधृषुर्न प्रगल्भाः संवृत्ताः किञ्चिदपि प्रत्युत्तरं दातुमित्यर्थः ॥ २७॥

जगत्कारणं प्रष्टुं पुरुषवृक्षयोस्तावत् श्लोकत्रयेण साधर्म्यमाह—

तान्हैतैः श्लोकैः पप्रच्छ— १. यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा। तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः ॥ २. त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः। तस्मात्तदातृण्णात्प्रैति रसो वृक्षादिवाऽऽहतात् ॥ ३. मासाँन्यस्य शकराणि कीनाटँ स्नाव तत्स्थिरम्। अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥ ४. यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः। मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति ॥ ५. रेतस इति मा वोचत जीवतस्तत्प्रजायते। धानारुह इव वै वृक्षोऽञ्जसा प्रेत्य संभवः ॥ ६. यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत्। मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति ॥ ७. जात एव न जायते को न्वेनं जनयेत् पुनः। विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं तिष्ठमानस्य तद्विद इति ॥ २८ ॥

तानप्रगल्भानपि ब्राह्मणान् एतैर्वक्ष्यमाणैः श्लोकैः पप्रच्छ ह किल। यथा लोके वृक्षस्तद्विशेषणं वनस्पतिस्तथैव तत्सधर्मैव पुरुष इत्येतद् मृषा न मिथ्या सत्यमेव यतस्तस्य पुरुषस्य लोमानि तत्स्थानीयानि वनस्पतेः पर्णानि। त्वगस्य पुरुषस्य वृक्षस्य तु तत्स्थानीया बहिरुत्पाटिका सर्वापेक्षया बहिर्भूता नीरसा त्वक्। त्वचः सकाशादेवास्य पुरुषस्य रुधिरं प्रस्यन्दि निःसरति। वृक्षस्यापि त्वचः सकाशादेव उत्पटो निर्यासः प्रस्यन्दी। एवमुक्तं साधर्म्यमनुभवेन निगमयति—तस्मादिति। यस्माद्वनस्पतेः पुरुषस्य च सर्वं समानं तस्मादाहताच्छिन्नात् वृक्षाद्वनस्पते रस इव निर्यास इव आतृण्णात् हिंसितात् पुरुषात्तद्रुधिरं प्रैति निर्गच्छति। किञ्च—अस्य पुरुषस्य मांसानि तत्स्थानीयानि वनस्पतेः शकराणि शकलानि। कीनाटं नाम वृक्षस्य शकलेभ्योऽभ्यन्तरं काष्ठसंलग्नं वल्कलरूपमुच्यते। तत्स्थानीयं पुरुषस्य स्नावास्थिसंलग्नो धातुविशेषस्तदुभयं स्थिरं दृढं पुरुषस्य स्नावभ्योऽन्तरतोऽस्थीनि भवन्ति। तत्स्थानीयानि वृक्षस्याभ्यन्तरतो दारूणि काष्ठानि। मज्जाशब्देन उभयत्र अस्थिकाष्ठगतस्नेह उच्यते। स च वृक्षपुरुषयोर्मज्जैव मज्जाया उपमा कृता नान्यो विशेष इत्यर्थः। अथ तयोर्वैधर्म्यकथनपुरःसरं जगत्कारणं पृच्छति—यदिति। यद्यदि वृक्षो वृक्णश्छिन्नः पुनः पुनरपि मूलान्नवतरः पूर्वस्मादभिनवतरः प्ररोहति प्रादुर्भवति। मर्त्यो मनुष्यः स्वित् पुनर्मृत्युना यमेन वृक्णो मारितः कस्मान्मूलात्कारणात्प्ररोहति पुनर्जायत इति भवतोऽहं पृच्छामीत्यर्थः। तत्र शङ्कामुद्भाव्य निराचष्टे—रेतस इति। हे ब्राह्मणा रेतसः सकाशात्पुरुषः प्ररोहतीति मावोचत मैवं वक्तुमर्हथ। यतस्तद्रेतो जीवतः पुरुषात् प्रजायते न मृतात्। जीवंश्च कोऽपि नास्ति मृतपुरुषशब्देन प्रलीनसर्वशरीरादिजगज्जातस्यैव उच्यमानत्वात्। अत एव दृष्टान्ते वृक्षमात्रसंग्राहकं वनस्पतिविशेषणं कृतम्। तस्माद्रेतोभावान्न तत्कारणम्। अपि च—धाना बीजं तस्याः सकाशाद्रोहतीति धानारुहो वृक्षोऽञ्जसा सम्यक्संभवो दृष्टः काण्डरुहोऽपि। इवशब्दो वैधर्म्यदृष्टान्तार्थः। वै प्रसिद्धिद्योतनार्थः। तथा च यथा वै वृक्षः प्रेत्य मृत्वा काण्डरुहो धानारुहश्चाञ्जसा संभवतीति प्रसिद्धं न तथा मृतस्य पुरुषस्य पुनरुत्पत्तौ किञ्चिदपि कारणं दृश्यते भवितव्यं च तेनेत्यर्थः। ननु सकारणकनष्टवृक्षवज्जगतोऽपि तथा नाशात्पुनरनुपत्तेर्न कारणान्वेषणेति चेत्सत्यम्। यद्यदि वृक्षं सह मूलेन कारणमात्रेण आवृहेयुरुत्पाटयेयुस्तदा पुनरागत्य न भवेन्न तिष्ठेत्। तद्वत्सम्यग्ज्ञानाभावात् जगतः कारणेऽनुन्मूलिते सति मर्त्यः स्विन्मृत्युना

वृक्णः कस्मान्मूलात् प्ररोहतीति । वः पृच्छामीत्यर्थः । स्वभाववादमवलम्ब्य चोदयति—जात एवेति । यस्तु मृतः स पुनर्नैव जायते जातत्वादेव । जनिष्यमाणस्य हि कारणचिन्ता न जातस्य, अतोऽत्र प्रश्न एवानुपपन्न इति चेन्नेति पृथग्वाक्यम् । यन्मतं जात एवेति तन्न । किं तर्हि ? मृतः पुनरपि जायत एव, अन्यथा कृतनाशाकृताभ्यागमः स्यात् अतो वः पृच्छाम्येनं मृतं पुरुषमनु पश्चात्पुनः को जनयेदिति । एवं पृष्टा जगन्मूलानभिज्ञा याज्ञवल्क्येन जिता गावश्च हृता इत्याख्यायिकां समाप्य जगन्मूलं विधिमुखव्यपदेशकशब्दैः श्रुतिः स्वमुखेनैव अस्मभ्यमुपदिशति—विज्ञानमिति । विज्ञप्तिर्विज्ञानं कूटस्थचिन्मात्ररूपमेव । तच्चाऽऽनन्दं दुःखाननुविद्धविक्रियमाणसुखस्वरूपं तदेवानन्दात्मकं विज्ञानं ब्रह्म विविधपरिच्छेदशून्यं यत्साक्षादपरोक्षादित्याद्युक्तलक्षणम् । रातिर्बन्धुः । यद्वा रातिरिति प्रथमा षष्ठ्यर्थे । रातेर्धनस्य दातुः कर्मकर्तुर्यजमानस्याविद्यावतः परमयनं परा गतिर्जगत उपादानं च । तथैषणाभ्यो व्युत्थाय तस्मिन्नेव मोहातीते ब्रह्मणि तिष्ठतीति तिष्ठमानस्तस्य तिष्ठमानस्य तदेव ब्रह्म वेत्तीति तद्वित्तस्य तद्विदो ब्रह्म परायणं परमा गतिः परिसमाप्तिः नदीनामिव समुद्र इत्यर्थः ॥ २८ ॥

इति तृतीयाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

॥ इति बृहदारण्यकब्राह्मणे पञ्चमोऽध्यायः ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्यश्रीनित्यानन्दाश्रमविरचितायां बृहदारण्यकव्याख्यायां मिताक्षराख्यायां तृतीयोऽध्यायः ॥ ३ ॥

—:०:—

## ॥ अथ चतुर्थोऽध्यायः ॥

एवं पञ्चमे जल्पन्यायेन ब्रह्म निर्धारितम् । तदेवेदानीं वादन्यायेन निर्णेतुं षष्ठोऽध्याय आरभ्यते । तत्र पञ्चमान्ते यद्विज्ञानमानन्दं ब्रह्म साक्षादित्यादिलक्षणमुक्तम्, तस्यैव वागाद्यधिष्ठात्र्यग्न्यादिदेवतासु ब्रह्मदृष्टिद्वारा निर्णयाय प्राथमिके षडाचार्यकूर्चब्राह्मणे विद्याग्रहणोपायाचारादिशिक्षार्थमाख्यायिकामनुसृत्य प्रवर्तते—

ॐ जनको ह वैदेह आसाञ्चक्रे । अथ ह याज्ञवल्क्य आवव्राज । तँ होवाच याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानिति । उभयमेव सम्राडिति होवाच ॥ १ ॥

जनको ह वैदेह आसाञ्चक्रे आसनं कृतवान् राजानं द्रष्टुकामानां

तद्दर्शनयोग्यावसरज्ञापनार्थमर्थिभ्यो राजा आख्यायिकां दत्तवानिति विवक्षितोऽर्थः। अथैतस्मिन्नवसरे ह तज्ज्ञो याज्ञवल्क्योऽनुग्रहाद्यर्थम् आवव्राज आगतवान्। तमागतं मुनिं ह यथावत् सम्पूज्य जनक उवाच। हे याज्ञवल्क्य किमर्थमचारीः आगतोऽसि? किं पुनरपि पशून् गा इच्छन् आहोस्विदण्वन्तान् सूक्ष्मवस्तुनिर्णयान्तान् प्रश्नान्मत्तः श्रुत्वा मम तदुत्तरं वक्तुमागतोऽसि? इति पृष्टः किमुक्तवानित्यत आह—उभयमिति। हे सम्राड् हे सार्वभौम उभयमेव ममाऽऽगमने निमित्तमिति मुनिरुवाचेत्यर्थः॥ १॥

राज्ञाऽज्ञातमर्थं तमुपदेष्टुकामो मुनिः पृच्छति—

यत्ते कश्चिदब्रवीच्छृणवामेत्यब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति। यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तच्छैलिनिरब्रवीद्वाग्वै ब्रह्मेति। अवदतो हि किँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मे। अब्रवीदित्येकपाद्वा एतत्सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य। वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येतदुपासीत। का प्रज्ञता याज्ञवल्क्य? वागेव सम्राडिति होवाच। वाचा वै सम्राड् बन्धुः प्रज्ञायत ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टँ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राट् प्रज्ञायन्ते। वाग्वै सम्राट् परमं ब्रह्म। नैनं वाग्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति। देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते। हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति॥ २॥

हे राजंस्ते तव कश्चिदाचार्यो यदब्रवीत्तद्वयं शृणवाम उपदेशस्य सदसत्परीक्षार्थम्। इतर आह—अब्रवीदिति। शिलिनस्यापत्यं शैलिनिर्जित्वेति नामवान् मे मह्यं वाग्वै वागभिमानिनी देवताऽग्निर्ब्रह्मे-

त्यब्रवीदुक्तवान्। शैलिनिना उपदिष्टमर्थं स्तोतुकामस्तस्या आप्तत्वप्रयोजकीभूतं शुद्धित्रयमाह—यथेति। माता यस्य पुत्रस्य अनुशासित्री विद्यते स मातृमान्। तत ऊर्ध्वं यस्य पिताऽनुशासिता वर्तते स पितृमान्। उपनयनादूर्ध्वमासमावर्तनात् यस्य आचार्योऽनुशासिता विद्यते स आचार्यवानिति आप्तत्वप्रयोजकीभूतशुद्धित्रययुक्तः कश्चिदाचार्यो यथा स्वशिष्याय ब्रूयात्तथा शैलिनिस्तुभ्यं तत् वाग्वै ब्रह्मेत्यब्रवीत्। अत्र मुनिरेव हेतुमाह—अवदत इति। अवदतो मूकस्य किं हि स्यान्न हि तस्य इह वाऽमुत्र वा किञ्चिदपि प्रयोजनं स्यात्। यथोक्तब्रह्मविद्यया कृतकृत्यत्वं मन्वानं प्रति मुनिराह—अब्रवीदिति। हे राजंस्ते तुभ्यं तस्य वाग्देवस्य ब्रह्मण आयतनं शरीरं प्रतिष्ठान च त्रिष्वपि कालेष्वाश्रयं च। तु पुनः किमब्रवीदिति पृष्टो राजाऽऽह—नेति। तदुभयं शैलिनिर्मे मम नाब्रवीत्। तर्हि हे सम्राड् एतदुपासनम् एकपाद्वै, एकः पादो यस्येत्येकपादेव त्रिभिः पादैर्हीनत्वादनुपास्यमेवेत्येवं मुनिना उक्तो राजा सविस्मयं पृच्छति—स इति। हे याज्ञवल्क्य स त्वं विद्वान् वै नोऽस्मभ्यं ब्रूहि कथयेत्युक्तो मुनिराह—वागिति। वागेव वागिन्द्रयमेव उक्तवाग्देवस्य ब्रह्मण आयतनं शरीरम्। आकाशोऽव्याकृताख्योऽन्तर्यामी तस्योत्पत्तिस्थितिलयकालेषु प्रतिष्ठा आश्रयः। एतद्वाग्देवताख्यं ब्रह्म प्रज्ञेत्येतदुपनिषदा नाम्नोपासीत चतुर्भिः पादैः पूर्णत्वेन फलदत्वात्। वाग्देवब्रह्मस्वरूपात् प्रज्ञोपनिषत् प्रतिष्ठायतनवद्भिन्नाऽभिन्ना वेति जिज्ञासया पृच्छति—केति। हे याज्ञवल्क्य का प्रज्ञतेति पृष्टो मुनिरुवाच उक्तवान् हे सम्राड् वाग्देवब्रह्मैव प्रज्ञा न ततो भिन्नेति। अत्र हेतुमाह—वाचेति। हे सम्राड् वाचा वै वाग्देवतयव बन्धुः प्रज्ञायते केनचिदयमस्मद्बन्धुरित्युक्ते प्रकर्षेण ज्ञायते। तथा ऋग्वेदादि व्याख्यानान्तं मैत्रेयिब्राह्मणोक्तार्थम्। इष्टं यागनिमित्तं धर्मजातम्। हुतं होमनिमित्तम्। आशितमन्नदाननिमित्तम्। पायितं पेयदाननिमित्तं धर्मजातम्। अयं च लोक इदं च जन्म परश्च लोकः प्रतिपत्तव्यं च जन्म सर्वाणि च भूतानि वाचैव सम्राट् प्रज्ञायन्ते। अतो वाग्वै वाग्देवतैव परमं ब्रह्मेति चिन्तयेत। एवमुपासितुः फलमाह—नेति। य एवमुक्तप्रकारेण विद्वानेतद्वाग्देवतारूपं ब्रह्मोपास्ते एनमुपासकं वाग्देवता न जहाति। सर्वाणि च भूतानि एनमुपासकमभिक्षरन्ति बलिदानाद्युपहारैः संयोजयन्ति। स इहैव देवो भूत्वा आविर्भूतदेवभावो भूत्वा पुनः शरीरपातोत्तरकालं देवानप्येति अपिगच्छति। विद्यानिष्क्रयार्थं प्रतिजज्ञ इत्याह—हस्तीति। हस्तितुल्य ऋषभो यस्मिन्

सहस्रे विद्यते तत्तथा। एवंभूतं गोसहस्रं ददामीति जनको वैदेह उवाच। एवमुक्तः स याज्ञवल्क्य उवाच। किम्? अननुशिष्य शिक्षामकृत्वां शिष्यं कृतार्थमकृत्वा ततो धनं न हरेतेति मे मम पिता अमन्यत मन्यते स्म, ममाप्येतदेव मतमित्यर्थः ॥ २ ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्म उदङ्कः शौल्बायनः प्राणो वै ब्रह्मेति। यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तच्छौल्बायनोऽब्रवीत् प्राणो वै ब्रह्मेति। अप्राणतो हि किँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मे। अब्रवी-दित्येकपाद्वा एतत्सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य। प्राण एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत। का प्रियता याज्ञवल्क्य? प्राण एव सम्राडिति होवाच। प्राणस्य वै सम्राट् कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राण-स्यैव सम्राट् कामाय। प्राणो वै सम्राट् परमं ब्रह्म। नैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवान-प्येति य एवं विद्वानेतदुपास्ते। हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ३ ॥

तथा उदङ्को नामतः शुल्बस्यापत्यं शौल्बायनः प्राणो वायुर्देवता यस्याः प्राणोऽध्यात्मं वायुसहितं घ्राणेन्द्रियमेव आयतनमित्यादि समानम्। प्राणदेव एव प्रियोपनिषदित्यत्र हेतुमाह—प्राणस्येति। हे सम्राट् प्राणस्य वै कामाय प्राणाभिरक्षणार्थाय हि पुमानयाज्यं पतितादिकमपि याजयति। तथाऽप्रतिगृह्यस्य उग्रादेः प्रतिगृह्णाति। अपि च धनाद्यर्थं यां तस्करादिसङ्कीर्णमपि दिशमेति गच्छति तत्र तस्यां दिशि वधनिमित्त-माशङ्कं वधाशङ्कं वधाशङ्का भवति। तथाऽपि गच्छत्येव प्राणास्यैव सम्राट् कामाय। अतः प्राणो वै सम्राट् परमं ब्रह्मेत्यर्थः ॥ ३ ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे बर्कुर्वार्ष्णश्चक्षुर्वै

ब्रह्मेति। यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेति। अपश्यतो हि किँ स्यादित्यब्रवीत्तु ते तस्याऽऽयतनं प्रतिष्ठां न मे। अब्रवीदित्येकपाद्वा एतत्सम्राडिति। स वै नो ब्रूहि याज्ञवल्य। चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत। का सत्यता याज्ञवल्क्य ? चक्षुरेव सम्राडिति होवाच। चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्षमिति तत्सत्यं भवति। चक्षुर्वै सम्राट् परमं ब्रह्म। नैनं चक्षुर्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते। हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ४ ॥

वर्कुरिति नामतः। वृष्णस्यापत्यं वार्ष्णः। चक्षुरिति तदधिष्ठात्री देवताऽऽदित्यस्तस्य चक्षुरेव चक्षुरिन्द्रियमेव आयतनम्। सत्यमित्यादित्यब्रह्मण उपनिषत्। तस्य सत्यत्वं साधयति—चक्षुषेति। हे सम्राट् चक्षुषा पश्यन्तं वै पुरुषं प्रति लोका आहुस्त्वं हस्तिनमद्राक्षीरिति। स चेत्तान् प्रत्यद्राक्षमित्याह तदा तत्सत्यमेव भवत्यव्यभिचारात्। यत्पुनरहमश्रौषमिति श्रोता वदति तदनृतमपि कचिद्भवति व्यभिचारादित्यर्थः ॥ ४ ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे गर्दभीविपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति। यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेति। अशृण्वतो हि किँ स्यादित्यब्रवीत्तु ते तस्याऽऽयतनं प्रतिष्ठां न मे। अब्रवीदित्येकपाद्वा एतत्सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य। श्रोत्रमेवाऽऽयतनमाकाशः प्रतिष्ठानन्त इत्येनदुपासीत। काऽनन्तता याज्ञवल्क्य ? दिश एव सम्राडिति होवाच। तस्माद्वै सम्राडपि यां कां च दिशं गच्छति नैवास्या अन्तं

गच्छति। अनन्ता हि दिशो दिशो वै सम्राट् श्रोत्रँ् श्रोत्रं वै सम्राट् परमं ब्रह्म नैनँ् श्रोत्रं जहाति सर्वाण्येनं भूता-न्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते। हस्त्यृषभँ् सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति॥ ५॥

गर्दभीविपीत इति नामतो भारद्वाजो गोत्रतः। श्रोत्रं तदभिमानिनी दिग्देवतोच्यते। श्रोत्रमेव श्रोत्रेन्द्रियमेवाऽऽयतनम्। दिशोऽनन्तत्वं साधयति—तस्मादिति। कश्चिद्यां कां प्राचीमुदीचीं वा दिशं गच्छति सोऽस्या दिशोऽन्तं नैव गच्छति नैव प्राप्नोति अतोऽनन्ता हि दिशाः। तथाऽपि श्रोत्रब्रह्मणः किमायातमित्यत आह—दिशो वै सम्राट् श्रोत्रमिति। कथमेतदिति चेच्छृणु। आकाशमेव तत्तत्प्रदेशसम्बद्धं सत् तत्तद्दिगाख्यां लभते तदतिरिक्तदिक्सद्भावे प्रमाणाभावात्। अतो न काचिदनुपपत्ति-रित्यर्थः॥ ५॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे सत्यकामो जाबालो मनो वै ब्रह्मेति। यथा मातृमान् पितृमानाचार्यवान् ब्रूया-त्तथा तज्जाबालोऽब्रवीन्मनो वै ब्रह्मेति। अमनसो हि किँ् स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मे। अब्रवीदित्येक-पाद्वा एतत्सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य। मन एवा-यतनमाकाशः प्रतिष्ठाऽऽनन्द इत्येनदुपासीत। काऽऽनन्दता याज्ञवल्क्य? मन एव सम्राडिति होवाच। मनसा वै सम्राट् स्त्रियमभिहार्यते तस्यां प्रतिरूपः पुत्रो जायते स आनन्दः। मनो वै सम्राट् परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूता-न्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते। हस्त्यृषभँ् सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति॥ ६॥

सत्यकामो नामतो जबालाया अपत्यं जाबालः। मनो वै ब्रह्मेति

तदधिष्ठात्री चन्द्रदेवतोच्यते। मन एवाऽऽयतनमिति करणोक्तिः। मनस आनन्दत्वं साधयति—मनसेति। हे सम्राट् स्त्रियमभिकाङ्क्षमाणो मनसा वै स्त्रियं प्रत्यभिहार्यते नीयते तया सम्बध्यते तस्यां स्त्रियां प्रतिरूपोऽनुरूपः पुत्रो जायते स पुत्र आनन्दस्तद्धेतुत्वादित्यर्थः॥ ६॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मेति। यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेति। अहृदयस्य हि किँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मे। अब्रवीदित्येकपाद्वा एतत्सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य। हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत। का स्थितता याज्ञवल्क्य? हृदयमेव सम्राडिति होवाच। हृदयं वै सम्राट् सर्वेषां भूतानामायतनँ हृदयं वै सम्राट् सर्वेषां भूतानां प्रतिष्ठा। हृदये ह्येव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति। हृदयं वै सम्राट् परमं ब्रह्म। नैनँ हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते। हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति॥ ७॥

विदग्धो नामतः शकलस्यापत्यं शाकल्यः। हृदयं वै ब्रह्मेति। हृदयाभिमानिनी देवता प्रजापतिरुच्यते। हृदयमेवाऽऽयतनमित्याध्यात्मिकहृदयोक्तिः। हृदयस्य स्थिततां साधयति—हृदयं वै सम्राट् सर्वेषां भूतानामायतनमिति। तस्य सर्वभूतायतनत्वं विशदयति—हृदयं वै सम्राट् सर्वेषां भूतानां प्रतिष्ठेति। एतदेकमेव उपासनं सर्वेषु पर्यायेषु वागाद्यायतनप्रतिष्ठाशब्दैः क्रमेण सूक्ष्मस्थूलतत्कारणत्वेन सूत्रविराडन्तर्यामिणामेव उपास्यमानत्वात् प्रतिपर्यायं फलश्रुतौ देवानिति बहुवचनप्रयोगाच्चेत्यर्थः॥ ७॥

इति चतुर्थाध्याये प्रथमं ब्राह्मणम्॥ १॥

इदानीं तैर्ज्ञेयस्य ब्रह्मणो जागरादिद्वारा ज्ञानार्थं कूर्चब्राह्मण-मारभ्यते—

जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्यानु मा शाधीति । स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्माऽस्येवं वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्कः । इतो विमुच्यमानः क्व गमिष्यसीति । नाहं तद्भगवन् वेद यत्र गमिष्यामीति । अथवा तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति । ब्रवीतु भगवानिति ॥ १ ॥

जनको ह वैदेहः कूर्चादासनविशेषादुत्थाय संभावितोपदेशलाभार्थं मुनेरुपसमीपमवसर्पंस्तत्पादयोः पतन् सन्नुवाच । हे याज्ञवल्क्य ते तुभ्यं नमोऽस्तु त्वं तु मा मामनुशाधि शिक्षय । येन विनाऽहम् अकृतार्थ इत्युक्तं त्वया तत्तत्त्वज्ञानमुपदिशेति यावत् । मुमुक्षवे द्वयं वाच्यं ज्ञानं तत्साधनं च । तत्र ज्ञानसाधनं राज्ञोऽस्तीति दृष्टान्तपूर्वकं कथयतीत्याह—स इति । स एवं प्रार्थितो याज्ञवल्क्य उवाच । हे सम्राड् यथा लोके पुमान् महान्तं दीर्घमध्वानं स्थलेन जलेन वैष्यन् गमिष्यन् यथाक्रमं रथं नावं वा समाददीत सम्यक्प्रकारेण आददीत गृह्णीयात् एवमेवैताभिः प्रियामित्याद्युक्ताभिरुपनिषद्भिः समाहितात्मा संयुक्तात्मा समाहितचेतस्कोऽसि । किञ्च—एवं वृन्दारकः पूज्य आढ्य ईश्वरो धनादिसम्पन्नः सन्नधीतो वेदो येन स त्वमधीतवेद आचार्यैरुक्ता उपनिषदो यस्मै स त्वमुक्तोपनिषत्क स्य तत्साधनसम्पन्नत्वाद्राज्ञो न तद्वक्तव्यम् । ज्ञानं चेन्न भविष्यति तर्हि तद्वक्तव्यमित्याशयवान् मुनिस्तदस्ति न वेति बोद्धुं ज्ञानसाध्यां प्रनाड्योपासनफलभूतां मुक्तिं पृच्छति—इत इति । इतोऽस्माद्देहाद्विमुच्यमान एताभिर्नौरथस्थानीयाभिरुपासनाभिः समाहितः सन् क्व कस्मिन् गमिष्यसि किं वस्तु प्राप्स्यसीति पृष्टो राजाऽऽह—नेति । हे भगवन् जावन्नाहं तद्गन्तव्यं वस्तु न वेद न जाने यत्र गमिष्यामि यत्र गतः कृतार्थः स्यामित्युक्ते मुनिराह—अथवा इति । ते तुभ्यमहं तद्वस्तु वक्ष्यामि कथयिष्यामि यत्र गमिष्यसि यत्र गतः कृतार्थः स्याः । राजाऽऽह—यदि मां प्रति भगवान् प्रसन्नोऽस्ति तर्हि ब्रवीतु कथयत्वित्यर्थः ॥ १ ॥

अथ विश्वतैजसप्राज्ञानुवादेन वक्तव्यतया प्रतिज्ञातं तुरीयं ब्रह्म प्रतिपादयितुमादौ वैश्वानराभिन्नं विश्वं जाग्रदभिमानिनं दर्शयति—

इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिन्धँ सन्तमिन्द्र इत्याचक्षते परोक्षेणेव । परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥

इध्यते दीप्यते जागरिते स्थूलार्थभोक्तृत्वेन सदा स्फुरणादिन्धो ह वै नाम प्रसिद्ध एष आदित्यान्तर्गतश्चक्षुर्वै ब्रह्मेत्याद्युक्तः । कः ? योऽयं दक्षिणेऽक्षन्नक्षणि पुरुषोऽध्यात्मरूपमापन्नस्तं वा एतं पुरुषमिन्धं सन्तं दीप्तिगुणत्वात्प्रत्यक्षं सन्तमिन्द्र इति परोक्षेणेवेति इवशब्दोऽवधारणार्थः । परोक्षेणैवाऽऽचक्षते । कुतो हि यस्माद्देवाः परोक्षप्रिया इव परोक्षनामग्रहणप्रिया एव लोकवत् । अपि च—प्रत्यक्षं नाम द्विषन्तीति प्रत्यक्षद्विषश्च लोकवदित्यर्थः ॥ २ ॥

अथैतद्वामेऽक्षणि पुरुषरूपमेषाऽस्य पत्नी विराट् तयोरेष सँस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डः । अथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः सञ्चरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति । यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवन्ति । एताभिर्वा एतदास्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मनः ॥ ३ ॥

अथैतदेवोक्तं पुरुषरूपं स्वरूप वामेऽक्षणि गतं सदस्यैव उक्तस्य इन्द्रस्य भोक्तुवैश्वानरस्यैषा विराट् पत्नि भोग्यत्वात् । तथा च यदेतन्मिथुनं जागरिते विश्वशब्दवाच्यं तदेवैकं स्वप्ने तैजसशब्दवाच्यमित्यर्थादुक्तमेव । अत एवास्य स्वप्नावस्थस्य मिथुनस्य स्थानमाह—तयोरिति । तयोरिन्द्रेन्द्राण्योः स्वप्नावस्थामापन्नयोरेष संस्तावः संस्तुतो मिथः सङ्गतिं गच्छतो यत्र स संस्तावः । कोऽसौ ? य एष प्रसिद्धोऽन्तर्हृदये हृदयस्य मांसपिण्डस्यान्तर्मध्य आकाशः सुषिरः स इत्यर्थः । अथैनयोः उक्तावस्थयोः इन्द्रेन्द्राण्योरेतद्वक्ष्यमाणमन्नं भोज्यं

स्थितिहेतुः। किं तत् ? य एषोऽन्तर्हृदये लोहित एव पिण्डो लोहितपिण्डो भुक्तान्नस्य अणिष्ठो रसो नाडीगतो मध्यमस्य तु पिण्डोपचयहेतुत्वात् स्थूलस्य चाधोगतत्वात्। ननु भुक्तवतोः स्वपतोश्च लोकवत्प्रावरणेन भाव्यमित्यपेक्षायामाह—अथेत । एनयोः पूर्वोक्तयोरेतत्प्रावरणं किं यदेतदन्तर्हृदये जालकमिव अनेकनाडीछिद्रबहुत्वात् जालकवत्प्रतिभासमानम्। अथ स्वापानन्तरं जाग्रत्स्थानमाजिगमिषतोरेनयोः दम्पत्योरेषा सृतिर्मार्गः सञ्चरणी, सञ्चरतः स्वप्राज्जागरितमनयेति सञ्चरणी। का सा ? यैषा हृदयात् हृदयदेशादूर्ध्वाभिमुखा सती नाड्युच्चरति उद्गच्छति एवमन्या अपि नाड्यः सन्तीत्युक्त्वा सर्वासां परिमाणं दृष्टान्तपूर्वकमाह— यथेति। यथा लोक एकः केशः सहस्रधा भिन्नोऽत्यन्तं सूक्ष्मः भवत्येवं सूक्ष्मा अस्य पुरुषस्य देहसम्बन्धिन्य एताः स्वप्राज्जाग्रद्गमनादिहेतुभूता नाड्यो हिता नाम हिता इत्येवं नाम्ना ख्याताः, ताश्चान्तर्हृदये मांसपिण्डे प्रतिष्ठिता भवन्ति। हृदयाच्च विप्ररूढास्ताः सर्वत्र कदम्बकेसरवत् प्रसृता इत्यर्थः। उक्तनाडीनामुपयोगकथनपूर्वकं सूक्ष्मतमत्वकथनप्रयोजनमाह—एताभिरिति। एताभिर्नाडीभिरत्यन्तं सूक्ष्माभिर्वा एवैतत्पूर्वोक्तं सूक्ष्मतममन्नम् आस्रवद् गच्छद्देहं व्याप्नुवदास्रवति करणान्तःकरणात्मकलिङ्गोपाधिकं विज्ञानमयमाप्नोति स्थित्यर्थम्। यस्मादेवं तस्मादेष तैजसः प्रविविक्ताहारतरः प्रविविक्तादपि प्रविविक्ततरः सूक्ष्मतम आहारो यस्य स प्रविविक्ताहारतर इवैव भवति। किमपेक्षयेत्यत आह—अस्मादिति। अस्माच्छारीरात् स्थूलशरीरोपाधेः वैश्वानरादात्मनः सकाशात्तस्य हि स्थूलमूत्रपुरीषाद्यपेक्षया प्रविविक्तलोहितादिहेतुमध्यमरसः स्थितिहेतुः। तथा च पूर्वस्येवशब्दस्य उपमार्थत्वाद्यथा प्रविविक्ताहारो विश्वस्तथाऽयं तैजसो न प्रविविक्ताहार एव, किन्तु प्रविविक्ताहारतर इति योजना॥ ३॥

अथास्य अवच्छेदकाध्यात्मप्राणलयमाह—

तस्य प्राची दिक् प्राञ्चः प्राणा दक्षिणा दिग्दक्षिणे प्राणाः प्रतीची दिक्प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः। स एष नेति नेत्यात्माऽगृह्यो न हि

गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति । अभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः । सहोवाच जनको वैदेहोऽभयं त्वा गच्छता-द्याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मि ॥ ४ ॥

तस्य वैश्वानरात्तैजसं सूत्राभिन्नं प्राप्तस्य ये प्राञ्चः प्रागञ्चन्ति गच्छन्तीति प्राञ्चः प्राणा नासाद्वारा अग्रतः सञ्चरन्तस्ते प्राची दिगेव संवृत्ता प्रत्यक्कारणात्मनि लीना इति यावत् । एवं दक्षिणा दिग्दक्षिणे प्राणा इत्यादि व्याख्येयम् । तथा चोपाधिभूतानां प्राणानां कारणे लयं दर्शयन्ती श्रुतिरुपहितस्यापि सूत्राभिन्नस्य तैजसस्य प्राज्ञाभिन्नकारणात्मनीश्वर उपसंहारोऽर्थात्कृत एवेति मत्वा तस्येश्वरात्मभूतस्य उपासितुरीश्वरत्वोपाधिविनिर्मुक्तं स्वरूपमाह--स एष नेति नेत्यादि न रिष्यतीत्यन्तेन उक्तार्थेन । एवं ब्राह्मणाभ्यामुक्तोपासनवशात् उत्पन्नैकात्म्यज्ञानफलं मुनिरुक्तवानित्याह—अभयमिति । हे जनक त्वमभयं जन्ममरणादिनिमित्तभयशून्यं वै निश्चयेन प्राप्तोऽसीति याज्ञवल्क्य उवाच । एतावता 'अथ वै तेऽहं तद्वक्ष्यामी'ति प्रतिज्ञातज्ञानसिद्धिर्मयि जातेति बोधयन् पूर्वदक्षिणाया ज्ञानाननुरूपत्वेन दक्षिणान्तरं प्रतिजज्ञ इत्याह--स इति। स जनक उवाच । हे याज्ञवल्क्य त्वा त्वामप्यभयं गच्छताद् गच्छतु यस्त्वं नोऽस्मान् हे भगवन्नभयं ब्रह्म वेदयसे ज्ञापयसि अविद्याव्यवधानापनयेन साक्षादात्मानमेव दत्तवते ते तुभ्यं नमो नमस्कारोऽस्तु । अन्यत्किं देयम् ? इमे विदेहास्तव यथेष्टं भोगाय सन्तु । अयं चाहं तव दासभावेन स्थितोऽस्मि यथेष्टं मां राज्यं च प्रतिपद्यस्वेत्यर्थः ॥ ४ ॥

इति चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

अथैवमुक्तजाग्रदाद्यवस्थामवलम्ब्य उक्तमेव आत्मानं महता तर्केण विस्तरतोऽधिगमयितुं ज्योतिर्ब्राह्मणं ब्रह्मविद्यास्तुत्याद्यर्थमाख्यायिका-मनुसृत्य प्रवर्तते—

जनकँ ह वैदेहं याज्ञवल्क्यो जगाम । स मेने न वदिष्य

इति । अथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदाते तस्मै ह याज्ञवल्क्यो वरं ददौ । स ह कामप्रश्नमेव वव्रे । तँ हास्मै ददौ तँ ह सम्राडेव पूर्वः पप्रच्छ ॥ १ ॥

जनकं वैदेहं प्रति याज्ञवल्क्यो योगक्षेमार्थं जगाम गतवान् । स गच्छन् याज्ञवल्क्यो राज्ञेऽहं किञ्चिदपि न वदिष्य इति मेने विचारयामास । यद्वा एनेन राज्ञा सहाऽहं संवदिष्य इत्यभिप्रायवान याज्ञवल्क्यो वैदेहं जनकं जगाम । ननु न वदिष्य इति सङ्कल्पेऽप वदने को हेतुः ? संवदिष्य इति द्वितीयपक्षेऽपि वा को हेतुरत्यपेक्षायामुभयत्रापि वरदानमेव हेतुरिति कर्मकाण्डवृत्ताख्यायिकयाऽऽह—अथे त । ह किल यद्यत्र कर्मकाण्डे वैदेहो जनको याज्ञवल्क्यश्च परस्परमग्निहोत्रे निमित्ते समूदाते संवादं कृतवन्तौ तत्र राज्ञोऽग्निहोत्रविषयं विज्ञानं विशदमुपलभ्य परितुष्टो याज्ञवल्क्यस्तस्मै जनकाय ह किल वरं ददौ । स च जनको ह कामप्रश्नमेव इच्छाप्रश्नमेव वरं वव्रे वृतवान् । तं च वरं याज्ञवल्क्यो हास्मै राज्ञे ददौ दत्तवान् । तद्वशादेव तं तूष्णींभूतमपि याज्ञवल्क्यं ह पूर्वः पूर्वं सम्राडेव पप्रच्छ ॥ १ ॥

याज्ञवल्क्य किंज्योतिरयं पुरुष इति । आदित्यज्योतिः सम्राडिति होवाच । आदित्येनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ २ ॥ अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति । चन्द्रमा एवास्य ज्योतिर्भवतीति । चन्द्रमसैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ३ ॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किंज्योतिरेवायं पुरुष इति । अग्निरेवास्य ज्योतिर्भवतीति । अग्निनै-

वायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येव .मेवैतद्याज्ञवल्क्य ॥ ४ ॥

हे याज्ञवल्क्यायं पुरुषः कार्यकरणसङ्घातरूपः शिरःपाण्यादिमान् पिण्डः किं ज्योतिरस्य विद्यते स किंज्योतिर्येन ज्योतिषाऽनुगृहीतोऽयमासनादिव्यवहारं करोति। तत्किं देहादि तदतिरिक्तं वेति प्रष्टुरभिप्रायज्ञो मुनिरयं ह्यतिरिक्तज्योतिरेव पृच्छतीति तथाविधमेवेतरज्योतीरहितस्वप्नावस्थायां विविक्ततया बोधयितुं जागरिते तावद् दृष्टान्तभूतानि आदित्यादिवागन्तानि ज्योतींष्युपन्यस्यतीत्याह—आदित्येति। आदित्यो ज्योतिरस्येत्यादित्यज्योतिः सम्राडिति होवाच याज्ञवल्क्यः। तदेवोपपादयति—आदित्येनेति। आदित्येनैव चक्षुषोऽनुग्राहकेण देहकरणाद्यतिरिक्तेनैव ज्योतिषाऽयं प्रकृतः पुरुष आस्त उपविशति पल्ययते पर्येति गच्छतीति यावत्। गत्वा क्षेत्रादौ कर्म कुरुते पश्चाद्विपल्येति विपर्येति भूयो निवर्तत इत्यर्थः। एवमुक्तं देहादिव्यतिरिक्तं ज्योतिरङ्गीकरोति—एवमेवैतद्याज्ञवल्क्येति ॥ २—४ ॥

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योतिरेवायं पुरुष इति। वागेवास्य ज्योतिर्भवतीति। वाचैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति। तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ५ ॥

आदित्यादित्रयं प्रभावन्मण्यादीनामप्युपलक्षणपरम्। ततोऽपि पुंप्रवृत्तिदर्शनात्। वागेवेति शब्दोऽत्र गृह्यते नेन्द्रियम्। कथमस्य ज्योतिष्ट्वमित्यपेक्षायां शब्दसंस्कृतश्रोत्राधिष्ठातृमनोविवेकेन पुंप्रवृत्तिदर्शनादित्याभिप्रेत्याऽऽह—तस्मादित्यादिना। यस्माच्छब्दाख्यवाचा ज्योतिषाऽयं व्यवहरति तस्मात् प्रसिद्धमस्य ज्योतिष्ट्वम्। कथं हे सम्राड् यस्मिन्काले प्रावृडाद्यादौ स्वोऽपि स्वकीयोऽपि पाणिर्न विनिर्ज्ञायते विस्पष्टं न दृश्यते, अथ तस्मिन् काले बाह्यज्योतिषोऽभावेन सर्वचेष्टानिरोधे प्राप्ते यत्र यस्मिन्प्रदेशे वागुच्चरत्युद्भवति पश्वादेस्तेन शब्देन ज्योतिषा तत्र तस्मिन्प्रदेश उपन्येत्युपगच्छत्येव संनिहितो भवति मार्गं गृहं वा प्रपद्यत इति यावत्। एतद्वाग्ज्योतिर्ग्रहणं गन्धादेरप्युपलक्षणपरं तेषामपि शब्दवत्प्रवृत्त्यादिहेतुत्वादित्यर्थः ॥ ५ ॥

एतावता यो व्यवहारः स व्यवहर्तृदेहेन्द्रियाद्यतिरिक्तज्योतिः-साध्यो यथा आदित्यादिसाध्यो जाग्रद्व्यवहार इति व्याप्तौ सिद्धायां स्वप्नादावपि बन्धुसमागमादिकार्यदर्शनाद्भवितव्यं तत्राप्यतिरिक्तेन केनचिज्ज्योतिषेत्यनुमानतो ज्योतिर्मात्रे अवबुद्धेऽप्युपन्यस्तानां तत्रानुपलब्धिबाधितत्वात् किं तदिति विशेषं पृच्छति--

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते-
शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इति ।
आत्मैवास्य ज्योतिर्भवतीति । आत्मनैवायं ज्योतिषा-
ऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति ॥ ६ ॥

अस्तमित आदित्य इत्यादिना । उत्तरमाह--आत्मैवास्य ज्योतिर्भवतीति । तस्याऽऽत्मज्योतिषोऽर्थादन्तःस्थत्वेन सूर्यादिविलक्षणस्य कार्येणाव्यभिचारमाह--आत्मनैवायं ज्योतिषाऽऽस्त इत्यादिना ॥ ६ ॥

यद्यपि सङ्घातानुग्राहकमात्मज्योतिः सङ्घातातिरिक्तं न्यायतो निर्णीतं तथाऽपि सूक्ष्मन्यायस्य दुर्विज्ञेयत्वादनुग्राहकस्य अनुग्राह्यसमानजातीयत्वदर्शनाच्च आत्मस्वरूपं सन्दिहानः पृच्छति--

कतम आत्मेति । योऽयं विज्ञानमयः प्राणेषु हृद्यन्त-
र्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति
ध्यायतीव लेलायतीव । स हि स्वप्नो भूत्वेमं लोक-
मतिक्रामति मृत्यो रूपाणि ॥ ७ ॥

इह बुद्ध्यादयो बहवः पदार्थाः सन्ति. तेषु कतम आत्मेति पृष्टे तत्स्वरूपं प्राणादिभिन्नत्वेन दर्शयति--योऽयमिति । हे राजन्य त्वया पृष्टः सोऽयं विज्ञानमयो विज्ञायतेऽनेनेति व्युत्पत्तेर्विज्ञानं बुद्धिस्तन्मयस्तत्प्रायः । प्राणेष्विति सामीप्यलक्षणा सप्तमी। बुद्धिकर्मेन्द्रियपञ्चवाय्वाख्यपञ्चदशप्राणसमीपस्थो हृद्यन्तर्ज्योतिरिति लक्षणया हृदयस्थबुद्धौ अन्तर्वर्तमानं ज्योतिरात्मा 'आत्मनैवायं ज्योतिष'इत्युपक्रमात् । पुरुषः पूर्णः । तथा च विज्ञानमयः प्राणेषु ज्योतिर्हृदि पुरुष इत्येतैः पञ्चविशेषणैः क्रमेण बुद्धिप्राणादितत्सदृशबुद्धिवृत्त्यव्यापकत्वानीत्येताः पञ्च शङ्का निरस्ता इत्यर्थः। एवं सूक्ष्मदेहाद्यतिरिक्तस्य नित्यमुक्तस्याऽऽत्मनोऽविद्यया बुद्ध्यध्यासादेव संसारित्वमिति दर्शयितुमाह—स इति ।

स हृद्यन्तर्ज्योतीरूप आत्मा समानः सन् प्रकृतत्वात् संनिहितत्वाच्च बुद्ध्या सदृशः सन्नन्योन्यधर्माद्यध्यासे सति तत्प्रायःपिण्डवत्तादात्म्यापन्नः सन्नेवोभौ लोकौ प्रतिपन्नप्रतिपत्तव्यौ इहलोकपरलोकौ अनुक्रमेण उपात्तदेहं त्यजन्नन्यांश्च उपाददत् सञ्चरति न स्वतः। एतदेव प्रत्यक्षेण अभिनीय दर्शयति--ध्यायतीति । यतो ध्यानव्यापारवती बुद्धिरतस्तद्गतः सन्नवभासयन्नात्माऽपि ध्यायतीव ध्यानं करोतीवेति ज्ञायते, न तु परमार्थतस्तत्करोति । तथा लेलायतीव बुद्ध्यादिकरणेषु प्राणादिवायुषु चलत्सु तदाभासकतया तत्समान आत्माऽपि चलतीव न तु परमार्थतः। कुतो हेतोरेतदवगम्यत इत्यत आह--स इति । हि यस्मात्स आत्मा स्वप्नो भूत्वा स्वप्नाकारपरिणतधीवृत्त्यवभासकत्वेन तदाकारो भूत्वा इमं लोकं जागरितव्यवहारलक्षणं कार्यकरणसङ्घातात्मकमतिक्रामति तदभिमानं त्यजतीति यावत् । तथा मृत्यो रूपाणि चातिक्रामति मृत्युरज्ञानं रूप्यते निरूप्यते ज्ञाप्यते यैरहङ्कारादिभिस्तानि मृत्योरूपाण्यतिक्रामति। अतः सञ्चरणादिकं नाऽऽत्मनः स्वाभाविकं स्वभावस्य वह्न्युष्णत्वस्येव स्वसद्भावे सत्यतिक्रमणायोगादित्यर्थः ॥ ७ ॥

यथैवमेकस्मिन् देहे स्वप्नजागरिते सञ्चरत आत्मनो देहाद्व्यतिरिक्तत्वं तथेहलोकपरलोकयोः सञ्चारोक्त्याऽपि तद्व्यतिरेकित्वमाह--

स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः सँ सृज्यते स उत्क्रामन्म्रियमाणः पाप्मनो विजहाति ॥ ८ ॥

सोऽयं प्रकृतः पुरुषो जायमान उत्पद्यमानो न घटादिवत्स्वरूपतः किन्तु शरीरमभिसम्पद्यमानस्तत्राऽऽत्मभावं प्रतिपद्यमानो वा एव सन् पाप्मभिर्लक्षणया धर्माधर्माश्रयैः कार्यकरणैः संसृज्यते संयुज्यते। स एव पुनर्देहाद्यारम्भकीभूतकर्मक्षये सति म्रियमाण इत्यस्य व्याख्या उत्क्रामन् शरीरान्तरं प्रत्यूर्ध्वं क्रामंस्तानेव संसृष्टान् पाप्मनः कार्यकरणलक्षणान् विजहाति परित्यजति अभिमानत्यागमात्रेणेत्यर्थः ॥ ८ ॥

एवमागमतः परलोकास्तित्वे सिद्धेऽपि तत्र प्रत्यक्षं वाच्यम् । अतस्तदुक्तं यद्वाऽऽत्मज्योतिःसमानः सन पाप्मनो विजहातीत्येतान् सूचितांस्त्रीन् पदार्थान्स्वप्नावष्टम्भेन निर्णेतुमाह--

तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयँ स्वप्नस्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं च । अथ यथाक्रमोऽयं परलोक-

स्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दाँ-श्च पश्यति । स यत्र प्रस्वपिति अस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं ज्योतिर्भवति ॥ ९ ॥

तस्य वै प्रसिद्धस्यैतस्य प्रकृतस्य पुरुषस्य द्वे एव स्थाने भवतो न न्यूने । के ते ? इदं च प्रत्यक्षतोऽनुभूयमानं वर्तमानं जन्मैकम् । द्वितीयं तु परलोक एव स्थानम् । परलोकस्थानं भावि जन्म । एतयोः सन्धौ भवं सन्ध्यं तृतीयं त्रयाणां पूरणं स्वप्नस्थानम् । तस्मिन्सन्ध्ये स्वप्नस्थाने तिष्ठन्वर्तमानः सन्निदं च परलोकस्थानं चेत्येते उभे स्थाने पश्यति । किमाश्रितः केन विधिना परलोकं पश्यतीत्यत आह—अथेति । अथ यथाक्रमः आक्रामत्यनेनेत्याक्रमः आश्रयोऽवष्टम्भो विद्याकर्मपूर्वप्रज्ञा-लक्षणो यादृश आक्रमो यस्य सोऽयं यथाक्रमः । अयं पुरुषः परलोकस्थाने प्रतिपत्तव्ये निमित्ते यादृशेनाऽऽक्रमेण संयुक्तो भवति तमाक्रमं बीज-भूतमाक्रम्यावष्टभ्य उभयान् पाप्मनः पापफलानि दुःखान्यानन्दांश्च धर्म-फलभूतान् सुखविशेषान् पश्यत्येवंप्रकारेण धर्मादेवताप्रसादाद्वा अन्त्ये वयसि यदिहासंभाव्यमानं स्वप्ने पश्यति तत्पारलौकिकमेवेत्यर्थः । स खल्वात्मा बाह्यैर्ज्योतिर्भिरसंसृष्टः स्वयमेव यथाज्योतिर्भवति तथेदं स्वयंज्योतिष्ट्वं साक्षात्स्वप्नावष्टम्भेनाऽऽह—स इति । स प्रकृत आत्मा यत्र यस्मिन्काले प्रस्वपिति प्रकर्षेण स्वप्नमनुभवति तदा किमाश्रयः केन प्रकारेण स्वप्नं प्रतिपद्यत इत्याशङ्कायामाह—अस्येति । अस्य दृष्टस्य लोकस्य जागरितलक्षणस्य देहस्य कथंभूतस्य सर्वावतः सर्वा भूतभौतिकमात्रा अध्यात्मादिविभागयुक्ता अस्य संसर्गकारणभूता विद्यन्त इति सर्वावांस्तस्य सर्वावतो मात्रामेकदेशमवयवं वासनात्मक-मपादाय गृहीत्वा स्वयमात्मनैव आदित्यादिजाग्रद्देहं विहत्य निहत्य निःसम्बोधमापाद्य स्वयमेव स्वकर्मानुसारिस्वप्नदेहं प्रातिभासिकं निर्माय निष्पाद्य स्वेनाऽऽत्मीयेन भासा दीप्त्या मात्रोपादानलक्षणान्तःकरण-वृत्तिप्रकाशरूपेणेति यावत् । स्वेनाऽऽत्मज्योतिषा अलुप्तदृक्स्वभावेन निर्मितं वस्तु विषयीकुर्वन् प्रस्वपिति । अथत्रास्यां स्वापावस्थायामयं पुरुष आत्मा वयमेव ज्योतिर्भवति तदाऽऽदित्यादेरभावादिन्द्रियाणां चोपसंहृ-तत्वान्मनसश्च विषयाकारेणवोपक्षयादिति परिशेषादित्यर्थः ॥ ९ ॥

ननु स्वप्नेऽपि सर्वस्य आदित्यादेर्दृश्यमानत्वात् कथं परिशेषात् स्वयंज्योतिष्ट्वसिद्धिरित्याशङ्कायां तस्य सर्वस्य वासनामात्र-

निर्मितत्वादित्याह--

न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान् पथः सृजते। न तत्राऽऽनन्दा मुदः प्रमुदो भवन्त्यथाऽऽनन्दान् मुदः प्रमुदः सृजते। न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता ॥ १० ॥

तत्र स्वप्ने रथाः प्रसिद्धा रथैर्युज्यन्त इति रथयोगा अश्वादयः पन्थानो मार्गा न भवन्तीति प्रत्येकमभिसम्बध्यते न सन्ति। अथापि रथान् रथयोगान् पथो वासनात्मकान्सृजते। न तत्र स्वप्न आनन्दाः सुखसामान्यानि मुदः पुत्रादिसम्बन्धनिमित्ताः हर्षा मुद एव प्रकर्षोपेताः प्रमुदो भवन्ति। अथाऽऽनन्दान्मुदः प्रमुदः सृजते। न तत्र वेशान्ताः क्षुद्रसरांसि पुष्करिण्यस्तडागाः स्रवन्त्यो नद्यो भवन्ति। अथ वेशान्ताः पुष्करिण्यः स्रवन्त्य इति प्रथमा द्वितीयार्थे सृजते। कुतः? हि यस्मात्स आरोपितजीवात्मा कर्ता परिणम्यमानवासनादिसाक्षित्वेन न स्वत इत्यर्थः॥ १० ॥

तदेते श्लोका भवन्ति—स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति। शुक्रमादाय पुनरैति स्थानँ हिरण्मयः पुरुष एकहँसः॥ ११ ॥

तत्तत्रोक्तेऽर्थे स्वयंज्योतिरादिलक्षणे एते श्लोका मन्त्रा भवन्ति। तत्र स्वप्नप्रवेशतत्साक्षित्वमाह—स्वप्नेति। आत्मा स्वप्नेन स्वप्नभावेन वासनामात्रोपग्रहेण शारीरमिति स्वार्थे वृद्धिः। शरीरमभिप्रहत्य निश्चेष्टमापाद्य अलुप्तदृग्रूपत्वात् स्वयमसुप्तः सन्सुप्तानस्तमितानन्तःकरणवृत्त्याश्रितान्सर्वपदार्थानभितश्चाकशीति अलुप्ततयाऽऽत्मदृष्ट्या पश्यत्यवभासयतीत्यर्थः। स्वाप्नभोगक्षयेऽथ जागरितमेतीत्याह—शुक्रमिति। शुक्रं शुद्धं ज्योतिष्मदिन्द्रियादिमात्रारूपमादाय गृहीत्वा पुनः कर्मवशाज्जागरितस्थानमैति, आ एति आगच्छति हिरण्मयश्चैतन्यज्योतिःस्वभावः पुरुषः पुरुष एकहंस एक एव जाग्रत्स्वप्नेहलोकपरलोकादीन् हन्ति गच्छति हिनस्ति वेत्येकहंस इत्यर्थः॥ ११ ॥

पुनरपि स्वप्नगतान् विशेषानाह—

प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा ।

स ईयतेऽमृतो यत्र कामँ हिरण्मयः पुरुष एकहँसः ॥ १२ ॥

प्राणेन पञ्चवृत्तिकेन अवरं निकृष्टमशुचित्वात् कुलायं कौ लीयत इति कुलायं नीडं शरीरं रक्षन् मृतमिति भ्रान्तिर्मा भूदिति संरक्षयन् स्वयं त्वमृतोऽसङ्गः संस्तस्मात् कुलायाद्बहिश्चरित्वा बुद्धिसम्पर्कवशाद्बहिश्चरणमिव कृत्वा यत्र कामं यत्र यत्र विषयेषु उद्भूतवृत्तिः कामो भवति तं काममम‍ृतोऽमरणधर्मा सन्नीयते गच्छति प्राप्नोतीत्यर्थः ॥ १२ ॥

तथा—

स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ।

उतेव स्त्रीभिः सह मोदमाना जक्षदुतेवापि भयानि पश्यन् ॥ १३॥

स्वप्नान्ते स्वप्नस्थान उच्चं देवादिभावमवचं तिर्यगादिभावं चेयमानो गम्यमानः प्राप्नुवन् देवो द्योतनात्मको रूपाणि वासनामयानि शरीरजातानि बहून्यसंख्येयानि कुरुते । उतापि स्त्रीभिः सह मोदमान इव क्रीडमान इवेति जक्षदिव बन्ध्वादिभिः सह हसन्निवापि भयानि बिभेत्येभ्य इति भयानि सिंहव्याघ्रादीनि पश्यन्निव भवतीत्यर्थः ॥ १३ ॥

प्रदर्शितस्वप्नप्रयोजनं स्वयंज्योतिष्ट्वमित्यभिप्रेत्याऽऽह—

आराममस्य पश्यन्ति न तं पश्यन्ति कश्चनेति । तं नाऽऽयतं बोधयेदित्याहुः । दुर्भिषज्यँ हास्मै भवति यमेष न प्रतिपद्यते । अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त इति । अत्रायं पुरुषः स्वयं ज्योतिर्भवति । सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षाय ब्रूहीति ॥ १४ ॥

अस्याऽऽत्मन आराममाक्रीडनं स्वप्ननिर्माणलक्षणमेव पश्यन्ति जना न तु तमात्मानं विविक्तदृग्रूपमपि कश्चन कोऽपि पश्यतीत्यनुक्रोशति श्रुतिः । इतिशब्दो मन्त्राणां समाप्तिद्योतकः । स्वप्ने तस्य विविक्तत्वे लोकप्रसिद्धिरप्यस्तीत्याह—तमिति । तं गाढं सुप्तं पुरुष-

मायतं भृशमत्यर्थं न बोधयेदिति चिकित्सका आहुः कथयन्ति। नूनं तर्हि ते विविक्तस्थानावस्थानज्ञा इत्यवगम्यते। कुत एवमनुशासतीत्यत आह—दुर्भिषज्यमिति। यस्माद्देशात् शुक्रमादाय अपसृतस्तं यमिन्द्रियदेशमेष आत्मा पुनर्न प्रतिपद्यते सहसा प्रबोधितः कदाचिद् व्यत्यासेनेन्द्रियमात्राः प्रवेशयति। ततश्चाऽन्ध्यादिदोषप्राप्तौ अस्मै देहाय ह स्फुटं दुर्भिषज्यं दुःखेन भिषक्कर्म भवति। अथान्यदीयं मतं स्वयंज्योतिष्ट्वविघातकं दुष्टमिति बोधयितुमुपन्यस्यति—अथो इति। अथो अपि खल्वन्य आहुः। किम्? एष प्रसिद्धो जागरितदेश एवास्य स्वप्नस्य विषयो न तु स्वप्नोऽतिरिक्तः। कुतः? हि यस्माद्यानि हस्त्यादिपदार्थजातानि जाग्रज्जागरिते देशे पश्यति तान्येव सुप्तोऽपि पश्यति। एवं च स्वयंज्योतिष्ट्वं विघटितमेव। स्वप्ने हि तत्सिद्धिस्तस्य चास्मिन्मते जागरानतिरेकादिति। नैतत्सारम्; 'स वा अयमि'त्यादिना स्वप्नस्य जाग्रद्भिन्नत्वेनोक्तत्वात्। अत एवायं पूर्वपक्षः 'स वा अयमि'त्यादिसिद्धान्तग्रन्थात् प्रागेव बोध्यः, पाठक्रमादर्थक्रमस्य बलीयस्त्वात्। अत एव उक्तोत्तराभिप्रायवती श्रुतिः स्वप्ने निरूपितं स्वयंज्योतिष्ट्वमुपसंहरति—अत्रेति। अत्रास्यां स्वप्नावस्थायामयं पुरुषः स्वयंज्योतिर्भवतीति मुनिकृतोपसंहारं श्रुतवान् राजाऽऽह—स इति। यस्त्वयैवं बोधितः सोऽहं भगवते तुभ्यं सहस्रं ददाम्यर्थाद्गवामिति सम्बध्यते। कतम आत्मेति पृष्टे योऽयं विज्ञानमय इत्यादिना देहेन्द्रियमनोबुद्धिप्राणाहङ्कृतिविलक्षणं स्वरूपं यद्यप्युक्तं तथाऽपि भयादिहेतुकामकर्मादिसकलसंसारधर्मातीतं तु नोक्तमतस्तत्पृच्छति—अत इति। यतः स्वयंज्योतिष्ट्वरूपो मोक्षैकदेश एव निर्णीतोऽतः कारणादूर्ध्वं विमोक्षाय विशेषेण मोक्षो भवत्यनेनेति विमोक्षः सम्यग्ज्ञानं तदर्थं ब्रूहि। यथा मोहत्रासादिजनकः कर्माख्यो मृत्युरात्मनः स्वभावो न भवति तथोपदिशेत्यर्थः॥ १४॥

एवं नियुक्तो मुनिरवस्थात्रयेऽपि तथोपदेष्टुमवस्थात्रयं कण्डिकात्रयेणाऽऽह—

स वा एष एतस्मिन्संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च। पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव। स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इति। एवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददामि।

अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥

स प्रकृतः स्वप्नावस्थ एष स्वयंज्योतिरात्मा वै प्रसिद्ध एतस्मिन् संप्रसादे सम्यक्प्रसीदत्यस्मिन्निति संप्रसादः सुषुप्तं स्थानं तस्मिन् स्थित्वा कर्माख्यं मृत्युमतिक्रामतीति शेषः । केन क्रमेण संप्रसीदतीत्यपेक्षया-माह—रत्वेति । पूर्वं स्वप्ने रत्वा रमणं क्रीडां कृत्वा चरित्वा इतस्ततो विहरणं कृत्वा दृष्ट्वैव पुण्यं च पुण्यफलं सुखं पापं च तत्फलं दुखं चानुभूयैव पुनः संप्रसादे संप्रसन्नो भवतीति सम्बन्धः । संप्रसादा-नन्तरं पुनः प्रतिन्यायं प्रति पूर्वस्माद्गमनात् प्रातिलोम्येन निश्चयेन आयो गमनं यथा स्यात्तथा प्रतियोनि स्वप्नस्थानं प्रति आद्रवत्यागच्छति। किमर्थम् ? स्वप्नायैव स्वप्नानुभवायैवेत्यर्थः । यद्वा स वा एष संप्रसादे रत्वेति रमणं स्वरूपानन्दानुभव 'आनन्दभुगि'ति श्रुतेः । चरणं तु सुषुप्तौ ईश्वरात्मसंपत्तिः 'सता सोम्य तदा संपन्नो भवती'ति श्रुतेः । पुण्यदर्शनं त्वानन्दानुभवस्तस्य तत्फलत्वात् सुखमहमस्वाप्समित्यनु-भवात् । पापदर्शनं त्वज्ञानानुभवस्तस्य तत्फलत्वात् 'न किञ्चिदवे-दिपमि'त्यनुभवादिति । स आत्मा तत्र स्वप्ने यत्किमपि पुण्यापुण्यफलं पश्यति तेन दृष्टेन अनन्वागतोऽननुबद्धो भवति । कुतो हि ? यस्मादयं पुरुषोऽसङ्गस्तस्मादसम्बध्द इत्युक्तमङ्गीकरोति-एवमिति । हे याज्ञ-वल्क्य एतद्भगवतोक्तं स्वप्नादावात्मनः कर्मासम्बद्धत्वमेवमेव । समान-मन्यत् ॥ १५ ॥

एवं स्वप्नवज्जागरेऽपि स्वतो वस्तुतः कर्मासम्बद्धत्वमेवेति दर्श-यितुमाह—

स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च । पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव । स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इति । एवमेवैतद्याज्ञवल्क्य । सोऽहं भगवते सहस्रं ददामि । अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १६ ॥

स वा एष संप्रसादात् प्रत्यागतो बुद्धान्तायैव जागरणायैव ॥ १६ ॥

स वा एष एतस्मिन्बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च । पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नान्तायैव ॥ १७ ॥

स वा एष स्वप्नात्प्रत्यागतः स्वप्नान्तायैव स्वप्नस्यान्तो लयो यस्मिन्स स्वप्नान्तः सुषुप्तिस्तस्मै । यद्वा—स्वप्नान्तायैव स्वप्नायैव स्वप्नान्तं च बुद्धान्तं चैति वक्ष्यमाणत्वात् ॥ १७ ॥

स्वप्नबुद्धान्तयोः सञ्चरन्नप्यात्मा असङ्गत्वात्तद्धर्मैरवशीकृत एवत्येतद् दृष्टान्तपूर्वकमाह—

तद्यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्वं चापरं चैवमेवाय पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं च ॥ १८ ॥

तत्र दृष्टान्तो यथा लोके महामत्स्यो महांश्चासौ मत्स्यश्च महामत्स्यो नादेयस्रोतसा अवशीकृतो नद्याः पूर्वं चापरं चेत्युभे कूले तीरे तटौ अनुक्रमेण सञ्चरति ताभ्यां भिन्नः सन् यथाऽयं दृष्टान्त एवमेवायं पुरुषः स्वप्नान्तं च स्वप्नं बुद्धान्तं च जागरितमित्येतौ उभावन्तौ अनुक्रमेण सञ्चरत्यतस्ताभ्यां भिन्नस्तद्धर्मासंस्पृष्ट इत्यर्थः ॥ १८ ॥

अथैवं संप्रसादेऽपि तद्विलक्षणत्वं दर्शयितुं दृष्टान्तपूर्वकमाह—

तद्यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य
श्रान्तः संहृत्य पक्षौ संलयायैव ध्रियत एवमेवायं
पुरुष एतस्मा अन्ताय धावति । यत्र सुप्तो न कञ्चन
कामं कामयते न कञ्चन स्वप्नं पश्यति ॥ १९ ॥

तत्प्रसिद्धं निदर्शनं यथा लोकेऽस्मिन् प्रसिद्ध आकाशे श्येनो वा महाकायो मन्दवेगः सुपर्णो वा वेगवत्तरोऽल्पविग्रहः पक्षी विपरिपत्य विविधं परिपतनं कृत्वा श्रान्तः खिन्नः सन् पक्षौ संहृत्य संप्रसार्य संलयायैव सम्यग्लीयतेऽस्मिन्निति संलयस्तस्मै संलयाय नीडायेव ध्रियते स्वात्मनैव स्वयम् । यथाऽयं दृष्टान्त एवमेवायं पुरुषो जाग्रत्स्वप्नयोः परिभ्रमणेन श्रान्तः सन्नेतस्मै प्रसिद्धायान्ताय जाग्रत्स्वप्नयोरन्तोऽवसानं यस्मिन्नज्ञाते ब्रह्मणि तदन्तं तस्मा अन्ताय स्वनीडाय धावति । अन्तशब्दस्य यथोक्तब्रह्मविषयत्वं परिशेषयितुं विशेषणद्वयमाह—यत्रेति । यत्र यस्मिन्नन्ते सुप्तः सन्न कञ्चन काममभिलषणीयं कामयते न कञ्चन स्वप्नं पश्यतीत्यर्थः ॥ १९ ॥

शरीरद्वयावस्थाद्वयतद्धर्मादिना नाऽऽत्मनः स्वाभाविकः सम्बन्धस्तेषां स्वकारणे सुषुप्तेऽव्याकृताख्ये अविद्यामात्रव्यवहिते लीनत्वादित्युक्तम् । इदानीमविद्यासम्बन्धोऽपि न स्वाभाविक इति दर्शयितुं तस्याः

तावत्स्वकार्यद्वारा प्रत्यक्षत्वमुपोद्घातपूर्वकमाह—

ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णाः । अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति । यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यते । अथ यत्र देव इव राजेव अहमेवेदँ सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥ २० ॥

ता वै प्रसिद्धा अस्य शिरःपाण्यादिलक्षणस्य पुरुषस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावता तावत्परिमाणेन अणिम्ना अणुत्वेन तिष्ठन्ति । ताश्च शुक्लस्य रसस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा एतैः शुक्लादिभी रसविशेषैः पूर्णाः । अथैतासु अविद्याकार्यभूते लिङ्गे व्यवतिष्ठमाने सति यत्र यस्मिन्स्वप्नकाल एनं स्वप्नदृशं घ्नन्तीव तस्करादयोऽन्ये केचन जिनन्तीव वशीकुर्वन्तीव दासरूपेण कदाचिद्धस्तीव विच्छाययति विच्छादयति द्रावयति । तथा गर्तं जीर्णकूपादिकं प्रति पततीव न वस्तुतः । किं तत इत्यत आह—यदिति । यदेव जाग्रज्जागरिते भयं भयहेतुं पश्यति तदेव भयकारणमत्रास्मिन् स्वप्नेऽविद्यया वासनात्मिकया निकृष्टाधर्मोद्भासितया मन्यते पश्यति । एवं भयादिकार्यद्वारा अधर्मसहकारिकामविद्यामात्मनोऽस्वभावभूतां दर्शयित्वाऽथ धर्मसहकृतां तां तथा दर्शयति--अथेति । विद्यायामुत्कृष्यमाणायां सत्यां यत्र स्वप्ने देव इव राजेवेति स्वात्मानं मन्यते पश्यति जाग्रत्कालीनदेवाद्युपासनजनिततत्तद्वासनावशात् । मोक्षावस्थायामस्या विनाशित्वादपि नेयं स्वाभाविकीत्यभिप्रेत्य आत्मस्वभावभूतं मोक्षस्वरूपमपि प्रत्यक्षमित्याह--अहमिति । तादृशजाग्रद्वासनावासितः स्वप्नेऽपीदं सर्वमहमेव चिन्मात्रं न तु सदतिरेकेणास्ति, अतः 'अहं सर्वः पूर्णोऽस्मी'ति मन्यते जानाति स सर्वात्मभावोऽस्या आत्मनः पूर्वोक्ताँल्लोकानपेक्ष्य परमः पूर्णो लोको विद्यया सम्पादितः स्वाभाविकः पूर्ववदिवशब्दप्रयोगाभावादित्यर्थः ॥ २० ॥

सर्वोऽस्मीत्यादिना सङ्गृहीतमेवाऽऽत्मलोकं व्यक्ताविद्याहीनानां सुषुप्त्यवस्थामवलम्ब्य कण्डिकाद्वयेन प्रकटीकरोति—

तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयँ रूपम् । तद्यथा

प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नाऽऽन्तर-
मेवमेवायं पुरुषः प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं
किञ्चन वेद नाऽऽन्तरम्। तद्वा अस्यैतदाप्तकाममात्मकाम-
मकामँ रूपँ शोकान्तरम् ॥ २१ ॥

तद्वै प्रसिद्धमस्य सर्वात्मभावमापन्नस्यैतद्रूपमित्यन्वयः। किं तत्? अतिच्छन्दा इति। दैर्घ्यविसर्गौ छान्दसौ। अतिच्छन्दमतिक्रान्तश्छन्दः कामो यस्मात्तदतिच्छन्दं कामवर्जितम्। तथा अपहतः पाप्मा धर्माधर्मलक्षणो यस्मिन् रूपे तदपहतपाप्म। तथा अभयं न विद्यते भयं यत्र रूपे तदभयं रूपमित्यर्थः। नन्वविद्याकामकर्मादीनामिव उक्तस्वयंज्योतिष्ट्वस्यापि सुषुप्तावदर्शनात्तदपि नाऽऽत्मनः स्वाभाविकमित्याशङ्कायां तत्रादर्शने विशेषज्ञानाभाव एव हेतुरिति दृष्टान्तपूर्वकमाह—तद्यथेति। तत्तत्र सुषुप्तावेकत्वे सति विशेषज्ञानाभावेऽयं दृष्टान्तो यथा प्रियया मनोहरणसमर्थया स्त्रिया संपरिष्वक्तः सम्यक्परिष्वक्तो व्यामिश्रीभावमापन्नः कामुकः सम्भोगफलमनुभवन् स्वस्माद्बाह्यं बहिर्भूतं किञ्चन किञ्चिदपि वस्तु न वेद जानाति, न चाऽऽन्तरं दुःखादिलक्षणं वेद। यथाऽयं दृष्टान्त एवमेवायं जलचन्द्रवत्कार्यकरणप्रविष्टः क्षेत्रज्ञः पुरुष उपाधिविलयात्प्राज्ञेन स्वाभाविकेनाविद्यासाक्षिणा आत्मना संपरिष्वक्तोऽत्यन्तमेकीभूतः सर्वात्मा न बाह्यं किञ्चन वेद न चाऽऽन्तरमेकीभूतत्वात न तु स्वरूपात्मकस्य स्वयंज्योतिष्ट्वस्याभावादिति प्रासङ्गिकमुक्त्वा प्रकृतमतिच्छन्दवाक्योक्तमेव रूपं स्पष्टयति—तद्वा इति। अस्य सुषुप्तौ सर्वात्मत्वमापन्नस्य आत्मनस्तदेतत्प्रकृतं रूपमाप्तकामं काम्यन्त इति कामः सुखादय आप्ता यस्मिन् रूपे तदाप्तकामम्। एवं सति हिरण्यगर्भतुल्यत्वं स्यादित्यत आह—आत्मकाममिति। आत्मैव कामः सुखसाक्षात्कारलक्षणो यस्मिन्विज्ञानानन्दरूपे ब्रह्मणि तदात्मकामम्। अत एवैतत् अकामं कामरहितं रूपं काम्याभावात्। अत एव शोकान्तरं शोकच्छिद्रं शोकशून्यमित्यर्थः ॥ २१ ॥

एवं प्रत्यक्षतः कामादिसम्बन्धराहित्यमुक्त्वा इदानीं तद्धेतुकर्माख्याविद्यासम्बन्धरहितत्वमाह—

अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा
अदेवा वेदा अवेदाः। अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा

चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसो-
ऽतापसः। अनन्वागतं पुण्येनानन्वागतं पापेन। तीर्णो हि तदा
सर्वाञ्छोकान् हृदयस्य भवति॥ २२॥

अत्र सुषुप्ते स्थाने प्रकृतरूपस्याऽऽत्मनः पिता जनयिताऽपि अपिता भवति। कर्महेतुकं हि जनयितृत्वं तदतिक्रमश्च अपहतपाप्मेत्युक्तः। तथा माता जनयित्र्यपि अमाता तद्धेतुकर्माभावात्। लोकाः कर्म-विद्याभ्यां जिता जेतव्याश्च लोकाः कर्मादिसम्बन्धात्ययात्। देवाः कर्माङ्गभूता अदेवाः। वेदाः साध्यसाधनसम्बन्धाभिधायका अप्यवेदाः सम्पद्यन्ते तस्मिन्काले। कञ्च—अत्र सुषुप्तस्थाने स्तेनोऽत्र ब्राह्मण-सुवर्णहर्ता उच्यते। भ्रूणहत्यासहपाठात् स तेन घोरकर्मणाऽपि तस्मिन् काले मुक्तो भवति। अतोऽस्तेनस्तथा भ्रूणहा मुख्यब्राह्मणहन्ताऽभ्रूणहा। न केवलमागन्तुकेन विनिर्मुक्तः। किं तर्हि? अत्यन्तनिकृष्टजातिप्रापकेण सहजेनापि कर्मणा विनिर्मुक्त एवायमित्याह—चाण्डाल इति। चाण्डालो ब्राह्मण्यां शूद्राज्जातो जात्या चण्डालः। स एव चाण्डालो-ऽप्यचाण्डालो भवति तदा तज्जातिनिमित्तकर्मासम्बन्धात्। शूद्रायां ब्राह्मणाज्जातो निषादस्तस्मात् क्षत्रियायां जातः पुल्कसः। स एव पौल्कसोऽप्यपौल्कसः। किञ्च—श्रमणः परिव्राट् स यत्कर्मनिमित्तो भवति तेन तदा विनिर्मुक्तत्वादश्रमणः। तथा तापसो वानप्रस्थो-ऽतापसः। सम्बन्धजनकानां कर्मणामानन्त्यात् द्विधोपसंहृत्य तदतीतत्व-माह—अनन्वागतमिति। तत्प्रकृतमात्मरूपं पुण्येन शास्त्रविहितेन कर्मणा अनन्वागतमसम्बद्धं तथा पापेन विहिताकरणप्रतिषिद्धक्रियाकरणलक्षणे-नापि अनन्वागतमात्मरूपम्। कुत इत्यपेक्षायां तद्धेतुकामात्ययादित्याह—तीर्ण इति। हि यस्मादतिच्छन्दादिवाक्योक्तरूप आत्मा तदा यस्मिन् सुषुप्तिकाले हृदयस्य हृदयस्थाया बुद्धेः सम्बन्धिनः सर्वान् शोकांस्तद्धेतु-भूतान् कामांस्तीर्णोऽतिक्रान्तो भवतीत्यर्थः॥ २२॥

स्त्रीपुंसपरिष्वङ्गदृष्टान्तेन एकत्वापत्तिवशाद्विशेषज्ञानाभावो न स्वयं-ज्योतिष्ट्वाभावादित्युक्तमेव चोद्यपूर्वकं स्पष्टीकरोति—

यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति। न हि द्रष्टुर्दृष्टे-
र्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद् द्वितीयमस्ति
ततोऽन्यद्विभक्तं यत्पश्येत्॥ २३॥

तत्तत्र सुषुप्तौ आत्मा न वै नैव पश्यतीति यज्जानीषे तन्न तथा, यतस्तत्र स्वरूपचैतन्येन सर्वसाक्षित्वात् पश्यन्वै एव सन् द्रष्टव्यं पदार्थजातं न पश्यतीत्यपि संभवतीति स्वरूपदर्शनं विशेषादर्शनं च प्रतिज्ञायत इत्यर्थः। तत्र प्रथमप्रतिज्ञायां हेतुमाह--न हीति। द्रष्टुर्या सर्वसाक्षिभूता दृष्टिः। यद्वा द्रष्टुः कूटस्थचिन्मात्ररूपस्य स्वरूपभूता या दृष्टिस्तस्या हि यस्माद्विपरिलोपो विनाशो न विद्यतेऽग्न्युष्णत्ववत्। अत्रापि हेतुरविनाशित्वात् विनाशहेतुपरिणामहीनत्वादित्यर्थः। विशेषज्ञानाभावरूपद्वितीयप्रतिज्ञायां हेतुमाह--न त्विति। तत्तत्र सुषुप्तौ तत आत्मस्वरूपात् द्वितीयं प्रमातृस्वरूपं समासान्तःकरणलक्षणमात्मस्वरूपादन्यच्च चक्षुरादिलक्षणं करणं विभक्तं च रूपादिलक्षणं प्रमेयं न त्वस्ति यत्प्रमेयं प्रमाता प्रमाणेन पश्येदित्यर्थः ॥ २३ ॥

यद्वै तन्न जिघ्रति जिघ्रन् वै तन्न जिघ्रति। न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥ २४ ॥ यद्वै तन्न रसयते रसयन् वै तन्न रसयते। न हि रसयितू रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥ २५ ॥ यद्वै तन्न वदति वदन् वै तन्न वदति। न हि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥ २६ ॥ यद्वै तन्न शृणोति शृण्वन् वै तन्न शृणोति। न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद् द्वितीयमस्ति ततोऽन्यद्वि भक्तं यच्छृणुयात् ॥ २७ ॥ यद्वै तन्न मनुते मन्वानो वै तन्न मनुते। न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥ २८ ॥ यद्वै तन्न स्पृशति स्पृशन् वै तन्न स्पृशति। न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥ २९ ॥ यद्वै

तन्न विजानाति। विजानन् वै तन्न विजानाति। न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात्॥३०॥

एवमेव यद्वै तन्न जिघ्रति न रसयते न वदति न शृणोति न मनुते न स्पृशति न विजानातीत्येते पर्याया बोद्धव्याः॥ २४—३०॥

एवं सुषुप्तौ अविद्योत्थद्वैताभावाद्विशेषज्ञानाभाव इति व्यतिरेकमुक्त्वा जाग्रदादौ तु तस्मिन् सति तदित्यन्वयमाह—

यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत् पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत् स्पृशेदन्योऽन्यद्विजानीयात्॥ ३१॥

यत्र यस्मिन् जागरिते स्वप्ने वा अन्यदिव आत्मनो वस्त्वन्तरमिव अविद्याप्रत्युपस्थापितं स्यात्तत्र वै तत्रैवावस्थाविशेषे अन्योऽन्यमिव आत्मानं मन्यमानोऽन्यत् स्वस्माद्विभक्तमिव विद्योत्थं वस्त्वन्तरं पश्येदुपलभेत्। अन्योऽन्यज्जिघ्रेदित्यादि समानमित्यर्थः॥ ३१॥

प्राज्ञेनाऽऽत्मना संपरिष्वक्तस्य 'यद्वै तन्न पश्यती'त्यादिना विस्तरेणोक्तं स्वरूपमुपसंहरति—

सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्यः। एषाऽस्य परमा गतिरेषाऽस्य परमा संपदेषोऽस्य परमो लोकः एषोऽस्य परम आनन्दः। एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति॥३२॥

यस्मादेवमन्वयव्यतिरेकाभ्याम् आविद्यक एव अन्तःकरणादिसम्बन्धस्तस्मात् सलिल इव सलिलः सलिलवच्छुद्धो विजातीयभेदरहित एकः सजातीयभेदशून्यो यस्मादेवं तस्माद्द्रष्टा। यद्वा—जडत्वशङ्काव्यावृत्त्यर्थं द्रष्टेति पदच्छेदः, कूटस्थज्योतिः। अद्वैतो द्विधेतं द्वीतं तस्य भावो द्वैतं तन्न विद्यते यस्मिन् सोऽद्वैतः एकरसः स्वगतभेदशून्यो भवति। अत ऊर्ध्वमित्यादि पुनः पुनः पृष्टस्योत्तरं मुनिरुक्तवानिति श्रुतिराह—एष इति। हे सम्राडेष संनिहितः सुषुप्त्यवस्थामापन्नः प्रत्यगात्मा ब्रह्मलोको लोकनं लोको ब्रह्मैव लोको ब्रह्मलोकः स्वयं-

ज्योतीरूपं ब्रह्मैवेत्युक्तप्रकारेण ह किलैनं जनकं याज्ञवल्क्योऽनुशशास अनुशिष्टवान्। पुनः कथमिति वीक्षायामाह—एषेति। अस्य बुद्ध्युपाधिकस्यैषा अतिच्छन्दवाक्योक्ता परमा नैष्ठिकी गतिरन्या ब्रह्मादिगतयस्त्वपरमाः, तासामत्रैव समाप्तेः। एषाऽस्य विज्ञानमयस्य परमोत्कृष्टा संपद्विभूतिरकृतकत्वात्। अस्य विज्ञानमयस्यैष यथोक्तः सुषुप्तौ परमात्मैक्यलक्षणः परमो मोक्षरूपो लोको लोकनाल्लोकः स्वयंज्योतिःस्वभावः। अस्य सुषुप्तस्यैष स्वरूपानुभवलक्षण आनन्दः परमः साधनासाध्यो निरतिशयः। किञ्च—एतस्यैव ब्रह्मानन्दस्य मात्रां कलां विषयेन्द्रियसम्बन्धकाले विभाव्यमानामन्यान्याविद्यकानि ब्रह्मादिस्तम्बपर्यन्तानि भूतानि उपजीवन्त्युपभुञ्जते अन्यस्याऽऽनन्दस्य अभावादित्यर्थः॥ ३२॥

एतमेव परमानन्दमतिशयानन्दप्रतिपादनद्वारा बोधयति—

स यो मनुष्याणाँ राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतमः स मनुष्याणां परम आनन्दः। अथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दः। अथ ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दः। अथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्ते। अथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथैष एव परम आनन्द एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः। सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति। अत्र ह याज्ञवल्क्यो बिभयाञ्चकार मेधावी राजा सर्वेभ्यो माऽन्तेभ्य उदरौत्सीदिति॥ ३३॥

मनुष्याणां मध्ये स यः कश्चिद्भोगक्षमावयवैराध्यात्मिकैः राद्धः संसिद्धो बाह्यैश्च भोगसाधनैः स्रक्चन्दनादिभिः समृद्धो भवति । किञ्च—अन्येषां समानजातीयानां स्वतन्त्रोऽधिपतिर्न माण्डलिकः । समृद्धिपदेनैव दिव्यसाधनसंपत्तिरप्युक्तैवेति शङ्कां वारयितुमुक्तमेव स्पष्टयति—सर्वैरिति । मनुष्येषु भवैर्मानुष्यकैः भोगैः भोगोपकरणैः सर्वैः समस्तैः सम्पन्नतमोऽतिशयेन सम्पन्नो युधिष्ठिरादितुल्यः स मनुष्याणां परम आनन्द आनन्दानन्दिनोरभेदात् । अथ मनुष्याणां य उक्तप्रकाराः शतं शतगुणिता आनन्दा आनन्दभेदाः स एकः पितॄणाम् । किलक्षणानाम् ? जितलोकानां श्राद्धादिकर्मभिः पितृतोषणद्वारा जितो लोको यैस्ते जितलोकास्तेषां जितलोकानामानन्दः । तथा स शतगुणीकृत एक एव गन्धर्वानन्दः । सोऽपि शतगुणित एक एव कर्मदेवानामानन्दः । के ते ? ये कर्मणा श्रौतेनाग्निहोत्रादिना देवत्वमभिसम्पद्यन्ते देवलोकं प्राप्नुवन्ति । सोऽपि शतगुणितः सन्नेक एव आजानदेवानां निसर्गसिद्धानां सृष्ट्यादिभूतानां यष्टव्यानामानन्दः । यश्च श्रोत्रियः सार्थकशाखाध्ययनवान् । वृजिनं पापं न विद्यते यस्य सोऽवृजिनः पापरहितो यथोक्तकारित्वात् । अकामहतो न कामहत आजानदेवानन्दावधिपूर्वानन्देषु वितृष्णः । एवंभूतस्यापि आजानदेवोपासकस्य तदानन्दसमान आनन्द इत्यन्वाकृष्यते चकारात् । स आजानदेवानन्दः शतगुणीकृतः सन्नेक एव प्रजापतिलोके विराट्शरीर आनन्दः । स शतगुणीकृतः सन्नेक एव ब्रह्मलोके हिरण्यगर्भात्मन्यानन्दः । अत्रापि श्रोत्रियावृजिनत्वयोस्तुल्यत्वेऽपि अकामहतत्वोत्कर्षहेतुकानन्दशतगुणोत्तरोत्तरा वृद्धिः । न केवलमानन्दतारतम्यं यत्र विश्रान्तं स परमानन्द इत्यनुमानादेव संसिद्धः, किन्तु हिरण्यगर्भान्तानन्दाद्वितृष्णस्य अनुभवसिद्धोऽपीत्याह—अथेति । अथ यत्र सुखोत्कर्षतारतम्यं विश्रान्तं स परमानन्दो निरतिशयानन्दः प्रत्यगात्मस्वरूपभूत एष वितृष्णः श्रोत्रियप्रत्यक्ष एष एव ब्रह्मलोकः सम्राडित्यादि समानम् । अत्र विमोक्षायेत्यस्मिन् वाक्ये श्रुते सति ह किल याज्ञवल्क्यो विभयाञ्चकार भीतवान् । कुतः ? यतोऽयं राजा मेधावी प्रज्ञाशाली, अतो मा मां सर्वेभ्योऽन्तेभ्यः प्रश्ननिर्णयावसानेभ्य उदरौत्सीत् आवृणोत् पुनः पुनरवरोधं कृतवान्मदीयं सर्वज्ञानं कामप्रश्नव्याजेन ग्रहीतुमित्यर्थः ॥ ३३ ॥

यद्यपि पूर्वं स्वप्नजागरणयोः सञ्चरणोक्त्या सुषुप्त्युक्त्या च सहेतुकौ संसारमोक्षावुक्तौ तथाऽपि तावुभौ तयोर्दृष्टान्तत्वेनैव राज्ञा गृहीतत्वात्पुनः प्रश्नकरणोपपत्तेः 'स वा एष' इत्यादि 'नु कामयमान' इत्यन्तेन ।

अथाकामयमान इत्याद्या शारीरकब्राह्मणसमाप्तेश्च क्रमेण ससाधनसंसारमोक्षरूपौ दार्ष्टान्तिकौ कथ्येते । तत्र सहेतुकस्य संसारस्य दृष्टान्तकथनार्थं तावत्पूर्वं बुद्धान्ते रत्वेत्याद्युक्तमात्मानं जाग्रद्भूमिं प्रापयितुमाह–

स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च । पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव ॥ ३४ ॥

उक्तार्थम् ॥ ३४ ॥

स्वप्नजागरणप्राप्तिवत् लोकाल्लोकान्तरप्राप्तिं दृष्टान्तपूर्वकमाह––

तद्यथाऽनः सुसमाहितमुत्सर्जंद्यायादेवमेवायँ शारीर आत्मा प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जंन्याति । यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३५ ॥

तत्तत्र दृष्टान्तो यथा लोके अनः शकटं सुष्ठु भृशं वा समाहितमुलूखलादिगृहोपस्कारैः सम्पन्नं भाराक्रान्तं सदुत्सर्जत् नानाविधशब्दं कुर्वत् यायाद् गच्छेत् शाकटिकेनाधिष्ठितं सत् । यथाऽयं दृष्टान्त एवमेवायं शारीरः शरीरे स्थूलशरीरे भवः शारीर आत्मा लिङ्गात्मविशिष्टं लिङ्गशरीरमेव वक्ष्यमाणविद्यादिसंसारसंभृतं प्राज्ञेन स्वयंज्योतिःस्वभावेन आत्मना स्वचिदाभासद्वारा अन्वारूढोऽधिष्ठितो व्याप्तो भानुना स्वप्रतिबिम्बद्वारा व्याप्तोदपात्रवन्मरणकालीनानेकवेदनार्त उत्सर्जन् हिक्काशब्दं कुर्वन् याति गच्छति । कस्मिन्काले इति वीक्षायामाह—यत्रेति । एतदूर्ध्वोच्छ्वासित्वमस्य यथा स्यात्तथाऽवस्था यत्र यस्मिन्काले भवति तस्मिन्काल इत्यर्थः ॥ ३५ ॥

ऊर्ध्वोच्छ्वासित्वमपि कदा स्यादित्यत आह––

स यत्रायमणिमानं न्येति जरया वोपतपता वाऽणिमानं निगच्छति । तद्यथाऽऽम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात् प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव ॥ ३६ ॥

सोऽयं प्रकृतः शिरःपाण्यादिमान्देहो यत्र यस्मिन्काले अणिमानमणोर्भावं कार्श्यं नितरामेति गच्छति तस्मिन्काले । तत्प्राप्तिरपि कस्माद्धेतोरिति वीक्षायामाह-जरयेति । जरया वा प्रसिद्धया उपतपता वा उपतपति

इत्युपतपत् ज्वरादिरोगस्तेनोपतपता वाऽणिमानं कार्श्यं निगच्छति । एवं सति यदोत्सर्जन् याति तदा कथं शरीरं मुञ्चतीति वीक्षायां तत्सदृष्टान्त-माह-तदिति । तत्तत्र दृष्टान्तो यथा लोक आम्रं वोदुम्बरं वा पिप्पलं वा फलं वन्धनाद्रसेन बध्यते फलं यस्मिंस्तद्बन्धनं वृन्तं तस्माद्बन्धना-द्वातादिनिमित्तवशात् प्रमुच्यते विच्छिद्यते एवमेवायं पुरुषः पूर्वोक्त-लिङ्गात्मा चिदाभासप्रकाशितः सर्वेभ्योऽङ्गेभ्यो देहावयवेभ्यश्चक्षुरा-दीन्द्रियस्थानेभ्यः संप्रमुच्य सम्यगेकीभावेन प्रकर्षेण निर्लेपेन प्रमुच्य पुनर्वारंवारं प्रतिन्यायं प्रतिगमनं यथागतं तथा प्रतियोनि योनिं योनिं प्रत्याद्रवत्यागच्छति । किमर्थम् ? प्राणयैव प्राणव्यूहायैव प्राणानां स्थानविशेषविन्यासेन अवस्थानाय देहान्तरग्रहणमित्यर्थः ॥३६॥

तत्सिद्धिः कुतोऽस्य वृत्तेत्यतस्तामपि सदृष्टान्तमाह—

तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानै-रावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येवꣳ हैवंविदꣳ सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्माऽऽयातीदमाग-च्छतीति ॥ ३७ ॥

तत्तत्र दृष्टान्तो यथा लोके राजानम् आयान्तमागच्छन्तम् उग्रा जाति-विशेषाः क्रूरकर्माणो वा प्रत्येनस एनः पापं तद्वन्तं पापिनं प्रति शासनार्थं नियुक्तः प्रत्येनसः सूतग्रामण्यः सूता ब्राह्मण्यां क्षत्रिया-ज्जाता ग्रामण्यो ग्रामनेतारस्ते राज्ञ आगमनं बुद्ध्वा अन्नैर्भक्ष्यादिप्रकारैः पानैर्मादरादिभिरावसथैश्च प्रसादादिर्निष्पन्नैरेव प्रतिकल्पन्ते प्रतीक्षन्ते । किं कुर्वन्तः ? अयं राजा आयात्ययमागच्छत्येवं वदन्तः । पुनरुक्तिरादरार्था । एवं हैवंविदं कर्मफलवेदितारं संसारिणं सर्वाणि भूतानि शरीरारम्भकाणि करणानुग्राहकाणि चाऽऽदित्यादीनि संसारि-कर्मप्रयुक्तानि भोगसाधनशरीरादिभिः प्रतिकल्पन्ते प्रतीक्षन्ते स्वात्मनि देहाद्याकारपरिणत आत्माभिव्यक्तिमाकाङ्क्षन्ते । कथम् ? इदं ब्रह्म भोक्तृ कर्तृ चास्माकमायाति इदमागच्छतीत्येवम् । अस्मिन् संसा-रिणि ब्रह्मशब्दप्रयोगस्तु वस्तुतस्तस्य तदभिन्नत्वात् । अत्र शरीरारम्भकत्व-मात्मनो वर्तत इत्येतावानेवांशो विवक्षितो न तु पूर्वं भूतानि राज-भृत्यवत् देहमारभ्य प्रतीक्षन्ते, पश्चादात्मा राजवत्तत्र गच्छतीत्यंशोऽपि । शरीरारम्भकभूतैः सहैवाऽऽत्मनो गमनमिति राद्धान्तस्थितिरित्यर्थः ॥३७॥

तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभि-

समायन्त्येवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति । यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३८ ॥

अथ लोकान्तरं गच्छन्तं संसारिणं केऽनुगच्छन्ति कथं वेति जिज्ञासायां दृष्टान्तपूर्वकमाह—वदिति । तत्तत्र दृष्टान्तो यथा प्रयियासन्तं गच्छन्तं राजानं पूर्वोक्ता उग्रादयोऽभि आभिमुख्येन सम्यगेकीभावेन आयन्त्यागच्छन्ति राज्ञा सहानाज्ञप्ताः, एवमेवेममात्मानं भोक्तारं प्रयियासन्तमन्तकाले मरणकाले सर्वे प्राणा वागादयोऽभिसमायन्ति अनाकारिता एव सन्तस्तत्कर्मप्रेरिताः । को वाऽन्तकाल इत्यत आह—यत्रेति । यत्रैतदूर्ध्वोच्छ्वासी भवतीत्युक्तार्थम् ॥ ३८ ॥

इति चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

एभ्योऽङ्गेभ्यः संप्रमुच्येत्यादिना वैराग्यार्थं सूत्रितं संप्रमोक्षणं कस्मिन्काले कथं वेति जिज्ञासायां सविस्तरं वर्णयितुं शारीरकब्राह्मणं नु कामयमान इत्यन्तं प्रवर्तते—

स यत्रायमात्माऽबल्यं न्येत्य संमोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति । स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति । स यत्रैष चाक्षुषः पुरुषः पराङ्पर्यावर्ततेऽथारूपज्ञो भवति ॥ १ ॥

तद्यथा अन इत्यादौ प्रकृतः सोऽयमात्मा यत्र यस्मिन्काले जराद्युक्तहेतुभिरभिभवे सति अबल्यमिवाबलभावमिव दौर्बल्यमिव नितरामेत्य प्राप्य यदा संमोहमिव संमूढतामिवाविवेकतामिव नि एति याति अथ तदैनमात्मानं करणस्वामिनं प्रति प्राणा वागादयोऽभिसमायन्ति । कथम् ? स प्रकृतोऽविद्वानात्मा तेजसो मात्रा अवयवा मीयन्ते विषया याभिस्तास्तेजोमात्राश्चक्षुरादिकरणानि समभ्याददानः सम्यङ् निःशेषमाभिमुख्येन आददान उपसंहरमाणो हृदयमेव हृदयस्थां बुद्धिमेव अन्ववक्रामति अन्वागच्छति बुद्धावेवाभिव्यक्तविज्ञानो भवति । एवं सति किं स्यादिति वीक्षायामाह—स इति । स चाक्षुषः पुरुष आदित्यांशो भोक्तृकर्मक्षये सति यत्र यस्मिन्काले पराङ् भोक्तृभोगेभ्यो विमुखः सन् स्वांशिभूतदेवतारूपं प्रति पर्यावर्तत आ समन्ताद्भावेन परिवर्तते अथ तदा मुमूर्षुररूपज्ञो भवति रूपं न जानातीत्यर्थः ॥ १ ॥

कुत इत्यत आह—

एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुः। तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति। चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तँ सर्वे प्राणा अनूत्क्रामन्ति। सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति। तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥ २ ॥

आदित्यांशे तस्मिन्नेकीभूते सति यदा चक्षुर्लिङ्गात्मना एकीभवति तदा मुमूर्षुः पार्श्वस्थान्न पश्यतीत्याहुः। एवमेवैकीभवति न जिघ्रतीत्यादि। एवमुपसंहृते सति यन्निष्क्रमणं तत्साधनीभूतं व्यापारमाह—तस्येति। तस्य लिङ्गोपाधिकस्य हैतस्य प्रकृतस्य उपसंहृतकरणस्य मुमूर्षोर्हृदयस्य हृदयच्छिद्रस्याग्रं नाडीमुखं प्रद्योतते स्वप्न इव चैतन्यज्योतिषा प्राप्य देहविषयबुद्धिवृत्त्यात्मना प्रकाशते। तेन प्रद्योतेन प्रद्योतित एष लिङ्गोपाधिक आत्मा निष्क्रामति निर्गच्छति। ननूक्तप्रद्योतनेन कर्मार्जितं लोकं पश्यन्नात्मा मरणकाले हृदयात्केन मार्गेण निर्गच्छतीत्यत आह—चक्षुष इति। चक्षुषो वा चक्षुर्द्वारा निष्क्रामति यद्यादित्यलोकप्राप्तिनिमित्तं ज्ञानं कर्म वा स्यात्। मूर्ध्नो वा ब्रह्मरन्ध्रद्वारा यदि ब्रह्मलोकप्राप्तिनिमित्तं स्यात्। अन्येभ्यो वा शरीरदेशेभ्यः श्रोत्रादिभ्यः सकाशात् यथाज्ञानकर्मवशान्निष्क्रामतीति प्रत्येकं सम्बध्यते तमेवमुत्क्रामन्तं विज्ञानमयं राजस्थानीयमन्वनुसृत्य प्राणः प्रधानस्थानीय उत्क्रामति। तं च प्राणमनूत्क्रामन्तं सन्तं सर्वे प्राणा वागादयः परिवारस्थानीया अनूत्क्रामन्ति। अत्रानुशब्दो विज्ञानमयादेः प्राधान्यद्योतको न त्वनुक्रमद्योतकः, तस्येहासंभवात्। उक्तं हृदयप्रद्योतनमेव स्पष्टयति—सेति। मुमूर्षुः सविज्ञानः कर्मोद्भासितसंस्कारजनितेन विज्ञानेन भाविदेहविषयकेण सह वर्तमानः स्वप्न इव विशेषविज्ञानो भवत्युत्क्रान्तिकाले। अत एव तदनन्तरमपि सविज्ञानमेव विशेष-

विज्ञानोद्भासितमेव गन्तव्यमन्ववक्रामति अनुगच्छति। उत्सर्जन् यातीत्युक्तस्य शाकटिकवत् किं संभारस्थानीयं पाथेयं किंवा गन्तव्यशरीराद्यारम्भकमित्यत आह--तमिति। विद्याशब्देनेह प्रमाणाप्रमाणजनितज्ञानमात्रं विहितप्रतिषिद्धादिरूपमात्मज्ञानव्यतिरिक्तमुच्यते। शास्त्रालोकस्वभावोत्पन्नदृष्टादृष्टार्थरूपं वाङ्मनःकायसाध्यं सर्वं कर्मशब्देनोच्यते। तदुत्पन्नफलभोगजनितः संस्कारो हृद्याश्रितः पूर्वप्रज्ञोच्यते। कार्यकारणकोश्योर्द्वैराश्यसिद्ध्यर्थं समासतदकरणे। तथा च तं परलोकाय गच्छन्तं विद्याकर्मणी समन्वारभेते सम्यगन्वारभेते अन्वालभेते अनुगच्छतः पूर्वप्रज्ञा च समन्वारभते। तस्मादेतत्त्रयं शुभमेवानुष्ठेयं तत्फलायेति प्रकरणार्थः॥ २॥

एवं संभृतविद्यादिसंभारो देहान्तरं प्रतिपद्यमानः कथं प्रतिपद्यत इत्यतो दृष्टान्तपूर्वकमाह--

तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्याऽऽत्मानमुपसꣳहरत्येवमेवायमात्मेदꣳ शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्याऽऽत्मानमुपसꣳहरति ॥ ३ ॥

तत्तत्र दृष्टान्तो यथा येन प्रकारेण तृणजलायुका तृणस्यान्तमवसानं गत्वाऽन्यमाक्रमम् आक्रम्यत इत्याक्रमोऽवष्टम्भस्तमाक्रमं तृणान्तररूपमाक्रम्य आश्रित्य आत्मानमात्मनः पूर्वावयवमुपसहरत्यग्रिमावयवस्थाने एवमेव अयमात्मेदं शरीरं पूर्वोपात्तं निहत्य स्वप्नप्रतिपित्सुरिव पातयित्वा अविद्यां गमयित्वाऽचेतनं कृत्वा अन्यमाक्रमं शरीरान्तरमारभ्यमाणमाक्रम्य प्रसारितया वासनयैव केवलं गृहीत्वा तत्राऽऽत्मानमुपसंहरति। तत्रैवाहमित्यात्मभावं प्रतिपद्यते न तु पूर्वदेहे। एतादृशावेव ग्रहणत्यागौ न विपरीतार्थकावित्यर्थः॥ ३॥

एवं शरीरान्तरं तद्यथा राजानमित्याद्युक्तभूतपञ्चकारभ्यमाणं प्रति गच्छतस्तत्किं भूतपञ्चकं नित्योपात्तमेव पूर्वदेहोपमर्देन देहान्तरमारभत आहोस्विदन्यदेवान्यं देहमारभत इति सन्देहे द्वितीयपक्षे मानाभावादित्यभिप्रेत्य प्रथमपक्षमेवाङ्गीकृत्य दृष्टान्तपूर्वकमाह—

तद्यथा पेशस्कारी पेशसो मात्रामपादायान्यन्नवतरं कल्याणतरꣳ रूपं तनुत एवमेवायमात्मेदꣳ शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरꣳ रूपं कुरुते। पित्र्यं वा गान्धर्वं

वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् ॥ ४ ॥

तत्तत्र दृष्टान्तो यथा लोके पेशः सुवर्णं तत्करोतीति पेशस्कारी सुवर्णकारः पेशसः सुवर्णस्य मात्रामपादाय अपच्छिद्य गृहीत्वाऽन्यत् पूर्वस्मात् रचनाविशेषान्नवादपि नवतरमभिनवतरं कल्याणात् कल्याणतरं रूपं तनुते निर्मिनोति। एवमेव अयमात्मेत्यादि पूर्ववत्। रूपान्तरं संस्थानविशेषं देहान्तरं कुरुते। किं तदित्यत आह—पित्र्यं वेति। पितृभ्यो हितं पित्र्यं पितृलोकभोगयोग्यम्। तथा गान्धर्वं वा दैवं वा प्राजापत्यं विराड्लोकभोगयोग्यम्। ब्राह्मं हिरण्यगर्भस्तल्लोकभोगयोग्यम्। किं बहुना यथाकर्म यथाश्रुतमन्येषां भूतानां प्रेततिर्यगादीनां सम्बन्धि शरीरं कुरुत इति प्रत्येकं सम्बध्यते ॥ ४ ॥

योऽयमात्मनः संसारबन्धः स वास्तवो न भवति किन्त्वौपाधिक एवेति निरुपाधिकं स्वरूपं दर्शयंस्तानुपाधीन् पुञ्जीकृत्य दर्शयति—

स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः। पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयस्तद्यदेतदिदंमयोऽदोमय इति। यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति। पुण्यः पुण्येन कर्मणा भवति पापः पापेन। अथो खल्वाहुः काममय एवायं पुरुष इति। स यथाकामो भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते। तदभिसम्पद्यते ॥ ५ ॥

स वा एव प्रकृतोऽयं संसारी आत्मोपाध्यतीतो ब्रह्मैवाशनायाद्यतीतं परमात्मैव सन्विज्ञानमयो बुद्धिप्रायस्तदैक्याध्यासात्। मनोमयस्तत्सांनिध्यात्। एतदुभयं तु क्रमेण चित्ताहङ्कारयोरप्युपलक्षणपरम्। प्राणः पञ्चवृत्तिकस्तन्मयस्तत्सम्बन्धाद्विचलतीव लक्ष्यते। तथा बाह्यचक्षुरादिसम्बन्धाच्चक्षुर्मयो रूपादिदर्शनकाले। श्रोत्रमयः शब्दश्रवणकाले। एतत्तु इतरेन्द्रियाणामप्युपलक्षणपरम्। एवं सूक्ष्मशरीरारम्भकभूतमयत्वमाह—पृथिवीति। पार्थिवशरीरारम्भे पृथिवीमयो

भवति। वरुणलोकेषु आप्यशरीरारम्भ आपोमयः । तथा वायुमय आकाशमयस्तेजोमय एतानि शरीराणि तेजोमयानीति दर्शयितुमन्ते तद्ग्रहणं कृतम्। अन्यानि तु पशुप्रेतादिशरीराणि अतेजोमयानीत्यभिप्रेत्याऽऽह—अतेजोमय इति । एवं कार्यकरणसङ्घातविशिष्टः सन् कामादिग्रस्तो भवतीत्याह—काममय इति। प्राप्ताप्राप्तवस्त्वन्तरदर्शनेन तद्विषयाभिलाषः कामस्तन्मयः। तस्य विवेकादिना प्रशमे सति चित्तस्य शान्तत्वमकामस्तन्मयः। कामः एवाशान्तः सन् केनचित्प्रतिहन्यमानश्चेत्तदा क्रोधरूपेण परिणमते तन्मयः क्रोधमयः। स केनचिदुपायेन निवर्तितः स्यात्तदा प्रशान्तचित्तमक्रोधस्तन्मयोऽक्रोधमयः। एतदुभयाभावोभयमयत्वाभ्यां क्रमेण धर्ममयोऽधर्ममयश्च भवति। एतदुभयमयस्तु सर्वमयो भवति, व्यक्ताव्यक्तस्य जगत उभयकार्यत्वात्। नन्वव्यक्तमयत्वं कथमवगन्तुं शक्यते इत्यपेक्षायां दृश्यमानचेष्टादिलक्षणेन इदंमयत्वलिङ्गेन तत्कारणभूतं परोक्षमपि भावनात्मकमदोमयत्वमनुमेयमित्यभिप्रेत्याऽऽह—यदिति। यस्मादयमात्मा इदंमयो गृह्यमाणविषयादिमयस्तस्मात् अदोमयः कार्येणानुमीयमानभावनात्मकविषयादिमय इति तदिदं सर्वमयत्वं सिद्धम्। उक्तविज्ञानमयादिवाक्यार्थमुपसंहरति—यथेति। यथाकर्तुं शीलमस्यास्तीति यथाकारी। यथाचरितुं शीलमस्यास्तीति यथाचारी। स तथा तादृशो भवति। करणचरणाभ्यां नियतानियते क्रिये विवक्षिते इत्यभिप्रेत्य तदनुवादपूर्वकं तथाशब्दं व्याकरोति—साध्विति। साधुकारी साधुरुत्कृष्टः पित्रादिलोके भवति। पापकारी पापो निकृष्ट एव स्थावरादौ भवति। नन्वभ्यासादेव पुण्यपापसम्बन्धो भवति, न तु सकृदनुष्ठानादिति शङ्काबीजं ताच्छील्यप्रत्ययं विहाय तामपाकरोति—पुण्य इति। पुण्यः पुण्यवान् पुण्येन कर्मणा भवति। पापः पापवान् पापेन कर्मणा भवत्येव। अभ्यासात्तु तत्फलातिशयो भवतीत्यर्थः। पुण्यपापयोरेव संसारासाधारणकारणत्वमित्युक्तं पूर्वपक्षीकृत्य अविद्यामूलकः काम एव संसारासाधारणकारणमिति सिद्धान्तमाह—अथो इति। अथ उक्तपूर्वपक्षानन्तरमन्ये खलु पुनर्बन्धमोक्षकुशला अयं पुरुषः काममय एव कामो विषयादीच्छा तन्मय एवेत्याहुः, धर्मादीनामपि एतन्मूलत्वात् 'कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र', 'अकामतः क्रिया काचिद् दृश्यते नेह कस्यचिदि'त्यादिश्रुतिस्मृतिभ्यां कामतारम्यात् प्रायश्चित्ततारतम्यविधानाच्च । कया प्रनाड्या कामस्य तत्कारणत्वमिति वीक्षायामाह—स इति। आत्मा सामान्यतः काम-

मयः सन् यथाकामो यादृशकामविशेषेण युक्तो भवति तत्तादृशः क्रतुरध्यवसायः क्रियाहेतुभूतोऽस्य भवति। यत्क्रतुर्यादृशकर्मविषयेण क्रतुना युक्तो भवति तत्कर्म तादृशं कर्म कुरुते। यत्कर्म यादृशं कर्म कुरुते तदभिसंपद्यते तदीयं फलं प्राप्नोतीत्यर्थः ॥ ५ ॥

तदेष श्लोको भवति—तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य। प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्। तस्माल्लोकात् पुनरैत्यस्मै लोकाय कर्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति ॥ ६ ॥

तत्तत्र ब्राह्मणोक्तेऽर्थ एष सार्वश्लोको मन्त्रो भवति। अस्योद्धृताभिलापस्य लिङ्गं सप्तदशावयवात्मकं मनःप्रधानत्वान्मनःशब्दवाच्यम्। यद्वा प्रमात्रादिसाक्षी येन साद्येग मनसा लिङ्ग्यते तन्मनोलिङ्गं यत्र यस्मिन् गन्तव्ये फले निषक्तं निश्चयेन सक्तं भवति तत्र सक्त आसक्तः सन् फलारम्भकीभूतकर्मणा सह तदेव गन्तव्यं फलमेति गच्छति। नन्वेतद्भोगानन्तरं कामाभावान्मुक्तो भविष्यतीत्यत आह—प्राप्येति। अयं फलासक्तः कामी इहास्मिल्लोके यत्किञ्चित्करोति तस्य कर्मणो भोगेन अन्तमवसानं प्राप्य तस्मात् भुक्तभोगाल्लोकात् पुनरैति आगच्छति अस्मा अस्मिन्मनुष्यलोके कर्मणे कर्मकरणार्थम्। एवं कामासाधारणकारणकं संसारमुपसंहरति—इतीति। इत्येव नु खलु कामयमानः संसरति। एतावता जागराद्यवस्थाद्वयस्य दार्ष्टान्तिकभूतः संसारो दर्शितः। इदानीं सुषुप्त्युक्तरूपस्य अतिच्छन्दादिवाक्योक्तस्य दार्ष्टान्तिकभूतं ससाधनं मोक्षमाह—अथेति। अथशब्दः संसारप्रकरणविच्छेदार्थः। यस्मादेवं कामयमान एव संसरति तस्मादकामयमानोऽर्थान्नैव संसरति, किन्तु ब्रह्मैव सन् ब्रह्माप्येतीत्यन्वयः। तर्हि कुतोऽकामयमानः स्यादित्यत आह—योऽकाम इति। बाह्यशब्दाद्यर्थविषयककामरहितः। तदपि कुत इत्यत आह—निष्काम इति। अन्तःस्थाः वासनात्मकाः कामा निष्क्रान्ता यस्मात्स निष्कामः। अत्रापि हेतुः, आप्ताः कामा येन स आप्तकामः। अत्रापि हेतुः, आत्मैव कामो यस्य स आत्मकामो हिरण्यगर्भादिशरीरविषयककामरहित इत्यर्थः। शब्दादिसाध्यसुखस्य आत्ममात्रत्वादपि आत्मकामत्वमर्थादात्मैकत्वज्ञानेन अविद्योच्छेदादिति

बोद्धव्यम् । एवं व्यावृत्तकामः कुतो न संसरति ? यतस्तस्य प्राणा वागादयो नोत्क्रामन्ति कामाभावेन कर्मभावे सति गमनकारणभावात् । अतः स जीवन्नेव उक्तरूपब्रह्मैव सन्ब्रह्माप्येति प्राप्नोति देहाद्यावरणविच्छेदापेक्षया अप्येतीवेत्युपचर्यते नित्यप्राप्तत्वादेवेत्यर्थः ॥ ६ ॥

तदेष श्लोको भवति—यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति । तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदँ शरीरँ शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव । सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥ ७ ॥

तत्तस्मिन्नुक्ते मोक्षतत्साधनेऽर्थ एष श्लोको भवति । अस्याऽऽत्मकामस्य ब्रह्मविदो यदा यस्मिन्काले हृदि श्रिता ये प्रसिद्धाः सर्व इहामुत्रार्थेन्द्रियप्रवृत्तिहेतुभूता कामा वासनात्मकाः प्रमुच्यन्ते समूलतो विशीर्यन्ते, अथाऽतो हेतोस्तदा मर्त्यो मरणधर्माऽपि सन्नमृतो भवति । किं तदमृतत्वं क्व वेत्यत आह—अत्रेति । अत्रास्मिन्नेव शरीरे स्थितः सन्ब्रह्म समश्नुते ब्रह्मभूतो भवति । नन्वसौ विद्योत्पत्तावपि पूर्ववद्देह एव चेद्वर्तते तर्हि तस्या वैयर्थ्यमेव स्यादित्याशङ्कानिरसनार्थं दृष्टान्तपूर्वकमाह—तदिति । तत्तत्र जीवन्मुक्तदेहे जीवन्मुक्ते च दृष्टान्तो यथा लोकेऽहिः सर्पो निलीयते यस्यां साऽहिनिर्ल्वयनी सर्पत्वक्मृताऽहिदेहविनिर्मुक्ता वल्मीके सर्पाश्रये प्रत्यस्ता प्रक्षिप्ता सर्पेणानात्मभावेन त्यक्ता शयीत वर्तेत सर्पश्च तत्र निर्ममाहङ्कृतिकः, एवमेवेदं शरीरं स्थूलं सूक्ष्मं च जीवन्मुक्तेन अनात्मभावेन त्यक्तं मृतमिव सम्बन्धवर्जितं शेते । अथेति कारणादयं जीवन्मुक्तोऽप्यशरीर एव सर्पवत्तत्र निर्ममाहङ्कृतित्वात् । अत एवामृतः शरीरस्यैव तद्धर्मित्वात् । अत एव प्राणः प्राणितीति प्राणः साक्षी, न पञ्चवृत्तिकः प्राणस्य प्राणं 'प्राणबन्धनं हि सोम्य मन' इति श्रुतेरात्मप्रकरणाच्च । स च ब्रह्मैव अशनायादिवर्जितः परमात्मैव । किं पुनस्तत् ? तेज एव विज्ञानज्योतिरेव 'प्रज्ञानेत्रमि'ति श्रुतेः । अतः पूर्ववद्देहित्वाभावान्न विद्यावैयर्थ्यमित्यर्थः । यद्यपि मोक्षतत्साधनज्ञानतत्साधनसंन्यासस्याप्युक्तत्वेऽपि शमाद्युपबृंहितस्यानुक्तत्वात् तच्छुश्रूषा-

लिङ्गं सहस्रदानमित्यभिप्रायज्ञा श्रुतिराह--सोऽहमिति। सोऽहमित्थं विमोचितवते भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥ ७॥

तत्र तावत् 'अथाकामयमान' इत्यादिना ज्ञानसाध्यैव मुक्तिरिति संक्षिप्तार्थस्यैव विवरणभूतान् श्लोकानुदाहरति—

तदते श्लोका भवन्ति—अणुः पन्था विततः पुराणो माँ स्पृष्टोऽनुवित्तो मयैव। तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वो विमुक्ताः ॥ ८॥

तत्तस्मिन्नात्मकामस्य ब्रह्मविदो मुक्तिरित्युक्तेऽर्थे एते श्लोका भवन्ति। अणुः स्थूलादिनिखिलविशेषातीतत्वात्। विततो विस्तीर्णो दुर्विज्ञेयत्वादनन्तात्मावगाहित्वाद्वा। पुराणश्चिरन्तनो नित्यश्रुतिप्रकाशितत्वात्। एवंभूतः पन्था ऐकात्म्यज्ञानलक्षणो मार्गो मां स्पृष्टः शास्त्रादेर्मामनुप्राप्तो मया प्राप्त इति वा। किञ्च—मयैवानुवित्तोऽपि विद्यापरिपाकापेक्षया फलावसानलक्षणां निष्ठां नीतः। एवेत्ययम् अन्ययोगव्यवच्छेदार्थो न भवतीत्यभिप्रेत्याऽऽह--तेनेति। अन्येऽपि ये ब्रह्मविदः प्रज्ञावन्तो धीरा निर्द्वन्द्वाः जीवन्त एव विमुक्ताः सन्त इतोऽस्माच्छरीरपातादूर्ध्वं ऊर्ध्वमनन्तरमेव तेन ब्रह्मविद्यामार्गेण स्वर्गं परमानन्दलक्षणं प्रकरणाल्लोकं स्वप्रकाशं यन्ति गच्छन्ति ॥ ८॥

अस्मिन्मार्गे उपासकानां विप्रतिपत्तेर्दुर्विज्ञेयत्वं द्योतयितुं दर्शयति—

तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलँ हरितं लोहितं च। एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च ॥ ९ ॥

तस्मिन् ब्रह्मज्ञानलक्षणे मोक्षमार्गे शुक्लं शुद्धं ब्रह्मेत्याहुः। अपरे तु शरद्व्योमवन्नीलम्, अन्ये तु वह्निज्वालावत्पिङ्गलम्, केचिद्वैदूर्यमणिवत् हरितम्, अपरे तु जपाकुसुमवल्लोहितं च ब्रह्मेत्याहुः। अयं तु उपासनामार्ग एव। तथा प्राप्त्यादित्यादिदेवतानां तत्प्राप्तिद्वाराणां च नाडीनां शुक्लस्य नीलस्येत्याद्युक्तरूपाणां तादृग्वर्णत्वान्न मोक्षमार्गस्तस्य निर्गुणब्रह्मविद्यारूपत्वादित्यभिप्रेत्याऽऽह—एष इति। एष ज्ञानलक्षणः पन्था मार्गो ब्रह्मणा ह परमात्मस्वरूपेण ब्राह्मणेन त्यक्तसर्वैषणेन अनुवित्तः पूर्वोक्तनिष्ठां प्रापितः। एवं विप्रतिपत्तिनिराकरणद्वारा मोक्षमार्गं निर्धार्य तेन धीरा इत्युक्तं निगमयति—तेनेति। अन्योऽपि ब्रह्मवित्

तेन ब्रह्मविद्यामार्गेण मोक्षमेति प्राप्नोति। ब्रह्मवित्त्वे हेतुस्तैजसः, तेजसि शुद्धसत्त्वे भवस्तैजसः। तत्रापि हेतुः पुण्यकृत्, पुण्यं स्वाश्रमोक्तं कर्म करोतीति पुण्यकृत्। चेति चकार उक्तक्रमसद्भावसूचनार्थः। तदुक्तम्—"कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इति। न तु ज्ञानकर्मणोः समुच्चयार्थः। "त्यज धर्ममधर्मं च उभे सत्यानृते त्यज। उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज" इत्यादिना मोक्षसाधनस्य सर्वक्रियोपरमस्योक्तत्वात्॥ ६॥

प्रस्तुतज्ञानमार्गस्तुत्यर्थं मार्गान्तरं निन्दति—

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते तमो य उ विद्यायाँ रताः॥ १०॥

अन्धमदर्शनात्मकं तमो मोहादिपदवाच्यं प्रविशन्ति प्रपद्यन्ते। के? येऽविद्यां साध्यसाधनात्मककर्मलक्षणामुपासते। ततस्तस्मादपि भूय इव बहुतरमिव ते तमः प्रविशन्ति। के? य उ तु विद्यायां कर्मार्थायां त्रय्यामेव रता आसक्ताः विधिप्रतिषेधपर एव वेदो नान्योऽस्तीत्युपनिषदर्थानपेक्षिण इत्यर्थः। अतो युक्तं तेषामधःपतनम्॥ १०॥

संसारतमःप्रवेशोऽपि तेषां किमनिष्टमित्यत आह—

अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः।
ताँस्ते प्रेत्याभिगच्छन्त्यविद्वाँसोऽबुधो जनाः॥ ११॥

ये लोका अन्धेन तमसाऽऽवृता व्याप्तास्ते लोका अनन्दा अनानन्दास्तीव्रदुःखान्विता नाम प्रसिद्धास्तांल्लोकांस्ते प्रेत्य मृत्वाऽभिगच्छन्ति प्राप्नुवन्ति। के? येऽविद्वांसो न केवलं सामान्यतोऽविद्वांसः किं त्वबुध इति क्विबन्तबहुवचनान्त आत्मावगमवर्जिता जनाः प्राकृता जननधर्मिणो वेत्यर्थः॥ ११॥

एवं मन्त्रद्वयेनात्मज्ञानाभावे दोषमुक्त्वा इदानीं पुनरपि प्रकृतमार्गस्यैव स्तुत्यर्थं तन्निष्ठस्य क्लेशहानिमाह—

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्॥ १२॥

अयं परमात्माख्यः पुरुषोऽहमेवास्मीत्यात्मानं हृदयस्थमशनायाद्यतीतं चेत्कथञ्चित् सत्त्वशुद्धितो जानीयात्तर्हि स किमिच्छन् सर्वस्य आत्ममात्रत्वात्किमतिरिक्तं फलमिच्छन्? न किञ्चिदपि। एतदेव प्रकटयति—

कस्येति। कस्य कामाय कस्मै फलाय शरीरमनुसंज्वरेत् शरीरतापमनुतप्येत। तद्दुःखेन दुःखी न भवेदेवेत्यर्थः॥ १२॥

यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन्सन्देघे गहने प्रविष्टः।
स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव॥ १३॥

किञ्च—अस्मिन्प्रसिद्धे सन्देघे तेजोबन्नादिभिर्भूतैः सन्दिह्यत उपचीयत इति सन्देहो देहः, घकारश्छान्दसः, तस्मिन् सन्देघे। किंलक्षणे? गहने आध्यात्मिकाद्यनेकार्थसङ्कीर्णत्वाद् दुर्विज्ञेये विषमे जलसूर्यवत्प्रविष्ट आत्मा यस्य ब्राह्मणस्य येन वा अनुवित्तोऽनुलब्धः प्रतिबुद्धोऽहमस्मि परं ब्रह्मेत्येवं प्रत्यगात्मत्वेन साक्षात्कृतश्च वर्तते स ब्राह्मणो विश्वकृद्विश्वस्य कर्ता। इदं किमस्य नामेत्यत आह—सहीति। हि यस्मात् स ब्राह्मणः सर्वस्य कर्ता। एतदपि परप्रयुक्तं भविष्यतीत्यत आह—तस्येति। तस्य ब्राह्मणस्य सर्वोऽपि प्रपञ्चो लोक आत्मा। तर्हि द्वैतापत्तिरित्यत आह—स इति। स उ सोऽपि ब्राह्मणः सर्वस्य प्रपञ्चस्य लोक एवाऽऽत्मैवेत्यर्थः॥ १३॥

न केवलं श्रौतमेव कृतकृत्यत्वं किन्त्वानुभविकमपीत्याह—

इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदिर्महती विनष्टिः।
ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति॥ १४॥

इहैव देह एवाज्ञाननिद्रारहिताः सन्तो वयमथ कथञ्चित्तद् ब्रह्मतत्त्वमात्मत्वेन विद्मो जानीमः। न चेद्विदितवन्तस्तदाऽहम् अवेदिः वेदनं वेदः सोऽस्यास्तीति वेदी वेद्येव वेदिर्न वेदिरवेदिः स्यां तदा महती अनन्तपरिमाणा जन्ममरणादिलक्षणा विनष्टिर्विनशनं स्यात्। उक्तमेव प्रपञ्चयति—य इति। एवं येऽप्यन्ये तद्ब्रह्म विदुस्तेऽप्यमृता मुक्ता भवन्ति। अथ पुनर्ये नैव विदुस्ते इतरे जन्ममरणादिलक्षणं दुःखमेवापियन्ति प्रतिपद्यन्ते॥ १४॥

यदैतमनुपश्यत्यात्मानं देवमञ्जसा।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते॥ १५॥

यदा पुनराचार्याल्लब्धप्रसादः सन्ननु पश्चादेतं हृदयस्थमात्मानं देवं द्योततात्मकं भूतभव्यस्य कालत्रयस्येशानं स्वामिनमञ्जसा साक्षादात्मत्वेन पश्यति तदा ततस्तस्मादात्मभूतान् देवान्न विजुगुप्सते गुप्तिं

नेच्छति । यद्वा ततो दर्शनात्कमपि न निन्दत्यात्मानं परं वा न गर्हतीत्यर्थः ॥ १५ ॥

नन्वीश्वरस्यापि कालावच्छिन्नत्वात् कथं तदीश्वरत्वमित्यत आह—

यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते ।
तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥ १६ ॥

अयं संवत्सराख्यः कालः स्वावयवैरहोभिरहोरात्रैः कार्यजातं परिच्छिन्दन् यस्मादीश्वरादर्वागेव परिवर्तते न तमपि परिच्छिनत्ति तदेवेश्वरात्मकं ज्योतिषामादित्यादीनामपि ज्योतिरवभासकममृतम् अमरधर्मकमायुरित्येवं ह किल देवा उपासतेऽनुसन्दधते तेन आयुष्मन्तो ज्योतिष्मन्तश्चैते प्रसिध्दाः । अतः आयुष्कामेनापि तद्गुणं ब्रह्मोपास्यमित्यर्थः ॥ १६ ॥

एतदेवामृतत्वं सर्वाधिष्ठानत्वेन साधयति—

यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥ १७ ॥

यस्मिन् ब्रह्मणि पूर्ववाक्योक्तषष्ठयन्तज्योतिषा सह प्राणश्चक्षुः श्रोत्रं मनश्चेति पञ्च पञ्चसंख्याकाः पञ्चजनाः पञ्चजनसंज्ञकाः प्रतिष्ठितां आकाशश्च अव्याकृताख्यः सूत्राधारभूतः प्रतिष्ठितस्तमेव आत्मानं ब्रह्मामृतं विद्वानहममृत इति मन्ये ॥ १७ ॥

कथं पुनरेवंविधवेदनोत्पत्तिः स्यादित्यत आह—

प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो
ये मनो विदुः । ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥ १८ ॥

तद्ब्रह्म प्राणस्य अनात्मजडरूपस्यापि प्राणनादिक्रियां कुर्वतः प्राणं तत्सत्तास्फूर्तिप्रदत्वेन । तथा चक्षुष उतापि चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो मन इत्येवमात्मानं ये विदुस्ते ब्राह्मणाः । अग्र्यमग्रे । भवम् अत एव पुराणं चिरन्तनं ब्रह्म निचिक्युर्निश्चयेन ज्ञातवन्तः ॥ १८ ॥

केन साधनेनेत्यत आह—

मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १९ ॥

आचार्योपदेशादनु पश्चात्तत्संस्कृतेन मनसैव ब्रह्म द्रष्टव्यं न साधनान्तरेण। 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादिश्रुत्या फलव्याप्यत्वस्यैव निराकृतेर्वृत्तिव्याप्यत्वस्य चाविद्यानिवृत्तये इष्टत्वात्। नन्वेवं द्रष्टृद्रष्टव्यादिभावेन भेदः स्यादित्यत आह—नेति। इह द्रष्टव्ये ब्रह्मणि किञ्चन किञ्चिदपि नाना भेदः परमार्थतो नास्ति। तदेव भेददर्शननिन्दया द्रढयति—मृत्योरिति। य इह ब्रह्मणि नानेव पश्यति स मृत्योर्मरणात् पुनर्मृत्युं मरणमाप्नोति जन्मादिद्वारेणेत्यर्थः॥ १९॥

द्वैताभावे कथं द्रष्टव्यमित्यत आह—

एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम्। विरजः पर आकाशादज आत्मा महान् ध्रुवः॥ २०॥

एकधैव एकेनैव रूपेण विज्ञानघनैकरसलक्षणेन श्रवणाद्यनुद्रष्टव्यं यस्मात् तस्मादेतद्ब्रह्म अप्रमयमप्रमेयं स्फुरणाव्याप्यत्वादेकत्वाच्च। ध्रुवं नित्यं कूटस्थम्। एतदेव सोपस्करं साधयति—विरज इति। धर्माधर्मादिलक्षणं रजो विगतं यस्मात्स विरजः। अत आकाशादव्याकृताख्यात्परो व्यतिरिक्तः। अत एव अजो जन्मादिरहित आत्मैवंभूतो महान् परिमाणतो महत्तरो व्यावृत्त्यनुगमरहितत्वात्। अत एव ध्रुवोऽविनाशी॥ २०॥

यथोक्तवस्तुदर्शनं निगमयति—

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः। नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनँ हि तदिति॥ २१॥

धीरो धीमान् ब्राह्मणस्तमेवोक्तरूपमात्मानं विज्ञाय पदार्थशुद्धिं संपाद्य शास्त्रत उपदेशतश्च प्रज्ञां वाक्यार्थभूताम् अशेषशोकाकाङ्क्षाशान्तिलक्षणां स्वरूपाभिव्यक्तिरूपां मोक्षसम्पादिकां कुर्वीत सम्पादयेत्। बहुशास्त्राध्ययने दोषमाह—नेति। बहून् प्रभूतान् शब्दान्नानुध्यायात् नानुचिन्तयेत्। कुतः? हि यस्मात्तद्बहुशब्दाध्ययनं वाचो वागिन्द्रियस्य विग्लापनं विशेषेण ग्लानिकरं श्रमकरम्। इतिशब्दो मन्त्रोदाहरणसमाप्तिद्योतकः॥ २१॥

अथ विविदिषावाक्येन ब्रह्मात्मनि काम्यराशिवर्जितस्य कृत्स्नस्य वेदराशेर्विनियोगकथनार्थं तावदस्मिन्नध्याये उक्तं सफलमात्मज्ञानं

'स वा एष' इत्यदि 'असंभेदाये'त्यन्तेनानुवदति--

स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते। सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः। स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन। एतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति। एतद्ध स्म वै तत्पूर्वे विद्वाँ्सः प्रजां न कामयन्ते। किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति। ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति। या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा। उभे ह्येते एषणे एव भवतः। स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमिति उभे उ हैवैष एते तरति नैनं कृताकृते तपतः॥ २२॥

स वै ज्योतिर्ब्राह्मणोक्तो जीव एषोऽत्र अव्यवहितोक्तः परमात्मा। एवमुक्तमैक्यं प्रकटीकर्तुमेषशब्देन विरज इत्याद्युक्तः परमात्माऽभिमत इति द्योतयितुं तत्स्थं विशेषणद्वयमाह--महानज आत्मेति। सशब्देन ज्योतिर्ब्राह्मणोक्तो जीवोऽभिमत इति द्योतयितुं तत्स्थमपि विशेषणद्वयमाह--योऽयं विज्ञानमयः प्राणेष्विति। उभयोरैक्यलक्षणो वाक्यार्थः सामानाधिकरण्येनाभिमत इति द्योतयितुं तत्रैवोक्तमाह— य इति। संप्रसादकाले य एषोऽन्तर्हृदयः आकाशः परमात्माख्यो बुद्ध्याश्रयो वा तस्मिन् क्रमेण विज्ञानमयः शेत एकीभूतो वर्तते बुद्ध्यादिसाक्षि-

रूपेण वा वर्तते। एतद्विज्ञानफलमन्तरब्राह्मणोक्तमाह—सर्वस्येति। सर्वस्य ब्रह्मेन्द्रादेर्वशी सर्वो हि इन्द्रादिगणोऽस्य वशे वर्तते। कुतः? यतः सर्वस्येशानः। तस्य राजकुमारेशितृतुल्यत्वं व्यावर्तयति—सर्वस्याधिपतिरिति। सर्वस्याधिष्ठाय पालयिता स्वतन्त्र इति यावत्। नन्वेवं सत्येतस्य राजवद्धर्मादिसम्बन्धः स्यादित्यत आह—स इति। सोऽधिपतिर्विद्वान् साधुना शास्त्रविहितेन कर्मणा पूर्वावस्थातो भूयान्न भवति न वर्धते। असाधुना शास्त्रप्रतिषिद्धेन कर्मणा नो एव कनीयाल्पीयान्न भवत्येव। कस्मात्? यस्मादेष विद्वान्सर्वस्य धर्मादेरपीश्वरो नियमनशीलः। कुतः? यत एष विद्वान् भूतमात्रस्य स्थावरजङ्गमात्मकस्य अधिपतिस्तत्सत्तानियामकः। तथैव भूतानि जनिमत्कार्यरूपाणि स्वचेतनदानेन पालयतीति भूतपालः। किञ्च—एष सेतुरिव सेतुः। किंलक्षणः? विधरणो वर्णाश्रमादिव्यवस्थाविधारकः। किमर्थम्? एषां भूरादिब्रह्मलोकान्तानाम् असंभेदाय असाङ्कर्याय एकवर्णता मा भूदिति राजवैलक्षण्यान्नास्य तद्वद्धर्मादिसम्बन्ध इत्यर्थः। एवमनुवादप्रयोजनीभूतं वेदविनियोगमाह—तमिति। ब्राह्मणा द्विजास्तमेतं मन्त्रोक्तविशेषणमौपनिषदं पुरुषं वेदानुवचनेन वेदस्य मन्त्रब्राह्मणात्मकस्य अनु पश्चाद् गुरूच्चारणानन्तरं वचनं पठनं नित्यस्वाध्यायलक्षणं तेन वेदानुवचनेन अन्तःकरणशुद्धिद्वारा विविदिषन्ति वेदितुमिच्छन्ति न तु विदन्त्येव। तथा यज्ञेन द्रव्ययज्ञेन ज्ञानयज्ञेन च दानेन श्रद्धादिसंयुक्तेन तपसा। किंलक्षणेन? अनाशकेन कामानशनलक्षणेन विविदिषन्तीति प्रत्येकं सम्बन्धः। यद्वा अनाशकपदं न तपोविशेषणं किन्तु स्वतन्त्रं मरणावधिकभोजनाभाववाचकम्। तस्मिन् पक्षे ब्रह्मचर्याद्याश्रमस्था ब्राह्मणाः क्रमेण वेदानुवचनादिना विविदिषन्ति। वेदनेच्छातः किं स्यादित्य आह एतमिति। उक्तोपायबुद्धिशुद्धिद्वारा विविदिषोत्पत्तौ श्रवणादिक्रमेणैतं मन्त्रब्राह्मणोक्तमात्मानमेव विदित्वा न कर्मादिकं मुनिर्मननशीलो योगी भवतीति यावत्। किञ्च एतमेव आत्मलोकमिच्छन्तः प्रार्थयन्तो विविदिषन्तः प्रव्राजिनः प्रव्रजनशीला मुमुक्षवः प्रव्रजन्ति प्रकर्षेण सर्वाणि कर्माणि न्यस्यन्तीति संन्यासो विधीयत आग्नेयोऽष्टाकपालो भवतीतिवत्। कथमेतत् निश्चेतुं शक्यत इत्यतस्तन्निर्णयहेतुभूतं तदर्थवादमाह—एतदिति। तदेतत्पारिव्राज्ये स्पष्टं कारणं ह किल वै स्मार्यते। पूर्वेऽतिक्रान्तकालिका विद्वांस आत्मज्ञाः प्रजां तदुपलक्षिते कर्मवित्ते च न कामयन्ते स्म पुत्रादिसाधनानि नानुतिष्ठन्ति। केनाभिप्रायेणेत्यत आह—किमिति। येषां नोऽस्माकं परमार्थदर्शिनामयं

नित्यसन्निहितोऽशनायाद्यतीति आत्मैवायं लोकः पुरुषार्थस्ते वयं पुत्रादिभिः किं करिष्याम इत्यभिप्रायसमाप्तिद्योतक इतिशब्दः। तर्हि ते किं कृतवन्त इत्यत आह—'ते ह स्मे'त्येतदादि 'एषणे एव भवत' इत्यन्तम्। उक्तार्थवाद एव विधिनिश्चायकस्तस्य विधिमन्तरेणानन्वयात्। तस्मात् संन्यासादिनैव आत्मलोकः प्राप्यो न कर्मादिना तस्य उत्पाद्यादिविलक्षणत्वादित्याह—'स एष नेति नेत्या'दि 'न लिप्यति' इत्यन्तेन शाकल्यब्राह्मणोक्तार्थकेन। एतद्रूपस्य सर्वैषणाविनिवृत्तस्य किं स्यादित्यत आह—एतमिति। एतमुक्तरूपं परमात्मभूतम् उह प्रसिद्धमेते वक्ष्यमाणे नैव तरतो नैव व्याप्नुतः। के ते इत्यत आह—अत इति। अतोऽस्माद्देहसम्बन्धाविवेककृतरागादेः पापमकरवं कृतवान्, अतो मे नरको भविष्यतीति परितापं तथाऽतः फलकामनिमित्तात्कल्याणं यज्ञादिशोभनं कर्म अकरवम्, अतो मे स्वर्गो भविष्यति हर्षश्चेत्येते उभे न तरतः। कुत इत्यत आह—उभे इति। एष ब्रह्मविदुभे पुण्यपापलक्षणे कर्मणी उ हेव तरत्यतिक्रामति। अत एवैन ब्रह्मविदं कृतं नित्याद्यनुष्ठानम्। अकृतं तस्यैवाकरणम्। एते अपि फलदानप्रत्यवायोत्पादनाभ्यां न तपतो नोद्वेजयतः॥ २२॥

एवमुक्ते ब्रह्मविद्याफले मन्त्रं संवादयति—

तदेतदृचाऽभ्युक्तम्—एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्। तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति। तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति सर्वमात्मानं पश्यति। नैनं पाप्मा तरति सर्वं पाप्मानं तरति। नैनं पाप्मा तपति सर्वं पाप्मानं तपति। विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति। एष ब्रह्मलोकः सम्राडेनं प्रापितोऽसीति होवाच याज्ञवल्क्यः। सोऽहं भगवते विदेहान्ददामि मां चापि सह दास्यायेति॥ २३॥

तदेतद् ब्राह्मणेनोक्तं वस्तुतत्त्वमृचा मन्त्रेणाभ्युक्तं प्रकाशितम्। ब्राह्मणस्य ब्रह्मविदस्त्यक्तसर्वैषणस्यष साधननिःस्पृहो नेति नेत्यादिलक्षणः स्वरूपभूतो महिमा ऐश्वर्यविशेषः स्वाभाविकत्वान्नित्यः। कुतः?

यतः शुभकर्मणैष महिमा न वर्धते वृद्धिलक्षणां विक्रियां न प्राप्नोति। तथा अशुभेन कर्मणा नो कनीयान्नापक्षयलक्षणां विक्रियां प्राप्नोति अतस्तस्यैव महिम्नस्त्वंपदार्थभूतस्य पदं गम्यं स्वरूपं तत्पदार्थभूतं ब्रह्म तस्य पदस्य वित् वेदिता स्यान्मुमुक्षुः। तस्मिन्सति किं स्यादित्यत आह—तमिति। तं महिमानं पदं विदित्वा ज्ञात्वा पापकेन धर्माधर्मलक्षणेन कर्मणा न लिप्यत उभयस्यापि संसारबन्धहेतुत्वान्न सम्बध्यते। इतिशब्द ऋक्समाप्तिद्योतकः। तर्ह्येतद्वेदनं कथं स्यादित्यत आह—तस्मादिति। यस्मादुक्तलक्षणो महिमा तस्मादेवंवित् कर्मादिसम्बन्धशून्य इत्यापाततो जानन् प्रथमं दान्त उपरतबाह्येन्द्रियव्यापारोऽनन्तरं शान्तोऽन्तःकरणतृष्णातो निवृत्तस्तत उपरतः सर्वैषणाविनिर्मुक्तो विधिना त्यक्तसर्वकर्मा संन्यासी तितिक्षुर्जीवनाविच्छेदिशीतोष्णादिद्वन्द्वसहिष्णुः समाहितः सम्यगात्मन्याहितचित्तो भूत्वा आत्मन्येव स्वे कार्यकरणसङ्घात एवाऽऽत्मानं प्रत्यक्चेतयितारं पश्यति साक्षात्करोति। किमेतावत्परिच्छिन्नमेव? नेत्याह—सर्वमिति। सर्वं समस्तमेवाऽऽत्मानं पश्यति न तदतिरिक्तं किमपि। ततः किं स्यादित्यत आह—नेति। एवमात्मानं पश्यन्तमेनं ब्राह्मणं पाप्मा धर्माधर्मकाम्यनिषिद्धलक्षणो न तरति न प्राप्नोति। कुतः? यतोऽयमुक्तरूपं सर्वं पाप्मानं तरत्यात्मभावेन व्याप्नोति। किञ्च—एनं पाप्मा कृताकृतलक्षणः स्वफलोत्पादनेन न तपति। कुतः? यतोऽयं सर्वं पाप्मानं कृताकृतलक्षणो सर्वात्मदर्शनवह्निना तपति भस्मीकरोति। अत एव विगतं पापं धर्माधर्मलक्षणं यस्य स विपापः विगतो रजः कामो यस्य स विरजः। अत एव अविचिकित्सश्छिन्नसंशयः। एवंभूत एतस्यामवस्थायां मुख्यब्राह्मणो भवति, इतरत्र त्वमुख्यः। एवमुपदिष्टां सफलां विद्यां मुनिरुपसंहरतीत्याह—एष इति। हे सम्राडेष सर्वात्मलक्षणो ब्रह्मैव लोको ब्रह्मलोकस्त्वमेनं प्रापितोऽसीति ह याज्ञवल्क्य उवाच। राजाऽपि स्वात्मनो विद्यालाभं द्योतयितुं तन्निष्क्रयार्थमाह—स इति। सोऽहमेवं त्वया ब्रह्मभावं प्रापितो भगवते तुभ्यं विदेहान्देशान् ददामि मां चापि सह विदेहैर्लोकैर्दास्याय दासकर्मणे ददामि। इतिशब्द आख्यायिकया उक्तसफलविद्यासमाप्तिद्योतकः ॥ २३ ॥

अथ सोपाधिकब्रह्मध्यानं सफलं प्रतिपत्तिसौकर्यार्थं श्रुतिरेव आह—

स वा एष महानज आत्माऽन्नादो
वसुदानो विदन्ते वसु य एवं वेद ॥ २४ ॥

यो राजमुन्याख्यायिकोक्तः स वा एष महानज आत्मा अन्नादः सर्वभूतस्थः सन् सर्वान्नात्ता । यद्वा—जगदात्मकस्यान्नस्य अत्ता संहारकः । यद्वा—अन्नमासमन्तात् ददातीत्यन्नादः । वसु धनं भोगसाधनं कर्मफलं ददातीति वसुदानः । य एवमुक्तगुणमात्मानं वेद अहङ्ग्रहेणोपास्ते स वसु कर्मफलजातं विन्दते लभते । अन्नं च सर्वभूतेष्वत्ति सर्वात्मत्वात् । एतच्च रातिरित्यादेः प्रपञ्च इत्यर्थः ॥ २४ ॥

अथ तिष्ठमानस्येत्याद्युक्तं निर्गुणब्रह्मज्ञानं सफलमाह—

स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म । अभयं वै ब्रह्म । अभयँ हि वै ब्रह्म भवति य एवं वेद ॥ २५ ॥

स वा एव उक्तरूपो विज्ञानमयो महान् अवच्छेदकोपाधिरहितः । अत एव स्वतोऽजो जन्मरहित आत्मा । अत एवाजरो जरारहितः । अत एव अमरः प्राणत्यागरूपमरणरहितः । अत एव अमृतो निरन्वयनाशशून्यः । अत एवाभयो भयहेत्वविद्यापगमात् । अत एव ब्रह्म सत्यज्ञानादिलक्षणम् । नन्वभयत्वेऽप्यस्य ब्रह्मत्वं कथमित्यत आह—अभयमिति । अभयं वै प्रसिद्धं ब्रह्म । एवं यथोक्तमात्मानमभयं ब्रह्म यो वेद सोऽभयं ब्रह्मैव हि भवति मुक्तो भवति । एवं श्रुत्या सफलोऽपि सर्वोपनिषदर्थ एतावदेव एतज्ज्ञात्वा कृतकृत्यो भवेदिति करुणया निरूपितः । सृष्ट्यादिनिरूपणं हि केवलस्वरूपबोधनार्थमेव न तु तत्र तात्पर्यम् । अत एव तत्र तत्राऽन्ते नेति नेत्यादिनिर्देशः क्रियत इति समापितः शास्त्रार्थः सकलोऽपि ॥ २५ ॥

इति चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

एवमागमोपपत्तिप्रधानाभ्यां मधुमुनिकाण्डाभ्यां निरूप्य अन्तेऽप्युपसंहृतस्य निर्गमनार्थमागमप्रधानं मैत्रेयीब्राह्मणमारभ्यते—

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च । तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायनी । अथ ह याज्ञवल्क्योऽन्यद् वृत्तमुपाकरिष्यन् ॥ १ ॥ मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन् वा अरेऽहमस्मात् स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥ २ ॥ सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी

वित्तेन पूर्णा स्यात् स्यां न्वहं तेनामृताऽऽहो ३। नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवित ँ स्यादमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेनेति ॥ ३ ॥ सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ४ ॥

अथ हेतूपदेशान्तरं प्रतिज्ञातोऽर्थो निगम्यते। ह किल याज्ञवल्क्यस्य मैत्रेयी कात्यायनी चेति द्वे भार्ये पत्न्यौ बभूवतुः। तयोर्मध्ये ह मैत्रेयी ब्रह्मवादिनी ब्रह्मवादनशीला बभूव यस्मिन्काले तर्हि तस्मिन्काले कात्यायनी तु स्त्रीप्रज्ञैव स्त्रिया उचिता या प्रज्ञा गृहप्रयोजनान्वेषणलक्षणा सैव विद्यते यस्यां सा स्त्रीप्रज्ञैव बभूवेत्यनुषङ्गः। अथैवं सति ह याज्ञवल्क्यः पूर्वस्माद् गार्हस्थ्यलक्षणाद् वृत्तादन्यत्पारिव्राज्यलक्षणं वृत्तम् उपाकरिष्यन्नुपाचिकीर्षुः सन् हे मैत्रेयीति ज्येष्ठां भार्यामामन्त्र्य होवाचेत्यादि पूर्वमैत्रेयीब्राह्मणसमानार्थम्। स्यां न्वहमित्यत्र तु अहमिति च्छेदः ॥ १--४ ॥

स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियमवृधद्धन्त तर्हि भवत्येतद्व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ५ ॥ स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवति। आत्मनस्तु कामाय पतिः प्रियो भवति। न वा अरे जायायै कामाय जाया प्रिया भवति। आत्मनस्तु कामाय जाया प्रिया भवति। न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति। आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति। न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति। आत्मनस्तु कामाय वित्तं प्रियं भवति। न वा अरे पशूनां कामाय पशवः प्रिया भवन्ति। आत्मनस्तु कामाय पशवः प्रिया भवन्ति। न वा अरे ब्रह्मणः कामाय ब्रह्म

प्रियं भवति । आत्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवति । आत्मनस्तु कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्ति । आत्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्ति । आत्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे वेदानां कामाय वेदाः प्रिया भवन्ति । आत्मस्तु कामाय वेदाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्ति । आत्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवन्ति । आत्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदँ सर्वं विदितम् ॥ ६ ॥ ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्राऽऽत्मनः क्षत्रं वेद । लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान् वेद । देवास्तं परादुर्योऽन्यत्रात्मनो देवान् वेद । वेदास्तं परादुर्योऽन्यत्राऽऽत्मनो वेदान् वेद । भूतानि तं परादुर्योऽन्यत्राऽऽत्मनो भूतानि वेद । सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद । इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदँ सर्वं यदयमात्मा ॥ ७ ॥ स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ८ ॥ स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ९ ॥ स यथा वीणायै वाद्यमानायै न

बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ १० ॥

प्रिया वै खल्वित्यादौ भवती त्वं पूर्वमपि नोऽस्मभ्यं प्रियैव सतीदानीमपि प्रियमवृधद् वर्धितवत्यसि, तर्हि हे भवति ते तुभ्यमित्यर्थः ॥ ५—१० ॥

स यथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टँ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निःश्वसितानि ॥ ११ ॥ स यथा सर्वासामपाँ समुद्र एकायनमेवँ सर्वेषाँ स्पर्शानां त्वगेकायनमेवँ सर्वेषां गन्धानां नासिके एकायनमेवँ सर्वेषाँ रसानां जिह्वैकायनमेवँ सर्वेषाँ रूपाणां चक्षुरेकायनमेवँ सर्वेषाँ शब्दानाँ श्रोत्रमेकायनमेवँ सर्वेषाँ सङ्कल्पानां मन एकायनमेवँ सर्वासां विद्यानाँ हृदयमेकायनमेवँ सर्वेषां कर्मणाँ हस्तावेकायनमेवँ सर्वेषामानन्दानामुपस्थ एकायनमेवँ सर्वेषां विसर्गाणां पायुरेकायनमेवँ सर्वेषामध्वनां पादावेकायनमेवँ सर्वेषां वेदानां वागेकायनम् ॥ १२ ॥ स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १३ ॥

इष्टं हुतमित्यादि षडाचार्यब्राह्मणोक्तार्थम् ॥ ११–१३ ॥

सा होवाच मैत्रेय्यत्रैव मा भगवान् मोहान्तमापीपिपन्न वा अहमिमं विजानामीति । स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा ॥ १४ ॥

मोहान्तं मोहमध्यमापीपिपत् आपादितवानसीत्यर्थः ॥ १४ ॥

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरँ रसयते तदितर इतरमभिवदति तदितर इतरँ शृणोति तदितर इतरं मनुते तदितर इतरँ स्पृशति तदितर इतरं विजानाति । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् तत्केन कं जिघ्रेत् तत्केन कँ रसयेत् तत्केन कमभिवदेत् तत्केन कँ शृणुयात् तत्केन कं मन्वीत तत्केन कँ स्पृशेत् तत्केन कं विजानीयात् । येनेदँ सर्वं विजानाति तं केन विजानीयात् । स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सृज्यतेऽसितो न व्यथते न रिष्यति । विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ॥ १५ ॥

चतुर्ष्वपि अध्यायेषु उपायभेदेनोक्तम् उपेयमात्मतत्त्वमेकमेवेत्युपसंहरति—स एष नेति नेत्यादिना शाकल्यब्राह्मणोक्तार्थेन । यतोऽरे मैत्रेयि एतावदेव ससंन्यासं नेति नेत्याद्युक्तरूपम् आत्मज्ञानमेव अमृतत्वममृतत्वसाधनं त्वया विज्ञेयमित्युक्त्वा ह याज्ञवल्क्यो विजहार प्रतिज्ञातं संन्यासं कृतवानित्यर्थः । अन्यत्पाठान्तरमपि समानार्थं सुखबोधं चेत्युपरम्यते । एतावता परिसमाप्तो ब्रह्मविद्याख्यः शास्त्रार्थः सकलोऽपि ॥ १५ ॥

इति चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

अथ वँश पौतिमाष्यो गौपवनाद् गौपवनः पौतिमाष्यात्

पौतिमाष्यो गौपवनाद् गौपवनः कौशिकात् कौशिकः कौण्डिन्यात् कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥ आग्निवेश्यादाग्निवेश्यो गार्ग्याद् गार्ग्यो गार्ग्याद् गार्ग्यो गौतमाद् गौतमः सैतवात् सैतवः पाराशर्यायणात् पाराशर्यायणो गार्ग्यायणाद् गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यन्दिनायनान्माध्यन्दिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥ घृतकौशिकाद् घृतकौशिकः पाराशर्यायणात् पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चाऽऽसुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद् गौतमो गौतमाद् गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात् कैशोर्यः काप्यः कुमारहारितात् कुमारहारितो गालवाद् गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद् वत्सनपाद्बाभ्रवः पथः सौभरात् पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात् त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद् दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वँसनान्मृत्युः प्राध्वँसनः प्रध्वँसनात् प्रध्वँसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात् सनातनः सनगात् सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ३ ॥

अथ साङ्गोपाङ्गात्मविद्याकथनानन्तरं याज्ञवल्कीयकाण्डस्य वंशः कथ्यते। शेषं मधुकाण्डवंशब्राह्मणवद्व्याख्येयम् ॥ १--३ ॥

इति चतुर्थाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

॥ इति बृहदारण्यकब्राह्मणे षष्ठोऽध्यायः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्यनित्यानन्दाश्रमविरचितायां मिताक्षराख्यायां बृहदारण्यकव्याख्यायां चतुर्थोऽध्यायः।

—:०:—

## ॥ अथ पञ्चमोऽध्यायः ॥

एवं काण्डद्वयेन निरूपितस्यैव निरुपाधिकब्रह्मण उपाधिवैशिष्ट्यमापन्नस्य अभ्युदयक्रममुक्तिकर्मसमृद्ध्यर्थानि उपासनानि विधातुं खिलकाण्डं पूर्वानुक्तवक्तव्यत्वेन परिशिष्टलक्षणं प्रवर्तते। तत्र सर्वोपास्त्यङ्गभूतान् ॐकारो दमो दानं दयत्येतान् विधित्सन्ती श्रुतिस्तावदुपास्यब्रह्मणः शुद्धत्वप्रसिद्धये तादृशं स्वरूपं मन्त्रेणानुवदति—

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ॐ खं ब्रह्म। खं पुराणं वायुरं खमिति ह स्माऽऽह कौरव्यायणीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम् ॥ १ ॥

अदः परोक्षं ब्रह्म पूर्णमाकाशवद्व्यापि निरन्तरं निरुपाधिकं यदिदं नामरूपोपाधिविशिष्टं व्यवहारापन्नं तदपि स्वेन निरुपाध्यात्मरूपेणैव पूर्णं न विशिष्टेन। एवं तत्त्वंपदयोः क्रमेण लक्ष्यांशमुक्त्वा तयोरेव वाच्यांशं कथयंस्त्वंपदार्थस्य पूर्णत्वे हेतुमाह—पूर्णादिति। तदिदं विशेषरूपापन्नं ब्रह्म पूर्णात् कारणात्मनः सकाशात् पूर्णमेव उदच्यत उद्रिच्यत उद्गच्छति पूर्णात्मस्वभावस्य त्यागायोगात्। एतज्ज्ञानफलं लक्ष्ययोरैक्यापत्तिरूपमाह—पूर्णस्येति। पूर्णस्य कार्यात्मनो ब्रह्मणः पूर्णं पूर्णत्वमेकरसत्वलक्षणमादाय गृहीत्वा आत्मस्वरूपैकरसत्वमापाद्य विद्ययाऽऽविद्यकोपाधिसंसर्गतिरस्कारपूर्वकं पूर्णमेव निरन्तरं प्रज्ञानघनैकरसस्वभावं केवलं ब्रह्मावशिष्यते। अयं तु 'ब्रह्म वा इदमग्र आसीत्, तदात्मानमेवावेदहं ब्रह्मास्मीति, तस्मात्तत्सर्वमभवदि'त्युप-

क्रमस्थश्रुत्यर्थ एव मन्त्रेणोपसंहृतः सर्वस्य ब्रह्मात्मैकत्वनिर्णयार्थमित्यर्थः। अथ ब्रह्मण ॐकारालम्बनत्वेन ध्यानमाह—ॐ खं ब्रह्मेति मन्त्रः। ॐकारः खं ब्रह्मेति ध्येयः शालग्रामो विष्णुरितिवत्। अत्र ब्रह्मविशेषणस्य खशब्दस्य कोऽर्थ इत्यतो ब्राह्मणं तदर्थमाह—खमिति। खमिति पुराणं चिरन्तनमेव ब्रह्मोच्यते। कल्पान्तरमाह—वायुरं खमिति। वायुर्विद्यते यस्मिंस्तद्वायुरं खं भौतिकाकाशं तदवच्छिन्नं ब्रह्म ॐकारालम्बनमिति कौरव्यायणीपुत्रो हाऽऽह स्मो उक्तवानितीत्थया ध्यानं कर्तव्यमित्यर्थः। एवं प्रतीकपक्षमुक्त्वा यथोक्तब्रह्मण ॐकारवाच्यत्वमिति पक्षान्तरमाह—वेद इति। अयमोङ्कारो वेद इति ब्राह्मणा ब्रह्मविदो विदुर्ज्ञातवन्तः। कुतः? यस्माद्वेदितव्यं ज्ञातव्यं ब्रह्मैनेन ॐकारेण वेद जानाति प्रसिद्धवेदस्यापि वेदत्वं वेदनहेतुत्वादेवेत्यर्थः॥ १॥

इति पञ्चमाध्याये प्रथमं ब्राह्मणम्॥ १॥

एवमाभ्यन्तरं सर्वोपास्तिसाधनमोङ्कारमुक्त्वा बाह्यं शमादित्रयं विधातुं तावदर्थवादमाह—

त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुराः। उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा ३ इति। व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेति। ओमिति होवाच व्यज्ञासिष्टेति॥ १॥

त्रयस्त्रिप्रकाराः प्राजापत्याः प्रजापतेरपत्यभूताः प्रजापतौ विराडात्मनि पितरि समीपे शिष्याः सन्तो ब्रह्मचर्यमूषुः उषितवन्तः। के ते इत्यत आह—देवा मनुष्या असुरा इति। एते त्रयो ब्रह्मचर्यमुषित्वा प्रथमं देवाः पितरमूचुः। किम्? भवान्नोऽस्मभ्यमनुशासनं ब्रवीतु कथय। तेभ्यो हैवमर्थिभ्यो द इत्येतदक्षरं वर्णमात्रमुवाच, उक्त्वा च पिता पप्रच्छ। किम्? मयोपदिष्टस्य अक्षरस्यार्थं यूयं व्यज्ञासिष्टा ३ इति। प्लुतिर्विचारार्था विज्ञातवन्तो न वेति। देवा ऊचुर्व्यज्ञासिष्म विज्ञातवन्तो वयमिति। तर्हि किं मयोक्तमित्युच्यतामित्यत आह—दाम्यतेति। स्वभावतोऽदान्ता अदमशीला यूयम्, अतो दाम्यत दान्ता भवतेति त्वं नोऽस्मान् आत्थ कथयसीति स्वाभिप्रायानुसारेण देवा ज्ञातवन्त इत्यर्थः। पितोवाच—ओमिति। अङ्गीकृतमेव स्पष्टयति—व्यज्ञासिष्टेति। सम्यग्विज्ञातं भवद्भिरित्यर्थः॥ १॥

अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा ३ इति। व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेति। ओमिति होवाच व्यज्ञासिष्टेति ॥ २ ॥

तथा स्वभावतो लुब्धा यूयमतो दत्त यथाशक्तियन्नादिकं विभजतेति मनुष्यपर्यायतात्पर्यार्थः। समानमन्यत् ॥ २ ॥

अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदेवाक्षरमुवाच द इति यज्ञासिष्ठा ३ इति। व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेति। ओमिति होवाच व्यज्ञासिष्टेति। तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति। तदेतत्रयँ शिक्षेद् दमं दानं दयामिति ॥ ३ ॥

तथा स्वभावतो हिंसादिपरा यूयमतो दयध्वं प्राणिषु दयां कुरुतेति आसुरपर्यायार्थः। एवं प्राजापत्यमनुशासनं प्रागासीदित्यत्र लिङ्गमाह—तदिति। तदेतत्प्रजापतेरनुशासनमेषा दैवी वागनुवदति। का कथं वेत्यत आह—स्तनयित्नु रेति। स्तनयित्नुर्मेघदेवो द द द इत्यनुवदति। अस्याः कोऽर्थ इत्यत आह—दाम्यत दत्त दयध्वमिति। एतत्त्रितयोपलक्षणार्थं त्रिर्दकारोच्चारणमित्यर्थः। यं स्तोतुमयमर्थवादः प्रवृत्तस्तं विधेयमाह—तदिति। यस्मात् प्रजापतिः स्तनयित्नुरूपेण अनुशास्त्येव तत्तस्मात् कारणाद्दमं दानं दयामित्येतत्त्रयं शिक्षेत् उपादद्यादाधुनिको मनुष्य इत्यर्थः॥ ३ ॥

इति पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

अथ सोपाधिकस्य ब्रह्मणो ध्यानभेदोक्त्यर्थमुत्तरग्रन्थजातं प्रवर्तते। तत्रैवमनुशासिता प्रजापतिः क इत्यत आह—

एष प्रजापतिर्यद्धृदमेतद्ब्रह्मैतत्सर्वं तदेत् त्र्यक्षरँ हृदयमिति। हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद। द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद। यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ॥ १ ॥

एष प्रजापतिः। कः ? यत्सर्वदिग्देवताश्रयत्वेन शाकल्यब्राह्मणोक्तमेतत् हृदयं हृदयस्था बुद्धिरित्यर्थः। नन्वेतस्य सूक्ष्मत्वात् कथं प्रजापतिना सहाभेद इत्यत आह—एतत्सर्वमिति। एतत् हृदयं सर्वं सर्वात्मकं शाकल्यब्राह्मणोक्तरीत्यैव। अस्योपास्यत्वार्थं ब्रह्मत्वमाह—एतद् ब्रह्मेति। एतत् हृदयं ब्रह्मेत्येवं निरन्तरमुपास्यम्। हृदयनामाक्षरोपासनार्थमाह—तदिति। तदेतद्धृदयमिति नाम त्र्यक्षरं त्रीण्यक्षराणि यस्येति व्युत्पत्तेः। कानि तानीति वीक्षायां क्रमेण सफलं त्रयमाह—हृ इति। यस्मादस्मै हृदयब्रह्मणे स्वा इन्द्रियाण्यन्ये च विषयाः शब्दादयः स्वं स्वं कार्यमभिहरन्ति हृदयं च भोक्त्रर्थं स्वविषयसुखादिकमभिहरति तस्माद्धृदयनामाक्षरत्वेन सम्बद्धमेकमक्षरम्। हृतेर्हरतिकर्मणो हृ इत्येतद्रूपम्। यो वेदास्मै विदुषे स्वा ज्ञातयोऽन्ये च सम्बन्धिनोऽभिहरन्ति बलिमिति वाक्यशेषः। तथा यस्मादस्मै पूर्वोक्तब्रह्मणे स्वा अन्ये चोक्ताः स्वं स्वं वीर्यमाददति तस्मात् ददातेर्द इत्येतद्रूपं पूर्ववद्यो वेदास्मै स्वाश्चान्ये च स्वं स्वं वीर्यमाददति। यस्माच्चोक्तब्रह्म प्रति स्वा अन्ये च यन्ति तस्मात्। इणो गत्यर्थस्य यमित्येतद्रूपम्। पूर्ववद्यो वेद स स्वर्गं लोकं प्रत्येतीत्येतद्विज्ञानानुरूपं फलम्। एतदक्षरोपासनमुपास्यहृदयब्रह्मणः स्तुत्यर्थं न त्विदमक्षरोपासनमपि स्वतन्त्रमित्यर्थः॥ १॥

इति पञ्चमाध्याये तृतीयं ब्राह्मणम्॥ ३॥

एतस्यैव हृदयब्रह्मणः सत्यात्मनोपासनमाह—

तद्वै तदेतदेव तदास सत्यमेव। स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकाञ्जित इन्न्वसावसत्। एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यँ ह्येव ब्रह्म॥ १॥

तद्वै हृदयं ब्रह्मतदुक्तविधमेतदेव वक्ष्यमाणप्रकारं तदेव हृदयं ब्रह्माऽऽस वर्तते। कोऽसौ प्रकार इत्यत आह—सत्यमिति। यद्धृदयात्मनोक्तं तत्सत्यमेव सच्च त्यच्च सत्यं पञ्चभूतात्मकमाधिदैविकं तत्त्वं हिरण्यगर्भात्मकमित्यर्थः। तस्य स्वरूपकथनपूर्वकं तद्विज्ञानफलमाह—स इति। यः साधको हैतं महदपरिच्छेद्यमतो यक्षं पूज्यं प्रथमजं सर्वास्मद्विराडादेः सकाशात्पूर्वोत्पन्नमेवंविधं सत्यं ब्रह्म वेद उपासते स इमान् भूरादीन् लोकान् जयति सत्यब्रह्मवत्। किञ्च—इन्नु इत्थं यथा सत्यब्रह्मणा अनृतशत्रुर्जितस्तथोपासकेनाप्यसौ शत्रुर्जितः।

तथाभूताः सन्नसच्च नष्टश्च भवेदिति । कथमेतदुपासकस्य एतत्फलमित्यपेक्षायामुक्तानुवादपूर्वकं हेतुमाह—य एवमेतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति । यस्मात्सत्यमेव ब्रह्मोक्तरीत्या लोकजिच्छत्रुजिच्च तस्मात्तदुपासकस्यापि उपासनानुरूपमुक्तफलं युक्तमेवेत्यर्थः ॥ १ ॥

इति पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

अथास्य सत्यब्रह्मणः स्तुत्यर्थं प्रथमजत्वं साधयति—

आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म प्रजापतिं प्रजापतिर्देवाँ्स्ते देवाः सत्यमेवोपासते । तदेतत्त्र्यक्षरँ्सत्यमिति । स इत्येकमक्षरम् । तीत्येकमक्षरम् । यमित्येकमक्षरम् । प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतम् । तदेतदनृतमुभयतः सत्येन परिगृहीतँ्सत्यभूयमेव भवति । नैवं विद्वाँ्समनृतँ्हिनस्ति ॥ १ ॥

आपः पयःसोमाद्यात्मिका हूयमानाः सूक्ष्मभूता भूतान्तरसहिता जगद्बीजभूता अव्याकृतात्मनाऽवस्थिता एवेदं सर्वं विकारजातं जगदग्रे सृष्टेः पूर्वमासुर्नान्यत्किञ्चित् । ता उक्त लक्षणाः पुनरापः सत्यं सूत्रात्मकं हिरण्यगर्भमसृजन्त सृष्टवत्यः । तस्य हृदयब्रह्मणो भेदशङ्कां वारयति—सत्यं ब्रह्मेति । एवं प्रथमजत्वं प्रसाध्य महत्त्वं साधयति—ब्रह्मेति । तत्सत्यं ब्रह्म हिरण्यगर्भाख्यं प्रजानां पतिं विराजमसृजत । स च प्रजापतिर्देवानसृजतेत्यनुषङ्गः । अथ यक्षत्वमाह—ते इति । यस्मादेवं सृष्टास्ते देवाः पितरमपि विराजमतीत्य सत्यमेव सत्यं ब्रह्मैवोपासते अतो यक्षमित्यर्थः । हृदयब्रह्मवदस्यापि वर्णत्रयात्मकं नामाऽऽह—तदिति । तदेतत् सत्यमिति नाम त्र्यक्षरम् । तत्र स इत्येकमक्षरम् । तीत्येकमक्षरम् । अत्र हलन्ततकारनिर्देशार्थमिकारोऽनुबन्धः । यमित्येकमक्षरम् । तेषां स्वरूपमाह—प्रथमेति । तेषां मध्ये प्रथमोत्तमे अक्षरे सकारयकारौ सत्यमृतं सस्वरत्वात् । मध्यतो मध्ये वर्तमानं तकाराक्षरमनृतं मृत्युरूपं निःस्वरत्वात् । तदेतदनृतं तकाराक्षरं मृत्युरूपमुभयतः पूर्वोत्तरतः सत्येन सकारयकारलक्षणेन परिगृहीतं व्याप्तमन्तर्भावितम् अतस्तस्याकिञ्चित्करत्वात् सत्यभूयमेव सत्यबाहुल्यमेव भवति । ज्ञानानुरूपं फलमाह—नेति । एवं सत्यबाहुल्यमनृतस्याकिञ्चित्करत्वं च विजानन्तमेनं विद्वांसमनृतं कदाचित् प्रमादोक्तं न हिनस्ति स्वफलदानेन न व्याप्नोतीत्यर्थः ॥ १ ॥

अस्यैव पुनः स्थानविशेष उपासनमाह—

तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः । तावेतावन्योन्यस्मिन्प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः प्राणैरयममुष्मिन् । स यदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मण्डलं पश्यति । नैनमेते रश्मयः प्रत्यायन्ति ॥ २ ॥

तद्यत्सत्यं ब्रह्म पूर्वोक्तं तदसौ स प्रसिद्ध आदित्यः । कः ? य एष एतस्मिन् प्रसिद्धे मण्डले पुरुषोऽभिमानी यश्च दक्षिणेऽक्षन दक्षिणेऽक्षणि पुरुषः । तयोर्भेदशङ्कयोपासनभेदशङ्कां वारयति—ताविति । तावेतौ आदित्याक्षिस्थौ पुरुषौ एकस्यैव सत्यब्रह्मणः स्थानविशेषौ यस्मात् तस्मादन्योन्यस्मिन् आदित्यश्चक्षुषि चाक्षुषश्चाऽऽदित्ये प्रतिष्ठितौ । कथमित्यत आह—रश्मिभिरिति । आदित्योऽस्मिंश्चक्षुषि रश्मिभिः प्रकाशरूपकुर्वन् प्रतिष्ठितः । अयं च चाक्षुषः प्राणश्चक्षुरादिभिरिन्द्रियैर्मण्डलं प्रकाशयन् अमुष्मिन्नादित्ये प्रतिष्ठितः । अथ संसारिणः सावधानार्थं प्रासङ्गिकमरिष्टदर्शनमाह—स इति । स भोक्ता विज्ञानमयो यदा यस्मिन्काल उत्क्रमिष्यन् प्राणांस्त्यक्ष्यन् भवति तदा विज्ञानमय एतद्रविमण्डलं शुद्धमेव विरश्म्येव केवलं पश्यति । प्रकृतमुपकार्योपकारकत्वं निगमयति—नेति । एते रश्मय एनं चाक्षुषपुरुषं न प्रत्यायन्ति पूर्ववन्न पुनरावर्तन्ते भोक्तुकर्मक्षये सतीत्यर्थः ॥ २ ॥

अथैव मुक्तसत्यब्रह्मण एव व्याहृत्यवयवकत्वेन ध्यानमाह—

य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर एकँ शिर एकमेतदक्षरम् । भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे । स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे । तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ॥ ३ ॥

य एष एतस्मिन्मण्डले पुरुषः सत्यनामा तस्य भूरिति प्रथमा व्याहृतिः शिरः । कुतः ? यथा शिर एकं तथा भूरित्यक्षरमप्येकमिति एकत्वसामान्यात् । भुव इति बाहू हस्तौ द्वौ बाहू द्वे एते अक्षरे इति द्वित्वसामान्यात् । स्वरिति प्रतिष्ठा प्रतितिष्ठत्याभ्यामिति प्रतिष्ठे पादौ द्वे प्रतिष्ठे सुवरिति वर्णविश्लेषेणैते द्वे अक्षरे इति द्वित्वसामान्यात् । तस्य व्याहृत्यवयवस्य सत्यब्रह्मणोऽहरिति उपनिषद्दैवतामुपनयति

उपनिषद्रहस्यं नामाभिधानमनेनाभिधीयमानम् एतल्लोकत्वदभिमुखी भवति । उपास्तिफलमाह—हन्तीति । अहरित्येतद्रूपं हन्तेर्जहातेश्च यो वेद स पाप्मानं हन्ति जहाति च त्यजति च ॥ ३ ॥

एवमाधिदैविकमुक्त्वा आध्यात्मिकमाह—

योऽयं दक्षिणेऽक्षन् पुरुषस्तस्य भूरिति शिर एकँ शिर एकमेतदक्षरम् । भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे । स्व-रितिप्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे । तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद ॥ ४ ॥

योऽयं दक्षिणेऽक्षन्नित्याद्युक्तार्थेन । अत्राप्यहमित्येतद्रूपं हन्तेर्जहातेर्वा यो वेदेति समानमित्यर्थः ॥ ४ ॥

इति पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

तस्यैव सत्यब्रह्मणः पुनर्मनउपाधित्वेनोपासनमाह—

मनोमयोऽयं पुरुषो भाःसत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च ॥ १ ॥

अयं पुरुषो मनोमयो मनःप्रायः, तस्मिन्नुपलभ्यमानत्वात् । अत एव भाःसत्यो भा एव सत्यं स्वरूपं यस्य स भाःसत्यो भास्वरः । तस्य ध्यानार्थमौपाधिकं परिमाणमाह—तस्मिन्निति । यथा व्रीहिर्वा यवो वा परिमाणत एवंपरिमाणो विज्ञानमयस्तस्मिन्प्रसिद्धेऽन्तर्हृदये हृदयमध्ये योगिभिर्दृश्यत इति शेषः । स्वाभाविकं त्वानन्त्यमित्यभिप्रेत्याऽऽह—स इति । स एष सर्वस्येशान इत्याद्युक्तार्थम् । एतदेव निगमयति—यदिदं किञ्चेति । यत्किञ्चेदं जगत्तत्सर्वं प्रशास्तीत्यर्थः ॥ १ ॥

इति पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

सत्यस्यैव अशेषपापध्वंसफलकमुपासनान्तरमाह—

विद्युद्ब्रह्मेत्याहुः । विदानाद्विद्युद् विद्यत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्मः ॥ १ ॥

विद्युद्ब्रह्मेत्याहुर्ब्राह्मणाः। तस्य निर्वचनमाह—विदानादिति। विदानात्मेऽद्य पापान्धकारविदारणाद्विद्युत्। एतदुपासनफलमाह—विद्यतीति। यो विद्युद्ब्रह्मेति वेद एनमुपासकमाश्रित्य वर्तमानान्पाप्मनो विद्यति अवखण्डयति विनाशयति ब्रह्मेत्यर्थः। अस्योपासनानुगुणत्वमाह—विद्युदिति। हि यस्माद् ब्रह्म विद्युत् तमोमूलकपापविदारकमेवेत्यर्थः॥ १॥

इति पञ्चमाध्याये सप्तमं ब्राह्मणम्॥ ७॥

अथ पुनस्तस्यैव वाङ्मयधेनुसम्बन्धेनोपासनमाह—

वाचं धेनुमुपासीत। तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारः। तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरः। तस्याः प्राण ऋषभो मनो वत्सः॥ १॥

वाचं वेदत्रयीलक्षणां धेनुरिव धेनुस्तामुपासीत। तत्र साम्यमाह—तस्याश्चत्वार इत्यादिना। तेषां विनियोगमाह—तस्या इति। तस्या धेन्वा द्वौ स्तनौ देवा उपजीवन्ति। कौ? स्वाहाकारं च वषट्कारं च एताभ्यां हि देवेभ्यो हविर्दीयते। हन्त अपेक्षितं गृहाणेत्युक्त्वा मनुष्येभ्योऽन्नं दीयतेऽतो हन्तकारं मनुष्या उपजीवन्तीति सम्बध्यते। तथा स्वधाकारं पितरः। तस्या उत्पादको वा स्तन्यप्रस्रवहेतुर्वा क इत्यत आह—तस्या इति। प्राण ऋषभ इव ऋषभः। प्राणबलेन हि वाक्प्रसूयते अप्राणस्य तदुच्चारणादर्शनात्। मनो वत्स इव। वत्स मनसा ह्यालोच्य वाक् स्वाहाकाराद्यर्थं क्षरतीत्यर्थः॥ १॥

इति पञ्चमाध्याये अष्टमं ब्राह्मणम्॥ ८॥

प्रकृतस्यैव सत्यब्रह्मणो जाठराग्नित्वेनापरोक्षत्वं दर्शयितुं तत्त्वेनोपासनमाह—

अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते। तस्यैष घोषो भवति यमेतत् कर्णावपिधाय शृणोति। स यदोत्क्रमिष्यन्भवति नैनं घोषँ शृणोति॥ १॥

को योऽयमन्तःपुरुषे शरीरे। स किं शारीर इति? नेत्याह—

येनेति। येनाग्निनेदमन्नं पच्यते। किं तत्? यदिदमद्यते भुज्यते तस्य वक्ता विराडात्मा जाठरोऽग्निः। तत्सद्भावे किं मानमित्यत आह—तस्येति। तस्याग्नेरेष घोषः शब्दो भवति। कोऽङ्गुलिभ्यां कर्णावपिधाय पिधानं कृत्वा यं घोषमेतच्छ्रवणं यथा स्यात्तथा शृणोति। प्रासङ्गिकमरिष्टदर्शनमाह—स इति। सोऽत्र शरीरे भोक्ता यदोत्क्रमिष्यन्नुत्क्रमणं करिष्यन्भवति तदा नैनं घोषं शृणोति॥ १॥

इति पञ्चमाध्याये नवमं ब्राह्मणम्॥ ९॥

अत्र प्रकरण उक्तोपासनानां गतिमनुक्तफलं चाऽऽह—

यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते। यथा रथचक्रस्य खं तेन स ऊर्ध्वं आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते। यथा लम्बरस्य खं तेन स ऊर्ध्वं आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते। यथा दुन्दुभेः खं तेन स ऊर्ध्वं आक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन्वसति शाश्वतीः समाः॥ १॥

यदा यस्मिन्काले पुरुषो विद्वान् अस्माल्लोकात् प्रैति शरीरं त्यजति तदा स उपासको वायुमागच्छति। स च वायुः स्तिमितोऽभेद्योऽन्तरिक्षस्थस्तस्मै प्राप्ताय उपासकाय तदर्थं तत्र स्वात्मनि विजिहीते स्वावयवान् विगमयत्यात्मानं छिद्रीकरोतीति यावत्। कियत्परिमाणमित्यत आह—यथेति। यथा यावत्परिमाणं रथचक्रस्य खं छिद्रं तेन च्छिद्रेण स विद्वाननूर्ध्वं ऊर्ध्वमाक्रमते। ततः क गच्छतीत्यत आह—स आदित्यमित्यादिना। अत्र लम्बरस्य डम्बराख्यस्य वादित्रविशेषस्य। शेषं स्पष्टार्थम्। एवं गच्छतः क विश्राम इत्यत आह—स इति। स उपासको लोकं प्रजापतिमागच्छति। किं विशिष्टम्? अशोकं दुःखरहितम्, अहिमं हिमादिदुःखसाधनरहितं तस्मिँल्लोके शाश्वतीर्नित्या बहून्समाः संवत्सरान् वसति॥ १॥

इति पञ्चमाध्याये दशमं ब्राह्मणम्॥ १०॥

अथ यादृच्छिकज्वरादिहेतुकमनात्मोपासनत्रयं सफलमाह—

एतद्वै परमं तपो यद्व्याहितस्तप्यते परमँ हैव लोकं जयति य एवं वेद। एतद्वै परमं तपो यं प्रेतमरण्यँ हरन्ति परमँ

हैव लोकं जयति य एवं वेद। एतद्वै परमं तपो यं प्रेत-
मग्नावभ्यादधति परम ँ् हैव लोकं जयति य एवं वेद ॥ १ ॥

यद्व्याहितो व्याधितो ज्वरादिना परिगृहीतः संतप्यते दुःखं प्राप्नोति। एतद्वै परमं तप इति चिन्तयेदनिन्दन् अविषीदंश्च दुःखत्व-सामान्यात्। तत्फलमाह—परममिति। य एवं ज्वरादिपीडनं तप इति यो वेद स परमं तपोऽनुरूपमेव लोकं ह जयति। तथा यं प्रेतं मा-मृत्विगादयोऽरण्यं प्रत्यभिहरन्ति। एतद्वै परमं तप इति मुमूर्षावस्थायां चिन्तयेत् वानप्रस्थवद् ग्रामादरण्यगमनसामान्यात्। परमं तपोऽनुरूप-मित्यादि समानम्। तथा यं प्रेतं मां ज्ञातयोऽग्नावभ्यादधति प्रक्षिपन्ति। एतद्वै परमं तप इति मरणात्प्रागेव चिन्तयेत् अग्निप्रवेशसामान्यात्। स परममग्निप्रवेशानुरूपं लोकं जयतीत्यर्थः ॥ १ ॥

इति पञ्चमाध्याये एकादशं ब्राह्मणम् ॥ ११ ॥

अथ पुनरन्नप्राणोपाधिकं वीरगुणकं ब्रह्मोपासनमेव विधातुं ताव-द्युक्ती आह—

अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते प्राणात्।
प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राण ऋतेऽन्नात्।
एते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतः।
तद्ध स्माऽऽह प्रातृदः पितरं किँ स्विदेवैवं विदुषे साधु कुर्यां
किमेवास्मा असाधु कुर्यामिति। स ह स्माऽऽह पाणिना
मा प्रातृद कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति।
तस्मा उ हैतदुवाच वीति अन्नं वै वि अन्ने हीमानि सर्वाणि
भूतानि विष्टानि। रमिति प्राणो वै रम्। प्राणे हीमानि
सर्वाणि भूतानि रमन्ते सर्वाणि ह वा अस्मिन् भूतानि
विशन्ति सर्वाणि भूतानि रमन्ते य एवं वेद ॥ १ ॥

अन्नं ब्रह्मेत्येक आचार्या आहुः। तत्तथा न ग्रहीतव्यं यतः प्राणाद्बक्ष-काद्दते विनाऽन्नं पूयति वै क्लिद्यते पूतिभावमापद्यत इति प्रसिद्धम्।

तथा प्राणो ब्रह्मेत्येक आहुः। तदपि तथा न ग्राह्यं यतोऽन्नात् अदनीयादृते प्राणः शुष्यति वै शोषमुपैतीति प्रसिद्धम्। ब्रह्म तु क्लेदशोषवर्जितम्। एवमेकैकस्य ब्रह्मत्वानुपपत्तेः। द्वैते एव तु देवते अन्नप्राणलक्षणे एकधाभूयमेकधाभावं भूत्वा गत्वा परमतां परमत्वं गच्छतो ब्रह्मत्वं प्राप्नुतः। एवं युक्तितस्तदेतत् अन्नप्राणैकत्वरूपं ब्रह्म अध्यवस्य ह प्रातृदनामर्पिहृष्टः सन् स्वपितरं प्राह स्म। किम्? यथा मया ब्रह्म परिकल्पितमेवमेव ब्रह्म विदुषे साधु शोभनं पूजां किंस्वित्कुर्याम्? तथाऽसाधु अशोभनं वाऽस्मै विदुषे किमेव कुर्याम्? न किञ्चिदपि कृतकृत्यत्वात्। एवं वदन्तं पुत्रं सत्कृत्य पिता पाणिना हस्तेन वारयन्नाह स्म। किम्? हे प्रातृद मैवं वोचो यत एनयोरन्नप्राणयोरेकधाभूयं भूत्वा परमतां को नु गच्छति? न कोऽपि। तस्मान्नैवं वक्तुमर्हसि कृतकृत्योऽसाविति। तर्हि ब्रवीतु भवान्कथं परमतां गच्छतीति जिज्ञासायामाह—तस्मा इति। तस्मै प्रातृदाय उ ह पिता एतद्वक्ष्यमाणं गुणद्वयमुवाच। किं तदित्यतः क्रमेणाऽऽह—वीति। कि तद्वीत्यपेक्षायामाह—अन्नं वै वीति। कुतः? हि यस्मादिमानि सर्वाणि भूतान्यन्ने विष्टानि आश्रितानि। द्वितीयमाह—रमिति। किं तत् रमित्यत आह—प्राणो वै रमिति। कुतः? हि यस्मात्प्राणे बलाश्रये सति सर्वाणि भूतानि रमन्ते यथेष्टं विहरन्ति। तस्मादेतदुभयगुणके प्राणान्ने अग्निसोमात्मके एकीभूते ब्रह्मेत्येवमेव उपास्यमिति समुदायार्थः। उपासनफलमाह—सर्वाणीति। य एवमुभयगुणकं वेद अस्मिन्विदुषि सर्वाणि भूतानि विशन्ति अन्नगुणविज्ञानात्, सर्वाणि भूतानि रमन्ते प्राणगुणविज्ञानादित्यर्थः॥ १॥

इति पञ्चमाध्याये द्वादशं ब्राह्मणम्॥ १२॥

अस्यैव ब्रह्मणः पुनरुक्थादिगुणपूगविशिष्टत्वेन उपासनमाह—

उक्थं प्राणो वा उक्थं हीदँ सर्वमुत्थापयति।
उ द्धास्मादुक्थविद् वीरस्तिष्ठति उक्थस्य
सायुज्यँ सलोकतां जयति य एवं वेद॥ १॥

यतः प्राणो वा उक्थमतस्तमुक्थं महाव्रते क्रतौ प्रधानभूतं शस्त्रमुपासीत उभयोः प्राधान्यसामान्यात्। कथमस्य उक्थत्वमित्यत आह—प्राण इति। प्राणे हि सतीदं चराचरं जीवः कर्म चोत्थापयत्युत्पादयति तं विना तयोरुत्थापकत्वायोगात्। अस्योपासनस्य दृष्टादृष्टरूपं फलमाह—उदिति। य एवमुक्तरूपं प्राणं वेद उत हास्मादुपासकादुक्थविद्वीरः पुत्रः उत्तिष्ठत्युत्पद्यते। उक्थस्य प्राणस्य सायुज्यं सलोकतां वा उपासनतारतम्याज्जयति प्राप्नोति॥ १॥

यजुः प्राणो वै यजुः । प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते । युज्यन्ते हास्मै सर्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यँ सलोकतां जयति य एवं वेद ॥ २ ॥

प्राणो वै यजुरतः प्राणो यजुरित्युपासीत । कुतोऽस्मिन् यजुःशब्द-प्रवृत्तिरित्यत आह—प्राण इति । हि यस्मात्प्राणे सति सर्वाणि भूतानि युज्यन्तेऽतो युनक्तीति यजुरिति योगात् । य एवं वेद अस्मै विदुषे ह सर्वाणि भूतानि श्रैष्ठ्याय श्रेष्ठभावाय अयं नः श्रेष्ठो भवत्वि-त्यभिप्रायेण युज्यन्त उद्यमन्ते । समानमन्यत् ॥ २ ॥

साम प्राणो वै साम । प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि । सम्यञ्चि हास्मै सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यँ सलोकतां जयति य एवं वेद ॥ ३ ॥

यतः प्राणो वै साम, अतस्तत्सामेत्युपासीत । सामत्वमपि कुतः ? प्राणे हि सतीमानि भूतानि सम्यञ्चि सम्यगञ्चन्तीति सम्यञ्चि सङ्गच्छन्ते । अस्मै विदुषे सर्वाणि भूतानि सम्यञ्चि सङ्गच्छन्ते । न केवलमेतावन्मात्रम्, अपि तु श्रैष्ठ्याय श्रेष्ठत्वाय च सामर्थ्यं कल्पन्त इत्यादि समानम् ॥ ३ ॥

क्षत्रं प्राणो वै क्षत्रम् प्राणो हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः । प्रक्षत्रमत्रमाप्नोति क्षत्रस्य सायुज्यँ सलोकतां जयति य एवं वेद ॥ ४ ॥

यस्मात्प्राणो वै क्षत्रं तस्मात्तं क्षत्रमित्युपासीत । कुतः ? प्राणो हि वै प्रसिद्धं क्षत्रम् । तदपि कुतः ? यस्मादेनं देहं प्राणः क्षणितोः शस्त्रादिहिंसितात्पुनर्मांसपूरणं कुर्वंस्त्रायते पालयति ह तस्मात् क्षत-त्राणात् प्राणो वै क्षत्रम् । य एवं वेद स प्रकर्षेण क्षत्रं प्रक्षत्रं किंविम ? शिष्टअत्रं न त्रायतेऽन्येन केनचिदित्यत्रं क्षत्रमाप्नोति । शेषं पूर्ववत् ॥ ४ ॥

इति पञ्चमाध्याये त्रयोदशं ब्राह्मणम् ॥ १३ ॥

एवं ब्रह्मणो हृदयाद्यनेकोपाधिविशिष्टस्योपासनमुक्तम् । इदानीमुक्त-सर्वोपाध्युपसंहारिगायत्र्युपाधिविशिष्टस्योपासनमाह—

भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराणि । अष्टाक्षरँ ह वा एकं

गायत्र्यै पदमेतदु हैवास्या एतत् । स यावद्देषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ १ ॥

भूमिरन्तरिक्षं द्यौरिति वर्णविश्लेषेण अष्टौ त्रैलोक्यनामाक्षराणि प्रसिद्धानि । तथा तत्सवितुर्वरेण्यमिति विश्लेषेण अष्टावक्षराणि यस्य तदिदमष्टाक्षरं ह वै गायत्र्यै गायत्र्या एकं पदं प्रथमः पाद इति । उभयोरुक्ताष्टत्वसामान्यस्य किं प्रयोजनमित्यत आह--एतदिति । अस्या गायत्र्या एतत्प्रथमपादस्वरूपमु ह खल्वेतदेव भूम्यादित्रैलोक्यलक्षणमेवेत्युपासीत । एतत्फलमाह—स इति । यः पुमानस्या गायत्र्या एतदुक्तत्रैलोक्यात्मकं पदं पादमेवमुक्तरीत्या वेद स पुमान् यावद्देषु त्रिषु लोकेषु जेतव्यमस्ति तावत्सर्वं ह खलु जयतीत्यर्थः ॥ १ ॥

ऋचो यजूँ्षि सामानीत्यष्टावक्षराणि । अष्टाक्षरँ् ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत् । स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ २ ॥

तथा ऋचो यजूँषि सामानीत्यष्टौ त्रैविद्यनामाक्षराणि । तथाऽष्टाक्षरं ह वा एकं द्वितीयं गायत्रीपदमित्युभयोरष्टत्वसामान्यात् । अस्या गायत्र्या एतद्द्वितीयं पदमु हैतदेव त्रैविद्यात्मकमेवेत्युपासीत । तत्फलमाह--स इति । योऽस्या एतद्द्वितीयं पदमेवं वेद स यावतीयं त्रयी विद्या त्रय्या विद्यया यावत्फलजातमवाप्यते तावद्ध जयति ॥ २ ॥

तृतीयपादस्य उक्तोभयविधजगद्धिधारप्राणाद्यात्मत्वमाह--

प्राणोऽपानो व्यान इत्यष्टावक्षराणि । अष्टाक्षरँ् ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत् । स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेद । अथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति । यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परोरजा इति । सर्वमु ह्येवैष रज उपर्युपरि तपत्येवँ् हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ॥ ३ ॥

प्राणोऽपानो व्यान इति विश्लेषेणाष्टौ प्राणाद्यभिधानाक्षराणि । अस्या गायत्र्या एतत्तृतीयं पदमेतत्प्राणाद्येवेति यो वेद स यावदिदं

प्राणिजातं तावद्ध जयति। समानमन्यत्। एवंक्रमेण रूपनामकर्मात्मकत्रिपदाया गायत्र्या अभिधानभूताया अभिधेयभूतादित्यात्मकहिरण्यगर्भाभिधानाय चतुर्थं पदमाह—अथेति। अथ शब्दात्मकगायत्रीकथनानन्तरम् अस्यास्त्रिपदाया गायत्र्या अभिधेयभूतमेतदेव तुरीयं दर्शतं पदं 'परोरजा' य एष तपति। एतानि पदानि श्रुतिः स्वयमेव व्याकरोति—यदिति। यच्चतुर्थं वै प्रसिद्धं लोके तदत्र तुरीयशब्देन उच्यते। दर्शतं पदमित्यस्य कोऽर्थ इत्यत आह—दर्शतमिति। एष मण्डलान्तर्गतः पुरुषो हि यस्माद्दृश इव न तु साक्षाद् दृश्यत ईश्वरस्य अतीन्द्रियत्वात् अतो दर्शतं पदमित्युच्यत इत्यर्थः। परोरजा इत्यस्यार्थस्तु सर्वमेव उ रजो रजोजातं कामात्मकं लोकात्मकं वा उपर्युपरि हि यस्मादेष सविता तपति तपन्वर्तते अतो रजसः पर इति परोरजा उच्यत इत्यर्थः। एतच्चतुर्थपादविज्ञानफलमाह—एवमिति। एवं सवितृवदेव ह श्रिया सर्वाधिपत्यलक्षणया वसुलक्षणया वा यशसा च ख्यात्या तपति प्रकाशते य एवमस्या गायत्र्या एतत् तुरीयं दर्शतं पदं वेद ॥ ३ ॥

एवमभिधानाभिधेयात्मिकां गायत्रीमुक्त्वा अभिधानस्य अभिधेयतन्त्रत्वमाह—

सैषा गायत्र्येतस्मिँ्स्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता। तद्वै तत्सत्ये प्रतिष्ठितम्। चक्षुर्वै सत्यं चक्षुर्हि वै सत्यम्। तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एवं ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम। तद्वै तत्सत्यं बले प्रतिष्ठितम्। प्राणो वै बलं तत्प्राणे प्रतिष्ठितम्। तस्मादाहुर्बलँ् सत्यादोगीय इत्येवंवेषा गायत्र्यध्यात्मं प्रतिष्ठिता। सा हैषा गयाँ्स्तत्रे। प्राणा वै गयास्तत्प्राणाँ्स्तत्रे। तद्यद् गयाँ्स्तत्रे तस्माद्गायत्री नाम। स यामेवामूँ्सावित्रीमन्वाहैषैव सा। स यस्मा अन्वाह तस्य प्राणाँ्स्त्रायते ॥ ४ ॥

सैषा एवमुक्तरूपा त्रिपदा गायत्री एतस्मिन्नुक्तलक्षणे तुरीये दर्शते पदे

परोरजसि मूर्तामूर्तरसभूत आदित्ये प्रतिष्ठिता। तद्वै तत्तुरीयं पदमितर-पदसहितं सत्ये प्रतिष्ठितम्। किं तत्सत्यमित्यत आह—चक्षुर्वै सत्यमिति। कुतः? अध्यात्मं चक्षुः सत्यमिति ह वै प्रसिद्धम्। कथम्? यद्यस्मादेको ब्रूतेऽहं गजादि वस्त्वदर्शं दृष्टवानस्मि, अपरो ब्रूते तद्वस्तु तथा न भवतीत्यहमश्रौषम्। इत्येवं विवदमानौ विरुद्धं भाषमाणौ द्वाविदानीम् एयातामागच्छेताम्। तयोर्मध्ये य एवाहमदर्शमिति ब्रूयात्तस्मा एव श्रद्दध्याम श्रद्धां करवाम, न पुनरहमश्रौषमिति ब्रुवते। श्रुत्यपेक्षया हि दृष्टिर्बलीयसी। तस्मात्सत्यप्रतिपत्तिहेतुत्वात् चक्षुः सत्यम्। त द्वै तत्तुरीयपदाश्रयं सत्यं बले प्रतिष्ठितम्। किं तद्बलम्? प्राणो वै बलम्। तत्तस्मिन्बलात्मके प्राणे सत्यं प्रतिष्ठितं यस्मात्तस्माल्लोका बलं सत्यादोगीय ओजीय ओजस्तरं बलवत्तरमित्याहुः। एवमुक्तन्यायेन आदित्यचक्षुरादिव्यवस्थितिद्वारा उ एषा गायत्री अध्यात्ममध्यात्मे प्राणे सर्वदेवाद्यात्मके सूत्रात्मभूते प्रतिष्ठिता। अतोऽध्यात्मप्राणरूपा सती जगत आत्मेति यावत्। अत एवास्याः सर्वजगज्जीवनहेतुत्वमपीति गायत्रीनामनिर्वचनेनाऽऽह—सेति। सैषा मुख्यप्राणात्मिका गायत्री ह गायन्तीति गयास्तान् गयांस्तत्रे त्रातवती। के ते गयाः? प्राणा वागादयो वै गयाः शब्दनिष्पत्तिहेतुत्वात् तत्तान्प्राणांस्तत्रे। तत्तत्र प्रयोक्तृशरीरे यद्यस्माद्गयांस्तत्रे तस्माद् गायत्रीति नाम प्रसिद्धम्। अस्या एव ब्राह्मण्यमूलत्वेन स्तुत्यर्थं सावित्रीत्वमाह—स इति। स आचार्योऽष्टवर्षं माणवकमुपनीय यामेव अमूं सावित्रीं सवितृदेवताकां पादशोऽर्धर्चशः समस्तां चान्वाह सा सावित्री एषैव उक्तजगत्प्राणात्मिका गायत्र्येव नान्या। कुतः? यतः स गायत्र्युपासक आचार्यो यस्मै बटव इमामन्वाह अनुवक्ति तस्य प्राणान्सा नरकादिपतनात् त्रायते तस्माद् गायत्र्येव सावित्रीत्यर्थः॥ ४॥

मतान्तरमनूद्य दूषयति—

ताँ हैतामेके सावित्रीमनुष्टुभमन्वाहुः। वागनुष्टुबेतद्वाचमनुब्रूम इति। न तथा कुर्याद्गायत्रीमेव सावित्रीमनुब्रूयाद्यदि ह वा अप्येवंविद् बह्विव प्रतिगृह्णाति। न हैव तद्गायत्र्या एकञ्चन पदं प्रति॥ ५॥

एके शाखिनः—"तत्सवितुर्वृणीमहे वयं देवस्य भोजनम्। श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि" इत्यनुष्टुप्छन्दस्कां तामेतामेव ह सावित्रीमुपनीताय अन्वाहुरनुवदन्ति। तेषामभिप्रायमाह—वागिति। वागनुष्टुब्

वाक्च सरस्वती। अवयमेतदनुष्टुब्लक्षणां वाचं सरस्वतीमेवापेक्ष्यमाणां माणवकाय अनुब्रूम इति वदन्तस्तामेवोपदिशन्तीत्यर्थः। एतत् दूपयति—नेति। यच्छाखान्तरीया आहुस्तन्मृषैव, अतस्तथा न कुर्यादनुष्टुप्सावित्रीं बटवे नोपदिशेत्। किं तर्हि? गायत्रीमेव सावित्रीमनुब्रूयात्। तदुपदेशे हि सर्वमप्युपदिष्टं स्यात्तस्या एव त्रैलोक्याद्यात्मकत्वोक्तेर्नानुष्टुभ इत्यर्थः। अथ गायत्रीविदं स्तौति—यदीति। यद्यप्येवमुक्तरूपगायत्रीविद् बह्विव [ वस्तुतो विद्वत्स्वरूपाद्बहुत्वाभावात् बह्विव ] प्रतिगृह्णाति तथाऽपि तत्प्रतिग्रहजातं गायत्र्या एकञ्चन एकमपि पदं पादविज्ञानफलं प्रति नैव ह पर्याप्तं दूरतस्तु दोषापादकत्वमित्यर्थः॥ ५॥

एतदेव विशेषत आह—

स य इमांस्त्रीँल्लोकान् पूर्णान्प्रतिगृह्णीयात् सोऽस्या एतत्प्रथमं पदमाप्नुयात्। अथ यावतीयं त्रयी विद्या यस्तावत् प्रतिगृह्णीयात् सोऽस्या एतद् द्वितीयं पदमाप्नुयात्। अथ यावदिदं प्राणि यस्तावत् प्रतिगृह्णीयात् सोऽस्या एतत्तृतीयं पदमाप्नुयात्। अथाऽस्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति नैव केनचनाऽऽप्यं कुत उ एतावत् प्रतिगृह्णीयात्॥ ६॥

स यो गायत्रीवित् इमान्भूरादीन् त्रींल्लोकान् गवादिधनपूर्णान् प्रतिगृह्णीयात्स प्रतिग्रहोऽस्या गायत्र्या एतत्प्रथमं पदमाप्नुयात् प्रथमपादविज्ञानफलं भुक्तं स्यान्न त्वधिकदोषोत्पादकः। तथाऽथ पुनर्यावतीयं त्रयी विद्या प्रसिद्धा तावत्तदवच्छिन्नं वस्तु यः प्रतिगृह्णीयात् सोऽस्या एतद् द्वितीयं पदमाप्नुयात्तद्विज्ञानफलं भुक्तं स्यात्। तथा यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात् सोऽस्या एतत्तृतीयं पदमाप्नुयात्तद्विज्ञानफलं भुक्तं स्यात्। एतच्च कल्पयित्वैव श्रुत्या स्तुत्यर्थमेवोच्यते। वस्तुत एतादृशदातृप्रतिग्रहीत्रोरभावात् नरकादिहेतुपरिग्रहस्य निषिद्धत्वात्, आत्मसाक्षात्कारातिरिक्तस्य सर्वपापप्रदाहकत्वासंभवाच्च। तुरीयपदविज्ञानफलक्षयस्तु संभावयितुमपि न शक्यत इत्याह—अथेति। अथ पादत्रयविज्ञानफलभोगोक्त्यनन्तरमस्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपत्येतद्विज्ञानफलस्य अनन्तत्वात्तद्विज्ञानफलं केनचनापि प्रतिग्रहादिना नैव आप्यं प्राप्यम्। कुतः? उ एतावत्प्रतिगृह्णीयात् तद्विज्ञानफलसमानप्रतिग्राह्यवस्तुनोऽभावात्, अतो न तत्क्षय इत्यर्थः॥ ६॥

उक्तविज्ञानसङ्ग्राहकं मन्त्रमैहिकादिफलोपायकथनार्थमवतारयति—

तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे। नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति। यं द्विष्यादसावस्मै कामो मा समृद्धीति वा। न हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा ॥ ७ ॥

तस्या गायत्र्या उपस्थानमुपेत्य स्थानं नमस्करणमनेन मन्त्रेण कर्तव्यमिति यावत्। कोऽसावित्यत आह—गायत्रीति। हे गायत्रि त्वं त्रैलोक्यात्मकपादेन एकपद्यसि भवसि। त्रैविद्यपादेन त्वं द्विपदी। प्राणाद्यात्मकपादेन त्वं त्रिपदी। मण्डलान्तर्गतपुरुषलक्षणेन पादेन त्वं चतुष्पदी असीति प्रत्येकं सम्बध्यते। एवमेतैश्चतुर्भिः पादैस्त्वमुपासकैः पद्यसे ज्ञायसे। तथा हे गायत्रि निरुपाधिकेन स्वेनाऽऽत्मना त्वमपदसि पद्यसे येन तत्पदं न विद्यते पदं यस्याः सा त्वमपदसि। कुतः? हि यस्मात्केनापि न पद्यसे न ज्ञायसे नेति नेत्यादिलक्षणत्वात्। अतस्ते तुभ्यं व्यवहारविषयाय दर्शताय पदाय परोरजसे नमोऽस्तु नमस्कारोऽस्तु। तत्प्रयोजनमाह—असाविति। असौ शत्रुः पाप्मा त्वत्प्राप्तिविघ्नकरोऽदः पापरूपस्य शत्रोर्यत्त्वत्प्राप्तिविघ्नकर्तृत्वं तच्च मम मा प्रापत् मा प्राप्नोतु। इतिशब्दः पापक्षयफलोपस्थानमन्त्रपरिसमाप्त्यर्थः। अथास्मिन्मन्त्र ऊहप्रदर्शनेन आभिचारिकमुपस्थानान्तरमाह—यमिति। विद्वान् यं प्रति स्वयं द्विष्याद् द्वेषं कुर्यादसौ शत्रुरमुकनामेति तन्नाम गृहीत्वाऽस्मै शत्रवे कामोऽभिलषितोऽर्थो मा समृद्धि समृद्धिं मा प्राप्नोत्विति वा असौ अदो मा प्रापदित्यस्मिन्स्थान ऊहं कृत्वोपतिष्ठेत। एतत्फलस्य याहच्छिकत्वशङ्कां वारयितुमाह—नेति। यस्मै यदर्थमेवमुपतिष्ठते तस्मै शत्रवे कामो ह नैवर्ध्यते समृध्यते। तथाऽहमदः तदभिलषितं मदभिलषितं वा प्रापं प्राप्नुयामिति वा ऊहं कृत्वा उपतिष्ठेदित्यर्थः ॥ ७ ॥

अथ गायत्रीविज्ञानसम्पूर्तये तन्मुखं विधातुं स्तुतिभूतं तदर्थवादमाह—

एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच यन्नु हो तद्गायत्रीविदब्रूथा अथ कथं हस्तीभूतो वहसीति। मुखं ह्यस्याः सम्राण्न विदाञ्चकारेति होवाच। तस्य अग्नि

रेव मुखम्। यदि ह वा अपि बह्विवाग्नावभ्यादधति सर्वमेव तत्सन्दहत्येवँ हैवैवंविद्यद्यपि बह्विव पापं कुरुते सर्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः संभवति ॥ ८ ॥

तत्तत्र गायत्रीविज्ञानविषय एतद्ध वै स्मर्यते जनको वैदेहो बुडिलं नामतोऽश्वतराश्वस्य अपत्यम् अश्वतराश्वि प्रत्युवाच। किम् ? ग्निन्वति वितर्के। हो अहो आश्चर्यमेतत्। तदिति यदर्थः। यस्त्वं गायत्रीविदस्मीत्यब्रूथाः। अथ कथं तर्हि प्रतिग्रहदोषेण हस्तीभूतो वहसीत्येतदुभयं परस्परविरुद्धमिति अथशब्दार्थः। एवमुक्तो बुडिल आह—मुखं हि न। हे सम्राडस्या गायत्र्या मुखमहं न विदाञ्चकार न विज्ञातवानस्मीति ह तमुवाच। इत्युक्त इतर आह—तस्या इति। तस्या गायत्र्या अग्निरेव मुखम्। तद्विज्ञानफलमाह—यदीति। यथा लोका यदि ह वा अपि बह्विव बहुतरमपीन्धनम् अग्नावभ्यादधति निक्षिपन्ति तत्सर्वमग्निर्दहत्येव। यथाऽयं दृष्टान्त एवमेव ह गायत्र्या अग्निर्मुखमित्येवंविद् उपासकः स्वयमग्निमुखगायत्र्यात्मा सन् यद्यपि बह्विव बह्वेव पापं प्रतिग्रहादिदोषं कुरुते तत्सर्वं पापजातं संप्साय सम्यग्भक्षयित्वा अग्निवच्छुद्धः पापसंस्पर्शरहितः पूतश्च प्रतिग्रहजनितपापफलसम्बन्धरहितश्च संभवति। गायत्रीविज्ञानस्य क्रममुक्तिफलत्वं दर्शयति—अजर इति। एवं गायत्र्यात्मा अजरोऽमरश्च संभवतीत्यर्थः ॥ ८ ॥

इति पञ्चमाध्याये चतुर्दशं ब्राह्मणम् ॥ १४ ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्। समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि। योऽसावसौ पुरुषः सोऽहमस्मि। वायुरनिलममृतमथेदं भस्मान्तँ शरीरम्। ॐ क्रतो स्मर कृतँ स्मर क्रतो स्मर कृतँ स्मर ॥ अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो

भूयिष्ठां ते नमउक्तिं विधेम ॥ १ ॥

हिरण्मयेन ज्योतिर्मयेन मण्डलेन पात्रेण पात्रवदाच्छादकेन दर्शनप्रतिबन्धकीभूतेन सत्यस्य सत्याख्यस्य ब्रह्मणो रवेर्मुखं स्वरूपं द्वारं वाऽपिहितमाच्छादितं वर्तते । घर्मादिदानेन जगत् पुष्णातीति पूषा सविता तत्सम्बुद्धिर्हे पूषन्, तन्मुखं त्वमपावृणु अपावृतं कुरु दर्शनप्रतिबन्धकमपनय । सत्या अवितथाः सत्यसङ्कल्पादिश्रुत्युक्ता धर्मा यस्य मम सोऽहं सत्यधर्मस्तस्मै तदात्मभूताय मह्यं दृष्टये तत्र सत्यात्मन उपलब्धये स्वात्माभिन्नसवितृदर्शनाय । तमेव अनेकैर्विशेषणैः सम्बोधयन् प्रार्थयते—पूषन्निति । हे पूषन्, हे एकर्षे गमनाद्दर्शनाद्वा, ऋषिरेकश्चासौ ऋषिश्चेति व्युत्पत्तेः । हे यम सर्वस्य जगतो नियमनात् । हे सूर्य सुष्ठु ईरयते तोयादीन् रसान् रश्मीन्प्राणादीन् धियो वा जगत इति व्युत्पत्तेः । प्रजापतेरीश्वरस्य हिरण्यगर्भस्य वाऽपत्यं प्रजापत्यो हे प्राजापत्य रश्मीन् व्यूह विगमय विनाशय । रश्मयो न विगमयितुं शक्याः स्वाभाविकस्य तत्त्वायोगादित्यत आह—समूहेति । तव तेजः समूह सङ्क्षिप सङ्कोचय विद्योतनेनेव रश्मीनां चक्षुरभिभावकत्वमपसारय । किमर्थमेवं प्रार्थ्यत इत्यत आह—यदिति । ते तव यत्कल्याणतमम् अतिशयेन कल्याणं सत्यज्ञानादिलक्षणं रूपं तत्ते रूपमहं पश्याम्यनुभवामि । कथमित्यत आह—य इति । योऽसौ भूर्भुवः स्व इति व्याहृत्यवयवकोऽसौ आदित्यस्थः पुरुषः पुरुषाकृतित्वात् सोऽहमस्म्यय्यमृत इति सम्बन्धः । कथमीदृग्विधत्वं तत्र देहेन्द्रियाद्यवच्छिन्नत्वादित्यत आह—वायुरिति । एवंभूतस्य मे शरीरपाते सति तत्स्थो वायुराध्यात्मिकः प्राणोऽनिलं बाह्यं वायुममृतमाधिदैविकं प्रतिगच्छतु । एतत्तु इतरेन्द्रियोपलक्षणपरम् । अथेदं शरीरमपि भस्मान्तं सत् पृथिवीं प्रति यातु । भस्मान्तलिङ्गात् कर्मिण एवैतदुपस्थानमिति गम्यते । एवमादित्योपस्थानमुक्त्वा अग्नेस्तदाह—ओमिति । हे ओम् अवतीति ओम् सर्वरक्षको जाठरप्रतीकत्वेन उक्तोऽग्निः । स च क्रतुसाध्यत्वेन मनोमयत्वात् क्रतुः, तत्सम्बोधनं हे क्रतो त्वं स्मर्तव्यं स्मर । अन्तकाले हि त्वया स्मृते सति इष्टा गतिः प्राप्यते, अतः प्रार्थ्यते । किम्? यन्मया कृतं कर्मोपासनं तत्स्मर । क्रतो स्मर कृतं स्मरेति पुनरुक्तिरादरार्था । किञ्च—हे देव द्योतनात्मकाग्ने त्वं विश्वानि सर्वाणि

वयुनानि प्रज्ञानानि तदुपलक्षितानि कर्माणि च विद्वान् हि त्वमतोऽस्मांस्त्वदुपासकान् सुपथा शोभनेन उत्तरमार्गेण पुनरावृत्तिरहितेन नय प्रापय । किमर्थम् ? राये धनाय कर्मफलभोगायेति यावत् । किञ्च अस्मदस्माकं जुहुराणं कुटिलं देवयानप्राप्तिप्रतिबन्धकम् एनः पापं सर्वं युयोधि अपनय । वयं तु देहावसानकाले अन्यत्कर्तुमशक्ताः । अत इदानीं ते तुभ्यं भूयिष्ठां बहुतमां नमउक्तिं नमस्कारवचनं विधेम समर्पयेम नमस्कारमन्त्रेण परिचरेमेयर्थः ॥ १ ॥

इति पञ्चमाध्याये पञ्चदशं ब्राह्मणम् ॥ १५ ॥

॥ इति बृहदारण्यके सप्तमः प्रपाठकः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपाद-
शिष्यनित्यानन्दाश्रमविरचितायां बृहदारण्यकोपनिषद्-
व्याख्यायां मिताक्षराख्यायां पञ्चमोऽध्यायः ।

—:o:—

## ॥ अथ षष्ठोऽध्यायः ॥

अथावशिष्टब्रह्मोपासनं श्रीमन्थादिकर्म च वक्तुमष्टमोऽध्यायः प्रवर्तते । तत्र पूर्वं सत्स्वपि वागादिषु प्राणस्यैव गायत्र्यात्मकत्वं किमित्युक्तमित्यतस्तद्वक्तुम्, यद्वा सत्स्वपि चक्षुरादिषु उद्गीथब्राह्मण उद्गीथयजुःसामादिभावैः प्राणस्यैव किमित्युपासनमुक्तमिति हेतुमात्राकाङ्क्षायां तन्मात्रं ज्येष्ठत्वादिरूपं वक्तुं पूर्वोक्तोपासनाया अशेषं स्वतन्त्रमेव प्राणोपासनमाह—

ॐ यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति । प्राणो वै ज्येष्ठश्च श्रेष्ठश्च । ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ १ ॥

यः कश्चिज्ज्येष्ठं च श्रेष्ठं च ज्येष्ठश्रेष्ठगुणं वेद स स्वानां ज्ञातीनां मध्ये ज्येष्ठश्च श्रेष्ठश्च भवति ह वै भवत्येव । तद्युच्यतां कोऽसौ एतादृगित्यपेक्षायामाह–प्राणो वै ज्येष्ठश्चेति । निषेककालमारभ्य चक्षुराद्यपेक्षया प्राणस्यैव गर्भवृद्धिहेतुत्वेन प्रथमवृत्तिलाभात् प्राणो ज्येष्ठः श्रेष्ठश्च । तत्त्वं त्विह संवादेन दर्शयिष्यते । उक्तफलोपसंहारपूर्वकं फलान्तरमाह–ज्येष्ठश्चेति । य एवं यथोक्तगुणं प्राणं वेद स ज्येष्ठश्च श्रेष्ठश्च स्वानां ज्ञातीनां मध्ये भवति । अपि च अन्यदपि येषां स्वज्ञातिव्यतिरिक्तानां मध्ये ज्येष्ठश्च भविष्यामीति बुभूषति भवितुमिच्छति तेषामपि स तादृश एव भवतीत्यर्थः ॥ १ ॥

इदानीं प्राणस्यैव वसिष्ठत्वप्रतिष्ठात्वसंपत्तौ आयतनत्वप्रजातित्व-

लक्षणाः पञ्च गुणा इति दर्शयितुं प्रथमं तेषामेकैकस्य क्रमेण वाक्चक्षुः-श्रोत्रमनोरेतसां गुणत्वमाह 'यो ह वै वसिष्ठां वेदे'त्यादिपञ्चकण्डिकाभिः—

यो ह वसिष्ठां वेद वसिष्ठः स्वानां भवति । वाग्वै वसिष्ठा । वसिष्ठ स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ २ ॥

आसु च प्रतिवाक्योत्थानं व्याख्यानं च पूर्ववदूह्यम् । पदविशेषस्तु व्याख्यायते । वाग्वै वसिष्ठा वसति वासयति चान्यान् वस्ते वेति व्युत्पत्तेः । वाग्मिनो ह्यतिशयेन वसन्ति वासयन्ति चान्यानभिभवन्ति वेत्यर्थः । क्रमेण निवासाच्छादनार्थकधातुत्रयणाद्बोद्धव्यः । समानमन्यत् ॥ २ ॥

यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे । चक्षुर्वै प्रतिष्ठा । चक्षुषा हि समे दुर्गे च प्रतितिष्ठति । प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥ ३ ॥

चक्षुर्वै प्रतिष्ठा प्रतितिष्ठत्यनेनेति व्युत्पत्तेः । हि यस्माच्चक्षुषा पश्यन् समे देशे काले च प्रतितिष्ठति । तथा दुर्गे दुर्गमे देशे विषमे कण्टकाद्युपद्रुते काले च दुर्भिक्षादियुक्ते प्रतितिष्ठति ॥ ३ ॥

यो ह वै सम्पदं वेद सँ हास्मै पद्यते यं कामं कामयते । श्रोत्रं वै सम्पत् । श्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः । सँ हास्मै पद्यते यं कामं कामयते य एवं वेद ॥ ४ ॥

यो ह वै सम्पदं सम्पद्गुणं वेद स यं कामं कामयते तस्मै उपासकाय स कामः सम्पद्यते हैव । काऽसावित्यत आह—श्रोत्रं वै सम्पदिति । कुतः ? हि यस्माच्छ्रोत्रे सति इमे प्रसिद्धाः सर्वे वेदा अभिसम्पन्नाः प्राप्तास्तद्विहितकर्मायत्तकामसम्पत्तयश्च भवन्ति ॥ ४ ॥

यो ह वा आयतनं वेदाऽऽयतनँ स्वानां भवत्यातनं जनानाम् । मनो वा आयतनम् । आयतनँ स्वानां भवत्यायतनं जनानां य एवं वेद ॥ ५ ॥

यो ह वा आयतनमाश्रयं वेद स स्वानां ज्ञातीनां तदन्येषां च जनानामायतनमाश्रयः । तर्हि किं तदित्यत आह—मन इति । मनो

वा आयतनमिन्द्रियाणां विषयाणां च। मनःसङ्कल्पितानि हि इन्द्रियाणि प्रवर्तन्ते तत्प्रकाशिताश्च विषया मनोधिष्ठिताः सन्त आत्मनो भोग्यत्वं प्रतिपद्यन्ते ॥ ५ ॥

यो ह वै प्रजातिं वेद प्रजायते ह प्रजया पशुभिः। रेतो वै प्रजातिः। प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥ ६ ॥

यो ह वै प्रजातिं वेद स प्रजया पशुभिश्च प्रजायते सम्पन्नो भवति। तर्हि कोऽसावित्यत आह—रेतो वै प्रजातिरिति। रेतःशब्देनात्र प्रजननेन्द्रियमुपलक्ष्यते इन्द्रियप्रकरणात् प्रजोत्पत्तिहेतुत्वाच्चेत्यर्थः ॥ ६ ॥

एवमुक्ता वसिष्ठादिगुणाः प्राणगता एवेति दर्शयितुमाख्यायिकामधिकरोति—

ते हेमे प्राणा अहँ श्रेयसे विवदमाना ब्रह्म जग्मुः। तद्धोचुः को नो वसिष्ठ इति। तद्धोवाच यस्मिन्व उत्क्रान्त इदँ शरीरं पापीयो मन्यते स वो वसिष्ठ इति ॥ ७ ॥

ते ह किल इमे प्रकृताः प्राणा वागादयोऽहंश्रेयसे अहं श्रेयानित्येतस्मै प्रयोजनाय विवदमाना विरुद्धं वदमाना ब्रह्म प्रजापतिं विराडात्मानं जग्मुर्गतवन्तः। तत्र च गत्वा तद् ब्रह्म प्रजापतिं होचुः--नोऽस्माकं मध्ये को वसिष्ठ इति पृष्टे तद् ब्रह्म ह तान् प्रत्युवाच। किम्? वो युष्माकं मध्ये यस्मिन्नुत्क्रान्ते निर्गते सति इदं शरीरं पूर्वावस्थातोऽप्यतिशयेन पापमिति पापीयो मन्यते लोकः स वो युष्माकं मध्ये वसिष्ठो नेतर इत्यर्थः ॥ ७ ॥

एवं ब्रह्मणोक्ता--

वाग्घोच्चक्राम। सा संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति। ते होचुर्यथाऽकला अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाँसो मनसा प्रजायमाना रेतसैवमजीविष्मेति। प्रविवेश ह वाक् ॥ ८ ॥

वागादय आत्मनो वीर्यपरीक्षणाय क्रमेण उच्चक्रमुः। तत्र प्रथममस्माच्छरीराद्ध वाक् उच्चक्राम। सा तु निर्गम्य संवत्सरमन्यत्र प्रोष्य प्रवासं कृत्वा पुनरागत्येतरान् प्राणान् प्रत्युवाच। किम्? यूयमस्मिन् शरीरे कथं मदृते मां विना जीवितुमशकत शक्ताः? इत्युक्ते ते ह वाचं प्रत्यूचुः।

किम् ? यथाऽकला मूका वाचाऽवदन्तो वदनक्रियामकुर्वन्तोऽपि प्राणेन प्राणन्तश्चक्षुषा पश्यन्तः श्रोत्रेण शृण्वन्तो मनसा विद्वांसः कर्तव्याकर्तव्यादि जानन्तो रेतसा प्रजननेन्द्रियेण प्रजायमानाः प्रजामुत्पादयन्तो वयमजीविष्म इत्येवमुक्ते नाहं वसिष्ठेति निश्चित्य वाक् तस्मिन् शरीरे प्रविवेश प्रविष्टवतीत्यर्थः ॥ ८ ॥

चक्षुर्होच्चक्राम । तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति । ते होचुर्यथाऽन्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वाँसो मनसा प्रजायमाना रेतसैवमजीविष्मेति । प्रविवेश ह चक्षुः ॥ ९ ॥ श्रोत्रँ होच्चक्राम । तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति । ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वाँसो मनसा प्रजायमाना रेतसैवमजीविष्मेति । प्रविवेश ह श्रोत्रम् ॥ १० ॥ मनो होच्चक्राम । तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति । ते होचुर्यथा मुग्धा अविद्वाँसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति । प्रविवेश ह मनः ॥ ११ ॥ रेतो होच्चक्राम । तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति । ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाँसो मनसैवमजीविष्मेति । प्रविवेश ह रेतः ॥ १२ ॥

एवं चक्षुः श्रोत्रं मनो रेतः प्रजननेन्द्रियमित्येते पर्याया व्याख्येयाः ॥ ९—१२ ॥

अथ ह प्राण उत्क्रमिष्यन् यथा महासुहायः सैन्धवः

पड्वीशशङ्कून् संवृहेदेवँ हैवेमान् प्राणान् संववर्ह । ते होचुर्मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति । तस्यो मे बलिं कुरुतेति । तथेति ॥ १३ ॥

अथ वागादिपरीक्षणप्रकारप्रदर्शनानन्तरं यथा लोके महांश्चासौ सुहयश्च महासुहयः परिमाणतो महान् शोभनलक्षणोपेतो हयः सुहयः । सिन्धुदेशे भवः सैन्धवः । पड्वीशाः पदनशीलाः पदः पादास्तेषां संहतिः पड्वी तस्या ईशा नियामकाः पड्वीशाश्च ते शङ्कवश्च पड्वीशशङ्कवः पादबन्धनशङ्कवस्तान् । संवृहेत् उद्यच्छेत् परीक्षणायाश्वारोह आरूढे सति युगपच्चतुरोऽपि शङ्कूनुत्खनेदिति यावत् । यथाऽयं दृष्टान्त एवमेवाह मुख्यप्राण उत्क्रमिष्यन् इमान्वागादीन् प्राणान् संववर्ह चिच्छेद स्वस्थानाद् भ्रंशितवान् । एतावता किं सिद्धमित्यपेक्षायामाह—ते इति । ते वागादयो होचुः हे भगवो भगवंस्त्वं मोत्क्रमीः यस्माद्वयं त्वदृते त्वां बिना जीवितुं नैव शक्ष्यामः । यद्येवं मच्छ्रेष्ठताऽत्र भवद्भिर्विज्ञाता तर्हि तस्यो भवतां श्रेष्ठस्य मे मम बलिं करं कुरुत प्रयच्छत पराजितैर्हि विजयिने करो दीयत इति । इतरे तथाऽस्त्वित्यङ्गीचक्रुः ॥ १३ ॥

तत्र प्रथमं बलिदानाय प्रवृत्ता—

सा ह वागुवाच यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसीति । यद्वा अहं प्रतिष्ठोऽस्मि त्वं तत्प्रतिष्ठोऽसीति । चक्षुर्यद्वा अहँ संपदस्मि त्वं तत्संपदसीति । श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति । मनो यद्वा अहं प्रजातिरस्मि त्वं तत्प्रजातिरसीति । रेतस्तस्यो मे किमन्नं किं वास इति । यदिदं किञ्चाऽऽश्वभ्य आ कृमिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति । न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतं य एवमेतदनस्यान्नं वेद । तद्विद्वाँसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाऽऽचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते ॥ १४ ॥

सा वाक् होवाच। किम्? यद्वा अहं वसिष्ठाऽस्मि यन्मम वसिष्ठत्वं त्वं तद्वसिष्ठोऽसि तद्वसिष्ठत्वगुणस्तवैवेति यावत्। तथा यद्वा अहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसीति चक्षुरुवाचेति प्रत्येकं सर्वत्र सम्बध्यते। समानमन्यद्रेत इत्यन्तम्। एवं वागादिभिर्दत्तं बलिदानमङ्गीकृत्य अन्नवाससी पृच्छति—तस्येति। तस्यो मे मम प्राणस्य किमन्नं किं वास इत्येवं पृष्टा इतरे प्रत्यूचुः यदिदं किञ्च आऽऽश्वभ्य आ कृमिभ्य आ कीटपतङ्गेभ्यः श्वान्नं कृम्यन्नं कीटान्नं पतङ्गान्नं चेत्येतैः सह यदिदं किञ्च यत्किञ्चित् प्राण्यन्नं लोके दृश्यते तत्सर्वमेव ते तव प्राणस्य अन्नमिति दृष्टिः कर्तव्या। तथा भक्ष्यमाणा आपः सर्वास्तव वास आच्छादनस्थानीया इति दृष्टिः कर्तव्या। इत्येवं कर्तव्यत्वेन विधित्सितयोः दर्शनयोः क्रमेण स्तुत्यर्थवादमाह—नेति। य एतत्सर्वप्राणिभिरद्यमानं सर्वमनस्य प्राणस्यैवान्नमित्येवं वेद अस्य प्राणान्नविदो यदि कदाचिदनन्नभक्षणेऽप्यनन्नमनदनीयं नैव ह किल जग्धं भक्षितं भवति। तथा यद्यप्ययमप्रतिग्राह्यं हस्त्यादिकं प्रतिगृह्णाति तथाऽप्यन्नमप्रतिग्राह्यं नैव परिगृहीतं भवति तद्दोषेण न लिप्यत इति केवलं विद्यैव स्तूयते न वस्तुतस्तद्दोषाभावः, अभक्ष्यभक्षणाऽप्रतिग्राह्यप्रतिग्रहयोर्निषिद्धत्वात्। यस्मात् प्राणस्याऽऽपो वासस्तत् तस्माद्विद्वांसो ब्राह्मणाः श्रोत्रिया अशिष्यन्तो भोक्ष्यमाणा अप आचामन्त्यशित्वा च भुक्त्वा च आचामन्त्यपो भक्षयन्ति। केनाभिप्रायेणेत्यपेक्षायामाह—एतमिति। एतमेवानं प्राणं तत्तेनोभयतोऽपोभक्षणेन अनग्नमाच्छादितं कुर्वन्तो मन्यन्तेऽतः प्रायत्यार्थोक्ते स्मार्त आचमन एव वासोदृष्टिः कार्या न पुनः प्राणविदो वासार्थमाचमनान्तरं विधीयत इत्यर्थः॥ १४॥

इति षष्ठाध्याये प्रथमं ब्राह्मणम्॥ १॥

अस्य खिलाधिकारत्वात् ज्ञानकर्मकाण्डयोर्यदनुक्तं तद्वक्तव्यमित्येतदर्थमिदं प्रवृत्तम्। तत्र पूर्वम् 'अग्ने नय सुपथे'ति विशेषणादनेकमार्गसद्भाव उक्तः। ते के मार्गा इति जिज्ञासायां 'कर्मणा पितृलोक' इत्याद्युक्तज्ञानरहितस्य केवलकर्मणस्तत्सहितस्य च ज्ञानस्य निषिद्धयोश्च तयोरुद्गीथब्राह्मणे पाप्मत्वेनोक्तयोः क्रमेण दक्षिणोदगधोमार्गा 'एतावदरे' इत्युक्तमोक्षमार्गविजातीया इति कथयितुं पञ्चाग्निविद्यास्तुत्याद्यर्थकाख्यायिकापूर्वकं श्वेतकेतुब्राह्मणं प्रवर्तते—

**श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम। स आजगाम जैवलिं प्रवाहणं परिचारयमाणम्। तमुदीक्ष्या-**

भ्युवाद कुमारा३ इति। स भो३ इति प्रतिशुश्राव। अनु-
शिष्टो न्वसि पित्रेति। ओमिति होवाच ॥ १ ॥

श्वेतकेतुर्नामतोऽरुणस्य अपत्यमारुणिस्तस्यापत्यमारुणेयो ह किल पित्राऽनुशिष्टः सन् वै स्वकीयपाण्डित्यख्यापनाय पञ्चालानां देश-विशेषाणां परिषदं सभामाजगाम। आगत्य ब्राह्मणान् जित्वा राजानमपि जेष्यामीति गर्वेण स श्वेतकेतुर्जैवलिं जीवलस्यापत्यं पञ्चालराजानं परिचारयमाणं स्वभृत्यैरात्मनः परिचर्यां कारयन्तं प्रवाहणनामानं इत्याजगाम। स राजा पूर्वमेव तस्य विद्याभिमानगर्वं श्रुत्वा ब्राह्मणस्य शमादिकमुचितमतो विनेतव्योऽयमिति मत्वा तं श्वेतकेतुमुदीक्ष्य उत्प्रेक्ष्य आगतमात्रेण कुमारा३ इति बालवत् सम्बोध्य अभ्युवाद अभ्युक्तवान्। प्लुतेर्भर्त्सनार्थत्वात् भर्त्सितवानिति यावत्। सोऽपि कुमारः क्रोधाद् भो३ इति गुरोरिव प्लुत्या सम्बोध्य प्रतिशुश्राव। एवं प्रत्याश्रावितो राजा तं पृच्छति—हे कुमार किं त्वं पित्रा अनुशिष्टोऽनु-शिक्षितोऽसि नु न वा। इतर ओमनुशिष्टोऽस्म्येवेति उवाच यदि ते संशयस्तर्हि पृच्छेत्यर्थः ॥ १ ॥

वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता३ इति। नेति होवाच। वेत्थो यथेमं लोकं पुनरापद्यन्ता३ इति। नेति हैवोवाच। वेत्थो यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न संपूर्यता३ इति। नेति हैवोवाच। वेत्थो यतिथ्या-माहुत्याँ हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ इति। नेति हैवोवाच। वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा। यत्कृत्वा देवयानस्य वा पन्थानं प्रतिपद्यन्ते पितृयाणं वा। अपि हि न ऋषेर्वचः श्रुतं द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानाम्। ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं चेति। नाहमत एकञ्चन वेदेति होवाच ॥ २ ॥

यद्येवं तर्हि इमाः प्रसिद्धाः प्रजाः प्रयत्यो म्रियमाणा नाडीमार्गेण अभ्युदयं गच्छन्त्यो यन्मार्गद्वैविध्यप्रतिपत्त्या यथा लोकवद्विप्रति-

पद्यन्ता३ इति प्लुतिरत्र विचारार्था। विप्रतिपद्यन्ता विप्रतिपद्यन्ते, तद्विप्रतिपत्तिविषयं मार्गद्वयं किं वेत्थ जानासि? इत्युक्त इतरो नेति होवाच उक्तवान्। पुनर्द्वितीयं पृच्छति—वेत्थेति। इमाः परलोकं गता प्रजाः पुनरिमं लोकं यथाऽऽपद्यन्ता आपद्यन्त आगच्छन्ति तथा किं त्वं वेत्थ उ इत्युक्त इतरो नेति हैवोवाच। तृतीयं पृच्छति—वेत्थेति। एवं प्रसिद्धेन जरामरणहेतुना पुनःपुनः प्रयद्भिर्म्रियमाणैः बहुभिः प्राणिभिरसौ परलोको यथा येन प्रकारेण न सम्पूर्यता इति न संपूर्यते तत्किं वेत्थ उ इत्युक्त इतरो नेति होवाच। चतुर्थं पृच्छति—वेत्थेति। यतिथ्यां यत्संख्याकायामाहुत्यां हुतायामापः पुरुषाकारपरिणताः सत्यः पुरुष इति वाग्वाचकभूता यासां ताः पुरुषवाचः पुरुषशब्दवाच्या भूत्वा। समुत्थाय सम्यगुत्थाय उद्भूताः सत्यो वदन्ति यद्वदनादिव्यापारं कुर्वन्ति तत्किं वेत्थ उ इत्युक्त इतरो नेति हैवोवाच। पञ्चमं पृच्छति—वेत्थेति। देवयानस्य पथो मार्गस्य प्रतिपदं प्रतिपद्यन्तेऽनयेति प्रतिपत्साधनं तां प्रतिपदं पितृयाणस्य वा पथः प्रतिपदं वेत्थ उ। किं तत्प्रतिपच्छब्दवाच्यमित्यपेक्षायामाह—यदिति। यत्कर्म कृत्वा देवयानं पन्थानं मार्गं पितृयाणं वा पन्थानं प्रतिपद्यन्ते सा प्रतिपदित्यर्थः। ननु मार्गद्वयं नास्त्येव तत्सद्भावे प्रमाणाभावादित्यत आह—अपीति। हि यस्मात्कर्मविपाकप्रक्रियायां मार्गद्वयप्रकाशकमृषेर्मन्त्रस्यापि वचो वाक्यं नोऽस्माकं श्रुतमस्ति, किं तदित्यत आह—द्वे इति। अहं मर्त्यानां मरणधर्माणां मनुष्याणां मनुष्यसम्बन्धिनो द्वे सृती मार्गौ अशृणवं श्रुतवानस्मि, तयोर्मध्य एका पितृणां पितृलोकसम्बद्धा पितृलोकप्रापिकेति यावत्। द्वितीया तु, उतापि देवानां देवलोकसम्बद्धा। अधिकृतानां मार्गान्तरशङ्कां वारयति—ताभ्यामिति। इदं विश्वं समस्तं जगत् एजद्गच्छत् स्थानात्स्थानान्तरं प्राप्नुवत् सत्ताभ्यां सृतिभ्यामेव समेति सम्यक् गच्छति। ते च सृती क्व वर्तेते इति वीक्षायामाह—यदिति। यद्ययोः पितरं मातरं च पितृमात्रोश्चान्तरा पितृमातृस्थानीययोर्द्यावापृथिव्योः अण्डकपालयोर्मध्ये वर्तेते। इतिशब्दो मन्त्रसमाप्तिद्योतकः। इतर आह—नेति। अतोऽस्मात् प्रश्नसमुदायात् एकञ्चनैकमपि प्रश्नमहं न वेदेत्युवाच॥ २॥

अथैनं वसत्योपमन्त्रयाञ्चक्रे। अनादृत्य वसतिं कुमारः प्रदुद्राव। स आजगाम पितरं तँ᳖ होवाचेति वाव किल नो भवान् पुराऽनुशिष्टानवोच इति। कथँ᳖ सुमेध इति। पञ्च मा

प्रश्नान् राजन्यबन्धुरप्राक्षीत् ततो नैकञ्चन वेदेति । कतमे त इतीम इति ह प्रतीकान्युदाजहार ॥ ३ ॥

अथैवं विद्याभिमानगर्वापनयनानन्तरम् एनं प्रकृतं श्वेतकेतुं वसत्या वसतिप्रयोजनेन राजा उपमन्त्रयाञ्चक्रे इह वसतु भवानर्घ्यपाद्यादिकं गृहाणेति उपमन्त्रणं कृतवान् । स तु कुमारः श्वेतकेतुर्वसतिमनादृत्य अनङ्गीकृत्य प्रदुद्राव गतवान् । स कुमारो निर्गत्य पितरं प्रत्याजगाम । आगत्य तं पितरं प्रत्युवाच । कथमित्येवं वाव किल भवान्पुरा समावर्तनकाले नोऽस्माननुशिष्टान् अवोचोऽवोचत् सर्वाभिर्विद्याभिरननुशिष्टं-वेति । सोपालम्भं पुत्रवचः श्रुत्वा पिताऽऽह—कथमिति । हे सुमेधः सुष्ठु मेधा यस्येति व्युत्पत्तेः, कथं त्वं नानुशिष्टोऽसि । तत्कारणं पुत्र आह—पञ्चेति । राज्ञः पुत्रा राजन्या बन्धवो यस्य स राजन्यबन्धुर्मां पञ्च पञ्चसंख्याकान् प्रश्नानप्राक्षीत्पृष्टवान् । ततस्तस्मात् प्रश्नपञ्चकात् एकञ्च-नैकमपि प्रश्नमहं न वेद न ज्ञातवानस्मीति । कतमे ते राजकृताः प्रश्ना इति पित्रोक्तः पुत्र इमे प्रश्ना इति ह प्रतीकानि मुखानि प्रश्नैकदेशानुदाजहार उदाहृतवान् ॥ ३ ॥

स होवाच तथा नस्त्वं तात जानीथा यथा यदहं किञ्च वेद सर्वमहं तत्तुभ्यमवोचं । प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति । भवानेव गच्छत्विति । स आजगाम गौतमो यत्र प्रवाहणस्य जैवलेरास । तस्मा आसनमाहृत्योदकमाहारयाञ्चकार । अथ हास्मा अर्घ्यं चकार । तँ होवाच वरं भगवते गौतमाय दद्म इति ॥ ४ ॥

स पिताऽऽह पुत्रक्रोधमुपशमयन्नुवाच । हे तात वत्स यथा येन प्रकारेण यत्किञ्च यत्किञ्चिद्विज्ञानजातमहं वेद तत्सर्वं तथा तेन प्रकारेण तुभ्यमवोचमित्येवं नोऽस्मांस्त्वं जानीथाः । त्वत्तः कोऽन्यो मम प्रियतरोऽस्ति यदर्थमहं रक्षिष्ये ? राजपृष्टां तु विद्यां तद्वंशमात्रस्थत्वादहमपि न जानामीति भावः । तद्विज्ञानं चेदवाप्तुमिच्छसि तर्हि प्रेहि आगच्छ तत्र राज्ञः समीपे प्रतीत्य गत्वा तु वयं ब्रह्मचर्यं वत्स्यावो विद्यार्थमिति पित्रोक्तः इतर आह—भवानेव गच्छत्विति । अहं तु तस्य मुखं निरीक्षितुं नोत्सहे । इत्युक्तः स आरुणिर्गौतमो गोत्रतस्तत्र आजगाम आगतवान् । कुत्र ? यत्र प्रवाहणस्य जैवलेरिति षष्ठीद्वयं प्रथमार्थे ।

जीवलस्यापत्यं जैवलिः प्रवाहणनामा राजाऽऽस आस्थायिकां कृतवान्। ततो राजा तस्मै गौतमाय अनुरूपमासनमाहृत्य अर्घ्यपाद्यादिसिद्धय उदकं भृत्यैराहारयाञ्चकार। अथानन्तरमस्मै पुरोधसा सार्धं मन्त्रपूर्वकमर्घ्यं चकार मधुपर्कादिकं च कृत्वा तं गौतमं प्रति होवाच। किम्? गौतमाय भगवते तुभ्यं वरमपेक्षितलक्षणं वयं दद्म इति ॥ ४ ॥

एवमुक्तः—

स होवाच प्रतिज्ञातो म एष वरो यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥ ५ ॥

स गौतमो होवाच। किम्? हे राजन्नेष से मम वरस्त्वया याचनीयत्वेन प्रतिज्ञातस्तर्हि याच्यते कुमारस्य मत्पुत्रस्यान्ते समीपे यां तु प्रश्नारूपां वाचमभाषथास्तां मे ब्रूहीति ॥ ५ ॥

एवं प्रार्थितः—

स होवाच दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति ॥ ६ ॥

स राजा होवाच। हे गौतम यस्त्वया प्रार्थ्यते वरस्तदयं वै वरो दैवेषु देवप्रार्थनीयेषु वरेषु मध्ये वर्तते। स हि मनुष्याप्रार्थ्योऽतो मनुष्याणां गोऽश्वादिलक्षणानां वराणां मध्येऽन्यतमं वरं ब्रूहि प्रार्थयेति ॥ ६ ॥

एवमुक्तः—

स होवाच विज्ञायते हास्ति हिरण्यस्यापात्तं गोअश्वानां दासीनां प्रवाराणां परिधानस्य मा नो भवान् बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूदिति। स वै गौतम तीर्थेनेच्छासा इति। उपैम्यहं भवन्तमिति। वाचा ह स्मैव पूर्व उपयन्ति स होपायनकीर्त्योवास ॥ ७ ॥

स गौतमो होवाच मम बहुतरस्य हिरण्यस्यापात्तं प्राप्तमस्त्येतत्त्वयाऽपि ह विज्ञायते। तथा गवामश्वानां दासीनां प्रवाराणां परिवाराणां परिधानस्य परिधानयोग्यस्य क्षौमादेरप्यपात्तमित्यादि प्रत्येकं सम्बध्यते। अतो मानुषो न प्रार्थ्यते। एवं सति भवान् भाग्यवांस्त्वमन्यस्मिन्नर्थिजने वदान्यो भूत्वा नोऽस्मानेवाभि प्रति बहोः प्रभूतस्यानन्तस्य अनन्तफलस्यापर्यन्तस्यापरिसमाप्तिकस्य पुत्रपौत्रादिगामिकस्यैवंभूतस्य

तस्य दैववित्तस्य अवदान्यः कदर्यो मा भूदित्येवं प्रार्थितवन्तं प्रति राजा-आह—स इति। हे गौतम स त्वं तीर्थेन वा उपसदनशास्त्रविहितेन मार्गेण मत्तो विद्यामवाप्तुमिच्छासै इच्छस्व, अन्यथा अदेयत्वादिति। एवं राज्ञा स्मारितशास्त्रार्थो गौतम आह—उपैमीति। अहं भवन्त-मुपैति शिष्यत्वेन उपगच्छामीति। नन्वेवं शिष्यवृत्तिं कुर्वाणस्य शास्त्र-विरोधः स्यादित्यः श्रुतिराह—वाचेति। पूर्वे ह किल ब्राह्मणा विद्या-मर्थयमानाः सन्तः आपदि क्षत्रियान् वैश्यान्वा शिष्यवृत्त्या वाचैवोप-गच्छन्ति स्म नोपायनशुश्रूषादिभिः, अतः स गौतमो होपायनमुपगमनं पादोपसर्पणं तस्य कीर्त्या कीर्तनमात्रेणैव उवास उषितवान् नोपायनं चकारेत्यर्थः ॥ ७ ॥

स होवाच तथा नस्त्वं गौतम माऽपराधास्तव च पितामहा यथेयं विद्येतः पूर्वं न कस्मिँश्चन ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि। को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥ ८ ॥

स राजा पीडितं ब्राह्मणं मत्वा तं क्षमापयन् होवाच। हे गौतम तव च पितामहा अस्मत्पितामहेषु यथाऽपराधं क्षमन्ते तथा त्वमपि नोऽस्मान् प्रति माऽपराधा अपराधं मा कार्षीः। अस्मदीयोऽपराधः क्षन्तव्य इति यावत्। यत इयं विद्या इतः पूर्वं कस्मिंश्चन कस्मिंश्चिदपि ब्राह्मणे नोवास नोषितवतीति त्वमपि जानीषे, किन्तु सर्वदा क्षत्रियपरम्परा-ऽऽगता, अतः सा स्थितिर्मयाऽपि रक्षणीया यदि रक्षितुं शक्यत इत्य-भिप्रायेणोक्तं दैवेषु गौतम तद्वरेषु मानुषाणां ब्रूहीति, न पुनरदेयत्व-मित्यभिप्रायेण। अतः परं तु न शक्यते रक्षितुम। तस्तामेतादृशीं तु विद्यामहं तुभ्यं वक्ष्यामि। कुतो रक्षितुं न शक्यत इत्यत आह—को हीति। तवाहं शिष्योऽस्मीत्येवं ब्रुवन्तं त्वा त्वां भवन्तं हि यस्मात्कोऽपि अन्योऽपि प्रत्याख्यातुं नार्हति तस्मादहं पुनः कथं तुभ्यं न वक्ष्या-मीत्यर्थः ॥ ८ ॥

तत्र प्रथमादीनां चतुर्थप्रश्ननिर्णयाधीनत्वात्तावत्तस्य निर्णयार्थमाह—

असौ वै लोकोऽग्निर्गौतम। तस्याऽऽदित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः।

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति । तस्य आहुत्यै सोमो राजा संभवति ॥ ९ ॥

हे गौतम असौ वै प्रसिद्धो द्युलोक आहवनीयोऽग्निरिति दृष्टिः कर्तव्या । तस्य द्युलोकाग्नेरादित्य एव समिदिति पश्येत्, इन्धनत्वसामान्यात् । तथा रश्मयो धूमस्तयोरादित्यसमिद्भ्यामुद्भवत्वसामान्यात् । अहरर्चिरुभयोः प्रकाशकत्वसामान्यात् । दिशोऽङ्गारा उभयोरुपशान्तत्वसामान्यात् । अवान्तरदिशो विस्फुलिङ्गा उभयोर्विक्षेपात्मकत्वसामान्यात् । तस्मिन्नेतस्मिन् एवंगुणविशिष्टे द्युलोकाग्नौ देवा इन्द्रादयः श्रद्धां द्रव्यस्थानीयां जुह्वति प्रक्षिपन्ति । तस्या आहुत्या इति चतुर्थीद्वयं पञ्चम्यर्थे सर्वपर्यायेषु । तस्या आहुतेः सकाशात्सोमः पितृणां ब्राह्मणानां च राजाऽधिपतिः संभवत्युत्पद्यते । ननु द्युलोकदेवश्रद्धासोमादेः कथमाहवनीयहोतृहूयमानोत्पत्तित्वादेः संभव इति चेच्छृणु । 'ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशतस्ते अन्तरिक्षमेवाऽऽहवनीयं कुर्वाते' इत्यादिश्रुतेः शरीरपातोत्तरकालमाहवनीयादिविस्फुलिङ्गान्तैः साधनैर्विशिष्टं सयजमानमेवाग्निहोत्रम् अपूर्वीभूतमुत्क्रम्य आहवनीयस्थानीयं द्युलोकमारभते । तत्र गता यजमानप्राणा एवाऽऽधिदैविकभूता इन्द्रादिशब्दवाच्याः सन्तस्तत्र भोक्तृत्वलक्षणं होतृत्वमापद्यन्ते । तत्र 'श्रद्धा वा आप' इति श्रुतेस्तच्छब्देन उच्यमानं भूतान्तरसहितानामपां सोमाद्यात्मकानां कर्तुः शरीरारम्भाय द्युलोकप्रवेशनमेव होमः । तस्माच्चन्द्रमण्डलान्तर्गतस्य शुभ्ररूपेण दृश्यमानस्य सोमस्य शुक्लपक्ष आप्यायनमेवोत्पत्तिरित्यनवद्यम् । विस्तृतं चैतदस्माभिः बृहदारण्यकार्थप्रकाशिकायामित्युपरम्यते ॥ ९ ॥

स सोमः पर्जन्याग्नौ हुतः सन्वृष्टिरूपेण परिणमत इत्याह —

पर्जन्यो वा अग्निर्गौतम । तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्लादुनयो विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः सोमँ राजानं जुह्वति । तस्या आहुत्यै वृष्टिः संभवति ॥ १० ॥

हे गौतम पर्जन्यो वै वृष्ट्युपकरणाभिमानी देवतात्मा अग्निः । स च आहुत्यावृत्तिक्रमेण द्वितीय आहुत्याधारः । तस्य संवत्सरः समित्संवत्स-

रेण हि शरदादिग्रीष्मान्तैः स्वावयवैर्विपरिवर्तमानेन पर्जन्याग्निर्दीप्यते। अभ्राणि धूमस्तेषां धूमप्रभवत्वाद्धूमवदुपलक्षकत्वाद्वा। विद्युदर्चिः प्रकाशनसामान्यात्। अशनिः प्रकाशाश्रयभूतोऽङ्गारा उपशान्तत्वकाठिन्यसामान्याभ्याम्। ह्रादुनयो ह्लादनयः स्तनयित्नुशब्दा विस्फुलिङ्गाः विक्षेपानेकत्वसामान्याभ्याम्। तस्मिन्नेतस्मिन्पर्जन्याग्नौ देवाः प्रागुक्ताः सोमं राजानं प्रागुक्तं जुह्वति तस्याः सोमाहुतेः वृष्टिः संभवति उत्पद्यते ॥ १० ॥

एवमुत्पन्ना वृष्टिरस्मिँल्लोके हुता सत्यन्नरूपेण परिणमत इत्याह—

अयं वै लोकोऽग्निर्गौतम। तस्य पृथिव्येव समिदग्निर्धूमो रात्रिरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः। तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति। तस्या आहुत्या अन्नँ संभवति ॥ ११ ॥

हे गौतम अयं वै लोकः पृथिव्यभिमानिदेवताया देहभूतस्तृतीयोऽग्निः। तस्याग्नेः पृथिव्येव पृथिव्यभिमानीदेवतैव समित्तया ह्ययं लोकः समिध्यते। अग्निर्धूम उभयोः पार्थिवद्रव्याश्रितत्वेनोत्थानसामान्यात्। रात्रिरर्चिरुभयोः समित्सम्बन्धप्रभवत्वपसामान्यादग्नेः समित्सम्बन्धेन ह्यर्चिः संभवति। तथा पृथिवीसमित्सम्बन्धेन रात्रिस्तस्या हि पृथिवीच्छायारूपत्वात्। चन्द्रमाः सोमाश्रयोऽप्रकाशरूपोऽङ्गारास्तयो राव्यर्चिभ्याम् उद्भवत्वप्रकाशाश्रयत्वादिसामान्यात्। नक्षत्राणि विस्फुलिङ्गा विक्षेपत्वसामान्यात्। तस्मिन्नेतस्मिन् एतल्लोकाग्नौ देवा वृष्टिं जुह्वति तस्या आहुतेरन्नमदनीयं व्रीह्यादि संभवति ॥ ११ ॥

तदन्नं पुनः पुरुषाग्नौ हुतं सद्रेतोरूपेण परिणमत इत्याह—

पुरुषो वा अग्निर्गौतम। तस्य व्यात्तमेव समित्प्राणो धूमो वागर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः। तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति। तस्या आहुत्यै रेतः संभवति ॥ १२ ॥

हे गौतम वै प्रसिद्धः शिरःपाण्यादिमान् पुरुषश्चतुर्थोऽग्निः। तस्य व्यात्तं विवृतं मुखं समित्समिधाऽग्निरिव पुरुषोऽपि वचनस्वाध्यायादौ विवृतेन मुखेन दीप्यते। प्राणोऽध्यात्मवायुर्धूमो मुखसमिद्ध्यामुत्थानत्वसाम्यात्। वाक्शब्दोऽर्चिरुभयोरभिधेयव्यञ्जकत्वसामान्यात्। चक्षुरङ्गाराः प्रकाशाश्रयत्वादिसामान्यात्। श्रोत्रं विफुलिङ्गा विक्षेप-

सामान्यात्। तस्मिन्नेतस्मिन्पुरुषाग्नौ देवा आध्यात्मिका वागादयोऽन्नं जुह्वति। तस्या आहुते रेतः सम्भवति॥ १२॥

तत्पुनर्योषाग्नौ हुतं सत्पुरुषाकारेण परिणमत इत्याह—

योषा वा अग्निर्गौतम। तस्या उपस्थ एव समिल्लोमानि धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः। तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति। तस्या आहुत्यै पुरुषः संभवति। स जीवति यावज्जीवत्यथ यदा म्रियते॥ १३॥

हे गौतम योषा स्त्री वै पञ्चमोऽग्निस्तस्या उपस्थेन्द्रियमेव समित्, तेन हि सा समिध्यते। लोमानि धूम उभयोरुपस्थसमिद्ध्यामुत्थानसामान्यात्। योनिरिन्द्रियाश्रयप्रदेशोऽर्चिर्वर्णसामान्यात्। अन्तर्योनिमध्ये यन्मैथुनव्यापाररूपं कर्म करोति तेऽङ्गारा उभयोस्तेजोवीर्याद्युपशान्तिकरत्वसामान्यात्। तत्कर्मवशादुत्पन्ना अभिनन्दाः सुखलवा विस्फुलिङ्गाः क्षुद्रत्वसामान्यात्। तस्मिन्नेतस्मिन् योषिदग्नौ देवा अध्यात्मप्राणरूपा रेतो जुह्वति तस्या आहुतेः पुरुषः शिरःपाण्यादिमान्संभवतीत्येवं क्रमेण यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भवन्तीति चतुर्थप्रश्ननिर्णय उक्तः। एवमुत्पन्नस्य स्वाभाविकं व्यापारमाह—, इति। एवं क्रमेण जातः पुरुषो जीवति कियन्तं कालमित्यत आह - यावदिति। यावत्कालपर्यन्तमस्मिन् शरीरे स्थितिनिमित्तं कर्म विद्यते तावत्कालं जीवति। अथ तत्क्षये सति यदा यस्मिन्काले म्रियते॥ १३॥

अथैनमग्नये हरन्ति। तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गाः। तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति। तस्या आहुत्यै पुरुषो भास्वरवर्णः संभवति॥ १४॥

अथ तदैनं मृतमग्नयेऽग्न्यर्थमन्त्याहुत्या ऋत्विजो हरन्ति तस्याऽऽहुतिभूतस्य होमाधिकरणं प्रसिद्धोऽग्निरेव अग्निर्भवति न परिकल्प्योऽग्निः। तथा प्रसिद्धैव समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गा यथाप्रसिद्धमेवैतत्सर्वम्। तस्मिन्नेतस्मिन् प्रसिद्धेऽग्नौ देवा ऋत्विजः पुरुषमन्त्याहुतिं जुह्वति प्रक्षिपन्ति। तस्या आहुतेः पुरुषो

भास्वरवर्णोऽतिशयेन दीप्तिमान् निषेकादिभिरन्त्येष्ट्यन्तैः कर्मभिः संस्कृतत्वात् संभवति निष्पद्यते ॥ १४ ॥

एवं पञ्चाग्निविदो मृतस्य गतिं वक्तुं मार्गविप्रतिपत्तितत्साधनयोः प्रथमपञ्चमयोर्निर्णयार्थमाह--

ते य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धाँ सत्यमुपासते तेऽर्चिरभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्ष-मापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतम्। तान्वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति । ते तेषु ब्रह्म-लोकेषु पराः परावतो वसन्ति । तेषां न पुनरावृत्तिः ॥ १५ ॥

ये गृहिणस्त्रैवर्णिका एवमुक्तसमिदादिविशिष्टान् पञ्चाग्नीन्विदुर्ये च अमी वानप्रस्थाः श्रवणाद्यनधिकृता आश्रमधर्ममात्रनिरताः संन्यासिन-श्चारण्ये स्त्रीजनासंकीर्णे देशे श्रद्धापूर्वकं सत्यं हिरण्यगर्भाख्यं ब्रह्मोपा-सते त उभयविधा अर्चिरर्चिरभिमानिनीं देवतामातिवाहिकीमभि-संभवन्ति प्रतिपद्यन्ते । ब्रह्मवित्संन्यासिनां तु 'न तस्य प्राणा उत्क्रामन्ती'-त्युक्तत्वात् । नैष्ठिकब्रह्मचारिणां च गुरुकुलवासादेरुत्तरमार्गप्रतिपत्तिः स्मर्यते—'अष्टाशीतिसहस्राणां मुनीनामूर्ध्वरेतसाम् । उत्तरेणार्यम्णः पन्थास्तेऽमृतत्वं हि भेजिरे' इति । अर्चिषः सकाशादहः अहर्देवता-मातिवाहिकीमभिसंभवन्तीति प्रत्येकं सम्बध्यते । अह्न आपूर्यमाणपक्षं शुक्लपक्षदेवतामापूर्यमाणपक्षात् यान् षण्मासानुदङ् उत्तरां दिशमादित्यः सूर्य एति तान्षण्मासान् उत्तरायणाभिमानिदेवतारूपान् प्रतिपद्यन्ते । मासेभ्य उक्तषण्मासेभ्यो देवलोकं तदभिमानिनीं देवतां देवलोका-दादित्यं प्रसिद्धम् । आदित्याद्वैद्युतं विद्युदभिमानिनीं देवतां तान्वैद्युतान् विद्युद्देवताप्राप्तान्मानसो ब्रह्मणा मनसा सृष्टो ब्रह्मलोकवासी पुरुषः कश्चि-देत्याऽऽगत्य ब्रह्मलोकान् प्रति गमयति नयति । अत्र बहुवचनं तु उपा-सनातारतम्येन सायुज्याद्यपेक्षया । ते ब्रह्मलोकप्राप्तास्तेषु ब्रह्मलोकेषु पराः प्रकृष्टाः सन्तः परावतः प्रकृष्टान् ब्राह्ममानमितान्संवत्सरान् शतसंख्याकान् वसन्ति । तेषां न पुनरस्मिन्कल्प आवृत्तिरस्ति । कल्पान्तरे त्वावर्तन्ते तेषामिहेति माध्यन्दिनश्रुतौ विशेषणात् । यद्वा तत्राऽऽत्मैक्यज्ञानो-त्पत्त्यपेक्षया अत्यन्तमेवानावृत्तिरित्यर्थः ॥ १५ ॥

एवं देवयानमार्गं ससाधनमुक्त्वा पितृयानमार्गमाह—

अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसंभवन्ति । धूमाद्रात्रिँ रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणाऽऽदित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रम् । ते चन्द्रं प्राप्यान्नं भवन्ति । ताँ स्तत्र देवा यथा सोमँ राजानमाप्यायस्वापक्षीयस्वेत्येवमेनाँ स्तत्र भक्षयन्ति । तेषां यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्ते । आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवम् । ते पृथिवीं प्राप्यान्नं भवन्ति । ते पुनः पुरुषाग्नौ हूयन्ते । ततो योषाग्नौ जायन्ते लोकान्प्रत्युत्थायिनः । त एवमेवानुपरिवर्तन्ते । अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम् ॥ १६ ॥

अथ पुनर्ये नैवं विदुः केवलकर्मिणो यज्ञेन दर्शपूर्णमासादिना दानेन सत्पात्रादौ द्रव्यत्यागेन तपसा कृच्छ्रचान्द्रायणादिना लोकान् पितृलोकाञ्जयन्ति प्राप्नुवन्ति ते तत्प्राप्तिसाधनमार्गभूतं धूमं धूमाभिधानिनीं देवतामभिसंभवन्ति प्रतिपद्यन्ते । धूमाद्रात्रिं रात्रिदेवतां रात्रेरपक्षीयमाणपक्षं कृष्णपक्षदेवतामपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणां दिशं प्रत्यादित्य एति तान्षण्मासदेवताविशेषान्प्रतिपद्यन्ते । तेभ्यो मासेभ्यः पितृलोकं पितृलोकाचन्द्रम् । ते कर्मिणश्चन्द्रं प्राप्यान्नं भवन्ति भोग्यत्वं प्रतिपद्यन्ते । कथमित्यपेक्षायामाह—तानिति । यथा यज्ञ ऋत्विजश्चमसस्थं सोमं राजानमाप्यायस्व आप्याय्याऽऽप्याय्य पुनः पुनराप्यायनं कृत्वाऽपक्षीयस्व पुनः पुनर्भक्षणेनापक्षयं ह्रासं कृत्वा भक्षयन्ति । यथाऽयं दृष्टान्त एवमेवान्नभूतांस्तत्र चन्द्रलोके लब्धशरीरानेतान् कर्मिण उपकरणभूतांस्तत्र सोमलोके स्वकर्मानुरूपफलदानलक्षणमाप्यायनं कृत्वा देवाः स्वनियोगकरणेन श्रमलक्षणमपक्षयं कुर्वन्तो भक्षयन्त्युपभुञ्जते सेवकमिव राजेत्यर्थः । एवं ते य एवमेतद्विदुर्ये चामी यज्ञेनेत्यादिना चोभयमार्गप्रतिपत्तिसाधनोक्त्या पञ्चमप्रश्नं 'तेऽर्चिरभिसंभवन्ति ते धूममि'त्यादिना चोत्तरदक्षिणमार्गप्रदर्शनेन प्रथमं प्रश्नं च निर्णीय इदानीमेतल्लोकप्राप्तिप्रकारप्रदर्शनेन द्वितीयतृतीय-

प्रश्नयोर्निर्णयमाह—तेषामिति। तेषां कर्मिणां यदा यस्मिन्काले तत् यज्ञादि पितृलोकप्रापकं कर्म पर्यवैति परिगच्छति क्षीयते, अथ तदा त इममेव प्रसिद्धमाकाशमभिनिष्पद्यन्ते तच्छरीरारम्भककर्मक्षयात्तदारम्भकीभूताः श्रद्धाशब्दवाच्या आपो विलीयमाना आकाशवत्सूक्ष्मभूताः सत्य आकाशं प्राप्नुवन्ति। आकाशाद्वायुमितस्ततो भ्राम्यमाणं प्रतिपद्यन्ते। वायोर्वृष्टिं प्रतिपद्यन्ते। वृष्टेः पृथिवीं प्राप्नुवन्ति। ते कर्मिणः पृथिवीं प्राप्यान्नं भवन्ति अन्नेन व्रीह्यादिना संश्लेषं प्राप्नुवन्ति। ते पुनः पुरुषाग्नौ हुताः रेतोभूता योषाग्नौ हुताः पुरुषाख्याः कर्मानुतिष्ठन्तो म्रियमाणाः पुनरावर्त्यमाना इत्येवमेवानु वारंवारं घटीयन्त्रवच्चक्रीभूताः परिवर्तन्ते परिभ्रमन्त्यनवरतमित्यर्थः। एवं स्थानद्वयमावृत्तिसहितमुक्त्वा स्थानान्तरमाह—अथेति। अथ पुनर्य उत्तरं दक्षिणं चेत्येतौ पन्थानौ न विदुस्तत्प्रतिपत्तिहेतुभूतं ज्ञानं वा कर्म वा नानुतिष्ठन्ति ते पुनः कीटा गोमयादिकुत्सितस्थानेषु कृमयो भवन्ति। पतङ्गा भवन्ति। यदिदं यच्चेदं दन्दशूकं दशनशीलं दंशमशकपन्नगादि दृश्यते तत्सर्वं यथाकर्म तारतम्येन भवन्तीति कष्टा हीयं गतिः। तस्मात्सदेवानुष्ठेयम्। तथा च परलोकगतानामाकाशादिद्वारा पुनरावृत्तिकथनेन द्वितीयतृतीयप्रश्नौ निर्णीतावित्यर्थः ॥ १६ ॥

इति षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

अथैतद्दक्षिणमार्गप्राप्तिहेतुभूतकर्मसाधनीभूतवित्तोपायभूतमप्रत्यवायद्वारकं श्रीमन्थाख्यं कर्म साधिकार्यादि कथयितुमिदं ब्राह्मणं प्रवर्तते—

स यः कामयेत महत्प्राप्नुयामित्युदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूत्वौदुम्बरे कँ्से चमसे वा सर्वौषधं फलानीति संभृत्य परिसमुह्य परिलिप्याग्निमुपसमाधाय परिस्तीर्याऽऽवृताऽऽज्यँ् सँ्स्कृत्य पुँ्सा नक्षत्रेण मन्थँ् संनीय जुहोति। यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कामान् तेभ्योऽहं भागधेयं जुहोमि। ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा। या तिरश्ची निपद्यतेऽहं विधरणी इति तां त्वा घृतस्य धारया यजे सँ्राधनीमहँ् स्वाहा ॥ १ ॥

यः कर्माधिकृतो गृही प्राणवित् महन्महत्त्वं प्राप्नुयां महान् स्यामिति कामयते स उदगयन उदगुदीचि आदित्यस्यायनं गमनं यस्मिन्काले स उदगयनस्तस्मिंस्तत्रापि आपूर्यमाणपक्षस्य शुक्लपक्षस्य पुण्याहे पुण्यदिवसे कर्मसिद्धिकरे यस्मिन्कर्म चिकीर्षितं ततः प्राक्पुण्याहमेवाऽऽरभ्य द्वादशाहं द्वादशदिवसपर्यन्तमुपसद्व्रती भूत्वोपसदो ज्योतिष्टोम इष्टिविशेषास्तासु यद्व्रतं स्तनोपचयापचयाभ्यां पयोभक्षणादिरूपं तत्केवलमुपचयादीतिकर्तव्यताशून्यं पयोभक्षणादिमात्रं विद्यते यस्य स उपसद्व्रती भूत्वा औदुम्बरवृक्षमये। कथंभूते ? कंसे कंसाकारे वर्तुलाकारे चमसे चमसाकारे वा पात्रे सर्वौषधं सर्वासामोषधीनां वक्ष्यमाणव्रीह्यादिधान्यानां समूहं सर्वौषधं फलानि च यथासंभवमभक्ष्यादिवर्जितानीत्येवमादि संभरणीय संभृत्य परिसमुह्य उपलिप्येत्यादिभूसंस्कारं कृत्वा तत्राग्निमुपसमाधायेत्येकवचनसमाधानाद्विश्रवणात् स्मार्तमेवाऽऽवसथ्याग्निं संस्थाप्य तस्य परितः प्रागग्रान् उदगग्रान् वा दर्भानास्तीर्य परिस्तीर्येत्याद्युपलक्षणत्वात् स्वगृह्योक्तं सर्वं कृत्वाऽऽवृदितिकर्तव्यता तयाऽऽवृता अस्य कर्मणः स्मार्तत्वात्स्थालीपाकोक्तेतिकर्तव्यतयाऽऽज्यं विलापनादिना संस्कृत्य वक्ष्यमाणेध्मानां चाऽऽधानादिकं कृत्वा। कदेत्यत आह—पुंसेति। पुंसा पुंनाम्ना हस्तादिनक्षत्रेण युक्ते पुण्याहे मन्थं वक्ष्यमाणत्वेन उक्तसर्वौषधादीनां पिष्टं तेषां तथाकर्तव्यत्वेन वक्ष्यमाणत्वादुक्ते कंसे चमसे वा वक्ष्यमाणदधिमधुघृतैरुपसिच्य वक्ष्यमाणोपमन्थिनीद्वयमध्य एकया मन्थिन्या उपमन्थ्य एवंभूतं मन्थं संनीयाग्नेः स्वस्य च मध्ये दक्षिणाश्रिते देशे संस्थाप्य वक्ष्यमाणौदुम्बरेण स्रुवेण संस्कृतमाज्यं गृहीत्वा वक्ष्यमाणैर्मन्त्रैर्जुहोति जुहुयात्। ते क इति वीक्षायामाहुतिद्वयाङ्गभूतं मन्त्रद्वयं देवताप्रार्थनार्थकं तावदाह—यावन्त इति। जातं जातं वेत्ति जाते जाते प्राणिनि जाठरत्वेन विद्यत इति वा जातवेदास्तस्य सम्बुद्धिर्भो जातवेदस्त्वयि त्वदधीना यावन्तो देवास्तिर्यञ्चो वक्रमतयः सन्तः पुरुषस्य मम कामानभीप्सितार्थान् घ्नन्ति प्रतिबध्नन्ति तेभ्यो देवेभ्योऽहं भागधेयमाज्यभागं जुहोमि त्वय्यर्पयामि। ते तु देवास्तृप्ता भूत्वा सर्वैरपि कामैः पुरुषार्थैर्मा मां तर्पयन्तु प्रीणयन्तु स्वाहेति प्रथमाहुतिप्रक्षेपमन्त्रः। भो जातवेदो या देवता तिरश्ची तिरोऽञ्चतीति तिरश्ची कुटिलमतिर्भूत्वाऽहमेव विधरणी सर्वस्य धारयित्रीति च मत्वा त्वा त्वां निपद्यते त्वामाश्रित्य वर्तते तां संराधनीं सर्वसाधनीं देवतामहं घृतस्य धारया यजे स्वाहेत्याहुतिद्वये संस्रवावनयनं न कर्तव्यमश्रुतत्वादित्यर्थः॥ १॥

अथ षड्द्वन्द्वाहुतीः प्रतिद्वन्द्वं संस्रवावनयनयुक्ताः समन्त्रा आह—

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। चक्षुषे स्वाहा संपदे स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। श्रोत्राय स्वाहाऽऽयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति॥ २॥

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा संस्रवं स्रुवावलिप्तमाज्यं मन्थे पूर्वोक्तेऽवनयति सिञ्चेदित्यारभ्य रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयतीत्यतः प्राक्तनेन॥ २॥

अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। भूः स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति। प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सँ स्रवमवनयति॥ ३॥

तदारभ्य आतृतीयकण्डिकासमाप्तेश्चतुर्दशाहुतीः प्रत्येकं संस्रवावनयनयुक्ताः समन्त्रका आह—रेतसे स्वाहेत्यादिना। एतच्च मन्थद्रव्यं द्वितीयया उपमन्थिन्या पुनर्मन्थनीयम्, तस्या अन्यत्र विनियोगाऽदर्शनादिति बोद्धव्यम् ॥ ३ ॥

अथैनमभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिंकृतमसि हिंक्रियमाणमस्युद्गीथमस्युद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे संदीप्तमसि विभूरसि प्रभूरस्यन्नमसि ज्योतिरसि निधनमसि संवर्गोऽसीति ॥ ४ ॥

अथैवमालोडनानन्तरमेनं मन्थं हस्तेनाभिमृशति अभिमर्शनं कुर्यात् मन्त्रं पठंस्तदर्थं च स्मरन्। कोऽसौ मन्त्र इत्यत आह—भ्रमदसीति। हे मन्थ तव चलनात्मकप्राणदेवतात्मकत्वात्तद्रूपेण त्वं भ्रमदसि। अग्निरूपेण त्वं ज्वलदसि। ब्रह्मरूपेण त्वं पूर्णमसि। नभोरूपेण त्वं प्रस्तब्धं निष्क्रियमसि। या खल्वेका सभा जगदात्मिका सा त्वदात्मिकेवेति त्वमेकसभमसि। यज्ञारम्भे प्रस्तोत्रा यद्धिंकृतं तत्त्वमसि। तेनैव च यज्ञमध्ये हिंक्रियमाणं त्वमसि। यज्ञारम्भ उद्गातृकृतमुद्गीथं त्वमसि। तेनैव च यज्ञमध्य उद्गीयमानं त्वमसि। अध्वर्युणा श्रावितमाश्रावितं त्वमसि। आग्नीध्रेण च त्वं प्रत्याश्रावितमसि। आर्द्रे मेघोदरे विद्युद्रूपेण त्वं संदीप्तमसि। विविधं भवसीति त्वं विभुर्व्यापकोऽसि। भाग्यरूपेण त्वं प्रभुः समर्थोऽसि। भोग्यरूपेण सोमात्मनाऽवस्थितत्वात् त्वमन्नमसि। भोक्तृरूपेणाग्न्यात्मना त्वं ज्योतिरसि। कारणत्वात् त्वमध्यात्माधिदैवयोर्निधनं लयस्थानमसि। यागादीनामग्न्यादीनां च संहरणत्वात् त्वं संवर्गोऽसीति ॥ ४ ॥

अथैनमुद्यच्छति। आमँ स्यामँ हि ते महि स हि राजेशानोऽधिपतिः स माँ राजेशानोऽधिपतिं करोत्विति ॥ ५ ॥

अथैवमभिमर्शनानन्तरमेनं मन्त्रपूतं मन्थं सचमसमुद्यच्छति हस्ते गृह्णाति। तन्मन्त्रमाह—आमंसीति। हे मन्थ त्वमामंसि, आसमन्ताद्भावेन सर्वं जानासि। वयं च ते तव महि महत्तरं रूपमामंहि मन्यामहे जानीमः। स हि प्राणस्त्वं राजा न केवलं राजैव, अपि तु ईशानः। ईशानशक्तिमत्त्वेऽपि राजकुमारवन्न परतन्त्रः, किन्त्वधिपतिः

स्वतन्त्रः। एवंगुणविशिष्टः स राजेशानो भवान् मा मामधिपतिं तथाभूतमेव करोत्विति ॥ ५ ॥

अथैनमाचामति तत्सवितुर्वरेण्यम्। मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः। भूः स्वाहा। भर्गो देवस्य धीमहि। मधु नक्तमुतोषसो मधुमत्पार्थिवँ रजः। मधु द्यौरस्तु नः पिता। भुवः स्वाहा। धियो यो नः प्रचोदयात्। मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः। स्वः स्वाहेति सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीरहमेवेदँ सर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः संविशति प्रातरादित्यमुपतिष्ठते। दिशामेकपुण्डरीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वँशं जपति ॥ ६ ॥

अथानन्तरमेनं हस्ते गृहीतं मन्थं ग्रासचतुष्टयं कृत्वा पृथक्पृथक् संस्थाप्य प्रथमग्रासमाचामति भक्षयति। तन्मन्त्रमाह—तदिति। सवितुः सर्वप्रसवहेतोस्तद्वरेण्यं वरणीयं वाता वायुप्रभेदा मधु सुखमृतायत ऋतायन्ते वान्ति। सिन्धवो नद्यो मधु मधुररसान् क्षरन्ति स्रवन्ति। ओषधीश्च नोऽस्मान्प्रति माध्वीर्मधुररसाः सन्तु। भूर्भूर्लोकः स्वाहेति मन्त्रेण प्रथमं ग्रासं भक्षयित्वा भर्गस्तेजो देवस्य द्योतनवतः सवितुर्धीमहि चिन्तयेमहि। नक्तं रात्रिरुताप्युषसो दिवसाश्च मधु प्रीतिकराः सन्तु। पृथिव्या मातुः सम्बन्धि पार्थिवं रजो मधुमदनुद्वेगकरमस्तु। द्यौर्द्युलोकः पिता नोऽस्माकं मधुकरोऽस्तु। भुवर्भुवर्लोकः स्वाहेति द्वितीयं ग्रासं भक्षयित्वा यः सविता नोऽस्माकं धियो बुद्धीः शुभविषये प्रेरयेत्तस्य तद्वरेण्यं भर्गो धीमहीति पूर्वेण सम्बन्धः। वनस्पतिः सोमो नोऽस्माकं मधुमान् अनुद्वेगकरोऽस्तु। सूर्यश्च मधुमानस्तु नोऽस्माकं गावो रश्मयो दिशो वा माध्वीः सुखकरा भवन्तु। स्वः स्वर्लोकः स्वाहेति मन्त्रेण तृतीयं ग्रासं भक्षयित्वा सर्वं च सावित्रीं गायत्रीं सर्वाश्च मधुमतीरुक्त्वा अनु पश्चादहमेवेदं सर्वं भूयासमित्याह वदेत्। ततो भूर्भुवः स्वः स्वाहेति निरवशेषं यथा

स्यात्तथा चतुर्थं ग्रासं भक्षयेत्। पात्रं प्रक्षाल्य तदुदकमपि पिबेत्। अन्ततो भक्षणान्त आचम्य आचमनं कृत्वा पाणी हस्तौ प्रक्षाल्य शुद्धाचमनं विधाय जघनेनाग्निमग्नेः पश्चिमतः प्राक्शिरा रात्रौ संविशति शयीत। ततः प्रातःसन्ध्यापूर्वकं प्रातरुदयसमय आदित्यं वीक्षमाणस्तमुपतिष्ठत उपस्थानं मन्त्रेण कुर्यात्। तन्मन्त्रमाह—दिशामिति। हे सूर्य यथा त्वं दिशामेकपुण्डरीकमखण्डश्रेष्ठोऽसि तथाऽहं मनुष्याणामेकपुण्डरीकमुक्तार्थं भूयासं भवेयमिति मन्त्रेण उपस्थानानन्तरं पूर्वं शयनाद्यथा इतं गतं तथैत्य गत्वा जघनेनाग्निमग्नेः पश्चिमदेश आसीन उपविष्टः सन्वंशमेतद्विद्योपदेशकाचार्यपरम्परालक्षणं जपति जपेत्॥ ६॥

तद्वंशमाह—

तँ हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाच। अपि य एनँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति॥ ७॥

तं मन्थमेतमुक्तकर्तव्यताकं ह किल अरुणस्यापत्यमारुणिः उद्दालकनामा वाजसनेयाय याज्ञवल्क्यायान्तेवासिने शिष्यायोक्त्वा उपदिश्य उवाचोक्तवान्। किमपि च यः प्राणोपासक एनमुक्तविधया संस्कृतं मन्थं यदि शुष्के स्थाणौ वृक्षे निषिञ्चेत् प्रक्षिपेत्तर्हि तस्मिन्स्थाणौ शाखा अवयवा जायेरन्नुत्पद्येरन्। पलाशानि पर्णानि च प्ररोहेयुरुद्गच्छेयुः। अतः इदं कर्म ध्रुवफलमिति स्तूयते॥ ७॥

तथा—

एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाच। अपि य एनँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति॥ ८॥ एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन उक्त्वोवाच। अपि य एनँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति॥ ९॥ एतमु हैव चूलो भागवित्तिर्जानकय आयस्थूणायान्तेवासिन उक्त्वोवाच। अपि य एनँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति॥ १०॥

एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिन उक्त्वोवाच । अपि य एनँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ११ ॥

एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाच । अपि य एनँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतं नापुत्राय वाऽनन्तेवासिने वा ब्रूयात् ॥ १२॥

'एतमु हैव वाजसनेय' इत्यादि 'तमेतमि'त्यतः प्राक्तनवंशजपसमाप्तिकमिदं कर्म । तद्विद्यासंप्रदानमाह—तमिति । तं तदेतन्मन्थविज्ञानमपुत्राय पुत्रेभ्यो व्यतिरिक्ताय वाऽन्तेवासिने वा शिष्यव्यतिरिक्ताय कस्मैचिदपि न ब्रूयान्नोपदिशेदित्यर्थः ॥ ८—१२ ॥

सर्वौषधत्वेन सामान्यत उक्तं विशेषतश्च वक्ष्यमाणत्वेन स्थितं सर्वमाह—

चतुरौदुम्बरो भवत्यौदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्या उपमन्थन्यौ दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिलमाषा अणु प्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान्पिष्टान् दधनि मधुनि घृत उपसिञ्चत्याज्यस्य जुहोति ॥ १३ ॥

उदुम्बरस्य विकार औदुम्बरश्चतुश्चतुःसंख्याको भवति तदेवाऽऽह—औदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्या उपमन्थन्यावित्येतत्प्रसिद्धार्थकम् । ग्रन्थोपादानभूतानि ग्राम्याणि धान्यानि दशेति विशेषणं नियमार्थं न त्वन्यव्यावृत्त्यर्थम् । अतोऽधिकग्रहणेऽप्यदोषः । कानि तानीत्यत आह—व्रीहियवास्तिलमाषाः प्रसिद्धाः । अणु मोदियमिति विन्ध्याचलप्रदेशे प्रसिद्धम् । प्रियङ्गवः कङ्गुशब्दवाच्यत्वेन गुर्जरदेशे प्रसिद्धाः । गोधूमाश्च मसूराश्च प्रसिद्धाः । खल्वाश्च निष्पावा वल्लशब्दवाच्याः । खलकुलाः कुलत्थाः तानेतान् व्रीह्यादीन् कृतपिष्टान् पात्रे निक्षिप्य दधिमधुघृत उपसिच्य आक्तान्कृत्वा आज्यभागान्तं स्वगृह्योक्तविधिना कृत्वा आज्यस्याऽऽहुतीर्जुहोत्ये-

तत्पूर्वोक्तेन सहास्य सम्बन्धं द्योततितुमुक्तमित्यर्थः ॥ १३ ॥

इति षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

एवं प्राणोपासकस्य वित्तार्थिनः श्रीमन्थाख्यं कर्मोपदिश्य तस्यैव विशिष्टपुत्रार्थिनः पुत्रमन्थाख्यं कर्म वक्तुमुत्तरं ब्राह्मणं प्रवर्तते। तत्राऽऽदौ पुत्रोत्पत्तिहेतुं रेतोबीजं स्तोतुमाह—

एषां वै भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥ १ ॥

एषां वै प्रसिद्धानां चराचराणां भूतानां पृथिवी रसः सारभूता मधुब्राह्मणे तत्कारणत्वोक्तेः। पृथिव्या आपो रसोऽप्स्वोतं चेत्यपां पृथिवीकारणत्वोक्तेः। अपामोषधयो रस ओषधीनामप्कार्यत्वात्। तथौषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतो रसः ॥ १ ॥

स ह प्रजापतिरीक्षाञ्चक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति। स स्त्रियँ् ससृजे ताँ सृष्ट्वाऽध उपास्त। तस्मात् स्त्रियमध उपासीत। स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्। तेनैनामभ्यसृजत् ॥ २ ॥

स प्रजापतिर्विराडात्मा ह ईक्षामालोचनां चक्रे कृतवान्। कथम्? हन्तास्मै सर्वसारभूताय रेतसे योग्यां प्रतिष्ठां कल्पयानीति विचार्य स प्रजापतिः स्त्रियं पत्नीशब्देनोक्तां शतरूपाख्यां ससृजे। तां सृष्ट्वा प्रजापतिरधःप्रदेशे योन्याख्यं उपास्त मैथुनाख्यमुपासनं कृतवान् यस्मात्तस्माद्यतनोऽपि स्त्रियमधःप्रदेशेऽवाच्यकर्मणा उपासीत। नन्वेतत्किमर्थं विधीयतेऽस्य स्वभावत एव प्राप्तत्वादित्यतोऽत्र वाजपेयदृष्टिकरणार्थमिति तत्साधर्म्यमाह—स इति। पशुकर्मणि प्रवृत्तः काम्यात्मनः स्वीयमेवैतं प्राञ्चं प्रागञ्चमानं ग्रावाणं सोमाभिषवोपलस्थानीयं प्रजननेन्द्रियं समुदपारयत उत्पूरितवान् स्त्रीव्यञ्जनाभिमुखं कृतवांस्तेन पाषाणवत्कठिनेनैनां स्त्रियमभ्यसृजदभि समन्ततो मुहुर्मुहुः संसर्गं कृतवान् ॥ २ ॥

तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ। स यावान् ह वै वाजपेयेन यजमानस्य

लोको भवति तावानस्य लोको भवति। य एवं विद्वानधोप-
हासं चरत्यासाँ स्त्रीणाँ सुकृतं वृङ्क्ते। अथ य इदमविद्वा-
नधोपहासं चरत्यस्य स्त्रियः सुकृतं वृञ्जते॥ ३॥

तस्याः स्त्रिया उपस्थ एव वेदिः प्रसिद्धसाधर्म्यात्। तत्स्थानि लोमानि बर्हिः योनिस्थचर्माऽऽनडुहं चर्म। तौ तत्स्थौ पुरुषस्य दक्षिणोत्तरौ मुष्कौ वृषणावधिषवणे दक्षिणोत्तरे सोमाभिषवफलके इत्यन्वयः। स्त्रीव्यञ्जनस्य मध्यतो मध्यदेशः समिद्धो दीप्तोऽग्निः। अस्मिन्वाजपेयदृष्टिकरणे किं स्यादित्यत आह—स इति। स प्रसिद्धो यावत्परिणामो लोको वाजपेयेन यजमानस्य भवति तावानस्यैवमवाच्यकर्मोपासितुर्लोको भवति। किञ्च—य एवं यथोक्तं वाजपेयसाम्यमस्य कर्मणो विद्वानधोपहासमवाच्यं कर्म चरत्यनुतिष्ठति स स्त्रीणां सुकृतं शुभं कर्म वृङ्क्त आवर्जयति स्वीकरोति। अथ पुनर्योऽस्य वाजपेयसंपन्नत्वं रेतसः सारतमत्वं चाविद्वानधोपहासं चरत्यस्याविदुषः सुकृतं स्त्रियो वृञ्जत उपभुञ्जते॥ ३॥

अविदुष एतद्गर्हितमित्यत्रानेकाचार्यसम्मतिमाह—

एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराह। एतद्ध स्म वै तद्वि-
द्वान्नाको मौद्गल्य आह। एतद्ध स्म वै तद्विद्वान् कुमारहारित
आह। बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतो-
ऽस्माल्लोकात्प्रयन्ति य इदमविद्वाँ सोऽधोपहासं चरन्तीति।
बहु वा इदँ सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति॥ ४॥

उद्दालक आरुणिर्ह तदेतदवाच्यं कर्म वाजपेयसंपन्नं विद्वानाह स्म। तथा नाको मौद्गल्यः कुमारहारितश्चाऽऽह स्म। किम्? बहवो मर्या मरणधर्माणो मनुष्या ब्राह्मणा अयनं येषां ते ब्राह्मणायना ब्राह्मणजातिमात्रोपजीविनो ब्राह्मणाभासा निरिन्द्रिया विश्लिष्टेन्द्रिया विसुकृतो विगतपुण्याः सन्तोऽस्माल्लोकात्प्रयन्ति परलोकभ्रष्टाः सन्तो नरकं गच्छन्ति। के ते? ये पशुकर्माण इदं वाजपेयसंपन्नत्वमविद्वांसोऽविजानन्तोऽधोपहासं चरन्तीति। श्रीमन्थकर्म कृत्वा पत्न्या ऋतुकालं ब्रह्मचर्येण प्रतीक्षमाणस्य सुप्तस्य जाग्रतो वा रागबाहुल्यात् बहु वा स्वल्पं वा यदिदं रेतः स्कन्दति निःसरति॥ ४॥

तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्का-

न्त्सीद्यदोषधीरप्यसरद्यदपः। इदमहं तद्रेत आददे पुनर्मा-
मैत्विन्द्रियं पुनस्तेजः पुनर्भगः। पुनरग्निर्धिष्ण्या यथास्थानं
कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा
भ्रुवौ वा निमृज्यात् ॥ ५ ॥

तदा तत्स्कन्नं रेतो हस्तेनाभिमृशेत् स्पृशेदनु पश्चान्मन्त्रयेच्च। वा-
शब्दोऽत्र चार्थः। तन्मन्त्रमाह—यदिति। मे ममाद्य अप्राप्तिकाले यद्रेतः
पृथिवीं प्रत्यस्कान्त्सीत् स्कन्नमासीद्यदोषधीः प्रति च पूर्वमप्यसत् अग-
मत्। यच्चापः स्वयोनिं प्रतिगतमभूत्तदिदं रेतः संप्रत्यहमाददे गृह्णामीति
मन्त्रेण अनामिकाङ्गुष्ठाभ्यामादाय गृहीत्वा भ्रुवौ स्तनौ वाऽन्तरेण
भ्रुवोः स्तनयोर्वा मध्ये निमृज्याल्लेपयेदित्यन्वयः। केन मन्त्रेणेत्यत
आह—पुनर्मामित्यादिना। रेतोरूपेण बहिर्निर्गतमिन्द्रियं पुनर्मां प्रत्यैतु
समागच्छतु। तेजस्त्वग्गता कान्तिः। साऽपि रेतोनिर्गमनान्निर्गता पुन-
र्मामैत्वित्यनुषङ्गः। तथा भगः सौभाग्यं ज्ञानं वा पुनरायातु। अग्नि-
र्धिष्ण्यं स्थानं येषां देवानां तेऽग्निधिष्ण्या देवाः। रेफश्छान्दसः। ते
देवास्तद्रेतो यथास्थानं कल्पन्तां कल्पयन्तु। इतिशब्दो मन्त्रसमाप्तिद्योतक
इत्यर्थः ॥ ५ ॥

अथ यद्युदक आत्मानं परिपश्येत्तदभिमन्त्रयेत मयि तेज
इन्द्रियं यशो द्रविणँ सुकृतमिति। श्रीर्ह वा एषा स्त्रीणां
यन्मलोद्वासाः। तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्यो-
पमन्त्रयेत् ॥ ६ ॥

निमित्तान्तरे प्रायश्चित्तकथनार्थोऽथशब्दः। यदि कदाचित्प्रमादत
उदके रेतः सिक्त्वा स्वस्याऽऽत्मानं छायां पश्येत्तदा तदुदकमभिमन्त्र-
येत। तन्मन्त्रमाह—मयीति। इन्द्रियं रेतो मय्यस्त्वित्यध्याहारः किंलक्षण-
मिन्द्रियम्? तेजो विज्ञानं यशः कीर्तिर्द्रविणं वित्तं सुकृतं सत्कर्मेति।
एतानि विशेषणानि तु तादृग्गुणपुत्रोत्पादनहेतुत्वात्। इतिशब्दः पूर्व-
वत्। अथ यस्यां पुत्रो जनयितव्यस्तां स्तौति—श्रीरिति। स्त्रीणां मध्ये
हैषा पत्नी श्रीर्गुणाढ्या यद्यस्मान्मलोद्वासा उद्भूतमलवद्वस्त्रा तस्मात्तां
मलोद्वाससं यशस्विनीं कीर्तिमतीं वक्ष्यमाणत्रिरात्रव्रतं कृत्वा चतुर्थे-
ऽह्नि स्नातामभिक्रम्याभिगम्य इदमद्याऽऽवाभ्यां कार्यं यद्विशिष्टपुत्रो-
त्पादनमित्यभिमन्त्रयेत् कथयेत् ॥ ६ ॥

सा चेदस्मै न दद्यात् काममेनामवक्रीणीयात् सा चेदस्मै नैव दद्यात् काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेत् । इन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति ॥ ७ ॥

कामाकुलाय मैथुनं कर्तुं न दद्यात्तदैनां स्वभार्यां कामं यथाभिलषितभोग्यादिभिरवक्रीणीयात् वशीकुर्यात् । एवमपि सा चेदस्मै पशुकर्म कर्तुमवकाशं नैव दद्यात्तदैनां स्वभार्यां यष्ट्या दण्डेन पाणिना हस्तेन वोपहत्य संताड्य कामं यथेष्टमतिक्रामेदभिगच्छेत् । एवं बलात्कारासंभवे पुनरुपायान्तरमाह—इन्द्रियेणेति । शप्स्यामि त्वां दुर्भगां करिष्यामीति प्रख्याप्य इन्द्रियेण पञ्चमेन्द्रियेण यशसा यशोहेतुना कृत्वा ते तव यशो यशोहेतुपुत्रोत्पत्तिकरं रेतोऽहमाददे गृह्णामीति मन्त्रेण शपेत् । सा चैवं शप्ता सति अयशा एव अपुत्रैव भवति ॥ ७ ॥

सा चेदस्मै दद्यादिन्द्रियेण ते यशसा यश आदधामीति यशस्विनावेव भवतः ॥ ८ ॥

एवं शापभयात्सा चेदस्मा अवाच्यं कर्म कर्तुमवकाशं दद्यात्तदा यशसेन्द्रियेण उक्तलक्षणेन ते तव यश आदधाम्यारोपयामीत्यनेन मन्त्रेण शापे निवर्तिते सति यशस्विनावेव उभावपि भवत इत्यर्थः ॥ ८ ॥

अथ या भर्तुर्द्वेषिणी भवति तस्यास्तद्विषये प्रीतिसंपत्त्युपायमाह—

स यामिच्छेत् कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखँ संधायोपस्थमस्या अभिमृश्य जपेत् । अङ्गादङ्गात्संभवसि हृदयादधिजायसे । स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेमाममू मयीति ॥ ९ ॥

स पूर्वोक्तमन्थकर्मण्यधिकृतः कामीयं मा मां कामयेताभिलषेतेति स्वभार्यां यामिच्छेत् तस्यां योनौ अर्थं प्रजननेन्द्रियं निष्ठाय निक्षिप्य स्त्रीमुखेन सह स्वमुखं संधाय मेलयित्वा तस्या उपस्थं पाणिनाऽभिमृश्य स्पृष्ट्वा जपेन्मन्त्रम् । तमेवाऽऽह—अङ्गादिति । हे रेतस्त्वं मदीयात् सर्वस्मादङ्गात्संभवसि समुत्पद्यसे विशेषतश्च हृदयान्नाडीद्वारेण अधिजायसे प्रकटीभवसि । एवंविधः स त्वमङ्गानां कषायो रसोऽसि । अतो दिग्धविद्धामिव विषलिप्तशरविद्धां मृगीमिव इमाममूं मद्भार्यां

मयि विषये मादय मदयुक्तां कुरु मद्वशां कुर्वित्यर्थः ॥ ९ ॥

अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखँ संधायाभिप्राण्यापान्यात् । इन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ॥ १० ॥

अथशब्दः कामनान्तरोपक्रमार्थः । यौवनादिभ्रंशभयाद्यां स्वभार्यामिच्छेद्गर्भं न दधीत न धारयेदिति तस्यामर्थमित्यादि पूर्ववत् । अभिप्राण्यापान्यात् पशुकर्मकाले प्रथमं स्वीयपुंस्त्वद्वारा तदीयस्त्रीत्वे वायुविसर्जनरूपमभिप्राणनं कृत्वा तेनैव द्वारेण तदादानलक्षणमपाननं च कुर्यात् । तन्मन्त्रमाह-इन्द्रियेणेति । इन्द्रियेण रेतसा ते रेत आदद इत्यनेनैव मन्त्रेण । एवं कृते सत्यरेता एव सा भवति ॥ १० ॥

अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखँ संधायापान्याभिप्राण्यात् । इन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥ ११ ॥

अथ गर्भं दधीतेति यामिच्छेत्तस्यामर्थमित्यादि पूर्ववदपान्याभिप्राण्यात् स्वकीयपञ्चमेन्द्रियेण तदीयपञ्चमेन्द्रियाद्रेतः स्वीकृत्य तत्पुत्रोत्पत्तिसमर्थं कृतमिति मत्वा स्वकीयरेतसा सह तस्मिन्निक्षिपेदित्येतादृशमपाननपूर्वकमभिप्राणनं कर्मेन्द्रियेण रेतसा रेत आदधामीत्यनेन मन्त्रेण । एवं कृते सति सा गर्भिण्येव भवति ॥ ११ ॥

अथ यस्य जायायै जारः स्यात्तं चेद् द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमँ शरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाऽक्ता जुहुयात् । मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति । मम समिद्धेऽहौषीः पुत्रपशूँस्त आददेऽसाविति । मम समिद्धेऽहौषीरिष्टासुकृते त आददेऽसाविति । मम समिद्धेऽहौषीराशापराकाशौ त आददेऽसाविति । स वा एष निरिन्द्रियो विसुकृतोऽस्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणः शपति तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ॥ १२ ॥

अथ यस्य गृहिणो जायायै जायाया भार्याया जार उपपतिः स्यात्तं चेज्जारं स्वाभाविकः पतिर्द्विष्यात्तदा आमपात्रे अपक्वमृन्मये भाजने उल्लेखनादिपञ्चभूसंस्कारपूर्वकमग्निमुपसमाधाय प्रतिलोमं दक्षिणाग्रं पश्चिमाग्रं वा यथा स्यात्तथा शरमयं बर्हिस्तीर्त्वा आस्तीर्य तस्मिन्नग्नौ एताः प्रसिद्धाः शरभृष्टीर्बाणेषीकाः प्रतिलोमा विपरीताग्राः सर्पिषाऽक्ता घृताक्ता जुहुयात्। तन्मन्त्रमाह—ममेति। मम स्वभूते योषाग्नौ यौवनादिना समिद्धेऽहौषीः रेतो हुतवानसि। अतोऽपराधिनस्ते तव प्राणापानौ आददे इति मन्त्रमुच्चार्य फडित्युक्त्वा होमं कुर्यात्। अन्ते च असाविति आत्मनः शत्रोर्वा नाम गृह्णीयात्। तथा मम समिद्धेऽहौषी-रिति शत्रोरपराधं ज्ञापयित्वा पुत्रांश्च पशवश्च पुत्रपशवस्तान्पुत्रपशूंश्च अहमाददे इति पूर्ववद् द्वितीयाहुतिं हुत्वा अन्तेऽसाविति नाम गृह्णीयात्। तथा मम समिद्धेऽहौषीरित्यत इष्टासुकृते श्रौतस्मार्ते कर्मणी त्वदीये अहमाददे इति तृतीयामाहुतिं हुत्वाऽसावित्युच्चारयेत्। तथा मम समिद्धेऽहौषीरित्यत आशा प्रार्थना पराकाशः प्रतिज्ञा तस्या निष्पादि-तस्य कर्मणः प्रतीक्षा तौ आशापराकाशौ ते तवाऽऽददे इति चतुर्था-हुतिं हुत्वा असावित्युच्चारयेदिति। यथोक्ताभिचारकर्मद्वारा शापदान-फलमाह—स इति। एवंविन्मन्थकर्म विद्वान् प्राणदर्श्येव यं ब्राह्मणं शपति स वा एष ब्राह्मणो निरिन्द्रियो निर्गतेन्द्रियो विसुकृति विगत-पुण्यकर्मा सन्नस्माल्लोकात्प्रैति गच्छति। तस्मादुक्तवक्ष्यमाणहेतोः एवंवित् परदारगमने यथोक्तवक्ष्यमाणानिष्टवित् श्रोत्रियस्य दारेण सह नोपहास-मिच्छेत नर्मापि न कुर्यात् किमुताधोपहासम्। हि यस्मादुतैवंविदपि उक्तकर्मादिविच्छ्रोत्रियोऽपि परः शत्रुर्भवति, तस्मादिदं पापकर्म न कार्यमित्यर्थः॥ १२॥

एवं प्रासङ्गिकमिदमाभिचारिकं कर्मोक्त्वा इदानीं प्रकृतऋतुकाला-नुष्ठेयं व्रतकलापमाह—

> अथ यस्य जायामार्तवं विन्देत् त्र्यहं कँसेन पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात्। त्रिरात्रान्त आप्लुत्य व्रीही-नवघातयेत्॥ १३॥

अथ यदा यस्य मन्थविधिज्ञस्य जायाम् आर्तवमृतुभावो विन्देत्प्राप्नुया-त्तदा तस्य भार्या तदारभ्य त्र्यहं दिवसत्रयं कंसे कांस्यपात्रे न पिबेत् नाश्नीयात्। अहतवासा अनुपहतवासाश्च स्यात् स्नानोत्तरकाल इति बोध्यम्। एनां व्रतस्थां वृषलः शूद्रो नोपहन्यान्न स्पृशेत् वृषली तद्भार्या च

नोपहन्यात्। एवं त्रिरात्रान्ते चतुर्थेऽहनि प्रातःकाल आप्लुत्य स्नात्वा पूर्वोक्ताहतवस्त्रादिविशिष्टां व्रीहीनवघातयेत् चरुश्रपणार्थम् ॥ १३ ॥

तस्मिन्नेव दिवसे चरुहोमानन्तरं यथाकामं पक्त्वा भक्षणीयमिति क्रममभिप्रेत्य तथा भक्षणं तावदाह 'स य इच्छेदि'त्यारभ्य 'अथातः प्रातरेवे'त्यतः प्राक्तनेन—

स य इच्छेत् पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १४ ॥

मे मम पुत्रः शुक्लो बलदेववद्गौरः शुद्धो वा जायेत, एकं वेदमनुब्रुवीत पठेत, सर्वं शतवर्षप्रमितमायुरियादवाप्नुयादिति य इच्छेत्स क्षीरौदनं क्षीरेणौदनं स्वभार्ययैव पाचयित्वा सर्पिष्मन्तं घृताप्लुतं तमोदनं कृत्वा तौ दम्पती अश्नीयाताम्। ततश्च तौ यथोक्तपुत्रं जनयितवै जनयितुमीश्वरौ समर्थौ ॥ १४ ॥

अथ य इच्छेत् पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयिनवै ॥ १५ ॥

कपिलो वर्णतः पिङ्गलः पिङ्गलाक्षः। दध्योदनं पाचयित्वा दध्ना चरुं श्रपयित्वा ॥ १५ ॥

अथ य इच्छेत् पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन् वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १६ ॥

उदौदनम् उदक ओदनं पाचयित्वेति क्षीरादिव्यावृत्त्यर्थम् ॥ १६ ॥

अथ य इच्छेद दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥१७॥

दुहिता कन्या पण्डिता स्त्र्युचितगृहकर्मणि कुशला शास्त्रेऽनधिकारात् ॥ १७ ॥

अथ य इच्छेत् पुत्रो मे पण्डितो विजिगीथः समितिंगमः

शुश्रूषितां वाचं भाषिता जायेत सर्वान् वेदाननुब्रुवीत सर्व-मायुरियादिति माँसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाता-मीश्वरौ जनयितवा औक्ष्णेन वाऽऽर्षभेण वा ॥ १८ ॥

विविधं गीतो विजिगीथः प्रख्यातः समितिं विद्वत्सभां प्रति गच्छतीति समितिङ्गमः । शुश्रूषितां श्रोतुमीप्सितां वाचं वाणीं भाषिता जायेत । मांसमिश्रितमोदनं मांसौदनम् । तस्य नियममाह—औक्ष्णेन वाऽऽर्षभेण वेति । उक्षा रेतःसेचनसमर्थः पुङ्गवस्तदीयं मांसमौक्ष्णम् । ततोऽऽत्यधिकवया ऋषभस्तदीयं मांसमार्षभम् । एतच्च भिन्नदेशकालादिविषयम्, अत्र निषिद्धत्वात् । तत्स्थानेऽत्र मृगादिमांसं क्रीत्वा ग्राह्यम्[1] ॥ १८ ॥

---

१. अत्र यद्यपि सर्वैष्टीकाभाष्यकृद्भिः प्राय एष एवार्थोऽङ्गीकृतः, तथापि नैषः समञ्जसो भाति, वैद्यकशास्त्रविरुद्धत्वात् । चरकसंहितायां हि मांसाशनस्य गर्भोपघातकरत्वमुक्तम् । तथा हि—"गर्भोपघातकरास्त्विमे भावाः । तद्यथा, सर्वमतिगुरूष्णतीक्ष्णं दारुणाश्च चेष्टाः । ......न रक्तानि वासांसि बिभृयान्न मदकराणि चाद्यान्यभ्यवहरेन्न यानमधिरोहेत्, **न मांसमश्नीयात्**, सर्वेन्द्रियप्रतिकूलांश्च भावान् दूरतः परिवर्जयेत्, यच्चान्यदपि किञ्चित्स्त्रियो विद्युः । " ( चरक. शा० ४।१८) । अत एव नात्र मांसशब्दस्य पशुमांसे तात्पर्यम्, अपि तु ओषधिवनस्पतिमांसे, तत्रापि मांसशब्दस्य व्यवहारदर्शनात् । तद्यथा—'चूतफले पक्वे केशरमांसास्थिमज्जानः पृथक् पृथक् दृश्यन्ते ।' ( सुश्रुतसं० शा० ३।३२)

उक्षा ऋषभश्चौषधिविशेषौ । निघण्टुरत्नाकरे अष्टवर्गप्रकरणे ऋषभस्य गुणा एवं प्रकीर्तिताः—यथा, ऋषभो मधुरः शीतो गर्भसन्धानकारकः । शुक्रधातुकफानां च कारको बलदायकः ॥ वृष्यः पुष्टिकरः प्रोक्तः पित्तरक्तातिसारजित् । रक्तरुक्कृशतावातज्वरदाहक्षयापहः ॥'

भावप्रकाशकारेण भावमिश्रेणास्य उत्पत्तिस्थानमाकारश्चोक्तः । तथा हि—'जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ । रसो न कन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ ॥ जीवकः कूर्चकाकारः ऋषभो वृषशृङ्गवत् ।' प्राय एतादृग्गुणसंपन्न एव उक्षापि ।

वस्तुस्तु तृतीयब्राह्मणमारभ्य सर्वोऽयं सन्दर्भो कथमपि न उपनिषदन्तर्गत इति तु वयमन्यत्र सप्रपञ्चं प्रतिपादयितुमभिलषामः । अतो नात्राभिहितमिति ।

कदा पुनरित्थमोदनादि कर्तव्यमित्यत आह—

अथाभिप्रातरेव स्थालीपाकावृताऽऽज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोति। अग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति। प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षति। उत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां सञ्जायां पत्या सहेति ॥ १९ ॥

अथ चतुर्थदिवसे प्रातरेव सन्ध्याद्यनुष्ठानपूर्वकं भार्याकण्डिततण्डुलानादाय स्थालीपाकावृता स्थालीपाकविधिना आज्यं चेष्टित्वा संस्कृत्य। एतच्चर्वादिसंस्काराणामप्युपलक्षणम्। ततः स्थालीपाकस्योपघातमत्र कर्मणि षष्ठी। स्थालीपाकमुपहत्य उपहत्य स्वल्पं स्वल्पं गृहीत्वा प्रधानाहुतीर्जुहोति। तन्मन्त्रानाह—अग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति। एतत्प्रधानाहुतित्रयं हुत्वा स्विष्टकृदाहुतिं च पश्चात् स्थालीस्थं चरुशेषं पात्र उद्धृत्य सर्पिषाऽक्तं कृत्वा पतिः प्रथमं प्राश्नाति, प्राश्य च तदेवोच्छिष्टमितरस्याः पत्न्याः पत्न्यै प्रयच्छति। ततः पाणी हस्तौ प्रक्षाल्य शुद्धाचमनं कृत्वोदपात्रं पूरयित्वा तेनोदकेनैनां भार्यां त्रिस्त्रिवारमभ्युक्षति। तन्मन्त्रमाह—उत्तिष्ठेति। भो विश्वावसो गन्धर्व त्वमतो मद्भार्यातः सकाशादुत्तिष्ठ अन्यां कामपि प्रपूर्व्यां पीवरीं तरुणीं सह पत्या क्रीडमानामिच्छ। अहं पुनः स्वीयामिमां जायां समुपैमीति। मन्त्रपाठस्तु सकृदेवेत्यर्थः ॥ १९ ॥

अथैनामभिपद्यते। अमोऽहमस्मि सा त्वँ सा त्वमस्यमोऽहं सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि सँरभावहै सह रेतो दधावहै पुँसे पुत्राय वित्तय इति ॥ २० ॥

अथैवं गन्धर्वं प्रस्थाप्य यथाकामं क्षीरौदनादिभोजनानन्तरमेनां भार्यामभिपद्यते मन्त्रेण आलिङ्गयेत्। तन्मन्त्रमाह—अम इति। अहं पतिरमः प्राणोऽस्मि, त्वं सा वागसि। कथमावयोरुक्तरूपत्वमित्याशङ्कायां वाचः प्राणाधीनत्वं प्रसिद्धमित्यभिप्रेत्य सा त्वमस्यमोऽहमिति पुनर्वचनम्। तथाऽहं सामास्मि त्वं च ऋगसि। ऋक्पत्न्योः

गानावाच्यकर्मसमये सामपुरुषयोराधारत्वसामान्यात्। द्यौरहं जनकत्वात्। पृथिवी त्वं मातृत्वात्। तावावां संरभावहै संरम्भमुद्यमं करवावहै, एहि, त्वमागच्छ। कोऽसौ संरम्भः? सह मिलित्वा रेतो दधावहै रेतोधारणमावाभ्यां कार्यम् अयमेव संरम्भः। स किमर्थम्? पुंसे पुंस्त्वविशिष्टाय पुत्राय वित्तये लाभायेति ॥ २० ॥

अथास्या ऊरू विहापयति। विजिहीथां द्यावापृथिवी इति। तस्यामर्थं निष्ठाय मुखेन मुखँ्संधाय त्रिरेनामनुलोमामनुमार्ष्टि। विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिँ्शतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु। गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २१ ॥

अथाऽऽलिङ्गनानन्तरमस्याः पत्न्या ऊरू विहापयति विश्लेषयति। तन्मन्त्रमाह--विजिहीथामिति। हे द्यावापृथिवी ऊरूरूपे युवां विजिहीथां विश्लिष्टे भवेतमिति मन्त्रेणावकाशे कृते सति तस्यां योनावर्थं प्रजननेन्द्रियं निष्ठाय निक्षिप्य मुखेन मुखं सन्धाय अनन्तरमेनां भार्यामनुलोमां मूर्धानमारभ्य पादान्तं त्रिस्त्रिवारं पाणिना अनुमार्ष्टि मार्जनं कुर्यात्। तन्मन्त्रानाह—विष्णुरिति। विष्णुर्व्यापनशीलो भगवांस्तव योनिं कल्पयतु पुत्रोत्पत्तिसमर्थां करोतु। त्वष्टा सविता तव मे सुतस्य वा रूपाण्यवयवान् पिंशतु विभागशो दर्शनयोग्यान् करोतु। प्रजापतिर्विराडात्मा मदात्मना स्थित्वा त्वयि रेत आसिञ्चतु प्रक्षिपतु। धाता पुनः सूत्रात्मा ते तव गर्भं त्वदात्मना स्थित्वा दधातु धारयतु पुष्णातु। दर्शाहर्देवता सिनीवाली तस्या विशेषणं पृथुष्टुके पृथुर्विस्तीर्णा स्तुतिर्यस्याः सा पृथुष्टुका त्वदात्मना वर्तमाना तस्याः सम्बुद्धिः हे पृथुष्टुके सिनीवालि गर्भं धेहि धारय। अश्विनौ देवौ सूर्याचन्द्रमसौ। किंलक्षणौ? पुष्करस्रजौ स्वकीयरश्मिमालिनौ तव गर्भं मदात्मना स्थित्वा आधत्तां गर्भाधानं कुरुताम् ॥ २१ ॥

☞ हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ। तं ते गर्भं हवामहे दशमे मासि सूतये। यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी। वायुर्दिशां यथा गर्भं एवं गर्भं दधामि तेऽसाविति ॥ २२ ॥

ज्योतिर्मयी अरणी प्रागासतुर्याभ्यामरणीभ्यां पुराऽमृतरूपं गर्भमश्विनौ देवभिषजौ निर्मन्थतां मथितवन्तौ। तं तथाभूतं गर्भं ते तव जठरे हवामहे दधामहे दशमे मासि सूतये प्रसवार्थमित्यर्थः। एवमाधीयमानं गर्भं दृष्टान्तेन दर्शयति—यथेति। यथा पृथिव्यग्निगर्भा यथा वा द्यौर्द्युलोक इन्द्रेण सूर्येण गर्भिणी। यथा वा दिशां वायुर्गर्भ एवं गर्भं ते तव दधामि। असावहमिति स्वात्मनो नाम गृह्णाति भार्याया वाऽन्त इत्यर्थः॥ २२॥

सोष्यन्तीमद्भिरभ्युक्षति। यथा वायुः पुष्करिणीँ समिङ्गयति सर्वतः। एवा ते गर्भ एजतु सहावैतु जरायुणा। इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः। तमिन्द्र निर्जहि गर्भेण सावराँ सहेति॥ २३॥

प्रसवकाले सोष्यन्तीं प्रसवं प्राप्नुवतीं भार्यां भर्ता मन्त्राभ्यामद्भिः कृत्वाऽभ्युक्षति। तावाह—यथेति। यथाऽयं वायुः पुष्करिणीं तडागं सर्वतः समिङ्गयति स्वरूपोपघातमकृत्वा चालयति एवा एवमेव ते गर्भ एजतु चलतु जरायुणा गर्भवेष्टनचर्मणा मांसपेशीलक्षणेन सहावैतु निर्गच्छतु। इन्द्रस्य प्राणस्य गर्भस्य वाऽयं योन्यात्मको व्रजो मार्गः सार्गलः सर्गकाले गर्भाधानकाले वाऽर्गलया निरोधेन सह वर्तमानः कृतः सपरिश्रयः परिश्रमेण परिवेष्टनेन जरायुणा सहितः। तं मार्गं प्राप्य हे इन्द्र प्राण प्रसूतिमारुतात्मंस्त्वं गर्भेण सह निर्जहि निर्गच्छ निःसरणानन्तरं निर्गम्यमाना मांसपेशी सावरा तां च निर्गमयेत्यर्थः॥२३॥

जातेऽग्निमुपसमाधायाङ्क आधाय कँसे पृषदाज्यँ संनीय पृषदाज्यस्योपघातं जुहोति। अस्मिन्सहस्रं पुष्यासमेधमानः स्वे गृहे। अस्योपसन्द्यां मा च्छैत्सीत्प्रजया च पशुभिश्च स्वाहा। मयि प्राणाँस्त्वयि मनसा जुहोमि स्वाहा। यत्कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृद्विद्वान् स्विष्टँ सुहुतं करोतु नः स्वाहेति॥ २४॥

पुत्रे जाते सति पिता तमङ्क उत्सङ्ग आधाय संस्थाप्य अग्निमुपसमाधाय कंसे कांस्यापात्रे पृषदाज्यं दधिमिश्रितं घृतं संनीय अवस्थाप्य

पृषदाज्यस्योपघातं पृषदाज्यमुपहृत्य उपहृत्य स्वल्पं स्वल्पं गृहीत्वा जुहोति । तन्मन्त्रानाह—अस्मिन्निति । अस्मिन्स्वे गृहेऽहमेव पुत्ररूपेण एधमानो वर्तमानो मनुष्याणां सहस्रं पुष्यासमनेकपोषको भूयासम् । अस्य मत्पुत्रस्योपसन्द्यां सन्ततौ प्रजया पशुभिश्च सह श्रीर्मा च्छैत्सीत् मा विच्छिन्ना भूत् स्वाहेति होमः । मयि पितरि ये प्राणाः सन्ति तान्प्राणांस्त्वयि पुत्रे मनसा जुहोमि समर्पयामि स्वाहेति प्रधानं कर्म कृत्वा प्रकृतेन कर्मणा कृतेन यत् अत्यरीरिचमतिरिक्तं कृतवानस्मि । यद्वा इह कर्मणि किञ्चिन्न्यूनमकरमकरवं तत्सर्वं विद्वानग्निः स्विष्टं करोतीति स्विष्टकृद् भूत्वा स्विष्टमनधिकं सुहुतमन्यूनं च नोऽस्माकं करोतु स्वाहेति भावः ॥ २४ ॥

अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथ दधि मधु घृतँ संनीयानन्तर्हितेन जातरूपेण प्राशयति । भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥ २५ ॥

अथ स्विष्टकृद्धोमानन्तरमस्य शिशोर्दक्षिणं कर्णं पिता स्वमुखे निधाय त्रयीलक्षणा वाक्त्वयि प्रविशत्वित्यभिप्रायवान् वाग्वागिति त्रिवारं जपति । अथानन्तरं दधि मधु घृतं सन्नीय एकीकृत्य अनन्तर्हितेन वस्त्वन्तराव्यवहितेन जातरूपेण हिरण्येन प्राशयति 'भूस्त्वयि दधामी'त्यादिचतुर्भिर्मन्त्रैः प्रत्येकम् ॥ २५ ॥

अथास्य नाम करोति वेदोऽसीति । तदस्य तद्गुह्यमेव नाम भवति ॥ २६ ॥

अथानन्तरमस्य शिशोर्नाम करोति वेदोऽसीति वेदोऽनुभवः सर्वस्य निजं रूपं परमात्मलक्षणमसीति । तदेतन्नाम अस्य शिशोर्गुह्यं गोप्यं भवति ॥ २६ ॥

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति । यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकरिति ॥ २७ ॥

अथानन्तरमेनं स्वाङ्कस्थं पुत्रं तन्मात्रे प्रदाय तस्याः स्तनं पिता पुत्रस्य मुखे प्रयच्छति। तन्मन्त्रमाह--य इति। हे सरस्वति यस्ते स्तनः शशयः शयः कर्मफलं शेतेऽस्मिन्कर्तेति व्युत्पत्तेस्तेन सह वर्तत इति शशयः। यद्वा—शं सुखं तस्य हेतुभूतं शयः स्थितिः स्थानं स्तनोत्थानदेशरूपं यस्य स्तनस्य स शशयः। अस्मिन्पक्षे नाक्षरव्यत्यासः। मयः सुखं भूर्भावयतीति मयोभूः। यद्वा--मयोभूः सर्वप्राणिनां स्थितिहेत्वन्नरूपेण जातः। यो रत्नधा रत्नानां धनानां दाता। यद्वा—रत्नस्य रमणीयस्यान्नस्य पयसश्च धाता। वसु कर्मफलं तद्विन्दतीति वसुविद्यः। सुष्ठु ददातीति सुदत्रः कल्याणदः। येन स्तनेन विश्वा विश्वानि वार्याणि वरणीयानि देवादिभूतानि त्वं पुष्यसि तं स्तनं मदीयपुत्रस्य धातवे पानाय इह मदीयभार्यास्तने प्रविष्टा सत्यकरकरोः कृतवत्यसि प्रयच्छेति यावत्॥ २७॥

अथास्य मातरमभिमन्त्रयते। इलाऽसि मैत्रावरुणी (णि) वीरे वीरमजीजनत्। सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरदिति। तं वा एतमाहुरतिपिता बताभूरतिपितामहो बताभूः परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति॥ २८॥

अथानन्तरमस्य पुत्रस्य मातरमभिमन्त्रयते। तन्मन्त्रमाह--इलेति। इला भोग्याऽसि मित्रावरुणाभ्यां संभूतो मैत्रावरुणो वसिष्ठस्तस्य भार्या मैत्रावरुणी हे मैत्रावरुण्यरुन्धति वीरे पुरुषे मयि निमित्तभूते सति भवती वीरं पुत्रमजीजनत् जनितवती सा त्वं वीरवती जीवद्बहुपुत्रा भव या भवत्यस्मान् वीरवतः पुत्रसम्पन्नान् अकरदकरोत् कृतवतीति। एवं मन्त्रवद्गर्भाधानादौ कृते सति किं स्यादित्यत आह--तमिति। तं वा एतमुक्तविधिनोत्पन्नं पुत्रमाहुः। किम्? असौ पितरमतीत्य अभूर्वर्तत इत्यतिपिता बत विस्मयोऽभूः। तथा पितामहमतीत्य अभूवर्तत इत्यतिपितामहो बताभूः। कैरित्यत आह—श्रमि न। श्रिया लक्ष्म्या यशसा कीर्त्या ब्रह्मवर्चसेन ब्रह्मतेजसा च परमां काष्ठां बताहो प्रापदतिस्तुत्यो भवतीत्यर्थः। न केवलं पुत्र एव, अपि तु यस्यैवंविदो ब्राह्मणस्य पुत्रो जायते स पिताऽप्येवं स्तुत्यो भवतीति शेषः॥ २८॥

इति षष्ठाध्याये चतुर्थं ब्राह्मणम्॥ ४॥

अथ वँ्शः । पौतिमाषीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रः कौशिकीपुत्रात्कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥ १ ॥ आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्तभागीपुत्रादार्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः सांकृतीपुत्रात्सांकृतीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्र आलम्बीपुत्रादालम्बीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात्साञ्जीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः ॥ २ ॥ याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान्बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपा-

च्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वाग-
म्भिण्या अम्भिण्यादित्यादित्यानीमानि शुक्लानि यजूँषि
वाजसनेयेन याज्ञवल्क्येनाऽऽख्यायन्ते ॥ ३ ॥ समानमा
साञ्जीवीपुत्रात्साञ्जीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्ड-
व्यान्माण्डव्यः कौत्सात् कौत्सो माहित्थेर्माहित्थिर्वामकक्षा-
यणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः
कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बा-
यनस्तुरात्कावषेयात् तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो
ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ४ ॥

अथानन्तरं समस्तस्यैव प्रवचनस्य वंशो न खिलकाण्डमात्रस्य
तस्य सर्ववेदपरिशिष्टरूपत्वात्। अयं तु स्त्रीप्राधान्येनोच्यते स्त्री-
संस्कारार्थपुत्रमन्थकर्मसान्निध्यात्। समानमन्यत्। आदित्येन सूर्येण
प्रोक्तान्यादित्यानि। यद्वा—आदित्यात्महिरण्यगर्भात्मकानि। शुक्लानि
शुद्धानि। यद्वा-ब्राह्मणेनामिश्रितमन्त्रात्मकानि। यजूंषि वाजसनेयेन
याज्ञवल्क्येन आख्यायन्ते प्रकटीक्रियन्त इत्यर्थः। इदं त्वाचार्यपरम्परा-
कथनं सर्वासु वाजिशाखासु वेदाख्यब्रह्माऽऽरभ्य पाठव्युत्क्रमेण
आसाञ्जीवीपुत्रात्साञ्जीवीपुत्रपर्यन्तं समानम्। आदिमध्यान्तेषु कृतमङ्गला
ग्रन्थाः प्रचारिणो भवन्तीति शिक्षयितुमाह—ब्रह्मणे नम इति॥ १—४॥

इति षष्ठाध्याये पञ्चमं ब्राह्मणम् ॥ ५॥

॥ इति बृहदारण्यब्राह्मणे अष्टमोऽध्यायः॥

यः सद्भूनिलयस्त्रिकाण्डकषडध्यायप्रभेदस्फुरत्-
स्कन्धः सत्पदपल्लवालिविलसच्छाखामयब्राह्मणः।
ब्रह्मात्मैक्यफलः सुवाक्यकुसुमो वंशालवालाम्बुभाक्
संसेव्यः सततं बुधैः स बृहदारण्याख्यकल्पद्रुमः ॥ १ ॥
भाष्यवार्तिकतट्टीकामन्थन्याऽऽरण्यकं दधि।
विमथ्य बुद्धिरज्ज्वेदं नवनीतं समुद्धृतम् ॥ २ ॥
महतामाशयं बोद्धुं मादृशः कः क्षमो भवेत्।
तथाऽपि श्रद्धयाऽस्माभिः सारमेतत्समुद्धृतम् ॥ ३ ॥

यत्पादपद्ममकरन्दरसानभिज्ञा

विश्राममाविधिपदादपि सञ्चरन्तः।

न प्राप्नुवन्ति पशुकर्मरता धनेहा-

स्तस्मै नृसिंहवपुषे हरये नमस्ते ॥ ४ ॥

एकं यद्बीजमेतज्जनयति सकलं नोप्तमन्यैर्न सिक्तं

न क्लेद्यं नैव दाह्यं भवति न च पुनः कालतो यस्य नाशः।

यत्सत्तामात्रजीवी त्रिभुवनसुतरुर्भाति नानारसाढ्य-

स्तन्नः पायादपायात्सुखकरममलं श्रीनृसिंहाभिधानम् ॥ ५ ॥

नमस्तस्मै भगवते यतः सर्वमिदं जगत्।

जायते पाल्यते येन ह्रियते हरये नमः ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्य-
नित्यानन्दाश्रममुनिविरचितायां बृहदारण्यकोपनिषद्व्याख्यायां
मिताक्षराख्यायां षष्ठोऽध्यायः ।

*समाप्ता चेयं बृहदारण्यकोपनिषत्*



ॐ

॥ ॐ तत्सद्ब्रह्मणे नमः ॥

# कैवल्योपनिषत्

## दीपिकाख्यव्याख्यासमलंकृता



कैवल्याख्योपनिषदं कैवल्यार्थावबोधिनीम् ।
व्याख्यास्ये केवलस्तेन कैवल्यात्मा प्रसीदतु ॥ १ ॥

भगवती श्रुतीर्मातेव सुखप्रतिपत्त्यर्थं कञ्चन आश्वलायनमभिमुखीकृत्य आख्यायिकामवतारयति ब्रह्मविद्यायामास्तिक्यं जनयितुम्—

ॐ । अथाश्वलायनो भगवन्तं परमेष्ठिनं परिसमेत्योवाच ॥ १ ॥

अथ साधनचतुष्टयसम्पत्त्यनन्तरम् आश्वलायनः ऋग्वेदाचार्यः भगवन्तं पूजावन्तं परमेष्ठिनं सर्वोत्कृष्टस्थाननिवासं परिसमेत्य शास्त्रीयेण विधिना समीपमागत्य उवाच उक्तवान् ॥ १ ॥

अधीहि भगवो ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढाम् । ययाऽचिरात् सर्वपापं व्यपोह्य परात्परं पुरुषं याति विद्वान् ॥ २ ॥

अधीहि मदनुग्रहार्थं स्मर भगवो भगवन् हे समग्रधर्मज्ञानवैराग्यैश्वर्ययशःश्रीमन् । ब्रह्मविद्यां ब्रह्मणो देशकालवस्तुपरिच्छेदशून्यस्य विद्या बुद्धिस्तत्साक्षात्कारकारणं तां वरिष्ठाम् अतिशयेन श्रेष्ठां सदा नित्यं सद्भिः देहादिष्वात्मबुद्धिशून्यैः सेव्यमानां हृदये ध्रियमाणां निगूढां सर्वभूतेष्वात्मनो ( नि ? ) विद्यमानामप्यविद्यया नितरां संवृतां यथा ब्रह्मविद्यया अचिराददीर्घेण कालेन सर्वं पापं निखिलदुःखकारणमज्ञानं संस्कारं च व्यपोह्य विविधं परित्यज्य विनाश्येत्यर्थः । परात्सर्वजगत्कारणात् परमुत्कृष्टमज्ञानाश्रयविषयत्वाभ्यां परिपूर्णं पुरुषं याति

उपैति प्राप्नोति विद्वानहमेव सोऽस्मीति साक्षात्कारवान् ॥ २ ॥

तस्मै स होवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवेहि ॥ ३ ॥

एवं पृष्टस्तस्मै स्वशिष्याय ब्रह्मविद्यार्थिने सः गुरुः सर्वज्ञः ह किल उवाच उक्तवान् पितामहश्च जगत्पितॄणां दक्षादीनां पिता पितामहः कमलासनः। चकारोऽपिकारार्थः। स पितामहोऽप्युवाच न तु उपेक्षां कृतवानित्यर्थः। ब्रह्मविद्यायाः साक्षाद्वक्तुमशक्यत्वात्तदर्थस्य ब्रह्मणो वाङ्मनसातीतत्वात्। अतः सोपायान्तरमाह—श्रद्धेति। श्रद्धा आस्तिक्यबुद्धिः। भक्तिः भजनं तदेकतात्पर्यबुद्धिः। ध्यानं विजातीयप्रत्ययशून्यसजातीयप्रत्ययप्रवाहः। एतेषां योग सम्बन्धः तत्कारणमिति यावत्। तस्मादवेहि जानीहि ॥ ३ ॥

इदानीं यथा श्रद्धाभक्तिध्यानयोगो ब्रह्मविद्यायां कारणं तद्वत् संन्यासोऽपीत्याह—

न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ॥ ४ ॥

न कर्मणेति। श्रौतेन स्मार्तेन वा कर्मणा न प्रजया पुत्रादिना धनेन दैवेन मानुषेण वा वित्तेन नेति पूर्वमनुषज्यते। अमृतत्वमिति वक्ष्यमाणानुषङ्गः कर्मप्रजाधनपदेष्वनुगन्तव्यः। त्यागेन निखिलश्रौतस्मार्तकर्मपरित्यागेन परमहंसाश्रमरूपेण एके महात्मानः अमृतत्वम् अविद्यादिमरणभावराहित्यमानशुः आनशिरे प्राप्ताः ॥ ४ ॥

एवं कृते संन्यासे—

परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ॥ ५ ॥

परेण परस्मान्नाकं कं सुखं तद्विरोधि दुःखम् अकम्, न अकं विद्यते यस्मिन्स नाकस्तं स्वर्गस्योपरीत्यर्थः। अथवा परेण परं नाकमानन्दात्मानम्। निहितं प्रक्षिप्तं धात्रा गुहायां बुद्धौ विभ्राजते विशेषेण स्वयं प्रकाशत्वेन प्रदीप्यते यत्प्रसिद्धं विश्वव्यापिस्वरूपं यतयः कृतसंन्यासाः प्रयत्नवन्तो ब्रह्मसाक्षात्कारसंपन्ना विशन्ति प्रविशन्ति इदं वयं स्म इति साक्षात्कारेण तदेव भवन्तीत्यर्थः ॥ ५ ॥

यतीनां विशेषणान्याह—

वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्त्वाः।

ते ब्रह्मलोकेषु परान्तकाले

परामृतात्परिमुच्यन्ति सर्वे ॥ ६ ॥

वेदान्तेति । वेदान्तविज्ञानसुनिश्चितार्थाः वेदान्ताः प्रसिद्धाः तेभ्यो जातं विशिष्टम् अहं ब्रह्मास्मीति ज्ञानं तस्मिन्नेव सुनिश्चितोऽर्थः प्रयोजनं येषां ते । यद्वा–सुनिश्चित इदमित्थमेवेति सम्यगवधारितो ब्रह्मलक्षणोऽर्थो यैस्ते वेदान्तविज्ञानसुनिश्चितार्थाः । संन्यासयोगात् सम्यग्वान्तविष्ठादिवल्लोकद्वयभोगस्य न्यासः त्यागः संन्यासः, तस्य योगोऽहं संन्यास्यस्मीति बोधस्तस्मात् । यतयः व्याख्यातम्, पुनरादानं विशेषणकथनार्थम् । शुद्धसत्त्वाः शुद्धं रागद्वेषादिकषायरहितं सत्त्वमन्तःकरणं येषां ते शुद्धसत्त्वाः । एवंभूता अपि कुतश्चित्प्रतिबन्धादस्मिन् शरीरेऽनुत्पन्नसाक्षात्काराश्चेत्तदा उक्ता यतयः ब्रह्मलोकेषु ब्रह्मणः कार्यस्यैक एव लोकोऽनेकभूमिप्रासादवत् अधउपर्यादिविभागेनावस्थिता बहव एतेन अभिधीयन्ते तेषु ब्रह्मलोकेषु । परान्तकाले परस्य कार्यब्रह्मणोऽन्तकालो विनाशकालो द्विपरार्धावसानः परान्तकालस्तस्मिन् परामृतात् उत्कृष्टादमृतादमरणधर्मिणोऽव्याकृतात् परिमुच्यन्ति परिमुच्यन्ते सर्वतो विमुक्ता भवन्ति सर्वे निखिलाः ॥ ६ ॥

इदानीं ब्रह्मज्ञानावाप्त्यर्थम् उपासनाकर्तुः उपवेशनार्थं देशविशेषादिकमाह –

विविक्तदेशे च सुखासनस्थः

शुचिः समग्रीवशिरःशरीरः ।

अत्याश्रमस्थः सकलेन्द्रियाणि

निरुध्य भक्त्या स्वगुरुं प्रणम्य ॥ ७ ॥

विविक्तदेशे चैकान्तप्रदेशे । चशब्दादव्याकुलकालेऽपि। सुखासनस्थः सुखमनुद्वेगकरं दर्भाद्यासनं सुखासनं तस्मिंस्तिष्ठतीति सुखासनस्थः । शुचिः बहिरन्तःशौचवान् । समग्रीवशिरःशरीरः समानि समानानि ग्रीवा च शिरश्च शरीरं च यस्य सः समग्रीवशिरःशरीरः ऋजुकायः । पद्मस्वस्तिकाद्यासनस्थ इत्यर्थः । अत्याश्रमस्थः अत्यधिकः ब्रह्मचारिगृहस्थवानप्रस्थकुटीचकबहूदकहंसेभ्य आश्रमः परमहंसलक्षणोऽत्याश्रमः, तस्मिंस्तिष्ठतीत्यत्याश्रमस्थः । सकलेन्द्रियाणि निखिलानि समनस्कानि ज्ञानकर्मेन्द्रियाणि निरुध्य स्वस्वप्रचारेभ्योऽवरुध्य । भक्त्या देववद्देवा-

धिक्याद्वा स्वगुरुं स्वस्य तत्त्वमसीत्यर्थस्यावबोधकं प्रणम्य प्रकर्षेण नत्वा इत्यर्थः ॥ ७ ॥

अनन्तरम्—

हृत्पुण्डरीकं विरजं विशुद्धं
विचिन्त्य मध्ये विशदं विशोकम् ।
अचिन्त्यमव्यक्तमनन्तरूपं
शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥ ८ ॥

हृत्पुण्डरीकं हृदयकमलं पञ्चच्छिद्रादिविशेषणं विरजं विरजस्कमपगतरागद्वेषादिकं विशुद्धं विगतसमस्तदुःखादिदोषं विचिन्त्य विशेषेण ध्यात्वा। मध्ये हृदयपुण्डरीकस्यान्तः विशदं निर्मलं शुद्धस्फटिकसंकाशमित्यर्थः । विशोकं विगतशोकजदुःखं विशोकम् । आनन्दपूर्णहृदयं स्मिताननं चेत्यर्थः । वस्तुतस्तु अचिन्त्यं वाङ्मनसातीतत्वेन प्रत्ययसन्तत्यविषयम् । वाङ्मनसातीतत्वे हेतुः अव्यक्तम् । शब्दाद्यशेषविषयशून्यत्वादस्पष्टमव्यक्तम् असत्त्वं परिच्छेदं च वारयति । अनन्तरूपं न विद्यतेऽन्तः इयत्ता रूपाणां शरीराणां यस्य सोऽनन्तरूपस्तं देशकालवस्तुपरिच्छेदशून्यमनन्तं शिवं मङ्गलरूपं प्रशान्तम् अविद्यादिदोषरहितम् अमृतं कालत्रयासंस्पृष्टममृतवत् वा निरतिशयानन्दरूपत्वेन । ब्रह्म बृहत् सर्वस्मादधिकं योनिं जगज्जन्मादिकारणं यथैतद्विशेषणजातं तद्वत् स्वरूपमपि ॥ ८ ॥

तमादिमध्यान्तविहीनमेकं
विभुं चिदानन्दमरूपमद्भुतम् ।
उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥ ९ ॥

तं ब्रह्मात्मानम् आदिमध्यान्तविहीनम् उत्पत्तिपरिच्छेदविनाशवर्जितम् । तत्र हेतुः एकं द्वितीयवस्तुमात्ररहितं विभुं समर्थं व्यापिनं वा चिदानन्दं स्वयं प्रकाशमाननिरतिशयानन्दम् अरूपं चिदानन्दव्यतिरिक्तस्वरूपरहितम् ततः अद्भुतमाश्चर्यकरम् उमासहायम् उमा ब्रह्मविद्या भवानी वा सहायः कामादिपाटच्चररत्नकोऽर्धनारीशरीरत्वेन वामाङ्गस्थोत्तम-

युवतीरूपत्वेन वा यस्य स उमासहायः तम्। परमेश्वरमुत्कृष्टं ब्रह्मादिनियन्तारं प्रभुं समर्थं त्रिलोचनं त्रीणि सोमसूर्याग्न्यात्मकानि लोचनानि यस्य स त्रिलोचनस्तं नीलकण्ठं कृष्णकण्ठं प्रशान्तं प्रसन्नवदनेन्द्रियम् ॥ ९ ॥

ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिणं तमसः परस्तात्।
स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥ १० ॥

ध्यात्वा सजातीयप्रत्ययप्रवाहेण साक्षात्कृत्य मुनिर्मननशीलः गच्छति प्राप्नोति भूतयोनिम् आकाशादिमहाभूतकारणम्। तर्हि किं कारणोपाधिकमेव यातीत्याशङ्क्य नेत्याह--समस्तसाक्षिणं सर्वबुद्धिप्रचारद्रष्टारम्। साक्षित्वमपि न केवलस्येत्यत आह--तमसः आवरणविक्षेपशक्तिरूपाया अविद्यायाः परस्तात् परतः अविद्यासम्बन्धशून्य इत्यर्थः। उमासहायोपासनातः प्राप्नोत्यविद्यायाम्। विद्यादशायां सर्वात्मेत्याह--स उक्तः ब्रह्मा प्रथमशरीरी कार्यकारणभूतः, स उक्तः शिव उमासहायः। सेन्द्रः स उक्तः इन्द्रः त्रिलोकीपतिः। स उक्तः अक्षरः विनाशरहितः परम उत्कृष्टः। स्वराट् अन्यानपेक्षत्वेन स्वयमेव राजत इति स्वराट् ॥ १० ॥

स एव विष्णुः स प्राणः स कालाग्निः स चन्द्रमाः। स
एव सर्वं यद्भूतं यच्च भाव्यं सनातनं ज्ञात्वा तं
मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ ११ ॥

स एवोक्त एव विष्णुः व्यापनशीलः शङ्खचक्रगदाधरः। स उक्तः प्राणः प्राणादिपञ्चवृत्तिरूपः। स उक्तः कालाग्निः कालरूपी वैश्वानरः। स उक्तश्चन्द्रमाः शशाङ्कः। स एव उक्त एव सर्वं निखिलं यत्प्रसिद्धं भूतमतीतं यच्च यदपि भाव्यं भावि चकाराद्वर्तमानमपि। सनातनं चिरन्तनं ज्ञात्वाऽहं ब्रह्मास्मीति साक्षात्कृत्य तमुक्तमानन्दात्मानं मृत्युमविद्यां ससंस्कारामत्येति अतीत्य गच्छति। नान्य उक्तादुक्तज्ञानान् व्यतिरिक्तः पन्था मार्गः विमुक्तये विमुक्त्यर्थं नास्तीति शेषः। यद्वा--त्रयाणां विश्वतैजसप्राज्ञानां विराड् हिरण्यगर्भेश्वराणां वा स्वयंप्रकाशत्वेन लोचनं प्रकाशस्वरूपं त्रिलोचनं नीलकण्ठं नीलं तमोऽज्ञानं कण्ठे कण्ठवच्चिदेकदेशेऽधिकव्याप्तिमत्त्वेन चैतन्यस्य वर्तते यस्य स नीलकण्ठस्तमिति व्याख्यातम्। तथा विशदमविद्यारहितं विशोकं दुःखसंस्काररहितम् उमासहायं ब्रह्मविद्यासहायं प्रशान्तं पुनरुत्थानसंस्कार-

वर्जितमिति निर्गुणपरत्वेन समग्रं वाक्यमवगन्तव्यं निर्गुणस्याप्युपलब्धत्वेन हृदयप्रदेशमध्यस्थत्वमविरुद्धम्। तथा च ध्यात्वा मनननिदिध्यासने कृत्वेत्येतदप्युपपन्नमेव ॥ ११ ॥

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
संपश्यन् ब्रह्म परमं याति नान्येन हेतुना ॥ १२ ॥

सर्वभूतस्थं निखिलेषु स्थावरजङ्गमेषु तिष्ठतीति सर्वभूतस्थस्तम्। आत्मानमस्मत्प्रत्ययव्यवहारयोग्यम्। सर्वभूतानि च निखिलानि स्थावरजङ्गमानि सर्वभूतानि। चकार आधाराधेयभावव्युत्क्रमार्थः। आत्मनि आनन्दात्मन्यहंप्रत्यययोग्ये संपश्यन् सम्यक् संशयविपर्ययमन्तरेण अवलोकयन् ब्रह्म बृहत् देशकालवस्तुपरिच्छेदशून्यं परममुत्कृष्टमनुपचरितमित्यर्थः। याति प्राप्नोति। न यातीति देहलीप्रदीपन्यायेन सम्बध्यते। न याति न प्राप्नोति अन्येन उक्तबाधव्यतिरिक्तेन हेतुना कारणेन ॥ १२ ॥

ध्यात्वा गच्छतीत्यस्य व्याख्यानं ज्ञात्वा तमित्यादि। नान्यः पन्था विमुक्तये इत्यस्य व्याख्यानमिदं सर्वभूतस्थमित्यादि। यदा त्वेवं ज्ञानं नोत्पद्यते तदा तदुत्पादने उपायमाह—

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
ज्ञाननिर्मथनाभ्यासात्पाशं दहति पण्डितः ॥ १३ ॥

आत्मानमन्तःकरणम् अरणिं वह्निजनकं मन्त्रसंस्कृतं काष्ठं कृत्वाऽधो विधाय अधरारणित्वेन चिन्तयित्वेत्यर्थः। प्रणवं ओंकारमुत्तरारणिम् उत्तरारणिमपि। चकारः कृत्वेत्येतदनुवृत्त्यर्थः। ज्ञाननिर्मथनाभ्यासात् ज्ञानस्य सर्वात्मकोऽहमस्मीत्येवंरूपस्य निर्मथनं युक्तिभिर्विलोडनं तस्याभ्यास आवृत्तिरूपो ज्ञाननिर्मथनाभ्यासस्तस्मात् उत्पन्नेन अहं ब्रह्मास्मीति साक्षात्काराग्निना पाशं आत्मनो बन्धनरूपमज्ञानरज्जुरचितम् अहंममादिग्रन्थिं दहति भस्मीकरोति पण्डितः पण्डा अहं ब्रह्मास्मीति बुद्धिस्तामितः प्राप्तः पण्डितः ॥ १३ ॥

नन्वस्य असङ्गस्योदासीनस्याद्वितीयस्य कुतः संसारः पाशरूप इत्यत आह—

स एव मायापरिमोहितात्मा
शरीरमास्थाय करोति सर्वम्।

स्त्रियान्नपानादिविचित्रभोगैः

स एव जाग्रत् परितृप्तिमेति ॥ १४ ॥

स एवोक्तोऽसङ्गोदासीन एव न त्वन्यः। मायापरिमोहितात्मा माया विद्याऽऽवरणविक्षेपकरी शक्तिः तया परिमोहित आत्मा स्वयंप्रकाश आनन्दात्मा स्वस्वरूपो यः स मायापरिमोहितात्मा। शरीरं स्थूलादि-भेदभिन्नं मनुष्यादिकलेवरम्। आस्थाय अहं मनुष्य इत्याद्यभिमानेन आसमन्तात् स्वीकृत्य करोति सर्वं निखिलं व्यापारजातं कुरुते। स्त्रियान्न-पानादिविचित्रभोगैः स्त्रियो मनोऽनुकूला युवतयोऽन्नपाने मनोऽनुकूले। आदिशब्देन वसनाच्छादनादीनि मनोऽनुकूलानि तैः स्त्र्यन्नपाना-दिभिर्विचित्रैर्भोगैः। स्त्रियेति च्छान्दसम्। स एव मायापरिमूढ एव न त्वन्यः जाग्रज्जागरणमिन्द्रियैर्बाह्यविषयोपलब्धिरूपं कुर्वन् परितृप्तिं सर्वतो विषयसुखजां तृप्तिमेति गच्छति सुखं दुःखं च प्राप्नोती-त्यर्थः ॥ १४ ॥

इदानीं स्वप्नसुषुप्त्योर्विक्षेपतदभावकथनेन संसारमोक्षयोरर्थाद् दृष्टान्तमाह—

स्वप्ने स जीवः सुखदुःखभोक्ता

स्वमायया कल्पितविश्वलोके।

सुषुप्तिकाले सकले विलीने

तमोऽभिभूतः सुखरूपमेति ॥ १५ ॥

स्वप्ने इन्द्रियग्रामोपरमरूपायां स्वप्नावस्थायां स जीवः प्राणानां धारयिता विविधविषयवासनावासितः सुखदुःखभोक्ता अहं सुख्यहं दुःखी-त्येवंरूपप्रत्ययवान् सुखदुःखभोक्ता। तत्र संसारस्य दृष्टान्तेन वास्त-वत्वं वारयति—स्वमायया स्वस्य तत्तद्देहाभिमानिनो मायाऽज्ञानं विप-रीतज्ञानं च तया कल्पितविश्वलोके कल्पिते वासनारूपे विश्वस्मिन् रथरथयोगपन्थादिकनिखिलभुवने लोके वने जने च कल्पितविश्व-लोके स्वप्ने यथा तद्वज्जागरेऽपीत्यर्थः। सुषुप्तिकाले आनन्दभोगाव-सरे सकले निखिले विलीने विशेषविज्ञाने स्वकारणे लयङ्गते। एता-वान्सुषुप्तौ मोक्षे च समो न्यायः। को विशेषः? इयांस्तु विशेषः—तमोऽभिभूतः अज्ञानावृतः सुखरूपं स्वप्रकाशमानमानन्दात्मस्वरूपमेति गच्छति ॥ १५ ॥

पुनश्च जन्मान्तरकर्मयोगात्

स एव जीवः स्वपिति प्रबुद्धः ।

पुरत्रये क्रीडति यश्च जीव-

स्ततस्तु जातं सकलं विचित्रम् ॥ १६ ॥

पुनश्च आनन्दात्मस्वरूपं प्राप्य भूयोऽपि जन्मान्तरकर्मयोगात् प्राग्भवीयकर्मानुसारात् स एवानन्दात्मस्वरूपं प्राप्त एव सुषुप्तं गतो न त्वन्यो जीवः प्राणावधारकः स्वपिति स्वप्नाऽवस्थानं गच्छति सुषुप्त्यवस्थानात् । अथवा प्रबुद्धः प्रबोधं जागरणं प्राप्तो भवतीति शेषः । इदानीं जीवब्रह्मणोरैक्यमाह—पुरत्रये स्थूलसूक्ष्माऽज्ञानाख्ये शरीरत्रये क्रीडति विहरति यश्च जीवः । चकार एवकारार्थः । प्रसिद्धः परमात्मैव प्राणधारकः । ततस्तु तस्मादेव जीवाभिन्नो न त्वन्यः । तस्माज्जातमुत्पन्नं सकलं निखिलं विचित्रं विविधकर्मनामरूपं विश्वम् ॥ १६ ॥

आधारमानन्दमखण्डबोधं

यस्मिन् लयं याति पुरत्रयं च ॥ १७ ॥

आधाररज्जुरिव सर्पधारावलीवर्दमूत्रितत्वादेः सकलस्य विश्वस्य आधारभूतम् आनन्दं निरतिशयानन्दस्वरूपम् अखण्डबोधमानन्दरूपत्वेऽपि स्वयंप्रकाशैकस्वभावं यस्मिन्नखण्डबोधे लयं विनाशं याति गच्छति । पुरत्रयं च व्याख्यातम् । चशब्दादन्यदपि ॥ १७ ॥

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।

खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी ॥ १८ ॥

एतस्मात् पुरत्रयाधिष्ठानाद् बुद्धेर्द्रष्टुर्जायते उत्पद्यते प्राणः क्रियाशक्तिः । मनोऽन्तःकरणं ज्ञानशक्तिः । सर्वेन्द्रियाणि च सर्वज्ञानकर्मेन्द्रियाण्यपि । चशब्दाद् देहादिकमपि । खं नभः शब्दगुणवत् । वायुर्नभस्वान् । ज्योतिः तेजोधातुः । आपः नीराणि । पृथिवी भूमिः विश्वस्य निखिलस्य स्थावरजङ्गमात्मकस्य प्राणिजातस्य धारिणी विश्वधारिणी ॥ १८ ॥

इदानीं महावाक्यार्थमाह—

यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।

सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥ १९ ॥

यत्प्रसिद्धं परमुत्कृष्टं ब्रह्म बृहत् देशकालवस्तुपरिच्छेदशून्यं सर्वात्मा सर्वप्राणिस्थितः सर्वानन्यश्च विश्वस्य सर्वस्य कार्यकारणजातस्य आयतनम् आधारभूतं महतो ... धारत्वेनैव सूक्ष्मादणुपरिमाणात्सूक्ष्मतरं महदप्यतिशयेनाणुः नित्यं विनाशशून्यं तदुक्तं परं ब्रह्म त्वमेव तदवगन्तैव न त्वन्यत्। ननु तन्मत्तोऽन्यदहं तस्मादन्यः मयि कर्तृत्वादिविशेषोपलम्भादित्यत आह—त्वमेव तत्। त्वं कर्ता भोक्ताऽविद्यया वस्तुतः परं ब्रह्मैव न त्वन्यः ॥ १९ ॥

इदानीमेवंज्ञाने फलमाह—

> जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते ।
> तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ २० ॥

जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं जाग्रत्स्वप्नसुषुप्तय उक्तास्तदादयो विश्वविराडादयस्ते एव प्रपञ्चो जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चस्तं यत्प्रसिद्धं स्वयं प्रकाशते प्रकाशयति। तदुक्तं स्वयंप्रकाशं ब्रह्म सत्यज्ञानादिलक्षणम्। अहं ब्रह्मावगन्ता चिदानन्दात्मा इत्यनेन प्रकारेण ज्ञात्वा साक्षात्कृत्य सर्वबन्धैः निखिलबन्धैरहंममाद्यैश्च सकारणैः प्रमुच्यते प्रकर्षेण मुक्तो भवतीति ॥ २० ॥

इदानीं सर्वस्मात्प्रपञ्चाद्वैलक्षण्यमाह स्वस्य—

> त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
> तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥ २१ ॥

त्रिषु जागरणस्वप्नसुषुप्तिषु धामसु स्थानेषु यत्प्रसिद्धं भोग्यं स्थूलप्रविविक्तानन्दरूपं भोक्ता विश्वतैजसप्राज्ञाख्यः भोगश्च स्थूलप्रविविक्तानन्दभोगोऽपि। चशब्दादाधिदैवादिविभागोऽपि यद्यथोक्तं त्रिधाम भोग्यादिप्रपञ्चजातं भवेत् स्यात्स्पष्टम्। तेभ्यस्त्रिधामादिभ्यो विलक्षणः विपरीतलक्षणः। वैलक्षण्यमाह—साक्षी स्वाध्यस्तस्य विश्वस्य द्रष्टा चिन्मात्रश्चिदेकरसः अहम् अहंप्रत्ययव्यवहारयोग्यः। सदाशिवः कैवल्यात्मा नित्यकल्याणरूपो महेश्वरः ॥ २१ ॥

प्रपञ्चवैलक्षण्यं स्वस्योक्त्वा इदानीं जगज्जन्मादिकारणत्वमपि स्वस्याह—

> मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
> मयि सर्वं लयं याति तद् ब्रह्माद्वयमस्म्यहम् ॥ २२ ॥

मय्येव मत्त एव ब्रह्माभिन्नान्न त्वन्यस्मात् सकलं निखिलं भूतभौतिक-प्रपञ्चजातं जातमुत्पन्नम्। मयि ब्रह्माभिन्ने सर्वं निखिलं विश्वं प्रतिष्ठितं प्रकर्षेण स्थितं प्राप्तम्। मयि सर्वं व्याख्यातं लयं याति विनाशं गच्छति। तत्तस्मात् सर्वजगज्जन्मस्थितिध्वंसकारणत्वात् ब्रह्म बृहत् देशकालवस्तुपरिच्छेदशून्यम् अद्वयं ज्ञातृज्ञेयादिविभागशून्यं अस्मि भवामि अहं ब्रह्मणोऽवगन्ता ॥ २२॥

ब्रह्मणो जगज्जन्मस्थितिध्वंसकारणत्वाज्जगदाकारत्वेन विकारित्वं प्राप्तम्। तदेतदतिदुर्बोधस्वरूपत्वेन वारयति—

अणोरणीयानहमेव तद्वत्

महानहं विश्वमिदं विचित्रम्।

पुरातनोऽहं पुरुषोऽहमीशो

हिरण्मयोऽहं शिवरूपमस्मि ॥ २३ ॥

अणोरणुपरिमाणात् अणीयान् अतिशयेनाणुः जगत्कारणभूतोऽहमेव अहंप्रत्ययव्यवहारयोग्यो न त्वन्यः। तद्वत् यथाणुस्तथा महान् सर्वस्मादधिकः अहं व्याख्यातम्। अणीयसां महतां कारणानां च यथा भेदः तथा वापि स्यादित्यत आह—विश्वमिदं साविद्यं भूतभौतिकप्रपञ्चजातमहं व्याख्यातम्। अस्य जगतस्तत्त्वाद्भेदराहित्ये स्वस्मादप्यभेदः स्यादित्यत आह—विचित्रं विविधं स्वयमनन्तभेदवदित्यर्थः। तदभिन्नस्य तस्य तथाप्याधुनिकत्वं स्यादित्यत आह—पुरातनश्चिरन्तनः आधुनिकसर्पधारावलीवर्दसूत्रितत्वाद्यभिन्ना चिरन्तनी रज्जुरिवाहं व्याख्यातम्। पुरुषः परिपूर्णो वस्तुतोऽहं व्याख्यातमविद्यादशायामीशः नियन्ता। नियन्तृत्वे सामर्थ्यमाह—हिरण्मयः ज्ञानप्रचुरः तत्प्रधानो वाऽऽदित्यस्थः सर्वकार्यकारणात्माऽहं व्याख्यातम्। शिवरूपं मङ्गलस्वरूपं ब्रह्मास्मि भवामि ॥ २२ ॥

इदानीं सर्वकरणहीनस्य सर्वज्ञतां स्वस्याह—

अपाणिपादोऽहमचिन्त्यशक्तिः

पश्याम्यचक्षुः स शृणोम्यकर्णः।

अहं विजानामि विविक्तरूपो

न चास्ति वेत्ता मम चित्सदाहम् ॥ २४ ॥

अपाणिपादः पाणिपादहीनः अहं व्याख्यातमचिन्त्यशक्तिः दुर्बोधशक्तिः एवंभूतोऽपि जवनो ग्रहीतेत्यर्थः। पश्यामि विविधं प्रपञ्चजातमवगच्छामि अवलोकयामि। अचक्षुश्चक्षुर्हीनः सः अचक्षुर्द्रष्टा। शृणोमि श्रवणं करोमि अकर्णः कर्णरहितम्। अहं व्याख्यातं विजानामि विविध प्रपञ्चजातमवगच्छामि। विविक्तरूपः बुद्ध्यादिपृथग्रूपः न चास्ति नास्त्येव वेत्ता कर्मकर्तृभावेन अवगन्ता समानन्दात्मतो भेदरहितस्य चित्स्वयंप्रकाशबोधस्वभावः सदा सर्वदाऽहं व्याख्यातम्॥ २४॥

इदानीं सर्वशास्त्रप्रतिपाद्यस्याऽऽत्मनः सर्वविकाराभावं दर्शयति—

वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्॥ २५॥

वेदैः ऋगादिभिरनेकैर्बहुभिरहमेव व्याख्यातम्। वेद्यः प्रतिपाद्यः। वेदान्तसूत्रकृद्वेदव्यासरूपः वेदविद्वेदान्तकृतो विशेषणम्। वेदानां साङ्गानां सांख्यविद्यास्थानानां वेत्ता वेदवित् स एव न त्वन्यः। चशब्दादनेकतपःसंपन्नश्चाहं व्याख्यातम् अनेकविभूतिमत्सत्त्वेष्विदमेव प्रधानमित्युक्तम्॥ २५॥

न पुण्यपापे मम नास्ति नाशो
न जन्मदेहेन्द्रियबुद्धिरस्ति।
न भूमिरापो मम वह्निरस्ति
न चानिलो मेऽस्ति न चाम्बरं च॥ २६॥

न पुण्यपापे मम न स्पृशत इति शेषः। नास्ति नाशः विनाशो न विद्यते ममेत्यनुषङ्गः। न जन्म जनिर्न ममास्तीत्यनुषङ्गः। देहेन्द्रियबुद्धिः देहश्चेन्द्रियाणि च बुद्धयश्च देहेन्द्रियबुद्धिर्नास्ति न विद्यते ममेत्यनुषङ्गः। न भूमिरापो मम पृथिवी सोदका मम नास्तीत्यनुषङ्गः। वह्निः प्रसिद्धः नास्ति न विद्यते ममेत्यनुषङ्गः। न चानिलो मेऽस्ति वायुरपि मम न विद्यते। चकाराद्वायवीयकार्यमपि न। न चाम्बरं चाकाशमपि मम नास्तीत्यनुषङ्गः। चकारद्वयमाकाशकार्यतद्व्यतिरिक्ताऽनुक्ताभावार्थम्॥ २६॥

एवं विदित्वा परमात्मरूपं
गुहाशयं निष्कलमद्वितीयम्।

समस्तसाक्षिं सदसद्विहीनं
प्रयाति शुद्धं परमात्मरूपम् ॥ २७ ॥

एवं उक्तप्रकारेण विदित्वा साक्षात्कृत्य परमात्मरूपम् उत्कृष्टानन्दात्मस्वरूपम् गुहाशयं बुद्धिशयानं निष्कलं निर्गताः कलाः—१–४. प्राणः श्रद्धा खं वायुः, ५–८. ज्योतिरापः पृथिवीन्द्रियम्, ६–१०. मनोऽन्नम्, ११–१२. वीर्यं तपः, १३–१६. मन्त्राः कर्म लोका नाम इति प्रश्नोक्ताः कला यस्मात्तम्। अद्वितीयं सजातीयविजातीयवस्तुशून्यं समस्तसाक्षिं समस्तसाक्षिणं सर्वद्रष्टारं सदसद्विहीनं भावाभावविवर्जितं तदेव निरवद्यं गच्छतीत्याह—प्रयाति शुद्धं परमात्मरूपं स्पष्टम् ॥ २७ ॥

एवंभूतं परमात्मानं प्रतिपत्तुमशक्त्या अशुद्धान्तःकरणस्यान्तःकरणशुद्ध्यर्थमाह—

यः शतरुद्रियमधीते सोऽग्निपूतो भवति। स वायुपूतो भवति। सुरापानात्पूतो भवति। ब्रह्महत्यायाः पूतो भवति। सुवर्णस्तेयात्पूतो भवति। कृत्याकृत्यात्पूतो भवति। तस्मादविमुक्तमाश्रितो भवति। अत्याश्रमी सर्वदा सकृद्वा जपेत्। अनेन ज्ञानमाप्नोति संसारार्णवनाशनम्। तस्मादेवं विदित्वैनं कैवल्यं फलमश्नुते कैवल्यं फलमश्नुते इति ॥ २८ ॥

यः प्रसिद्धो मुमुक्षुरनुत्पन्नसाक्षात्कारः शतरुद्रियं 'नमस्ते' इत्यादिरूपरुद्राध्यायमधीते पठति यथाशक्ति स शतरुद्रियाऽध्ययनकर्ता अग्निपूतः अग्निभिः श्रौतस्मार्तैः पूतः सुपवित्रीकृतो भवति। वायुपूतो भवतीति स्पष्टम्। सुरापानात् मदिरापानान्महापातकदोषात् पूतो भवतीति स्पष्टम्। ब्रह्महत्यारूपान्महापातकदोषात्पूतो भवतीति स्पष्टम्। सुवर्णस्तेयात् हिरण्यापहरणान्महापातकदोषात्पूतो भवतीति स्पष्टम्। कृत्याकृत्यात् कृत्यं करणीयं बुद्धिपूर्वकं पापम्, अकृत्यम् अकरणीयम् अबुद्धिपूर्वकं पापं कृत्यं च अकृत्यं च कृत्याकृत्यं तस्मात्पूतो भवतीति स्पष्टम्। तस्माच्छतरुद्रियाऽध्ययनात् अविमुक्तं विशेषेण शास्त्रोक्ताचारान्मुक्ताः रहिताः विमुक्ताः पशवस्तेभ्यो व्यतिरिक्तोऽविमुक्तः पशुपतिः तमाश्रितो भवतीति स्पष्टम्। अत्याश्रमी अत्याश्रम उक्तः परमहंसस्य लक्षणं स यस्यास्तीति अत्याश्रमी। सर्वदा निरन्तरं सकृद्वा

कदाचिद्वा दिवसे दिवसे एकवारमित्यर्थः। वा शब्दोऽधिकारि-सामर्थ्यानुसारेण व्यवस्थितविकल्पार्थः। अनेन रुद्राध्यायजपेन ज्ञानम् अहं ब्रह्मास्मीति साक्षात्काररूपम् आप्नोति। संसारार्णवनाशनं संसार-सागरशोषणम्। यस्मात् रुद्राध्यायजपोऽशेषपापनिबर्हणद्वारा ब्रह्मज्ञानहेतुः तस्मात्तत एवं विदित्वा उक्तेन प्रकारेण त्रिनेत्रध्यानरुद्राध्यायाध्ययना-दिना विदित्वा साक्षात्कृत्य एनं परमात्मानं कैवल्यं केवलस्यात्मनो भावः कैवल्यं तत्फलं पुरुषाभिलाषविषयसर्वपुरुषार्थसमाप्तिभूतम् अश्नुते प्राप्नोति। कैवल्यं फलमश्नुते व्याख्यातम्। पदाभ्यास उपनिषदः परिसमाप्त्यर्थः ॥ २८ ॥

इति श्रीमत्परहंसपरिव्राजकाचार्यानन्दात्मपूज्यशिष्यस्य
शङ्करानन्दभगवतः कृतौ भाल्लविशाखोक्त-
कैवल्योपनिषद्दीपिका समाप्ता।

—:*:—



# दशोपनिषद्रहस्यम्

श्रीरामो लक्ष्मणाय स्वचरणशरणायोच एतद्रहस्यं
निष्कामैः कर्मभिः स्वैर्भवति शुचि मनो यस्य सोऽत्राधिकारो ।
प्राप्य श्रीदेशिकास्याच्छ्रुतिशिरउदितैस्तत्त्वमस्यादिवाक्यैः
स्वात्मब्रह्मैक्यबोधं जनिमृतिरहितो मोदते नित्यमुक्तः ॥ १ ॥
सत्ये मय्येव भान्तं चरमचरमतोऽन्तर्बहिश्चाहमेको
मत्तोऽन्यन्नास्ति किञ्चिज्जगदपि सवितुर्मण्डले पूरुषोऽहम् ।
इत्थं यस्य प्रबोधो गुरुवरकरुणापाङ्गतस्तस्य तृष्णा
सन्देहो मोहशोकौ भयजननजरामृत्यवो नैव सन्ति ॥ २ ॥
स्वान्तप्राणाक्षिवाणीप्रभृति च विषयाभासकं यस्य योगात्
यन्न प्राप्नोति चैनद्विदितमविदितं यद्भवेन्नात्मरूपम् ।
इन्द्राद्या देवमुख्या अपि किल न विदुर्यस्य शक्तिं निगूढां
तद्बुद्धिं येन सोऽसौ भवति नरवरोऽनन्तसौख्यप्रविष्टः ॥ ३ ॥
सूक्ष्मात्सूक्ष्मो महीयान्महत उत धिया साधनैर्यो न लभ्यो
बुद्धिस्थो योऽशरीरो रविविधुदहना यस्य भासा विभान्ति ।
षड्भिर्भावस्वभावै रहित उपसदास्तीति रूपेण वेद्य-
स्तं साक्षात्कृत्य धीरो गुरुवचनबलाज्जायते नित्यशान्तः ॥ ४ ॥
जायन्ते विस्फुलिङ्गा अनलत इह यद्वत्प्रदीप्तात् सरूपा-
स्तद्वत्सर्वेऽपि भावाः खलु यत उदिता यान्ति यस्मिँल्लयं ते ।
अप्राणः सर्वविद्यः प्रणववरधनुः स्वात्मबाणैकलक्ष्य-
स्तं जानन्नामरूपे त्यजति स भवति ब्रह्मरूपो विशोकः ॥ ५ ॥
प्राणश्रद्धाखवायुज्वलनजलधरा इन्द्रियं मानसं च
भक्तं वीर्यं तपश्चाथ सकलनिगमाः कर्म लोकाश्च नाम ।

यस्माज्जाताश्च यस्मिन्विलयमुपगताः षोडशैताः कला यः
सर्वेषा संप्रतिष्ठा खलु तदधिगमाज्जायते वीतमृत्युः ॥ ६ ॥
जाग्रत्स्वप्नः सुषुप्तित्रितयमपि मतेस्तदव्यपेक्षस्तुरीयः
सर्वेषां यस्तु साक्षी गुणमलरहितोऽप्यात्तनामाभिधानः ।
भूताद्योऽचिन्त्य एकः स सकलजगतः प्रत्यगीशोऽयमात्मा
ब्रह्मोङ्काराधिगम्यं विदितमिति भवेद्येन स ब्रह्मभूतः ॥ ७ ॥
सृष्ट्वाऽऽकाशादि देहावधि सकलमिदं तत्प्रविश्यान्तरस्थो
यः सर्वेषामधीशो नियमयति सदानन्दचिद्रूप एकः ।
अन्नादीन्पञ्चकोशान्निजगुरुवचसा संविविच्याऽऽत्मभूतं
तं विद्वान्नित्यतृप्तः किल भयरहितो वर्तते सर्वभूतः ॥ ८ ॥
यो लोकाँल्लोकपालान् सकलमपि पुरा भोग्यजातं हि तेषां
सृष्ट्वाऽन्तः संप्रविश्य स्थिरचरमखिलं प्रेरयत्यान्तरः सः ।
दृष्ट्वा नात्रेषदन्यत् सकलजगदधिष्ठानरूपोऽहमेकः
प्रज्ञानं ब्रह्म येनाधिगतमिति स नावाप्तकामोऽमृतः स्यात् ॥ ९ ॥
मद्रूपे ज्ञात एतद्घटमुखमखिलं तज्जमस्यानभिन्नं
तद्वच्छ्रीदैशिकेनानुभवति सततं तत्त्वमस्येवमुक्तः ॥ १० ॥
यस्यानन्दस्य मात्रा विविधसुखमिदं येन सर्वेऽपि जीवाः
प्राणन्त्यव्याकृतं प्राग्जगदिदमखिलं व्याकरोन्नामरूपैः ।
अन्तर्यामी हृषीकाधिप इति विदितं व्यापकं ब्रह्म तत्रा-
ऽहं ब्रह्मास्मीति वेत्तीति विलयमसवस्तस्य नैवोच्छलन्ति ॥ ११ ॥
श्रीरामाङ्घ्र्याब्जभृङ्गो गुरुचरणकृपापाङ्गलब्धैक्यबोधो
यः श्रीसिद्धेशसूनुर्विरचितममुना रामचन्द्राभिधेन ।
यच्छ्लोकैः पङ्क्तिसंख्यैरिदमुपनिषदां सद्रहस्यं दशानां
ज्ञात्वार्थं संपठेद्योऽनुभवति स सुखं सद्गुरोः संप्रसादात् ॥ १२ ॥

॥ इति श्रीमद्रामपण्डितविरचितं दशोपनिषद्रहस्यं समाप्तम् ॥

परिशिष्ट : २

# एकादशोपनिषदाम् अकाराद्यनुक्रमणिका

—:*:—

## १. ईशा वास्योनिषत् : १—१० पृ०



## २. केनोपनिषत् : ११—२५

## ३. कठोपनिषत् : २६—७५

## ४. प्रश्नोपनिषत् : ७६–११५ पृ०

## ५. मुण्डकोपनिषत् : ११६-१४५

## ८. ऐतरेयोपनिषत् : २१२–२३९

## ६. छान्दोग्योपनिषत् : २४०-४२८

## १०. बृहदारण्यकोपनिषत् : ४२९–६७७

## ११. कैवल्योपनिषत् ६७८–६९०





